# VICHARA SAGARAM

IN SANSKRIT

( A TREATISE IN ADWAITA PHILOSOPHY )

BY

Srimat Paramahamsa Parivrajakacharyavarya

**SRI VASUDEVA BRAHMENDRA SARASWATHI SWAMIGAL**

(*Author of Brahmanhikam, Sastra Siddhanta Lesha Tatparya Sangraham etc.*)

EDITED BY

**Brahmasri**

**P. PANCHAPAGESA SASTRIGAL, M.O.L.**

( *Vyakarana, Sahitya and Vedanta Siromani* )

AND

**Bhashya Bhavagna Brahmasri Varahoor**

**KALYANASUNDARA SASTRIGAL**

( *Sahitya Visarada ; Sahitya and Vedanta Siromani* )

*Lecturer in Sanskrit in Vivekananda College, Madras*

PUBLISHED BY

**The Vasudeva Brahmendra Saraswathi Swamigal Library Committee.**

88, PATTAMANGALAM STREET, MAYURAM,
TANJORE DT. ( MADRAS STATE )

(With the Financial Assistance of the Ministry of Education Government of India)

**1964.**

**Rs. 15/-**

ॐ

# ॥ विचारसागरः ॥

( अद्वैतवेदान्तग्रन्थः )

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य
श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिभिः
विरचितः

प्राच्यविद्याधीश्वर-व्याकरण-साहित्य-वेदान्तशिरोमणि
ब्रह्मश्री पि. पञ्चापगेशशास्त्रिभिः,

भाष्यभावज्ञ-साहित्यविशारद-साहित्य-वेदान्तशिरोमणि
ब्रह्मश्री वरहूर् कल्याणसुन्दरशास्त्रिभिश्च
संशोधितः

भारतराजकीयविद्याविभागधनसाहाय्येन
मायूरक्षेत्रस्थश्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिकोशालय-
निर्वाहकसमित्या प्रकाशितः

1964

*Price :* **Rs. 15/-**

His Holiness Jagatguru

**Sri Chandrasekharendra Saraswati**

Sankaracharya of Sri Kanchi Kamakoti Peetha and

His Disciple **Sri Jayendra Saraswati**



संचारपूतानि दिगन्तराणि कुर्वन् विवृण्वन्निगमार्थतत्वम् ।
संशोधयन्सर्वजनान्तरङ्गं त्वं स्मारयस्यादिजगद्गुरुं नः ॥

अविरतं परकार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम् ।
अपि च मानसमम्बुनिधिर्यशो विमलशारदचन्द्रिरचन्द्रिका ॥

॥ श्रीः ॥

श्रीमुद्रा

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य-
श्रीमच्छंकरभगवत्पादप्रतिष्ठित-
श्रीकाञ्चीकामकोटिपीठाधिप-जगद्गुरु-
श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादादेशानुसारेण
श्रीमज्जयेन्द्रसरस्वतीश्रीपादैः क्रियते नारायणस्मृतिः ।

श्रीकाशीक्षेत्रसमे श्रीमायूरक्षेत्रे उषित्वा अविच्छेदेन पञ्चविंशति-वत्सरपर्यन्तं आस्तिकेभ्यो धर्म-ब्रह्मविद्या उपदिष्टवद्भिः शमदमादि-साधनसम्पन्नैर्वेदशास्त्रेतिहासपुराणादिग्रन्थकोशालयं कश्चित् प्रतिष्ठा-पितवद्भिश्च श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिभिरतिसरलया संस्कृत-भाषया संप्रणीतः पण्डितोत्तमसाधुनिश्चलदासकृत-हिन्दी-भाषामय-विचारसागरस्य संस्कृतानुवादरूपः श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामि-भिरेव संपादितया अवश्योपयुक्तया टिप्पण्या समलङ्कृतश्चायं संस्कृत-विचार सागरनामा प्रबन्धः श्रीस्वामिनामेव ग्रन्थकोशालयपालक-समित्या मुद्राप्य प्रकाशित इति ज्ञात्वा नितरां मोदामहे ।

अद्वैतशास्त्रप्रमेयबुभुत्सूनामुपकाराय कृतस्यातिसुलभया रीत्या अद्वैतशास्त्रप्रमेयान् भगवत्पादीयभाष्य-तद्व्याख्यानोपव्याख्यानादि-प्राचीनग्रन्थाविरोधेन सुस्पष्टं प्रदीपवदवभासयतश्चास्य ग्रन्थस्य पठनेन श्रीमहात्रिपुरसुन्दरीरमणश्रीचन्द्रमौलीश्वरप्रसादेन चास्तिकाः सर्वेऽपि सकलाः श्रेयःश्रेयस्ततीः अवाप्नुवन्त्वित्याशास्महे ।

यात्रास्थानम्
अम्बिग्रामः (काञ्चीपुरम्)
क्रोधिज्येष्ठबहुलदशमी

नारायणस्मृतिः



श्रीमत्परमहंसपरिव्राजकाचार्यवर्य

**श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनः**

## Sri VASUDEVA BRAHMENDRA SARAS WATHY SWAMIGAL LIBRARY COMMITTEE, MAYURAM

### PUBLISHER'S NOTE

We have great pleasure in presenting the Sanskrit version of Sri Vichara-Sagara, a unique treatise in Advaitha, originally written in Hindi, one hundred and twenty years ago by Sadhu Nischaladas, a Saint Scholar of North India.

This work holds a place of honour in Vedantha Granthas. It attempts at a clear and systematic exposition of Advaitha Philosophy in all its rich manifoldness. Fashioned on the lines of Guru Shishya Samvada, the work makes a vigorous effort to seize the Central truth of Vedantha and present them vividly in an easy conversational style.

It may interest the readers to know the genesis of the Sanskrit version of this great work. The work came to the notice of Sri Vasudeva Brahmendra Saraswathy Swamigal, a Sanyasin of rare spiritual insight and erudition, who was pursuing his spiritual labours with daily Bhashya Pravachanas in his Asram, nestling on the banks of the Cauvery in Mayuram, in the opening years of this Century. He founded a Sanskrit library in his Asram with rare Sanskrit works and many manuscripts written in his own printlike handwriting. Vicharasagaram made a deep impression on the Swamiji. He at once decided to translate the same into Sanskrit, so that students and Scholars of Vedantha all over the land might be benefited by it.

The Swamiji had brought to bear on the translation of this work, his intimate knowledge of Upanishadic teachings and Sastraic lore. The Swamiji had enhanced the value of the work by supporting the main arguments with apt illustrations and quotations from Upanishads and allied texts. Foot notes elucidating abstruse points are given wherever necessary. The book could not be published during the lifetime of the Swamiji. We are happy that we are now in a position to bring out this publication on which the Late Swamiji had set his heart.

In publication of this work we had the blessings of His Holiness Sri Sankaracharya of Kanchi Kama-Koti peetam, whose liberal donation and Srimukham encouraged us to venture on the

publication. of this work. His Holiness took personal interest throughout the publication of this work.

We are deeply grateful to the Union Ministry of Education for having granted liberal financial assistance of 60% of the actual expenditure incurred in connection with the publication of this work, and also to our numerous Donors who liberally contributed.

We cannot adequately express our gratitude to the late Brahmasri P. Panchapakesa Sastrigal, M.O.L., Sahitya Vyakarana and Vedanta Siromani, Retired Sanskrit Lecturer, Annamalai University, who volunteered his services to edit this work. Sri Sastrigal unmindful of the strain, brought to his chosen task, all his patient Scholarship, Industry, Meticulous attention to details and passion for accuracy. It was not given to him to complete the work. He expired suddenly on 19-12-63. (By then only 128 pages of the work had been printed.)

Fortunately for us, another eminent Sanskrit Scholar, Bhashya Bhavagna, BrahmaSri V. R. Kalyanasundara Sastrigal, Sahitya Visarada, and Sahitya Vedanta Siromani, Sanskrit lecturer in Vivekananda College, Madras, came to our rescue. Our sincere thanks are due to him for the successful publication of this work. But for his wholehearted co-operation and zealous interest, this work could not have been completed in so short a time.

Our thanks are specially due to Sri V. T. Rajan, of Rajan & Co., an ardent devotee of Sri Sankaracarya of Kanchi Kamakoti Peetam, who under instructions of His Holiness, took a special interest and care in the execution of this rare work neatly, with the Co-operation of Sri C. Ramayyar, Proprietor, Bharathi Vijayam Press, Madras.

We have every hope that this book will commend itself to all students of Vedanta Philosophy and will be a valuable addition to the literature on Advaitha.

No. 88, PATTAMANGALAM STREET,
MAYURAM.
TANJORE DT., MADRAS STATE.
DATE: 18th SEP. 1964.

A. VENKATRAMA IYER,
(Secrctary)

**Sri Vasudeva Brahmendra Saraswathy Swamigal**
**Library Committee, Mayuram.**

॥ श्रीः ॥

# ॥ विचारसागरभूमिका ॥

[इयं च व्याकरणसाहित्यवेदान्तशिरोमणिभिः ब्रह्मश्रीयुतैः
पि. पञ्चापगेशशास्त्रिभिः स्वयमेव स्वमृतेः पूर्वं सम्पादिता]

## आत्मतत्त्वसाक्षात्कारे विचारो हेतुः—

मोक्षहेतुभूतः आत्मतत्त्वसाक्षात्कारः विचारेणैव संपद्यते। **विचारो नामात्मानात्मनोर्बन्धमोक्षयोश्च स्वरूपस्य यथाशास्त्रं विमृश्य निर्णयः।** अयं **विचार एव श्रवणमिति** कीर्त्यते। अमृतत्वकामां मैत्रेयीं प्रति वित्तादीनां साधनत्वं निषिध्य, आत्मनः सुखरूपतामप्युपपाद्य, तादृशात्मनस्तत्त्वज्ञानमेवामृतत्वसाधनमिति वर्णयित्वा, आत्मतत्त्वज्ञानं प्रति श्रवणस्योपायतां "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यः" बृ. 2-4-5) इत्यादिना बोधयति याज्ञवल्क्यः। **श्रवणं नाम** गुरूपदेशेन प्रपञ्चमिथ्यात्वात्मसत्यत्वयोर्निर्णयपूर्वकं सकलवेदान्तानां प्रत्यगभिन्नेऽद्वैते ब्रह्मणि तात्पर्यनिर्धारणमित्याहुः। ब्रह्मसूत्रकारा अपि "अथातो ब्रह्मजिज्ञासा" (ब्र. सू. 1-1-1) इति जिज्ञासाशब्दलक्ष्यस्य विचारस्यैव ब्रह्मज्ञानसाधनतामाहुः। **जिज्ञासा नाम पूजितविचार** इति भाष्यकारा व्याचख्युः। निवृत्तप्रतिबन्धकस्योत्तमाधिकारिणः महावाक्यश्रवणमात्रेणैवाद्वैतात्मसाक्षात्कारः सिद्ध्यति। मननिदिध्यासनयोस्त्वनिवृत्तप्रतिबन्धकस्याधिकारिणो विषये संशयविपर्यासादिप्रतिबन्धकनिवृत्तावेवोपयोग इति विचारसागरकृतां मतम्। तथा च **गुरुमुखाद्वेदान्तानां तात्पर्यनिर्धारणरूपश्रवणाभिन्नो विचार एवात्मतत्त्वसाक्षात्कारे हेतुः।**

एवं विचारेण निष्पन्नाद्वैतात्मतत्त्वसाक्षात्कारः सर्वमपि स्वात्मरूपेण पश्यन् स्थितप्रज्ञः विनिवृत्तसकलक्लेशः यदृच्छालब्धेनैव शरीरयात्रादिकं निर्वाहयन् जीवन्मुक्तानन्दमनुभवन् सञ्चरति। पतिते च प्रारब्धाधीने शरीरे विदेहकैवल्यमापन्नो ब्रह्मैव संपद्यते। "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" (मु. 2-2-8) "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" (बृ. 4-5 15) इत्यादिश्रुतिभ्यः।

## आत्मतत्त्वविचारपरा ग्रन्थाः—

सोऽयमात्मतत्त्वविचारः उपनिषत्सु, ब्रह्मसूत्रेषु, भगवद्गीतायां, प्रस्थानत्रयभाष्येषु, तद्व्याख्यानेषु, तदनुसारिषु बहुषु ग्रन्थेषु च सप्रपञ्चं प्रवर्तितः।

परन्तु ते ग्रन्थाः प्रौढाः उत्तमाधिकारिविषयकाश्च । तेषां सर्वेषां ग्रन्थानां समग्रतया परिशीलनेन यथावदात्मतत्त्वाधिगमे मन्दमध्यमाधिकारिणां क्लेशमालोच्य तेषामनायासेनात्मतत्त्वावगमायात्मतत्त्वज्ञानोपयोगिसर्वविषयप्रतिपादकान् सरलान् नानाप्रकरणग्रन्थान् निबबन्धुर्बहवो महात्मानः ।

**विचारसागरग्रन्थः—**

सरलेषु वेदान्तप्रकरणग्रन्थेषु प्रकृतो विचारसागराख्यो ग्रन्थोऽद्वैतात्मतत्त्वबुभुत्सुभिरतीवोपादेयः। वेदान्तशास्त्राविरोधेनाद्वैतसिद्धान्ताः सर्वेऽप्यस्मिन् ग्रन्थे सूक्ष्माभिर्युक्तिभिः सुविशदं निरूपिताः । वेदान्तशास्त्रानुसारिणीभिर्युक्तिभिः प्रवर्तिता तत्त्वविचारशैली ग्रन्थेऽस्मिन् सविस्तरा । यथा नदनदीपतिः सागरो बहुमूल्यानां नानारत्नानामाकरस्तथा विचारसागराख्योऽयं ग्रन्थोऽपि बहूनामद्वैतात्मतत्त्वप्रकाशकानामनर्घरत्नतुल्यानां विचाराणामाकरः । सर्वेषामध्यात्मतत्त्वानामत्र समग्रतया प्रपञ्चितत्वादैकाग्र्येणैतद्ग्रन्थपठनमेवालं साधनसंपन्नानां यथावदात्मतत्त्वावबोधाय ।

श्रीनिश्चलदासपण्डितप्रकाण्डैरादौ हिन्दीभाषायां विचारसागराख्यं ग्रन्थं विरचितवद्भिः 'विचारसागर' इति ग्रन्थस्य कृतं सागरव्यपदेशमनुसृत्य तद्ग्रन्थगतानामध्यायानां 'तरङ्गः' इति व्यपदेशः कृतः । अस्य विचारसागरस्य सप्त तरङ्गाः सन्ति । प्रतितरङ्गं च नाना विचाराः सन्ति । श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिभिः संस्कृतविचारसागरे तरङ्गान्तर्गतानां विचाराणामावर्तव्यपदेशः कृतः ।

**विचारसागरस्य प्रणेतारः—**

साधुशब्दोपपदकाः श्रीनिश्चलदासाभिधाः पण्डितप्रकाण्डाः विचारसागराख्यं ग्रन्थरत्नमादौ प्रणिन्युः । नानाशास्त्रनिष्णातैरपि तैः साधारणजनेषु कृपया संस्कृतभाषानभिज्ञानामप्युपकाराय स्वदेशे लब्धप्रचारायां हिन्दीभाषायां विचारसागरो विरचितः । अस्य विचारसागरस्य सारवत्तां दृष्ट्वा मराठीबङ्गालीद्राविड्यान्ध्र्यादिनानादेशभाषासु तस्य परिवर्तनं तत्तत्प्रदेशवासिजनानामुपकाराय तत्तद्देशभाषापण्डितैः संपादितम् । भारतीयदेशभाषासु निबद्धस्य विचारसागरस्य भारतदेशे तत्तत्परिमितप्रदेशमात्रे उपकारमालक्ष्य सारभूतस्यास्य ग्रन्थस्याखिलेऽपि भारतदेशे, बहिरपि नानादेशेषु भूयानुपकारो यथा स्यात्तथा

श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनः अतिसरलया संस्कृतभाषया स्वकीयं विचार-सागरं व्यरचयन् ।

हिन्दीविचारसागरग्रन्थोऽयं मुम्बय्यां श्रीव्रजवल्लभहरिप्रसादजीमहाशयैः 1917 तमे क्रैस्तवाब्दे मुद्रितोऽस्ति । तत्र त्रयो भागाः सन्ति । (1) पद्यमयो मूलभागः (2) पद्यमयस्य मूलभागस्य व्याख्यानरूपो गद्यमयः टीकाभागः, (3) मूले टीकायां च प्रयुक्तानां सारभूतपदानां विषमपदानां च विवरणरूपः प्रपञ्चनरूपश्च गद्यमयः टिप्पणभागश्चेति ।

तत्र पद्यमयो यो मूलभागः स एव निश्चलदासप्रणीतो विचारसागरः । तैरेव स्वशिष्याणामन्येषां च जिज्ञासुसाधुपुरुषाणामुपकाराय प्रवचनकाले कृतं स्वपद्यानां व्याख्यानं परम्परयाधिगत्य ब्रह्मनिष्ठपण्डितश्रीपीताम्बरजीमहाशयैः पद्यमयमूलविचारसागरस्य, गद्यमयी टीका प्रथमं विरचिता । ततस्तैरेव श्रीपीताम्बरजीपण्डितमहाशयैः कालान्तरे, पद्यमयमूलविचारसागरस्य, स्वकीय-गद्यमयटीकायाश्चोपबृंहणरूपेण 554 टिप्पणानि हिन्दीगद्यमयानि विरचितानि।

ततः श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनः टीकाटिप्पणीसहितहिन्दी-विचारसागरस्य परिष्काररूपेण संस्कृतभाषायां गद्यमयं स्वकीयं विचारसागरं निबबन्धुः । संस्कृतविचारसागरः मूलटिप्पणीरूपभागद्वयात्मकः । तत्र हिन्दी-पद्यमयमूलविचारसागरस्य हिन्दीगद्यमयतट्टीकायाश्च परिष्काररूपेण संस्कृत-गद्यमयटिप्पणभागश्च प्रवृत्तः । श्रीस्वामिभिः तत्र तत्रावश्यकाः आवापोद्वापाः समीक्षापूर्वकं कृताः । युक्तिपूर्वकं स्थापितानामर्थानामनुग्राहकाणि वेदान्त-प्रमाणवाक्यानि तत्र तत्र पौष्कल्येनोदाहृतानीति अयं भाषाविचारसागरापेक्षया संस्कृतविचारसागरस्य विशेषोऽवगन्तव्यः ।

## श्रीनिश्चलदासपण्डितानां जीवितचरितम्—

एतेषां चरितमधिकृत्यैतदीयविचारसागरात, मुम्बय्यां मुद्रितटीका-टिप्पणीसहितहिन्दीविचारसागरस्य प्रस्तावनातश्च यदधिगतं तदत्र संक्षिप्यते । एते कुत्र कदा जाता इति न निश्चयेन वक्तुं पार्यते । चतुर्दशाब्दवयस आरभ्य समन्तिपर्यन्तं एते विद्यारसिका एवाभवन् । श्रीदादुजीमहाशयाः एतेषां गुरवः । वेदेषु, काव्येषु, व्याकरणे, न्याये, साङ्ख्ये, दर्शनान्तरेषु, वेदान्ते च तेषां निरतिशयं पाण्डित्यं अद्वैतवेदान्ते तेषामगाधं पाण्डित्यं च विचारसागर-ग्रन्थ एव प्रकाशयति । अयं च विचारसागरग्रन्थः डिल्लीनगरात्पश्चिमायां

दिशि अष्टादशक्रोशव्यवहिते किहडौलीग्रामे परिसमाप्तिमगादिति त एव तद्ग्रन्थान्ते कथयन्ति । श्रीविद्यारण्यमुनीन्द्रविरचितपञ्चदशप्रकरणं प्रायेणानुसरन्ति ते स्वसिद्धान्तव्यवस्थापने इति ज्ञायते । उत्तरदेशे प्रायेण साधवः एतदीयविचारसागरादेव लब्धात्मतत्त्वोपदेशा भवन्तीति श्रूयते । सारभूतत्वादयं ग्रन्थ नानादेशभाषासु परिवर्तितो मुद्रितश्च ।

बुन्दीप्रदेशे श्रीरामसिंहराजसभायां कंचित्कालं स्थित्वा तस्य राज्ञश्चोदनया मतान्तरनिरसनपूर्वकमद्वैतसिद्धान्तव्यवस्थापकं वृत्तिप्रभाकराख्यं ग्रन्थं हिन्दीभाषायां निबबन्धुः । स च राजा श्रीनिश्चलदासपण्डितानां समागमेन विद्वान् समभवत् । कठोपनिषदः संस्कृतव्याख्यानं, वैद्यशास्त्रे कञ्चन ग्रन्थं चैते व्यरचयन्निति श्रूयते । स्वकीयं विचारसागरं वृत्तिप्रभाकरं च बहुवारं शिष्यानध्यापयामासुः । बाल्यादेवारभ्य निरभिमाना विरक्ताश्चैते सततमध्यात्मशास्त्रप्रवचनतत्पराः नानादेशेषु सञ्चरन्तो महान्तं कालं काश्यामनयन् । ब्रह्मनिष्ठाः स्थितप्रज्ञाश्च बभूवुः । 1920 तमे संवदब्दे (1864 तमे क्रैस्तवाब्दे डिल्लीप्रान्ते विदेहमुक्तिमापन्ना इति ज्ञायते ।

## संस्कृतविचारसागरः तस्य प्रयोजनवत्ता च—

मायूरक्षेत्रगताः सततवेदान्तप्रवचनतत्पराः ब्रह्मविद्यारसिकाः श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनः श्रीनिश्चलदासीयहिन्दीविचारसागरमासाद्य, स्वयमपि हिन्दीभाषामभ्यस्य, तं ग्रन्थमामूलाग्रं सम्यक् परिशील्य, तस्य ग्रन्थस्याद्वैतात्मतत्त्वावबोधनविषयेऽतीवोपयोगमपश्यन् । द्राविडभाषायां तत्परिवर्तनमपि समग्रतया समवालोकयन् । सारभूतोऽयं ग्रन्थः यथा नानादेशेषु भूयसे उपकाराय भवेत्तथा परिष्कृत्य नवीकर्तव्य इति तेषां मतिरजायत । ततस्ते संस्कृतभाषाया अखिलेऽपि भारतदेशे, बहिरपि नानादेशेषु प्रचुरं प्रचारमालक्ष्य संस्कृते अनतिपरिचयवतामपि पठितॄणां सर्वेषामप्यनायासेन झटित्यर्थावबोधो यथा स्यात्तथाऽतिसरलैः संस्कृतवाक्यैः, तत्र तत्र आवापोद्वापपूर्वकमावश्यकपरिष्कारांश्च विधाय, तत्र तत्र समञ्जसानि वेदान्तप्रमाणानि चोदाहृत्य, स्वकीयं विचारसागरं नानादेशगतानां जनानामुपकाराय प्रणिन्युः । अस्य संस्कृतविचारसागरस्यार्थावबोधविषये कोशव्याकरणादिपरिज्ञानस्यापेक्षा लेशतोऽपि नास्तीति एतं ग्रन्थं पठतां प्रत्यक्षं भवेत् ।

किञ्च हिन्दीविचारसागरे भाषान्तरीयतत्परिवर्तनेषु च संस्कृपदप्रचुराण्येव वाक्यानि प्रयुक्तानि । अध्यात्मविषयेषु भाषाग्रन्थेषु संस्कृतमयप्रकृतिभ्यः परतया तत्तद्भाषोचितप्रत्यययोजनेन निष्पन्नान्येव पदानि बाहुल्येन प्रयुज्यन्ते । किञ्च तत्तद्दर्शनमात्रप्रसिद्धानां यथावत् भाषान्तरे परिवर्तनासहानां शब्दानां पदे पदे प्रयोगः अध्यात्मविषयकभाषाग्रन्थेष्वपरिहरणीय एव । संस्कृतप्रचुरदेशभाषापेक्षया शुद्धसरलसंस्कृतभाषाया उपयोग एवाध्यात्मग्रन्थे श्रेयानिति श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनोऽतिललितपदबद्धैर्वाक्यैः स्वकीयं संस्कृतविचारसागरं नानादेशजनानामुपकारं मनसि निधाय व्यरचयन् ।

अपिच श्रीनिश्चलदासीयविचारसागरे उपयुक्ता हिन्दीभाषा आधुनिकाखिलभारतीयहिन्दीभाषापेक्षया विलक्षणा दृश्यते । अतः आधुनिकहिन्दीमात्रपरिचयवंतः संस्कृतेऽपीषत्परिचयवन्तोऽपि जाना हिन्दीविचारसागरस्यार्थं झटित्यक्लेशेन यथावत्सुविशदतयाऽवगन्तुमपि अतिसरलसंस्कृतभाषया निबद्धोऽयं श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनां विचारसागरः उपयुज्यते एव ।

संस्कृतविचारसागरस्य वैशिष्ट्यान्तरम्—

संस्कृतविचारसागरस्य नानादेशेषूपयोग इत्येको विशेष उक्तः। संस्कृतविचारसागरगतानां प्रमेयाणां प्रमाणराजवेदान्तवाक्योदाहरणेन दृढीकृतत्वमिति द्वितीयोऽपि विशेषोऽवगन्तव्यः। तथाहि—यद्यपि भाषाविचारसागरे सयुक्तिकं वैशद्येन वेदान्तसिद्धान्ताः प्रतिपादिताः, अथापि तत्र तत्रानुग्राहकाणि वेदान्तप्रमाणवाक्यानि नोदाहृतानीति वैकल्यमस्ति । संस्कृतविचारसागरे तद्वैकल्यं परिहरन्तः श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनः युक्तिपूर्वं निर्धारितान् सर्वानप्यर्थान् समुचितानि वेदान्तप्रमाणवाक्यान्युदाहृत्य दृढीकुर्वन्ति । अत्र विषये संस्कृतविचारसागरप्रणेतारः श्रीशङ्करभगवत्पादाचार्याणां रीतिमनुसरन्ति । भगवत्पादा हि स्वभाष्येषु सर्वत्र वर्णितं शास्त्रार्थं पुष्कलतयोदाहृतैः वेदान्तप्रमाणवाक्यैः सुनिरूढं कुर्वन्ति । प्रमाणवाक्यानामुदाहरणपूर्वकं शास्त्रार्थप्रदर्शनमिति श्रीभगवत्पादानां शैली। सेयं शैली संस्कृतविचारसागरेऽवलम्बिता सुतरां शोभते ।

यद्यपि भाषाविचारसागरे वर्णितः सर्वोऽप्यर्थः वेदान्तशास्त्रानुगतस्तदविरोधी च । तथापि अध्यात्मग्रन्थे वेदान्तप्रमाणवाक्यानामुदाहरण-

**मप्यावश्यकमेव** । तथाहि—अध्यात्मविषये वेदान्त एव प्रमाणम् । "वेदान्तविज्ञानसुनिश्चितार्थाः" (मु. 3-2-6. कै-4.) "तं त्वौपनिषदं त्वा पुरुषं पृच्छामि" इत्यादिश्रुतेः । अत एव सर्वेऽप्यध्यात्मग्रन्थप्रणेतारः स्वग्रन्थेषु वर्णितस्य सर्वस्याप्यर्थस्य वस्तुतो वेदान्तमूलकत्वेऽपि स्वोक्तानामर्थानामनुग्राहकवेदान्तवाक्यानामप्रदर्शने, स्वोक्तार्थे प्रमाणराजवेदान्तानुग्रहाभावशङ्का पठितॄणां स्यादिति तत्र तत्र सावधानाः सन्तः प्रमाणवाक्यान्यप्युदाहरन्ति । अयमेवाभिप्रायः श्रीभगवत्पादानामपि स्वभाष्येषु शास्त्रार्थमुपवर्ण्य तत्र तत्र प्रमाणवचनान्यपि पुष्कलतया प्रदर्शितवताम् ।

अपि च लोके यद्यप्यात्मतत्त्वविषये उपनिषदो, ब्रह्मसूत्राणि, भगवद्गीता चेति त्रीणि प्रस्थानानि प्रसिद्धानि । तथापि ब्रह्मसूत्राणां भगवद्गीतायाश्चोपनिषन्मूलकत्वात् फलतः उपनिषद एवैकं प्रस्थानम् । अत एव "तं त्वौपनिषदं त्वा पुरुषं पृच्छामि" इत्युच्यते । अत एव वेदान्तवाक्यानां तात्पर्यनिर्धारणरूपं श्रवणमेवात्मतत्त्वज्ञानं प्रति साधनतया याज्ञवल्क्यो वर्णयति । अतश्च वेदान्तप्रमाणवाक्यप्रदर्शनपूर्वकं वर्णित एवाध्यात्मविषयः मनसि सुलभो भवेदिति सर्वथाऽध्यात्मग्रन्थेषु **वेदान्तप्रमाणवाक्यप्रदर्शनमनुपेक्षणीयम् । भाषाविचारसागरे तु तदुपेक्षणहेतुकं वैकल्यमस्त्येवेति, तस्य परिहारः संस्कृतविचारसागरे संपादितः ।**

न च वेदान्ता इव युक्तयोऽप्यध्यात्मविषये प्रमाणमेव । अत एव याज्ञवल्क्यः "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो **मन्तव्यः**" (बृ. 4. 5. 6.) इति श्रवणमिव मननमप्यात्मज्ञाने उपायतया प्रदर्शयति । मननं च युक्तिभिरनुचिन्तनमेव । अतः युक्तयोऽप्यात्मज्ञाने साधनम् । ताश्च **युक्तयः भाषाविचारसागरे सम्यक् प्रदर्शिताः, अतो न वैकल्यमिति वाच्यम् ।**

**आत्मतत्त्वनिर्धारणे युक्तिमात्रं नालम्** । निवृत्तप्रतिबन्धकस्य नारदादेरिव वेदान्तविचाररूपश्रवणमात्रेणात्मतत्त्वज्ञानसिध्या मननरूपाया युक्तेरात्मतत्त्वज्ञाने साधनता न नियता । यस्य त्विन्द्रादेरिव श्रवणानन्तरमपि प्रतिबन्धकसत्त्वादात्मतत्त्वज्ञानसिद्धिर्नाभवत्, तद्विषये प्रतिबन्धकनिवर्तकतया मननस्योपयोग इति मननं न साक्षादात्मतत्त्वज्ञानोपायः । प्रतिबन्धनिवर्तकं मननमपि श्रुत्यनुसारियुक्तिभिरेव कार्यं न स्वतन्त्राभिर्युक्तिभिरिति सिद्धान्तः । "नैषा तर्केण मतिरापनेया" (क. 1-2-9) इति श्रुतिः, "तर्काप्रतिष्ठा-

नात्" (ब्र. सू. 2-1-11) इति सूत्रं च स्वतन्त्रतर्कस्यात्मज्ञानेऽनुपयोगं बोधयतः। "अनन्यप्रोक्तेऽगतिरत्र नास्ति।" "प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ" (क. 1-2-8) इति श्रुतिराचार्योपदेशपूर्वकवेदान्तश्रवणस्यैव नियमेनात्मज्ञानसाधनतामाह। एवमात्मतत्त्वविषये वेदान्ता एव प्रमाणं। युक्तयस्तत्र न स्वतन्त्रतां वहन्तीति सिद्धम्। तथा च स्फीतोऽपि जनपदः यथाऽराजकश्चेन्न विराजते, तथाऽध्यात्मविषयको ग्रन्थोऽबाधितसूक्ष्मयुक्तिशतालङ्कृतोऽपि प्रमाणराजवेदान्तवाक्यप्रदर्शनेनाननुगृहीतो न विराजते।

संस्कृतविचारसागरेऽनुबन्धचतुष्टयस्य सामान्यरूपेण वर्णनपरे प्रथमतरङ्गे प्रमाणतयोदाहृतानि वाक्यानि संख्यातः प्रदर्शनार्थं प्रदर्श्यन्ते। यथा—(1) बुद्ध्यादेरविषय आत्मा इत्यत्र त्रीणि, (2) आत्मा सर्वसाक्षी इत्यत्र द्वे, (3) आत्मा वृत्तिव्याप्यो न फलव्याप्य इत्यत्र चत्वारि, (4) अखण्डचिन्मात्रे प्रत्यगात्मन्येवाधिष्ठाने सर्वः प्रपञ्चः कल्पित इत्यत्र त्रयोदश, (5) प्रत्यगात्मनो ब्रह्माभिन्नत्वे एकादश, (6) वेदान्तश्रवणादेरात्मज्ञानहेतुत्वे पञ्च, (7) स्वीकृतविषयस्य प्रयत्नपरिहार्यत्वे चत्वारि, (8) शमदमादिसाधनविवरणप्रस्तावे नव, (9) अन्तरङ्गसाधनसिद्ध्यनन्तरं बहिरङ्गस्य त्याज्यत्वे एकम्, (10) ज्ञाने वेदान्तवाक्यस्यैव मुख्यसाधनत्वे एकं, (11) षड्विधतात्पर्यलिङ्गैः छान्दोग्यषष्ठस्याद्वैते समन्वयप्रदर्शने एकादश, (12) जीवब्रह्मैक्यसाधने एकादश, (13) निर्विकल्पसविकल्पसमाध्योर्भेदे द्वे, (14) जीवब्रह्मभेदनिषेधे त्रीणि, (15) प्रपञ्चस्य नित्यनिवृत्तत्वे चत्वारि, (16) प्राप्तप्राप्तेः संभावितत्वे एकं, (17) कल्पितनिवृत्तेरधिष्ठानरूपत्वे एकम्—इत्येवं संस्कृतविचारसागरे प्रथमतरङ्गे प्रमाणवाक्योदाहरणस्य सूची। इयं च प्रदर्शनार्थैव।

संस्कृतविचारसागरस्य प्रकारान्तरेण वैशिष्ट्यम्—

(1) नानादेशवासिनां जनानामुपकारायातिसरलया संस्कृतभाषया निबद्धत्वं, (2) तद्गतानां प्रमेयाणां प्रमाणमूर्धन्यवेदान्तवाक्योदाहरणेन दृढीकरणमिति संस्कृतविचारसागरस्य द्वौ गुणौ प्रदर्शितौ। (3) अन्यूनानतिरिक्तार्थवर्णनमिति तृतीयः गुणोऽपि संस्कृतविचारसागरे दृश्यते।

तथाहि यस्मिन् प्रकरणे यावानर्थ अपेक्षितस्तावत एव तत्र वर्णनं न्याय्यः। अबाधितस्यापि प्रकरणानपेक्षितस्यार्थस्य वर्णनं न साधु। अन्यूनानतिरिक्तार्थकत्वं ग्रन्थस्योपादेयताप्रयोजकम्।

टीकाटिप्पणीसहितं हिन्दीविचारसागरं, द्राविडभाषायां तत्परिवर्तनं च सम्यक् परिशील्य, तत्र क्वचिदधिकवर्णनं, क्वचिदवश्यवर्णनीयस्योपेक्षणं च दृष्ट्वा, श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनः सुसमीक्ष्यावश्यकर्तव्यावापोद्वापौ कृत्वा, भाषामयविचारसागरस्य परिष्काररूपेण स्वकीयं संस्कृतविचारसागरमन्यूनानतिरिक्ततया सर्वमपि प्रमेयजातं, प्रमाणवचनोदाहारणपूर्वकमतिसरलया भाषया वर्णयन्तः सर्वोपकाराय प्रणिन्युः ।

संस्कृतविचारसागरे प्रथमतरङ्गे संपादिताः आवापोद्वापपूर्वकाः परिष्काराः प्रदर्शनार्थमेव प्रदर्श्यन्ते—

(१) श्रीनिश्चलदासपण्डिताः वस्तुनिर्देशरूपं प्रत्यगभिन्नपरमात्मस्वरूपानुसन्धानात्मकं मङ्गलमाचरन्तः, तद्द्वारा जीवब्रह्मैक्यं स्वग्रन्थस्य विषय इति सूचयन्तश्च, परमात्मस्वरूपबोधकपदैर्घटितं मङ्गलमेवं निरबध्नन् ।

"जो सुख, नित्य, प्रकास, विभु,
नाम रूप आधार, ।
मति न लखै जिहिं मति लखै,
सो मैं शुद्ध, अपार ॥ १ ॥"

संस्कृतविचारसागरे एतस्यैव हिन्दीमङ्गलपद्यस्य परिष्काररूपौ द्वौ मङ्गलश्लोकावेवं निबद्धौ—

"सुखं, नित्यं, स्वप्रकाशं, व्यापकं, नामरूपयोः ।
अधिष्ठानं बुद्ध्यबोध्यं बुद्धेर्द्रष्टृ तु निर्मलम् ॥ १ ॥
अपारं सर्ववेदान्तवेद्यं प्रत्यक् परं महः ।
तदेवाहं न मत्तोऽन्यदिति मे निश्चिता मतिः ॥ २ ॥ इति ।

(१) अत्र हिन्दीमङ्गलपद्ये द्वितीयपादे "नाम रूप आधार" इति विशेषणम् । संस्कृतविचारसागरे तु तत्स्थाने "नामरूपयोरधिष्ठानम्" इति विशेषणं प्रयुक्तम् । तत्राधारपदस्थाने संस्कृतविचारसागरे कृतः अधिष्ठानपदप्रयोगो ज्यायान् । तथाहि,—नामरूपात्मकः प्रपञ्चो मिथ्याभूतः । स च प्रत्यगभिन्ने परमात्मनि कल्पित इति विशेषणस्यास्य तात्पर्यार्थः । उपरि च तृतीयतुरीययोर्हिन्दीमङ्गलपद्ययोः "रज्जौ भुजङ्ग इव प्रत्यगभिन्ने परमात्मनि

सर्वस्य कल्पितत्वं वर्ण्यते च। लोके शास्त्रे च "भूतलं घटस्याधारः" इति व्यावहारिकघटाद्याश्रये 'आधार' शब्दस्य प्रयोगः,। "रज्जुः मिथ्याभुजङ्गस्याधिष्ठानम्" इति मिथ्यावस्तु यत्र कल्प्यते तत्राधिष्ठान" शब्दस्य प्रयोगः, इत्याधाराधिष्ठानशब्दयोः प्रयोगे व्यवस्था दृश्यते। तामिमां व्यवस्थामनुसृत्य मिथ्याभूतनामरूपात्मकः प्रपञ्चो यत्र कल्पितः तस्य ब्रह्मणः अधिष्ठानपदेन बोधनं साधु। अतः **आधारपदस्थाने अधिष्ठानपदस्य प्रयोगः संस्कृते कृतः साधुः।** अत एव मुद्रितहिन्दीविचारसागरग्रन्थे " नामरूपका आधार" इति टीकायाः टिप्पणे " अधिष्ठान, विवर्तोपादानकारण " इत्येवं दृश्यते।

(२) हिन्दीमङ्गलपद्ये तृतीयपादे "मति न लखै, मति लखै" इति परस्परविरुद्धं विशेषणद्वयं दृश्यते। तत्स्थाने संस्कृतमङ्गलश्लोके "बुद्ध्यबोध्यं, बुद्धेर्दृक्" इति विशेषणद्वयं प्रयुक्तम्। अत्र "मति न लखै" इति हिन्दीविशेषणस्य परिवर्तनरूपं "बुद्ध्यबोध्यम्" इति विशेषणं संस्कृते प्रयुक्तम्। तदनुसृत्य "मति लखै" इति हिन्दीविशेषणस्य परिवर्तनरूपं 'बुद्धिबोध्यम्" इति विशेषणं संस्कृते प्रयोक्तव्यतया प्राप्तम्। परंतु संस्कृतविचारसागरमङ्गलश्लोके "बुद्धिबोध्यम्" इति विशेषणमपहाय तत्स्थाने "बुद्धेर्दृग्" इति नूतनं विशेषणमुपात्तम्।

**अत्रेदं विवेचनीयम्**—वस्तुनिर्देशरूपमङ्गलद्वारा जीवब्रह्मैक्यबोधनस्याभिमतत्वादत्र मङ्गलपद्ये प्रत्यगभिन्नपरमात्मस्वरूपबोधकानां, तत्र प्रमाणप्रदर्शनपराणामेव विशेषणानामवकाशः, नेतरविशेषणस्येति प्रथमतो ज्ञेयम्।

तत्र 'बुद्ध्यबोध्यम्' इत्येतदर्थकं "मति न लखै इति हिन्दीविशेषणं यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह (तै. ब्र. 4&9) इत्यादिश्रुतिबोधितस्य बुद्ध्याद्यगोचरत्वस्य ब्रह्मस्वरूपस्य बोधकत्वात्प्रकृतानुगुणम्। "बुद्धिबोध्यम्" इत्येतदर्थकं "मति लखै" इति विशेषणं तु प्रकृतानुगुणेन "मति न लखै " इति पूर्वविशेषणेन तदनुग्राहिकया" यतो वाचो निवर्तन्ते अप्राप्य मनसा सह (तै. ब्र. 4&1) इत्यादिश्रुत्या च विरोधान्न मुख्यार्थे ग्रहीतुमुचितम्। तथाहि-मतिशब्दस्य प्रमाणजनितान्तःकरणवृत्तिरित्यर्थवत्वात् "मति लखै" इति विशेषणस्य 'वेदान्तप्रमाणजनितान्तःकरणवृत्या प्रकाश्यं ब्रह्म' इति मुख्योऽर्थः स्यात्। स च बाधितः। यतः वेदान्त-प्रमाणजनितान्तःकरणवृत्तिर्ब्रह्मावारका-

ज्ञानमात्रं नाशयति । ब्रह्म तु स्वप्रकाशत्वात्स्वयमेव भासते। बुद्धिर्न ब्रह्मस्वरूप-प्रकाशिका। प्रत्युत बुद्ध्यादेः प्रकाशकं ब्रह्म इति शास्त्रसिद्धान्तः। एवं च "मति लखै" इत्यस्य मुख्यार्थग्रहणे बाधादमुख्यार्थे तद्विशेषणं नेयम्। स चार्थः "वेदान्तप्रमाणजनितान्तःकरणवृत्तिविनाश्यं ब्रह्मावारकमज्ञानमि"ति। सोऽर्थो न प्रकृतः। यतो ब्रह्मस्वरूपवर्णनं प्रकृतं, न ब्रह्मावारकाज्ञानवर्णनम्। अथ "मति लखै" इति विशेषणस्य "प्रमाणजनितान्तःकरणवृत्तिविनाश्य-स्वावारकाज्ञानवद् ब्रह्म" इति प्रकृतार्थे नयनेऽपि नानेन विशेषणेन प्रकृतस्य ब्रह्मणः स्वरूपं साक्षाद्बोधितं भवतीति, "मति लखै" इत्येतदर्थकस्य बुद्धि-बोध्यम्" इति विशेषणस्य संस्कृतविचारसागरे परित्याग उचित एव।

"मति लखै" इत्येतदर्थकं "बुद्धिबोध्यम्" इति विशेषणमपहाय तत्स्थाने संस्कृतविचारसागरे "बुद्धेर्दृक्" इति नूतनतयोपात्तं विशेषणमबाधि-तार्थकत्वात्प्रकृतानुगुणत्वादपेक्षितत्वाच्च युक्तमेव। 'बुद्धेर्दृक्' इत्यस्य बुद्ध्यादेः साक्षी' इत्यर्थः। तत्राध्यात्ममन्तःकरणरूपाया बुद्धेः वागादेश्चक्षुरा-देश्च करणजातस्य यत् स्वस्वविषयप्रकाशनसामर्थ्यं लोके प्रसिद्धं तन्न-तेषां स्वाभाविकं, किन्तु बुद्ध्यादिव्यतिरिक्तसर्वान्तरप्रत्यगात्मज्योतिर्निमित्त-कमिति शास्त्रसिद्धान्तः। एतदर्थप्रतिपादनायैव केनोपनिषत्प्रवृत्ता। एवमधि-भूतं सूर्यादिज्योतिषां पदार्थप्रकाशनसामर्थ्यं यल्लोकसिद्धं, तदपि न तेषां स्वाभा-विकं, किन्तु ब्रह्मचैतन्यनिमित्तकमिति च शास्त्रार्थः। प्रत्यगात्मनो ब्रह्मणश्चा-भेदात् "बुद्धेर्दृक्" इत्यत्र बुद्धिशब्दस्योपलक्षणत्वाच्चाध्यात्मं बुद्ध्यादेः, अधिभूतं सूर्यादेश्च स्वस्वविषयप्रकाशनसामर्थ्यं प्रत्यगभिन्नब्रह्मचैतन्यनिमित्तकमिति सिद्धम्। एवं च "बुद्धेर्दृक्" इत्यस्य विशेषणस्य "स्वसंबद्धसर्वावभासकं प्रत्यगभिन्नं ब्रह्म" इति पर्यवसितार्थः। "श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः। चक्षुषश्चक्षुः" (के. 1-2) "येन वागभ्युद्यते" (के. 1-4) "येनाहुर्मनो मतम्" (के. 1-5) "येन चक्षूंषि पश्यति" (के. 1-6) "तस्य भासा सर्वमिदं विभाति" (मु. 2-2-10) इत्यादिश्रुतयोऽत्र प्रमाणम्। एवं 'बुद्धेर्दृक्' इतीदं विशेषणं, प्रदर्शितश्रुत्यर्थस्य स्वसंबद्धसर्वावभासक-त्वरूपब्रह्मस्वभावस्य बोधकत्वाच्चाबाधितं प्रकृतानुगुणं च।

इदं च विशेषणं प्रकृते अपेक्षितं च। तथाहि—"चिद्घनत्वं" प्रत्यगभिन्नब्रह्मणः स्वरूपम्। चिद्घनत्वं नाम अनन्याधीनतया स्वयमेव प्रकाश-

मानत्वे सति स्वेतरसर्वावभासकत्वम्। तत्र 'बुद्ध्यबोध्य'मिति विशेषणेन अनन्याधीनतया स्वयमेव प्रकाशमानत्वमित्यंशो बोधितः। **स्वेतरसर्वावभासकत्वांशस्य बोधनाय 'बुद्धेर्दृक्' इति विशेषणमत्रावश्यमपेक्षितम्।** हिन्दीमङ्गलपद्ये त्वेतत्स्थानीयस्य विशेषणस्याभावाद्वैकल्यम्।

हिन्दीमङ्गलपद्यविवरणटीकात्रैवं दृश्यते—"मति न लखै जिहिं **मति लखै**—"इसका यह अर्थ है:—बुद्धि जिस (ब्रह्म) कूं प्रकाशै नहीं औ जो (ब्रह्म) **बुद्धिकूं प्रकाशै**" इति। अत्र "मति लखै" इत्यस्य 'ब्रह्म बुद्धेः प्रकाशक' मित्यर्थवर्णनं सुतरां क्लिष्टम्। अतः **साक्षादक्लेशेन तदर्थबोधकं "बुद्धेर्दृग्" इति संस्कृतविशेषणं साधु।**

द्वित्रिविशेषणेनैवातिव्याप्त्यादिरहितब्रह्मलक्षणसिद्धावपि मङ्गलपद्ये नानाविशेषणोपादानफलं जिज्ञासोरधिकारिणः सर्वप्रकारेणापि विस्पष्टतया ब्रह्मस्वरूपावबोध एवेति मङ्गलपद्यविवरणान्ते हिन्दीटीकायामुक्तम्। अत एव हिन्दीमङ्गलपद्ये प्रथमपादगत "प्रकास" इति विशेषणेनैव ब्रह्मणश्चिद्रूपत्वे लक्षितेऽपि पुनरपि तृतीयपादे "मति न लखै" इति विशेषणमनन्यापेक्षतया स्वयमेव प्रकाशमानं ब्रह्मेति तत्स्वरूपविशेषप्रदर्शनायोपात्तम्। तथा **स्वेतरसर्वावभासकत्वरूपस्य विशेषान्तरस्यापि प्रदर्शनाय विशेषणान्तरमुपादेयमेव हिन्दीमङ्गलपद्येऽपि।** तत्र तन्नोपात्तमिति, भाषाविचारसागरस्य परिष्काररूपेण प्रवृत्ते संस्कृतविचारसागरे **"बुद्धेर्दृग्" इति विशेषणमुपात्तम्।**

(३) संस्कृतमङ्गलश्लोके ब्रह्मस्वरूपबोधकविशेषणानामन्ते (1) 'सर्ववेदान्तवेद्यम्' (2) 'प्रत्यक्' इति विशेषणद्वयमुक्तम्। हिन्दीमङ्गलपद्ये त्वेतत्स्थानीयं विशेषणद्वयं न दृश्यते। **सप्रयोजनत्वादावश्यकमेव संस्कृतमङ्गलश्लोकोक्तं विशेषणद्वयमपि।** तत्र 'सर्ववेदान्तवेद्यम्' इति विशेषणं पूर्वविशेषणैर्लक्षिते ब्रह्मणि सर्वे वेदान्ताः प्रमाणमिति बोधयति। न केवलेन लक्षणेन वस्तुनः सत्तानिश्चयो भवति। किन्तु तदवबोधकप्रमाणेऽपि सत्येव। "लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिः" इतीर्यते। प्रत्यगभिन्नं ब्रह्म तु लौकिकप्रत्यक्षादिप्रमाणानां विषयो न भवति। अतः "सुखं नित्यं स्वप्रकाशम्"

---

१. यद्यपि 'सुख नित्य' इसरीति सैं दो विशेषणकरिही अतिव्याप्ति तौ दूरी होवै है, तथापि अधिकविशेषण जो कहेहैं, सो अनेकरीति सैं ब्रह्मके लक्षणकाज्ञान होवै। इस निमित्त कहेहैं'। (इति टीका P. 4.)

इत्यादिविशेषणैः ब्रह्मणि लक्षितेऽपि तदवबोधकप्रमाणाभावाद्ब्रह्मणः सत्वविषये शङ्कैव स्यात् । **इदं विशेषणं तु** ब्रह्मणि सर्वे वेदान्ताः प्रमाणमिति बोधनद्वारा **ब्रह्मास्तित्वनिश्चयहेतुर्भवतीति सार्थकम् ।**

(४) **'प्रत्यक्' इति विशेषणमपि सफलत्वादवश्योपादेयम् ।** लक्षणप्रमाणाभ्यां ब्रह्म सिद्धम् । "सुखं नित्यम्" इत्यादिविशेषणैर्ब्रह्मणः अविनाशिनित्यानन्दरूपत्वमपि बोधितम् । तथापि ब्रह्मणः परोक्षत्वे तादृशानन्दरूपब्रह्मप्राप्तेः पुरुषार्थत्वं न सिद्ध्येत् । अपरोक्षस्यैवानन्दस्य पुरुषार्थत्वप्रसिद्ध्या ब्रह्मानन्दस्यापरोक्षतापि बोधयितव्या । **'प्रत्यक्' इतीदं विशेषणं तु ब्रह्मानन्दस्यापरोक्षताबोधनद्वारा तस्य पुरुषार्थत्वबोधकत्वात्सफलमुपादेयञ्च ।** 'प्रत्यक्' इति शब्दस्यान्तरात्मेत्यर्थः । 'प्रत्यगभिन्नं ब्रह्म' इत्यर्थोऽनेन विशेषणेन वर्ण्यते । प्रत्यगात्मा च सर्वेषामपरोक्षः । तादृशप्रत्यगभिन्नं ब्रह्माप्यपरोक्षमिति ब्रह्मस्वरूपानन्दोऽप्यपरोक्षत्वात्पुरुषार्थ इति सिद्ध्यति ।

(५) हिन्दीग्रन्थे "अपार" इति मूलोक्तविशेषणस्योपपादनाय "देशकालवस्तुकरि अंतते रहित" इति टिप्पणं दत्तम् । देशकालवस्तुभिर्ब्रह्मणः परिच्छेदो नास्तीति तट्टिप्पणार्थः । तदुपर्यपि "देशकालवस्तुभिः परिच्छेदो नाम कः ? कथं च स न ब्रह्मणि भवति ?" इत्याद्याकाङ्क्षोदेति । लोकतस्तज्ज्ञानाभावात् टिप्पणकृता सोऽप्यर्थो विवरणीय एव । न तु विवृतः । संस्कृतग्रन्थेऽत्र टिप्पण्यामुदाहरणप्रदर्शनपूर्वकं देशकालवस्तुकृतपरिच्छेदो विवृतः । देशकालवस्तूनां ब्रह्मण्यध्यस्तत्वान्न ते ब्रह्म परिच्छेत्तुमर्हन्तीति च प्रदर्शितम् । इत्याकाङ्क्षितार्थविवरणपरा संस्कृतटिप्पणी प्राप्तावसरा निबद्धा ।

(६) शमदमादिसाधनषट्कलक्षणप्रस्तावेऽपि संस्कृतविचारसागरे तत्र तत्रापेक्षितानि सप्रयोजनानि विशेषणानि समीक्ष्य निवेशितानि ।

(i) "विषयेभ्यो मनसः प्रतिनिवर्तनं शमः, इन्द्रियाणां प्रतिनिवर्तनं दमः" इति शमदयोर्लक्षणमुक्तं हिन्दीविचारसागरे । संस्कृते तु "प्राचीनविषयवासनात्यागपूर्वकम्" इत्यधिकांशो निवेशितः । स चार्थवान् । विषयेभ्यः प्रतिनिवृत्तानि समनस्कानीन्द्रियाणि विषयवासनासद्भावे पुनःपुन-

---

१. "मन विषयनतैं रोकनों सम तिहीं कहत सुधीर ।
इन्द्रियगनको रोकनों दम भास्वत वीर ॥" (1-16)

विषयानेवानुचिन्त्य धावेयुः। अतः शमदमादिस्थैर्यसिद्धये **शमदमाद्यभ्यसन-**समकालं मुमुक्षुः विषयदोषानुचिन्तनादिना विषयवासनापरित्यागविषयेऽपि यत्नमादधीतेति बोधयितुं **"प्राचीनविषयवासनापरित्यागपूर्वकमिति विशेषणोपादानं समीक्ष्य कृतं वेदितव्यम्।**

(ii) "गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा" इति हिन्दीग्रन्थे श्रद्धा-लक्षणमुक्तम्[1]। संस्कृतग्रन्थे तु "श्रद्धा नाम गुरुवेदान्तवाक्येषु दृढतरविश्वासः" इति विश्वासे दृढतरत्वविशेषणमधिकमुपात्तम्। **तदिदमधिकविशेषणमेव-मर्थवत्।** तथाहि—आत्मतत्त्वज्ञानं पुरुषार्थहेतु। अलौकिकत्वादात्मतत्त्वस्य वेदान्तवाक्येभ्य एव तज्ज्ञानं संपाद्यम्। वेदान्तानां यथावदर्थाधिगमश्च गुरूपदेशेनैव लभ्यः। अतः गुरुवाक्ये वेदान्तवाक्ये च विश्वासदार्ढ्ये सत्येव गुरुमुखाद्वेदान्तानामर्थनिर्णयरूपं श्रवणं, ज्ञानस्यान्तरङ्गसाधनभूतं सिद्ध्येदिति गुरुवेदान्तवाक्यविश्वासे दृढतरत्वविशेषणं सफलम्। गुरुवेदान्तवाक्ये दृढतर-विश्वासे सत्येव यथावच्छ्रवणं सिद्ध्येन्नान्यथेति भावः।

(iii) हिन्दीग्रन्थे ससाधनानां सर्व[2] कर्मणां परित्याग उपरमः इत्युक्तम्। संस्कृतग्रन्थे तु "ससाधनानामैहिकामुष्मिकभोगहेतूनां लौकिकवैदिककर्मणां परित्यागः उपरमः" इत्युक्तम्। **उपरमलक्षणे 'ऐहिकामुष्मिकभोगहे-तूनाम्' इति त्यक्तव्यानां कर्मणां विशेषणमुक्तं सफलम्।** अन्यथा चित्तशुद्ध्यादिद्वारा ज्ञाने बहिरङ्गसाधनानामपि कर्मणां परित्यागापत्तेः। असं-न्यासिना जिज्ञासुना नित्यकर्मत्यागस्य कर्तुमनुचितत्वात्॥

(iv) अपि चोपरमलक्षणप्रस्तावे एव हिन्दीग्रन्थे टिप्पणे स्त्रीरूप-विषयस्य विषयान्तरेभ्योऽतितरामनर्थहेतुत्वमुपवर्ण्य स्त्रीरूपविषयपरित्यागस्य फलमनिष्टनिवृत्तिः प्रदर्शिता। संस्कृतटिप्पणे तु स्त्रीरूपविषयपरित्यागस्यैव ब्रह्मचर्यरूपत्वं, तादृशब्रह्मचर्यस्य ब्रह्मलोकप्राप्तिहेतुत्वं चोपवर्ण्य **स्त्रीरूपविषय-परित्यागस्य फलमिष्टप्राप्तिरपि प्रदर्शिता।**

(v) हिन्दीग्रन्थे ब्रह्मप्राप्तिरनर्थनिवृत्तिश्च मोक्ष इति वर्णितम्[3]। संस्कृत-ग्रन्थे तु स्वस्वरूपभूतब्रह्मप्राप्तिरनर्थनिवृत्तिश्च मोक्ष इति वर्णितम्। अत्र

१. "सत्य वेद गुरुवाक्य हैं श्रद्धा अस विस्वास"। (1-17)
२. "साधनसहितकर्म सब त्यागै" (1-18)
३. "ब्रह्मप्राप्ति अरु बन्धकी, हानि मोछको रूप" (1-21.)

**स्वस्वरूपभूतं इति ब्रह्मणो विशेषणं समीक्ष्योपात्तम्। अनेन विशेषणेन** नित्यापरोक्षप्रत्यगभिन्नत्वस्य ब्रह्मणि बोधनाद्ब्रह्मणोऽप्यपरोक्षता, ब्रह्मस्वरूपानन्दस्याप्यपरोक्षता, **ब्रह्मप्राप्तेः पुरुषार्थता चावगम्यते।**

(vi) हिन्दीग्रन्थे यज्ञादिकर्म सकामस्य संसारहेतुः। निष्कामस्य चित्तशुद्धिहेतुरिति कामतदभावाभ्यां फलभेदमात्रं प्रदर्शितम्[1]। संस्कृतग्रन्थे तु तत्र **प्रमाणतया यथाक्रतुश्रुतिसंयोगपृथक्त्वन्यायावपि प्रदर्शिताविति विशेषः।**

(vii) हिन्दीग्रन्थे श्रवणलक्षणप्रस्तावे टिप्पण्यां वेदान्तानामद्वैते ब्रह्मणि तात्पर्यनिर्णायकानामुपक्रमोपसंहारैकरूप्यादीनां षण्णां लिङ्गानां लक्षणमात्रं वर्णितम्। संस्कृतग्रन्थे तु तेषां लक्षणानां समन्वयप्रदर्शनमुखेन छान्दोग्यषष्ठप्रकरणगतानि वाक्यान्युदाहृत्य तैस्तैर्लिङ्गैरद्वितीये ब्रह्मणि छान्दोग्यषष्ठप्रपाठकस्य तात्पर्यनिर्णयप्रकारश्च सुस्पष्टमुदाहृत इति विशेषः। अद्वैतस्यैव तत्र तात्पर्यनिर्णायकलिङ्गानामप्यलौकिकत्वात्तात्**पर्यलिङ्गलक्षणानां समन्वय - प्रदर्शनमपि जिज्ञासुनाऽऽकाङ्क्षितमिति** संस्कृतग्रन्थे समन्वयप्रदर्शनमपेक्षितवर्णनमेव।

(viii) हिन्दीग्रन्थे निदिध्यासनस्य फलवर्णनप्रसङ्गे "जीवब्रह्मणोर्भेदः सत्य इति ज्ञानं विपरीतभावना। तद्दूरीकरणं निदिध्यासनस्य फलम्" इति वर्णितम्[2]। अत्र संस्कृतग्रन्थे काचन टिप्पणी मूलोक्तेऽर्थेऽवश्यंभाविन्याः शङ्कायाः तत्समाधानस्य च प्रदर्शनपरा अधिकतया निबद्धा। तथाहि—**शङ्का**—निदिध्यासनात्पूर्वं सम्यक् श्रवणमनने साधिते। ताभ्यां सर्वसंदेहनिवृत्या निर्विचिकित्सः आत्मतत्वनिश्चयो जातः। ततः परं जीवब्रह्मभेदभ्रमानुवृत्तिरसंभाविता। अतश्च भेदभ्रमनिवर्तकनिदिध्यासनस्य नास्त्येवोपयोग इति।

तत्र **समाधानम्**—श्रवणमननाभ्यां सिद्धं निर्विचिकित्समप्यद्वैतात्मतत्त्वज्ञानमद्यापि परोक्षरूपमेव। अनुवर्तमानो द्वैतभ्रमस्त्वपरोक्षरूपः। स चापरोक्षो द्वैतभ्रमः अपरोक्षेणैवाद्वैतात्मतत्त्वज्ञानेन निवर्तयितुं शक्यः। अत

---

१. "तथापि यज्ञादिक कर्म सकाम पुरुषकूं संसारके हेतु हैं।
औ निष्कामकूं अन्तः करणकी शुद्धिके हेतु हैं॥" (1-23.)

२. "जीवब्रह्मका भेद सत्य है। ऐसे ज्ञानकूं विपरीतभावना कहैहैं। ताकूं निदिध्यासन दूरी करैहैं।" (P. 12)

श्रवणमननाभ्यां सिद्धस्य परोक्षस्याद्वैतात्मतत्त्वज्ञानस्यापरोक्षतासिद्धये निदिध्यासनमनुष्ठेयं, निदिध्यासनस्य दृष्टफलत्वात् यावदद्वैतात्मतत्त्वसाक्षात्कारोदयं निदिध्यासनमभ्यसितव्यञ्चेति । निदिध्यासनाभ्यासेनाद्वैतात्मतत्त्वसाक्षात्कारे उदिते अपरोक्षो द्वैतभ्रमः सद्य एव निवर्तते । एतादृशशङ्कासमाधानरूपोऽर्थः प्राप्तावसरत्वात् संस्कृतग्रन्थे टिप्पण्यां निबद्धः । मूलोक्तार्थादुपरि भाविन्याः शङ्कायाः समाधानमाकाङ्क्षमाणानां पठितॄणामाकाङ्क्षा एतट्टिप्पण्यभावे न शान्ता भवतीति संस्कृतग्रन्थे निबद्धेयं टिप्पणी आवश्यिकी ॥

(ix) एतद्ग्रन्थस्य विषयवर्णनप्रस्तावे "जीवब्रह्मैक्यमस्य ग्रन्थस्य विषयः" इति हिन्दीग्रन्थे वर्णितम् । तदुपरि विरुद्धस्वभावयोर्जीवब्रह्मणोः कथमेकत्वं स्यादिति शङ्कोदेति । तत्र समाधानं वर्णयन्त इव "जीवशब्देनात्र जीवपदलक्ष्यार्थः कूटस्थो बोध्यः" इति टिप्पणं संस्कृतग्रन्थे सुसमीक्ष्य निबद्धम् ।

एवं तत्र तत्राकाङ्क्षितस्य, सप्रयोजनतयाऽवश्यं वर्णनीयतया प्राप्तस्यार्थस्यानुपेक्षणेन यथास्थानं वर्णनं संस्कृतविचारसागरस्य विशेषगुणमावहति ।

अथ हिन्दीग्रन्थे प्रथमतरङ्गे वर्णितानां केषाञ्चिद्विषयाणां अनवसरत्वात्संस्कृतग्रन्थेऽवर्णनं प्रदर्श्यते––

(१) हिन्दीग्रन्थे मूले जीवब्रह्मणोरभेदसाधकयुक्तिभिर्भेदबाधकयुक्तिभिश्चाद्वैतब्रह्मैक्यानुसन्धानमिति मननलक्षणं प्रदर्शितम् । टिप्पण्यामभेदसाधकयुक्तयः भेदबाधकयुक्तयश्चोदाहृताः । तत्र जीवब्रह्मणोरभेदसाधकयुक्तिष्वनुमानार्थापत्त्योः प्रत्येकमेकमेवोदाहरणं प्रदर्शितम् । उपमाने तूदाहरणद्वयं प्रदर्शितम् । संस्कृतग्रन्थे तु प्रथमोपमानमेव प्रदर्शितं न तु––द्वितीयोपमानमपि । तत्र च हेतुरेवम्––नेदं प्रकरणमैदंपर्येण जीवब्रह्मणोरैक्यसाधनाय प्रवृत्तम् । अतोऽत्र साकल्येन तद्युक्तीनां प्रदर्शनमप्राप्तकालम् । चतुर्थे तरङ्गे ऐदंपर्येणाक्षेपसमाधानपूर्वकं जीवब्रह्मैक्यसाधनप्रकरणे द्वितीयमुपमानं निरूपयिष्यते च । अत्र तु मननप्रकरणे प्रसङ्गादभेदसाधकयुक्तिप्रदर्शनस्य प्राप्तत्वात्

१. एवं संशयद्वये निवृत्तेऽपि साक्षात्कारात्पूर्वमविद्यायाः सत्त्वात् "अहं ब्रह्म न भवामि जीव एव, मत्तो भिन्नमेव ब्रह्म, देहादि जगत् सत्यम्' इत्येवंविधानेकविपर्ययाः पुनःपुनर्जायेरन् । तन्निवृत्तये सदा निदिध्यासितव्यमेव ॥" इति ।

२. जीवब्रह्मकी एकता, कहत विषय (1-25)

**प्रसिद्धस्य प्रथमोपमानस्य प्रदर्शनेनैव प्रकृतकार्यनिर्वाहाद्द्वितीयमुपमान-मत्र न प्रदर्शितम् ।**

(२) जीवब्रह्मणोर्भेदबाधकयुक्तिमध्ये अनुमानोपमानार्थापत्त्यनुपलब्धीनां प्रत्येकमेकमुदाहरणं दत्तं हिन्दीग्रन्थे संस्कृतग्रन्थे च टिप्पण्याम् । परन्तु हिन्दीग्रन्थे टिप्पण्यां जीवानां परस्परभेदस्य, जीवजडभेदस्य, ईश्वरजडभेदस्य जडानां परस्परभेदस्य च मिथ्यात्वसाधकान्युपमानानि वर्णितानि । पूर्वोक्त-भेदचतुष्टयस्य मिथ्यात्वसाधकान्यनुमानानि च तृतीयतरङ्गे वक्ष्यमाणान्यत्राप्य-नुसन्धेयानीति चोक्तम् । जीवब्रह्मभेदमिथ्यात्वस्यैवात्र प्रकृतत्वात्, तत्साधक-प्रमाणप्रदर्शनमेवात्र प्राप्तावसरमिति **प्रकृतानुपयोगिनः इतरभेदचतुष्टय-मिथ्यात्वसाधकप्रमाणस्यात्राप्रदर्शनं युक्तमेव ।**

(३) हिन्दीग्रन्थे संस्कृतग्रन्थे चोभयत्रापि निदिध्यासनलक्षणमुक्त्वा निदिध्यासनपरिपाकावस्थैव समाधिरिति निदिध्यासनेऽन्तर्भावात्समाधिर्न पृथक् साधनम् इति मूले उक्तम् । हिन्दीग्रन्थे टिप्पणे तु निर्विकल्पकसमाधेः बाह्याभ्यन्तरभेदेन द्वैविध्यं, आन्तरनिर्विकल्पकसमाधेः साक्षात्कारासाक्षात्कार-भेदेन द्वैविध्यं,तेषां भेदानां लक्षणं, अद्वैतात्मसाक्षात्कारे सति आत्मावारका-ज्ञानरूपावरणभङ्गः, जीवन्मुक्तिः, मनोनिरोधाभ्यासाद्वासनाक्षयमनोनाशौ, विलक्षणजीवन्मुक्तयानन्दः, इत्यादिः प्रपञ्चितः । परन्तु ज्ञाने अन्तरङ्गसाधन-श्रवणादिस्वरूपस्य सामान्यरूपेण वर्णनपरेऽ**स्मिन् तरङ्गे निर्विकल्पकसमाधि-प्रपञ्चनस्य नावसर इति संस्कृतग्रन्थे अत्र प्रकरणे तदवर्णनम् ।**

(४) साधनसंपन्नस्याधिकारिणः तत्त्वमसीत्यादिमहावाक्यादेवापरोक्षं ज्ञानं जायते इत्येतद्विवरणप्रसङ्गे दशमपुरुषकथा प्रस्तुता । प्रकृतसमन्वयं प्रति तस्यां कथायां यावानंशोऽत्रापेक्षितस्तावन्मात्रेण सा कथा संस्कृतग्रन्थे विवृता । तथाहि, दृष्टान्ते अपरोक्षज्ञानकारणस्य चक्षुरादेः सत्त्वेऽपि आप्तोक्तात् 'दश-मस्त्वमसि' इति वाक्यादेव दशमपुरुषस्य स्वापरोक्षज्ञानं जातं चक्षुस्तु सहकारिमात्रम् । तथा दार्ष्टान्तिकेऽपि साधनसंपन्नस्य गुरूपदिष्टात् तत्त्वम-सीति महावाक्यादेव ब्रह्माभिन्नतया स्वप्रत्यगात्मसाक्षात्कारो भवति, प्रतिबन्धक-शून्यं शुद्धान्तःकरणं सहकार्येवेत्येतावन्मात्रप्रतिपादनाय सा कथोपयुक्ता । हिन्दीग्रन्थटिप्पणे तु दृष्टान्ते (1) 'दशमपुरुषमहं न जानामि' इत्यज्ञाना-वस्था, (2) 'दशमो नास्ति' (3) 'दशमो न प्रतीयते' इति द्विविध-

मावरणं, (4) रोदनादिरूपविक्षेपः, (5) 'दशमोऽस्ति' इत्याप्तोक्तावान्तर-वाक्याद्दशमास्तित्वज्ञानं परोक्षरूपं, (6) 'दशमस्त्वमसि' इति वाक्यात् दशमोऽहमित्यपरोक्षं ज्ञानं, (7) आवरणविक्षेपसहिताज्ञाननाशः हर्षावाप्तिरिति सप्तावस्थाः, तथा दार्ष्टान्तिकेऽपि (1) 'प्रत्यगभिन्नं ब्रह्म न जानामि' इत्यज्ञानावस्था, (2-3) 'ब्रह्म नास्ति,' 'ब्रह्म न भाति' इति द्विविधमावरणं (4) अर्थाध्यासज्ञानाध्यासरूपविक्षेपः (5) 'अस्ति ब्रह्म' इत्यवान्तरवाक्यात् ब्रह्मास्तित्वविषयकं परोक्षं ज्ञानम्, (6) तत्त्वमसीति महावाक्यात् प्रत्यगभिन्न-ब्रह्मापरोक्षज्ञानं, (7) आवरणविक्षेपसहिताज्ञाननाशः, द्विविधाध्यासरूपविक्षेप-नाशः परमानन्दावाप्तिश्चेति सप्तावस्था उपपादिताः। **प्रकृते** शब्दादपरोक्षं ज्ञानं जायते इत्यस्योपपादनाय, उपरिप्रदर्शितासु सप्तस्ववस्थासु मध्ये **षष्ठावस्था-विवरणमात्रमलम्। अतः संस्कृतग्रन्थे तावन्मात्रेण प्रकृतकथा विवृता।** चतुर्थे तरङ्गे उचिते प्रकरणे दशमपुरुषकथा विस्तरेण प्रपञ्चयिष्यते च।

(५) किञ्च हिन्दीग्रन्थे "तहां मार्गमें मृगजलकी नदी प्राप्त भई। ताकूं उल्लङ्घन करते भये" इति **मृगतृष्णिकानदीतरणवर्णनं न युक्तमिव भाति।** मृगतृष्णिकानदीं दृष्ट्वा पिपासितः पुरुषो धावतीति प्रसिद्धं लोके न तु मृगतृष्णिकानदीतरणं प्रसिद्धम्। अतः संस्कृतग्रन्थे "गभीरां कांचिन्नदीं तीर्त्वा परं पारं गताः" इति व्यावहारिकनदीतरणं वर्णितम्।

(६) सविलासाविद्यानिवृत्तिः परमानन्दावाप्तिश्च मोक्षः इति मोक्ष-स्वरूपाङ्गीकारे अभावरूपाया अविद्यानिवृत्तेः भावरूपाया आनन्दप्राप्तेश्चैकत्र सामानाधिकरण्यासिद्धौ मोक्षासिद्धिः। ग्रन्थस्य प्रयोजनासिद्धिश्चेत्याक्षेपे, कल्पितनिवृत्तेरधिष्ठानरूपत्वपक्षमङ्गीकृत्याविद्यानिवृत्तेरधिष्ठानब्रह्मरूपत्वेन भाव-रूपत्वान्न भावाभावसामानाधिकरण्यापत्तिर्मोक्षे इति समाहितं हिन्दीग्रन्थे मूले। अत्र हिन्दीग्रन्थे टिप्पण्यां तु, कल्पितनिवृत्तेरनिर्वचनीयत्वमिति द्विती-यपक्षस्य विवरणं, तत्रानिर्वचनीयत्वपक्षापेक्षया अधिष्ठानरूपत्वपक्षाश्रयणे लाघ-वमन्यत् किञ्चिदपि वर्णितम्। **प्रकृतेऽनपेक्षितत्वात् तत्सर्वं न वर्णितं संस्कृतग्रन्थटिप्पण्याम्।**

**एवं प्रकरणानपेक्षितस्य परित्यागेनापेक्षितार्थमात्रवर्णनं संस्कृत-ग्रन्थस्य वैशिष्ट्यं ज्ञेयम्।**

एवं नानादेशोपकाराय सरलसंस्कृतभाषायां निबद्धत्वात्, युक्तिभिः

सुविशदमुपपादितानामर्थानां प्रमाणराजवेदान्तवाक्योदाहरणेन दृढीकरणात्, आत्मतत्त्वज्ञानोपयोगिनां सर्वेषां विषयाणां समीक्ष्यान्यूनानतिरिक्ततया वर्णनाच्च **संस्कृतविचारसागरस्य सप्रयोजनता ज्ञेया ।**

साधनसंपन्नानां प्रथमतरङ्गाभ्यास एवालमात्मज्ञानसंपत्तये इत्युक्तं वस्तु-कथनमेव ।

**श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनां संस्कृतविचारसागरप्रणेतॄणां जीवितचरितम् ।**

श्रीस्वामिभिर्विरचितयोः मुद्रितयोः ब्रह्माह्निकशास्त्रसिद्धान्तलेशतात्पर्य-सङ्ग्रहाख्यग्रन्थयोर्भूमिकातः, श्रीस्वामिनां शिष्यसकाशाच्च तेषां चरितमधिकृत्य यदवगतं तदत्र संक्षिप्य लिख्यते——

एते मद्रदेशे तञ्जावूरुप्रान्ते कावेरीतीरे विराजमाने श्रीमत्पञ्चनदक्षेत्रे (तिरुवैय्यारु इतीदानीं प्रसिद्धे) त्रैलिङ्गकुलललामभूते द्विजोत्तमकुले लब्ध-जन्मानः । स्वजनकसकाशादेवाधीतवेदव्याकरणादिविद्याः बाल्यादारभ्यैव वैराग्यशमदमादिसंपन्नाः पञ्चविंशतेरर्वागेव वयसि स्वात्मजं स्वपत्नीसकाशे निक्षिप्य सर्वकर्माणि सन्यस्य गृहान्निर्गताः । श्रीकृष्णानन्दसरस्वतीनामकान् सद्गुरूनुपगम्य तैर्बहुधा परीक्षिताः संतुष्टैश्च तैः कृतोपदेशास्तुरीयाश्रमं प्रवि-विशुः । स्वगुरुभ्यो ब्रह्मविद्यां सम्यगधिगत्य सततं ब्रह्मविचारपराः प्रवचनपराश्च कावेरीतीरे श्रीगणपत्यग्रहाराख्ये पुण्यक्षेत्रे स्वगुरूणामन्तिक एव तेषां विदेह-कैवल्यपर्यन्तमेकविंशतिवत्सरान् न्यवसन् ।

ततः कावेरीतीर एव तत्र तत्रोषित्वा क्रमेण कावेरीतीर एव विराज-मानं मायूरक्षेत्रमासाद्य तत्र कावेरीतटविलसच्छ्रीविश्वेश्वरालयसन्निधौ विराज-मानं मठमलंकुर्वन्तः सप्तदशसंवत्सरानवात्सुः । तत्रैते स्वामिनः स्वाश्रमधर्मान् यथावदनुतिष्ठन्तः शिष्याणामध्यात्मशास्त्राध्यापनपराः, साधारणजनानां, वैदिक-धर्मानुष्ठानस्य सकलकल्मषनिबर्हणद्वारा सर्वश्रेयस्साधनतां बोधयन्तश्च सन्तो जीवन्मुक्ताः ब्रह्मविद्यारसिका बभूवुः । श्रीस्वामिनामुपदेशबलात्तत्प्रान्तवासिनः सर्वेऽपि वैदिकधर्मनिरता बभूवुः । केचन सोमादिक्रत्वनुष्ठानपराश्च बभूवुः बहवः वेदान्तकुशला अभवंश्च ।

ततः गुरुभक्त्या प्रचोदिताः स्वामिनः स्वगुरूणां स्थूलदेहो यत्र पतित-स्तत्रैव स्वभौतिकदेहस्यापि पातमिच्छन्तः विदेहकैवल्यावाप्तेः षण्मासेभ्यः पूर्वमेव

पुनरपि गणपत्यग्रहारक्षेत्रमासेदुः। तत्र च गते प्रमोदनामके संवत्सरे माघशुद्ध-शुक्लपञ्चम्यां 1931 तमे क्रैस्तवाब्दे जनवरीमासे एकविंशे दिने 21-1-1931 ब्रह्मभावमापन्नाः। तेषां विदेहकैवल्यावाप्तिकाले वयसामशीतिर्गतेति श्रूयते ।।

श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनां गुरवः श्रीकृष्णानन्दसरस्वतीपादाः। परमगुरवस्तु श्रीरामचन्द्रसरस्वतीपादाः। एते च श्रीरामचन्द्रसरस्वतीपादाः मुमुक्षुभिः सदाऽनुसन्धानार्हं अष्टोत्तरशतोपनिषद्भ्यः उद्धृतैरष्टोत्तरसहस्रैर्महावाक्यैर्गुम्फितं 'महावाक्यरत्नावलीनामकं ग्रन्थरत्नं तद्व्याख्यानं च व्यरचयन्।

अनवरतप्रवचनतत्परा एते श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनः "कोशवानाचार्य" इति सूक्तिमनुसृत्य बहूनां मुद्रितानाममुद्रितानां च ग्रन्थानां संचयं समपादयन्। अनलसाः सन्तः स्वहस्तेनैव नानाग्रन्थान् विलिलिखुः। श्रीस्वामिभिः संपादितानां मुद्रितानाममुद्रितानां च पुस्तकानां निधानभूतः "श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिकोशालयः" मायूरक्षेत्रे श्रीस्वामिनः यत्र मठे न्यवसन् तत्रैवेदानीमपि विलसति। तत्प्रान्तवासिनां सर्वेषामपि ज्ञानाभिवृद्धिविषये कोशालयोऽयं महदुपकरोति। तत्रेदानीं सहस्रसंख्यापरिमितानि पुस्तकानि सन्ति। तत्र वेदान्तग्रन्थाः भूयांसः। पुराणे, स्मृतौ, मीमांसायां, स्तोत्रे, च बहवो ग्रन्थाः सन्ति। अस्मिन् कोशालये षट्शतसंख्यापरिमितानि हस्तलिखितानि पुस्तकानि (Manuscripts) आसन्। तत्र पञ्चशतेभ्य अधिका हस्तलिखिताः ग्रन्थाः 1958 तमे संवत्सरे मद्रपुरे विराजमानां हस्तलिखितपुस्तकशालां (Oriental Manuscripts Library) प्रति प्रेषिताः संरक्षणार्थम्। त्रिंशत्संख्याकाः हस्तलिखिताः ग्रन्थाः अण्णामलैविश्वविद्यालयं प्रति प्रेषिताः तदर्थमेव। पञ्चविंशतिसंख्याकाः हस्तलिखिताः ग्रन्था इदानीं मायूरे श्रीस्वामिनां कोशालये सन्ति। अयं च श्रीस्वामिनां कोशालयः इदानीं कयाचन समित्या परिपाल्यते।

**श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिभिर्विरचिता ग्रन्थाः—**

प्रकृतो विचारसागरः एकः। ब्रह्माह्निकं शास्त्रसिद्धान्तलेशतात्पर्यसङ्ग्रहश्चेत्यन्यौ द्वौ ग्रन्थावित्याहृत्य त्रयो ग्रन्थाः श्रीस्वामिभिर्विरचिताः।

तत्र ब्रह्माह्निकं नाम, कामनां विनाऽनुष्ठितकर्मोपासनादिभिर्निवृत्तमलविक्षेपादिचित्तदोषैः परिशुद्धान्तःकरणैर्गृहस्थैर्विशेषतः सन्यासिभिश्चात्मतत्वाधिगमाय प्रतिदिनमनुसन्धानयोग्यो ग्रन्थः। श्रीस्वामिनां परमगुरवः श्रीरामचन्द्र-

सरस्वतीपादाः यथा सर्वोपनिषद्भ्यो महावाक्यानि समाहृत्य "महावाक्यरत्नावलीं निबबन्धुः तथा श्रीस्वामिनः ज्ञानवासिष्ठसूतसंहिताभगवद्गीताविवेकचूडामण्युपदेशसाहस्त्रीपञ्चदशप्रकरणादिभ्यो ग्रन्थेभ्यः सारतराणि महावाक्यार्थप्रतिपादकानि वाक्यानि समुच्चित्य मुमुक्षुभिरनुदिनमनुसन्धानार्हमिमं ग्रन्थं व्यरचयन्। अत्र 467 श्लोकाः सङ्गृहीताः।

श्रीस्वामिभिर्विरचितोऽपरो ग्रन्थः शास्त्रसिद्धान्तलेशतात्पर्यसङ्ग्रहः। अयं च ग्रन्थः श्रीमदप्पय्यदीक्षितेन्द्रैर्विरचितस्य सिद्धान्तलेशसङ्ग्रहाख्यस्य ग्रन्थस्य सारसङ्ग्रहरूपः। सर्वतन्त्रस्वतन्त्राः अप्पय्यदीक्षितेन्द्राः नानाचार्यैरधिकारिभेदोद्देशेन प्रदर्शितान् मतभेदान् सङ्गृह्य स्वकीयं सिद्धान्तलेशसङ्ग्रहाख्यं ग्रन्थं व्यदधुः। ततः श्रीसदाशिवब्रह्मेन्द्रसरस्वतीस्वामिनः सिद्धान्तलेशसङ्ग्रहे सप्रपञ्चं विवृतानां मतभेदानां मनसि धारणसौकर्याय झटित्युपस्थितिसिद्धये च कारिकारूपेण सिद्धान्तकल्पवल्ल्याख्यं ग्रन्थं तट्टीकां च प्रणिन्युः। सिद्धान्तकल्पवल्ल्यां तत्तन्मतप्रमेयस्यातिसङ्ग्रहेण वर्णितत्वात्, केषांचिन्मतानां प्रतिपादनस्यैवाभावाच्च श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिनः साकल्येन सर्वेषां मतभेदानां तात्पर्यमात्रं सङ्गृह्य गद्यरूपेण स्वकीयं शास्त्रसिद्धान्तलेशतात्पर्यसङ्ग्रहाख्यं ग्रन्थं प्रणीतवन्तः। संक्षेपेण वैशद्येन चाद्वैतसिद्धान्तानधिकृत्य प्रवृत्तानां सर्वेषां मतभेदानामस्मिन् ग्रन्थे प्रदर्शितत्वात् अद्वैततत्त्वजिज्ञासूनां महते उपकारायायं ग्रन्थो भवेत्। द्वावपीमौ ब्रह्माह्निकशास्त्रसिद्धान्तलेशतात्पर्यसङ्ग्रहाख्यौ ग्रन्थौ मुद्रितपूर्वौ॥

अद्वैतशास्त्रे प्रकरणग्रन्थेषु मुख्यतमः श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिभिर्विरचितः विचारसागराख्योऽयं ग्रन्थः मुद्रितश्चेत् नानादेशेषु भूयसे उपकाराय प्रकल्पेत इति मन्वानाः श्रीवासुदेवब्रह्मेन्द्रसरस्वतीस्वामिकोशालयस्य कार्यदर्शिमहाशयाः श्रीस्वामिनामन्तेवासिष्वन्यतमाः श्रीवेङ्कटरामार्याः यथायं ग्रन्थः मुद्रणार्हो भवेत्तथा संशोध्य परिष्कारः कर्तव्य इति प्रार्थनापूर्वकं श्रीस्वामिभिः स्वहस्तेनैव लिखितौ द्वौ मातृकाग्रन्थौ मद्धस्ते समर्पितवन्तः। मया च तावुभावपि मातृकाग्रन्थौ आमूलाग्रं यथामति संशोध्य परिष्कृत्य विलिख्य ग्रन्थोऽयं मुद्राप्यते। सारभूतस्यास्य ग्रन्थस्य मुद्रणविषये सर्वमुपकारं भारतीयराजकीयविद्याविभागाधिकारिणो व्यतरन् इति सप्रश्रयं तेभ्यः कृतज्ञता निवेद्यते।

---

# PREFACE

BY

## (Late) Sri P. PANCHAPAGESA SASTRIGAL, M.O.L.

VYAKARANA, SAHITYA AND VEDANTA SIROMANI.

**Atmatattvagn̄āna is obtained by Vicāra**

Vicāra is defined as ascertaining the real nature of the Ātman and the Phenomenal world based upon the correct understanding of the true import of the Vēdāntas through the instruction of the Guru who has perfectly realised the Ātman. Vicāra or investigation on matters relating to the Ātman and the Phenomenal world is found in full details in the Upaniṣads, the Brahmasūtras, the Bhagavadgītā, the Bhāṣyas on them, the commentaries on the Bhāṣyas and several other concerned texts. To a student of average ability these texts are too difficult to be easily understood. So great writers have written simple treatises on Vēdānta for the easy understanding of the contents of Vēdānta by the average students.

**Vicārasāgara is one of the best handbooks on the Advaita Vēdānta :—**

Vicārasāgara is a comprehensive treatise dealing with all the topics essential for the realisation of the Ātman in its true nature. All the truths of the Advaita Vēdāntā have been proved beyond question in this work by proper arguments in strict conformity with the texts on the Advaita Vēdānta. Every item has been vividly explained. All the essential themes on Advaita Vēdānta are completely explained in this work. So it is a guide and handbook both for the regular students of Advaitā Vēdānta and laymen.

**The authors of the Vicārasagara :—**

Sādhu S'rī Niścaladāsa Paṇḍita first composed the Vicārasāgara in poetry in the Hindi language prevailing then in the region where he lived. Then Paṇḍita S'rī Pītāmbaraji wrote Tīkās in Hindi prose on the Kārikās of Śrī Niścaladās. On a subsequent date Śrī Pītāmbaraji wrote tīppaṇas on both the original Kārikās of Vicārasāgara and the tīkās on them by himself.

Vicārasāgara with tīkā and tīppaṇas was found to be a book of good use. So faithful renderings of it were brought out by

५३. **जिज्ञासोर्मुमुक्षोश्च लक्षणम्**—शास्त्रीयोत्तमसंस्कार-संपन्नः अध्यात्मशास्त्रश्रवणप्रवणः **जिज्ञासुः** । तस्य **विवेकोत्पत्तिप्रकारो वर्ण्यते**—(1) प्रथमं सः सर्वमपि वैषयिकं सुखं, विषयेन्द्रियसंयोगजन्यत्वादनित्यमिति, तारतम्यवत्त्वात् सातिशयमिति, अनुभवकालेऽपि भाविविनाशशङ्कया दुःखहेतुरिति, स्वावस्थितिकालेऽपि दुःखान्तरानुषक्तमिति **सर्वथा वैषयिकं सुखं दुःखकबलीकृतम्** । तच्च दुःखं लौकिकोपायैर्नात्यन्तिकतया निवर्तयितुं **शक्यमित्यवगच्छति** ।

(2) **शरीरस्थितिपर्यन्तं दुःखमपरिहार्यमेवेति ततो विजानाति** । यतः अन्वयव्यतिरेकाभ्यां वेदान्तादिप्रमाणाच्च शरीरसामान्यं पुण्यपापयोः फलभूतं । पापफलभूते शरीरे सति पापफलदुःखं न परिह्रियेत । देवादीनामपि दानवादिभ्यो भयदुःखदर्शनाद्देवशरीरमपि पापमिश्रमेव ।

(3) शरीरं च स्वार्जितधर्माधर्मयोः फलम् । निश्शेषतया **धर्माधर्मनिवृत्तिं विना शरीरस्यात्यन्तिकी निवृत्तिर्न भवति** । प्रारब्धक्षयादेतच्छरीरनाशेऽपि सञ्चितकर्मणा शरीरान्तरोत्पत्तेरवश्यं भावादिति ततोऽवगच्छति ।

(4) **धर्माधर्मयोश्चात्यन्तिकनिवृत्तिः रागद्वेषनिवृत्तिमन्तरा नेति निर्धारयति ततः** । एतच्छरीरारम्भकधर्माधर्मयोर्भोगेन नाशेऽपि रागद्वेषवशात्कर्मान्तरोत्पत्त्यवश्यंभावात् ।

(5) **रागद्वेषयोश्च निश्शेषनिवृत्तिः इष्टानिष्टसाधनताबुद्धिनिवृत्तिमन्तरानेति निश्चिनोति ततः** । इष्टे रागस्यानिष्टे द्वेषस्य च सर्वप्राणिसाधारणत्वात् ।

(6) यदा स्वभिन्नं वस्त्वन्तरं अनुकूलतया पश्यति तदा तत्रेष्टसाधनताबुद्धिः, यदा प्रतिकूलतया पश्यति तदा तत्रानिष्टसाधनताबुद्धिश्चावश्यं भवतीति **भेदज्ञानस्य निवृत्तिमन्तरा इष्टानिष्टसाधनताबुद्धिर्न निवर्तत इति निर्धारयति** ।

(7) स्वस्वरूपाज्ञानदशायामेव जाग्रत्स्वप्नयोः सकलद्वैतप्रपञ्चव्यवहार इति श्रुत्या बोधनात् **स्वस्वरूपसाक्षात्कारमन्तरा भेदज्ञानं न निवर्तत इत्यवधारयति ततः** ।

(8) तस्मात् **स्वस्वरूपसाक्षात्कार** एव निखिलदुःखनिदानाज्ञाननिवृत्तिद्वारा **निश्शेषदुःखनिवृत्तिहेतुरिति निश्चित्य स्वस्वरूपविचारायप्रवर्तते जिज्ञासुः ।** विचारेण स्थूलसूक्ष्मकारणशरीरत्रयविलक्षणं प्रत्यगात्मानं अखण्डानन्दाद्वितीयस्वयंज्योतिस्स्वरूपब्रह्माभिन्नतया साक्षाकरोति । स एव **मुक्त** इत्युच्यते ।

५४. तत्र विषयसुखभोगमात्रेण तृप्तयोः पामरविषयिणोरस्मिन् **ग्रन्थे न** प्रवृत्तिः । मुक्तस्यापि कृतकृत्यत्वान्नात्र प्रवृत्तिः । किन्तु अनित्यसातिशयविषयसुखाद्विरक्तः आत्यन्तिकसंसारदुःखजिहासुः नित्यनिरतियस्वात्मानन्दलिप्सुश्च **जिज्ञासुरत्र ग्रन्थे अधिकारीति** तं प्रति सफलोऽयं ग्रन्थः । 35

**टिप्पण्याम्**—"कृतकृत्यः" इति शब्दस्यार्थवर्णनम् ।

कर्तव्यस्तावत्—अज्ञानदशायां ऐहिकभोगार्थं कृष्यादिव्यापारः । कर्तव्यानि च आमुष्मिकभोगार्थं काम्यकर्माण्युपासनानि च । कर्तव्यमेव तथा चित्तशुद्ध्यै निष्कामकर्मोपासनञ्च । वेदान्तश्रवणाय विवेकादिचतुष्टयम् सम्पाद्यम् । अपरोक्षसाक्षात्काराय गुरूपदेशः प्राप्तव्यः । ज्ञातेऽर्थे असंभावनादिनिवृत्तये श्रवणादयः कार्याः । तत्पदार्थविषयकपरोक्षत्वस्य त्वंपदार्थविषयकपरिच्छिन्नत्वभ्रमस्य च निवृत्तये अन्योन्यव्यतिषङ्गरूपः ओतप्रोतभावः अभ्यसनीयः । मोक्षार्थमद्वितीयचिन्मात्रात्मापरोक्षसाक्षात्कारश्च साधनीयः । सर्वमेवैतत् "कृत्यम्" इत्युच्यते । तत् येन कृतं स '**कृतकृत्य**' इत्युच्यते ।

**विषयविषयकाक्षेपाः ५५—६० आवर्तानां विषयः ।**

**५५. आक्षेपः**—(1) जीवब्रह्मणोरैक्यं न सिद्ध्यति । यतः ब्रह्म अविद्यास्मितारागद्वेषाभिनिवेशाख्यदोषपञ्चकरहितं व्यापकमेकञ्च, जीवस्तु निखिलदोषयुक्तः परिच्छिन्नोऽनेकश्च । सर्वशरीरेषु जीवस्यैकत्वे सुखदुःखादिसाङ्कर्यप्रसङ्गान्नानैव जीवः । इति । 36

**टिप्पण्याम्**—अविद्यादीनां स्वरूपप्रदर्शनम्—विचार्यमाणे यस्याः स्वरूपमेव न सिद्ध्यति **सा अविद्या । सा** मूलाविद्या तूलाविद्येति च **द्विविधा** । शुद्धचैतन्यमात्रावारिका **मूलाविद्या** । कारणा-

विद्या कार्याविद्येति च **सा द्विविधा** । अनादिभावरूपा आवरणविक्षेप-शक्तिमती **कारणाविद्या** । वस्तुनोऽन्यथाप्रतीतिः **कार्याविद्या** । **कार्याविद्या चतुर्विधा**—(1) अनित्यस्वर्गादिषु नित्यत्वभ्रान्तिः, (2) अशुचिशरीरादिषु शुचित्वभ्रान्तिः, (3) दुःखात्मकभोगेषु सुखत्व-भ्रान्तिः, (4) अनात्मसु देहादिष्वात्मत्वभ्रान्तिश्चेति । घटाद्युपहित-चैतन्यमात्रावारिका **तूलाविद्या** । बुद्ध्यात्मनोरभेदबुद्धि**रस्मिता** । अनुकूलविषयभोगेच्छा **रागः** । प्रतिकूलविषयहानेच्छा **द्वेषः** । मरण-भयाद्देहादिरक्षणेच्छा **अभिनिवेशः** ॥

**ब्रह्म सजातीयभेदशून्यं** सर्वद्वैतस्य ब्रह्ममात्रत्वेन ब्रह्मान्तरा-भावात् ।

**ब्रह्म विजातीयभेदशून्यं** प्रपञ्चस्य मिथ्यात्वेनाधिष्ठानब्रह्मणो-ऽनतिरिक्तत्वात् ।

**ब्रह्म स्वगतभेदशून्यं** सच्चिदानन्दानां ब्रह्मस्वरूपत्वेनावयवत्वा-भावात् ।

"एकमेवाद्वितीयम्" इति वाक्यमत्र प्रमाणम् ।

**आत्मभेदे प्रमाणानि निरस्यात्मैक्यं प्रसाध्य जीवब्रह्मैक्यस्थापनम्—**

(1) वेदेतरप्रमाणागम्यत्वादात्मनः उपनिषत्सु चात्मैकत्वस्था-पनात् जीवब्रह्मैक्यं युक्तमेव । अनेकघटेषूपलभ्यमानोऽप्याकाशः यथा एक एव तथा शरीरभेदेष्वप्यात्मा एक एव । अज्ञजनप्रसिद्धात्मभेद-विषयकैन्द्रियकप्रत्यक्षं तु आत्मोपाधिशरीरभेदनिबन्धनम् । शैशवाद्यव-स्थाभेदेनात्मभेदे स्वीकृते शैशवेऽनुभूतस्य वार्धके स्मरणानुपपत्त्या, "अहं शिशुः अहं वृद्धः" इत्यवस्थाभेदेनाहङ्कारभेदव्यपदेशे सत्यपि यथा सर्वावस्थानुगत आत्मा एक एवेति सिद्धान्तः, तथा "अहं ब्राह्मणः अहं क्षत्रियः" इति प्राणिभेदेनाहङ्कारभेदव्यपदेशे सत्यपि सर्वप्राण्यनु-गत आत्मा एक **एवेत्यात्मभेदे न प्रत्यक्षं प्रमाणम्** ।

(2) सकलावयवव्यापिनः देहस्यैकत्वेऽपि अवयवभेदमाश्रित्य यथा शिरःपाण्यादिभेदव्यवहारः, तथा सकलदेहव्यापिन आत्मन

एकत्वेऽपि शरीरभेदमाश्रित्य " त्वं, अहं इति भेदव्यवहार उपपद्यत **इत्यर्थापत्तिरपि न प्रमाणमात्मभेदे ।**

(3) आत्मा भिन्नः शरीरव्यक्तिभेदात् **इत्यनुमानमपि नात्मभेदे प्रमाणम् ।** स्थूलसूक्ष्मकारणशरीरेषु भिद्यमानेष्वपि यथा आत्मा एक एव तथा शरीरव्यक्तिभेदेऽप्यात्मैकत्वोपपत्तेः ।

(4) **इतिहासाद्युक्तः देव दानवादिभेदव्यपदेशोऽपि नात्मभेदे प्रमाणम् ।** " एको देवः सर्वभूतेषु गूढः " इत्यादिश्रुतिभ्यः आत्मैकत्वस्थापनात् । पुराणवचनं तु शरीरभेदनिबन्धनम् ।

(5) सर्वशरीरेष्वात्मैकत्वे **सुखदुःखादिसाङ्कर्यप्रसङ्गरूपयुक्तिरपि नात्मभेदे प्रमाणम् ।** तत्तदुपाधिरूपान्तःकरणगतसुखदुःखादिव्यवस्थायाः तत्तत्प्रारब्धकर्मायत्तत्वात् चिदाभासयुक्ततत्तदन्तःकरणरूपभोक्तृभेदायत्तत्वाच्चोपपत्तेः ।

(6) **एकस्य सर्वज्ञत्वे मुक्तत्वे च सर्वस्य तदापत्तिरूपयुक्तिरपि नात्मभेदे प्रमाणम् ।** शब्दगुणकस्यैकस्य व्यापकस्याकाशस्य सर्वत्र भेरीमृदङ्गादिभिः संबन्धे सत्यपि यदा यत्र भेर्यादौ दण्डाद्यभिघातस्तदा तत्रैव शब्दोत्पत्तिर्यथा तथैकस्य चिन्मात्रस्य व्यापकस्यात्मनः सर्वशरीरान्तःकरणैः संबन्धेऽपि प्रतिदेहं भिन्नानामन्तःकरणतद्वृत्तीनामनन्तत्वादव्यापकत्वाच्च यदा यद्देहस्थान्तःकरणवृत्तिः येन विषयेण संबध्यते तदा तन्मात्रविषयकं ज्ञानं तदन्तःकरणविशिष्टस्यैव भवतीति नैकस्य सर्वज्ञत्वे सर्वेषां तदापत्तिः । यः वेदान्तश्रवणेन स्वात्मानं ब्रह्माभिन्नं जानाति स एव मुक्तो नान्यः । **इत्यात्मभेदे प्रमाणाभावाज्जीवब्रह्मैक्यं सिद्ध्यत्येव ॥**

**साक्षिब्रह्मणोरैक्यं न संभवतीत्याक्षेपः ५६-६०**
**आवर्तानां विषयः**

**५६. कर्तृत्वभोक्तृत्वादिविशिष्टजीवातिरिक्तसाक्षिसत्त्वे नास्ति प्रमाणम् ।** 39

**५७. साक्षिसत्त्वेऽपि साक्षी नानैव । अन्तःकरणं नेन्द्रियगोचरम् ।** पञ्चीकृतभूतकार्याणि बाह्यवस्तूनि चेन्द्रियग्राह्याणि ।

अन्तःकरणन्तु अपञ्चीकृतभूतकार्यमान्तरं चातो नेन्द्रियग्राह्यम्। इन्द्रिय-चक्षुः, रूपं तदाश्रयं द्रव्यं, त्वक्, स्पर्शं तदाश्रयं द्रव्यञ्च गृह्णाति ; जिह्वा-घ्राणश्रोत्राणि तु क्रमेण रसगन्धशब्दरूपगुणमात्रग्राहकाणि । रसाद्या-श्रयद्रव्यं तु चक्षुषो विषयः त्वचो वा । 40

५८. **अन्तःकरणं स्ववृत्तेरपि न गोचरम्** । अग्न्या-श्रिता दाहशक्तिः यथा स्वाश्रयव्यतिरिक्तेन्धनाद्येव विषयीकरोति, तथान्तः-करणवृत्तिरपि स्वाश्रयान्तःकरणव्यतिरिक्तमेव गृह्णाति ।

५९. **अनभिमुखत्वादन्तःकरणं नान्तःकरणवृत्तेर्विषयः । अन्तःकरणधर्माश्च** सुखदुःखादयः अत्यन्तसन्निहितत्वा**न्नान्तकरण-वृत्तेर्विषयाः ।** नयनवृत्तिरिवान्तःकरणवृत्तिरपि स्वाश्रयात् किञ्चिद्वि-प्रकृष्टमेव गृह्णातीति नियमात् । इत्थमिन्द्रियाणामन्तःकरणवृत्तेश्चाविष-यत्वादन्तःकरणं तद्धर्माश्च साक्षिणैव विषयीक्रियन्ते इति वेदान्त-सिद्धान्तः ॥ ,,

**टिप्पण्याम्**—आश्रयाश्रयिणोर्भेदे एकस्याश्रायत्वं विषयत्वं च संभवति । यथा गृहतदावारकान्धकारयोर्भेदात् गृहमन्धकारस्या-श्रयो विषयश्च, तथा चैतन्यतदावारकाज्ञानयोर्भेदाच्चैतन्यमज्ञानस्याश्रयो विषयश्च । यत्र तु तौ न भिन्नौ तत्राश्रयत्वमात्रमेव । यथा दाहशक्तिर-ग्नेरभिन्न इति दाहशक्तेरग्निराश्राय एव न विषयस्तथा अन्तःकरणतद्वृ-त्योरभेदात् अन्तःकरणवृत्तेरन्तःकरणमाश्रय एव न विषयः ॥

६०. साक्षिण एकत्वे एकस्य सुखदुःखादावन्यस्यापि तदापत्ति-प्रसङ्गात् साक्षी अनेको वाच्यः । **अनेकसाक्षिणामेकेन ब्रह्मणा ऐक्या-सिद्धिः** इति । 41

**विषयविषयकाक्षेपाणां समाधानानि—६१–६५ आवर्तानां विषयाः । जीवब्रह्मणोरेकत्वं न युज्यते । साक्षिब्रह्मणोस्त्वेकत्वं युज्यते**–६१-६३

६१. **साक्षिस्वरूपवर्णनम्**—अन्तःकरणोपहितं चैतन्यं साक्षी । चैतन्यस्य साक्षित्वे विवक्षिते अन्तःकरणमुपाधिः । अन्तःकरणं स्वसमी-पस्थितं चैतन्यं साक्षित्वेन बोधयित्वा स्वयं तेनासंबद्धं तिष्ठति । अन्तः-करणस्थं चैतन्यं केवलं साक्षीत्युच्यते । एतादृशस्य साक्षिणः ब्रह्मणा

सहैकत्वं युज्यत एव। कर्तृत्वभोक्तृत्वादिरूपजीवस्वरूपविशेषणानां यो विशेष्यांशः स एव साक्षी। आधारभूतविशेष्यांशापलापे तदाश्रितकर्तृ-भोक्तृस्वरूपसंसारिस्वरूपनिषेधापत्त्या साक्षी नापलपितुं शक्यः। उपाधि-लक्षणं च वर्णितम्। ,,

६२. **जीवस्वरूपनिरूपणम्** — अन्तःकरणविशिष्टं चैतन्यं जीवः। चैतन्यस्य जीवत्वे विवक्षिते अन्तःकरणं विशेषणम्। अन्तः-करणं तदवच्छिन्नचैतन्यं चैकीकृत्य जीव इति व्यवहारः। विशेषणलक्षणं च वर्णितम्। ,,

६३. **साक्षिब्रह्मणोरेकत्वनिरूपणम्**—क्लेशाः अन्तःकरण-विशिष्टचैतन्यरूपसंसारिण्येव। तत्रापि संसारिणो विशेषणभूतान्तः-करणमेवाश्रिताः क्लेशाः। "कामः संकल्पः" इत्यादिश्रुतिप्रमाणात्। संसारिणो विशेष्यभूतं यच्चैतन्यं तत्साक्षीत्युच्यते, तस्मिन् साक्षिणि न क्लेशाः सन्ति। "साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतेः। 42

६४. **अनेकसाक्षिणां ब्रह्मणा सहैकत्वनिरूपणम्**—साक्षी द्विविधः। ईश्वरसाक्षी जीवसाक्षी चेति। ईश्वरसाक्षी एक एव। जीव-साक्षी तु नाना परिच्छिन्नश्च। घटाकाशो नाना परिच्छिन्नोऽपि महाका-शादनन्यतया यथा महाकाशस्वरूप एव तथा जीवसाक्षी नाना परिच्छिन्नोऽपि तत्त्वतो ब्रह्माभिन्नतया ब्रह्मैव भवति। 43

६५. **सुखदुःखादयो न** केवलसाक्षिणो विषयाः। किन्तु सुखादिविषयकज्ञानाकारान्तः**करणवृत्त्युपारूढसाक्षिण एव विषयाः।** शुद्धचैतन्यस्यैवान्तःकरणरूपोपाधिमनुसृत्य साक्षीति व्यपदेशः। उपा-धेरन्तःकरणस्य मिथ्यात्वात् साक्ष्यपि वस्तुतो ब्रह्मैव भवति। अयमेव साक्षी जीववाचकत्वंपदलक्ष्यार्थः। अत्र दृष्टान्तः—केवलस्याकाशस्य घटरूपोपाधिमनुसृत्य घटाकाश इति व्यपदेशः जलाहरणादिकार्यं च, तत्रोपाधेर्घटस्य विकारस्य मिथ्यात्वात् घटाकाशोऽपि वस्तुतो यथा महाकाश एव तथात्रापि। इत्थं जीवब्रह्मैक्यसिद्ध्या ग्रन्थस्य विषय-सिद्धिः।

आवर्तानां सङ्ख्या | पुटसङ्ख्या

**टिप्पण्याम्**—यथा शुभ्रे पत्रे मषीरूपोपाधिदृष्ट्या नानाक्षरव्यपदेशस्तथा अन्तःकरणोपाधिदृष्ट्या शुद्धचैतन्ये नानासाक्षिव्यपदेशः ।

**अथ प्रयोजनविषयकाक्षेपाः ६६-७२ । तत्र ज्ञानमात्राद्बन्धो न निवर्तते इत्याक्षेपः ६७-७२**

६६. **बन्धः सत्य इत्याक्षेपः**—अहङ्कारादिदेहान्तमनात्मभूतं दृश्यवस्तुजातं बन्धः । स च सत्यः, प्रतीयमानत्वात्, ज्ञानेनानिवर्तनात्, अध्याससामग्र्यभावाच्च । 44

**टिप्पण्याम्**—सोदाहरणमध्याससामान्यलक्षणम् । ज्ञानाध्यासः, अर्थाध्यासः इत्यध्यासद्वैविध्यस्य, स्वरूपाध्यासः, संसर्गाध्यासः इत्यर्थाध्यासद्वैविध्यस्य च सोदाहरणं स्वरूपवर्णनम् ॥

६७. **अध्याससामग्र्यः पञ्च** (1) सत्यवस्त्वनुभवजन्यसंस्कारः (2) प्रमातृगतलोभादिदोषः (3) प्रमेयगतसादृश्यादिदोषः (4) चक्षुरादिप्रमाणगतकाचकामलादिदोषः (5) अधिष्ठानसामान्यज्ञानं तद्विशेषाज्ञानं च । आसां सामग्रीणां रज्जुसर्पाध्यासे समन्वयः । ,,

**अध्याससामग्र्यभावाद्बन्धः सत्यः इत्याक्षेपः (६८-७२)**

६८. **आक्षेपः**–(1) सिद्धान्ते आत्मभिन्नस्य सर्वस्य मिथ्यात्वात् सत्यबन्धानुभवजन्यसंस्काराभावेन आत्मनि बन्धाध्यासो न संभतीति । 45

६९. **आक्षेपः**–(2) ब्रह्मभिन्नं सर्वं कल्पितमिति सिद्धान्ते, प्रमातृप्रमाणयोरध्यासात्पूर्वमसिद्धेः प्रमातृप्रमाणगतदोषस्य बन्धाध्यासं प्रति सुतरां कारणत्वासिद्धिरिति बन्धः सत्य इति । ,,

७०. **आक्षेपः**–(3) आत्मा प्रत्यक् विषयी । बन्धश्च तद्विलक्षणः पराक् विषयश्च । अतस्तयोः सादृश्याभावादात्मनि बन्धाध्यासो न संभवतीति बन्धः सत्य इति । 46

७१. **आक्षेपः**–(4) अधिष्ठानविशेषांशाज्ञानरूपाध्याससामग्र्यपि न संभवति । बन्धाधिष्ठानस्य ब्रह्मणः स्वप्रकाशचैतन्यरूपत्वात् तत्राज्ञानं न कथमपि युज्यते अतो बन्धः सत्य इति ॥ ,,

आवर्तानां सङ्ख्या | पुटसङ्ख्या

७२. **आक्षेपः**—(5) सामान्यविशेषधर्मशून्यत्वान्निर्विशेषे ब्रह्मणि सामान्यतो ज्ञानं विशेषतोऽज्ञानमिति वक्तुमशक्यत्वात् बन्धः सत्यः। सत्यश्च बन्धः ज्ञानान्न निवर्तेत। अतो बन्धनिवृत्त्या मोक्षो न प्रयोजनं ग्रन्थस्य। ,,

**ऐकभविकवादरीत्या कर्मणैव मोक्षसिद्धिरित्याक्षेपः ७३-८२.**

७३. सत्यबन्धस्य ज्ञानमात्रादनिवृत्त्या **मुमुक्षुर्यावज्जीवं कर्म कुर्यात्।** 47

**कर्मविवरणम् ७४—७५.**

७४. **कर्म द्विविधम्**—वेदेन पुरुषप्रवृत्तये यद्विधीयते **तद्विहितं कर्म।** वेदेन पुरुषनिवृत्तये यन्निषिध्यते **तन्निषिद्धं कर्म।** उदासीनक्रियाः न कर्म। ,,

७५. विहितं **कर्म चतुर्विधम्** (1) यत् नित्यतया विहितं, यस्यानुष्ठानात्सुकृतं, अननुष्ठानाच्च प्रत्यवायः **तन्नित्यम्।** यथा सन्ध्यास्नानादि। (2) यत् नित्यमेव न विहितं, किन्तु यत्किञ्चिन्निमित्तमधिकृत्य विहितं, यस्यानुष्ठानात्पुण्यफलाभावः, अननुष्ठानात्प्रत्यवायश्च **तन्नैमित्तिकम्।** यथोपरागे स्नानश्राद्धादिकम्। (3) फलार्थं विहितं कर्म **काम्यं,** यथा स्वर्गार्थं विहितमग्निहोत्रादि। (4) पापपरिहारार्थं विहितं कर्म **प्रायश्चित्तम्।** यथोपवासादि।

**मुमुक्षुणा कर्तव्यं कर्म ७६-८२**

७६. **मुमुक्षुः** ऊर्ध्वाधोलोकप्राप्तिहेतुभूतानि काम्यनिषिद्धानि कर्माणि वर्जयित्वा **नित्यनैमित्तिककर्माण्यनुतिष्ठेत्।** तदकरणे प्रत्यवायापत्तेः। न च मुमुक्षुणाऽनुष्ठीयमाननित्यनैमित्तिकानां फलमस्ति। 48

निषिद्धकर्मफलानां परिहाराय प्रायश्चित्तमनुष्ठेयम् ७७-७८

७७. इह जन्मनि बुद्धिपूर्वं कृतस्य पापस्य परिहारायासाधारणं प्रायश्चित्तं, इह जन्मनि प्रमादकृतस्य, जन्मान्तरसञ्चितस्य च पापस्य परिहारार्थं **मुमुक्षुणा साधारणं प्रायश्चित्तं चानुष्ठेयम्।** ,,

७८. **द्विविधं प्रायश्चित्तफलम्।** गङ्गास्नानादिसाधारणप्रायश्चित्तेन मुमुक्षोः ज्ञानं विनैव पापं नश्यति। सकामस्य तु गङ्गास्नानादि

आवर्तानां सङ्ख्या पुटसङ्ख्या

पापपरिहारद्वारोत्तमलोकप्राप्तिहेतुत्वात् प्रायश्चित्तकर्म काम्यकर्म च भवति। उभयात्मकत्वेन विहितत्वात्। अश्वमेधादि ब्रह्महत्यादिपापनिवृत्तिद्वारा स्वर्गादिहेतुत्वादुभयात्मकः। ,,

७९. फलेच्छया जन्मान्तरे अनुष्ठितान्यपि **काम्यकर्माणि मुमुक्षो**रिदानीं फलेच्छाभावमात्रेण **न फलं प्रयच्छन्ति।** 49

८०. **मुमुक्षोः प्रारब्धफलानि** जन्मान्तरीयकाम्यनिषिद्ध-कर्माणि **भोगेन नश्यन्ति।** अस्मिन् जन्मनि प्रत्यवायपरिहाराय नित्यनैमित्तिकान्यनुतिष्ठेन्मुमुक्षुः। सञ्चितनिषिद्धकर्मफलपरिहाराय साधारणप्रायश्चित्तं, बुद्धिपूर्वमिहकृतपापफलपरिहारायासाधारणप्रायश्चित्तञ्चानुतिष्ठेत्। ,,

८१. (1) अथवा **मुमुक्षुणा प्रायश्चित्तकर्मापि नानुष्ठेयम्।** यथा वेदान्तिमते ज्ञानेन सञ्चितसर्वकर्मनाशस्तथैकभविकवादे नित्य-नैमित्तिकानुष्ठानेनैव सञ्चितसर्वकर्मनाशः संभवेत्। (2) अथ वा मुमुक्षुः एकं भावि जन्म प्रतिपद्य योगीवैकेनैव शरीरेणानन्तशरीरोपभोग्यं सञ्चि-तनिखिलकर्मफलं युगपदनुभवति। अतः "नाभुक्तं क्षीयते कर्म" इति शास्त्रविरोधो न। (3) अथवा प्रकृते जन्मनि नित्यनैमित्तिककर्मानुष्ठान-जनितक्लेशेनैव सञ्चिताखिलनिषिद्धकर्मफलनाशः। भाव्येकं जन्म प्रतिपद्य सञ्चिताखिलकाम्यकर्मफलसुखं युगपदनुभवति। अतः मुमुक्षुः प्रायश्चित्तं विना नित्यनैमित्तिककर्मानुष्ठानेनैव मोक्षं लभते। 50

८२. एवं ज्ञानं विनोपायान्तरेणैव मोक्षसिद्धेरयं ग्रन्थो निष्फलः। 51

**प्रयोजनविषयकाक्षेपाणां समाधानानि ८३-१०६।**

**बन्धो मिथ्या स च ज्ञानेनैव निवर्तेत इति समाधानम् ८३-९८**

**कार्याध्यासनिरूपणम् ८३-९६**

८३. **बन्धो मिथ्या।** अतो ज्ञानेन निवर्तेतैव—इति प्रतिज्ञा। ,,

**प्रदर्शिताः पञ्च सामग्र्यः नाध्यासेऽपेक्ष्यन्ते इत्युपपादनम् ८४-९८**
**अध्यासहेतोः संस्कारस्य निरूपणम् ८४-९३**

८४. परमार्थाम्रवृक्षमजानतः ऐन्द्रजालिकप्रदर्शिताम्रवृक्षमेव जानतः यदृच्छया मधूकवृक्षदर्शने "अयमाम्रवृक्षः" इत्यध्यासदर्शनात् **सत्यवस्तुज्ञानजन्यसंस्कारोऽध्यासहेतुरिति न नियमः।** किन्तु पूर्वपूर्वसजातीयवस्तुज्ञानजन्यसंस्कारः उत्तरोत्तराध्यासहेतुरित्येव॥ संस्कारजनकज्ञानतद्विषययोः सत्यत्वे मिथ्यात्वे वा न निर्बन्धः॥

८५. **ज्ञानजन्यसंस्कार एवाध्यासहेतुः।** न वस्तुज्ञानमात्रम्। कारणस्य कार्योत्पत्त्यव्यवहितपूर्वकालवर्तित्वनियमात्। वस्तुज्ञाने च तदसंभवात्। यतः सर्पज्ञानोत्पत्तेः परं मासानन्तरमपि रज्जौ सर्पाध्यासो भवति। सर्पज्ञानजन्यसंस्कारे तु अध्यासाव्यवहितपूर्वकालवर्तित्वं संभवति। 52

८६. अत्र आक्षेपः—कारणं कार्यनियतपूर्वकालवर्ति इत्येव नियमोऽस्तु। अनुष्ठानोत्तरक्षणविनाशिभिरपि विहितनिषिद्धकर्मभिः कालान्तरे स्वर्गनरकाद्युत्पत्त्यभ्युपगमात्। न तु कारणं कार्यनियताव्यवहितपूर्वकालवर्ति इति। ,,

८७. समाधानम् (1) व्यवहितपूर्वकालस्थितैः घटोत्पत्तिकाले विनष्टैः कुलालदण्डचक्रादिभिः घटोत्पत्त्यापत्त्या "कार्याव्यवहितपूर्वकालवर्तिकारणं इत्येव नियमः। 53

८८. समाधानम् (2) अनुष्ठानोत्तरक्षणे कर्मणि नष्टेऽपि तेन कर्मणा अदृष्टशब्दवाच्यः संस्कारः उत्पाद्यते। स च संस्कारः कर्तुरन्तःकरणमाश्रित्य कालान्तरीयस्वर्गादिफलोत्पत्तिपर्यन्तमवतिष्ठते। स संस्कार एव स्वर्गादिजनक इति कारणं कार्याव्यवहितपूर्वकालवर्ति इति नियमस्य न व्यभिचारः।

८९. समाधानम् (3) रज्जुसर्पाध्यासेऽपि पूर्वकालीनसर्पानुभवजन्यसंस्कार एव हेतुः। ,,

आवर्तानां सङ्ख्या पुटसङ्ख्या

९०. समाधानम् (4) मिथ्यार्थानुभवजन्यसंस्कारोऽप्यध्या-सहेतुर्भवेदेव । 54

९१. समाधानम् (5) आत्मविलक्षणं अहंकारादि निखिलं वस्तुजातं बन्धः इति व्यपदिश्यते । स चात्मविलक्षणः निखिलः प्रपञ्चः प्रतीतिकाले एवोत्पद्यते, अप्रतीतिदशायां नास्तीति दृष्टिसृष्टिवाद एव वेदान्तसम्मतः । अतः निखिलं जगत् तज्ज्ञानं चाध्यासात्मकमेव । तत्र च पूर्वपूर्वाहङ्काराद्यनुभवजन्यसंस्कार एवोत्तरोत्तराहंकाराद्यध्यासे कारणम् ।

९२. **अत्र आक्षेपः**—प्राथमिकाहंकाराध्यासो न सिद्ध्यति । ततः पूर्वमहङ्कारान्तराभावात् तदनुभवजन्यसंस्कारस्याध्यासहेतोरभावात् । इति ।

९३. **तत्र समाधानम्**—यतः वेदान्तिमते अहङ्कारादिः सर्वः प्रपञ्चः प्रवाहतोऽनादिस्ततः "अयमेव प्रथमः" इति न कोऽपि पदार्थो वक्तुं शक्यते । तस्मात् पूर्वपूर्वसजातीयवस्त्वनुभवजन्यसंस्कार-मात्रेणाहंकारादिबन्धाध्यासः संभवत्येव । "

**टिप्पण्याम्**—अनादिकालसिद्धत्वेन सत्यत्वेन च भासमानोऽपि प्रपञ्चः तत्त्वबोधे सति कालत्रयेऽपि नास्तीति निश्चीयमानत्वेन मिथ्यैव । ब्रह्म, अविद्या, जीवः, ईश्वरः, जीवेश्वरयोर्भेदः, अविद्याचैतन्ययोः संबन्धः इत्येतानि षट् स्वरूपतोऽनादीनि । तेषामनादित्वे हेतुप्रदर्शनं च । तेषु मध्ये कालत्रयाबाध्यं ब्रह्म अनाद्यनन्तम् । इतराणि पञ्च ज्ञानबाध्यत्वात् अनादित्वेऽपि सान्तानि ।

९४. **सादृश्यरूपः प्रमेयदोषः नाध्यासहेतुः** । यतः "अहं द्विजः" इति स्थूलदेहधर्मजात्यादिरात्मन्यध्यस्तो दृश्यते । न हि द्विज-त्वादिजातेरात्मना सादृश्यमस्ति । किञ्च श्वैत्यविरुद्धस्य पीतिम्नः शङ्खे अध्यासः "पीतः शङ्खः" इति, माधुर्यविरुद्धस्य तिक्तत्वस्य गुडे अध्यासः "तिक्तो गुडः" इति च दृश्यते । अतः सादृश्याभावेऽप्यात्मनि अह-ङ्काराद्यध्यासः संभवत्येव ॥ 57

**टिप्पण्याम्**—न्यायादिमतरीत्या एकत्वानेकानुगतत्वाभ्यां जा-त्यात्मनोः सादृश्यमस्तीति तद्विहाय, शङ्खपीतिमाध्यासप्रदर्शनम् । काम-

लदोषदूषितनेत्रस्थःपीतवर्णः नेत्रान्निर्गत्य शङ्खे विलिप्तः सत्य एवेति वादिनं प्रति गुडतिक्तत्वाध्यासप्रदर्शनमिति दृष्टान्तत्रयोपादानप्रयोजन-वर्णनम् ॥

९५. लोभभयादिः **प्रमातृदोषोऽपि नाध्यासकारणम् ।** लोभादिरहितस्य विरक्तस्यापि शुक्तिकादौ रजताद्यध्यासदर्शनात् ॥ 58

९६. नेत्ररोगरहितस्यापि "नील आकाशः" इति आकाशे नैल्याध्यासात् **प्रमाणदोषोऽपि नाध्यासहेतुः ।** आकाशे नैल्याध्यासे दोषत्रयमप्यवकाशं न लभते । एवमात्मनि बन्धाध्यासोऽपि दोषत्रया-भावेऽपि संभवेदेव । संक्षेपशारीरककारास्तु आत्मनि बन्धाध्यासे दोषत्रय-मप्युपपादयन्ति ॥ ,,

**टिप्पण्याम्**—अध्यासे दोषत्रयसमवायो नापेक्ष्यते । किन्तु तन्मध्ये अन्यतमदोषसत्त्वे एवाध्यासः । आकाशे नैल्याध्यासेऽपि अवि-द्यारूपदोषोऽस्ति । अतः मूले दोषो नाध्यासहेतुरिति प्रौढ्यैव । आत्मनि बन्धाध्यासेऽपि दोषत्रयमेवं वर्ण्यते—अन्तःकरणस्थमदृष्टं प्रमातृदोषः, चैतन्याश्रिता अविद्या प्रमाणदोषः, वस्तुत्वान्तरत्वाभ्यां आत्मप्रपञ्चयोः सादृश्यं प्रमेयदोषः ।

### कारणाध्यासनिरूपणम्—९७—९८.

९७. **अलुप्तस्वप्रकाशस्वरूपे ब्रह्मण्यज्ञानस्य सहावस्थानं संभवत्येव ।** यतः "सुखमहमस्वाप्सम्" इति सुषुप्ते स्वप्रकाशस्वरूपे आत्मनि भासमान एव स्वरूपसुखमज्ञानं चानुभूयेते । अतः केवलं ब्रह्मचैतन्यं न साक्षादज्ञानविरोधि । प्रत्युत सामान्यात्मकं स्वरूपचैतन्यं सर्वाधि-ष्ठानत्वात् अज्ञानस्य सतास्फूर्तिप्रदत्वेन साधकमेव । ईदृगज्ञानावृते आत्मनि बन्धाध्यासः संभवत्येव । अज्ञानस्य साक्षाद्विरोधि चैतन्यं तु विचारितवेदान्तप्रमाणजनिताखण्डब्रह्मसाक्षात्कारात्मकान्तःकरणवृत्त्या - रूढमेव । **अत्र दृष्टान्तः** यथा अरण्यादौ व्याप्यवर्तमानः सामान्यात्मको-ऽनुद्भूतोऽग्निः नान्धकारविरोधी किन्तु मथनेनाभिव्यक्तः दीपवर्त्यारूढः विशेषात्मकोऽग्निः अन्धकारविरोधी तथा । अवच्छेदवादाभासवादौ चात्र वर्णितौ ॥ 59

९८. **निर्विशेषेऽप्यात्मनि** अविद्वत्प्रतीत्या **सामन्यविशेषभावः कल्प्यते।** आत्मा सच्चिदानन्दरूपः। तत्र सर्वो लोकः "अयमहमस्मि" इति सद्रूपमात्रं जानाति। अतः पामरादिसाधारण्येन प्रतीयमानं सद्रूपं सामान्यरूपमिति कल्प्यते। ब्रह्मविदस्तु सदा सद्रूपचिदानन्दरूपमप्यनुभवन्ति। ब्रह्मविदनुभवमात्रसिद्धं चिद्रूपमानन्दरूपं च विशेषरूपमिति कल्प्यते। एवं कल्पनासिद्धसत्तासामान्यरूपेण ज्ञाते नित्यशुद्धबुद्धमुक्ताखण्डसच्चिदानन्दाद्वितीयप्रत्यग्ब्रह्मात्मना अज्ञाते आत्मनि बन्धाध्यासः संभवति। एवं आध्यासिकबन्धस्य ज्ञानान्निवृत्तिः इति ग्रन्थस्य सप्रयोजनता। कल्पनासिद्धसामान्यविशेषभावेन पारमार्थिकनिर्विशेषत्वस्य न हानिः॥ 61

**कर्मणा न मोक्षः सिद्ध्यतीति निरूपणम्—९९-१०६**

९९. विनैव ज्ञानं जन्माभावरूपमोक्षः सिद्ध्यतीति **पूर्वपक्षसङ्ग्रहः॥** 62

१००. फलान्तराभावान्नित्यनैमित्तिककर्मणामुत्तमलोक-**प्राप्तिरेव फलम्।** अन्यथा निष्फलं कर्म विदधच्छास्त्रमनर्थकं भवेत्। न च नित्यनैमित्तिककर्मणां प्रत्यवायरूपपापाभावः फलं। यदि नित्यनैमित्तिकाननुष्ठानस्य पापं फलं भवेत् तदा एवमपि स्यात्। नित्यकर्माननुष्ठानादभावरूपात् भावरूपपापं फलं नोत्पत्तुमर्हति। अभावाद्भावोत्पत्तेरदर्शनात्। अतः नित्यनैमित्तिककर्मणां स्वर्गादिफलकल्पनस्यावश्यकत्वात् जन्माभावस्तेषां फलमिति वचनमसङ्गतमेव। ,,

१०१. विरुद्धनानाफलानां **सञ्चिताखिलपापानां नैकस्मिन् जन्मन्यनुष्ठितेन प्रायश्चित्तेन युगपद्विनाशः।** किञ्च ज्ञानमेव साक्षात्पापनाशकं श्रुत्यादिप्रमाणात्। अपि च गङ्गास्नादिप्रायश्चित्तकर्मापि परंपरया ज्ञानोत्पत्तावेव हेतुः। तथोत्पन्नं ज्ञानं पापं सकलं नाशयतीति गङ्गास्नानादीनां पापक्षयहेतुत्वं गौण्यैव। 63

१०२. इदानीमिच्छाभावमात्रेण **सञ्चिताखिलकाम्यकर्माणि फलं न प्रयच्छन्तीत्युक्तिरसङ्गता।** तथात्वे दुःखे कस्यापीच्छाभावात् सञ्चितनिषिद्धकर्मणामपि मुमुक्षोरिदानीमिच्छाभावमात्रेण फलाभावापत्तेः। अतः सञ्चितशुभकर्मफलोपभोगाय जन्मान्तरमावश्यकमेव।

आवर्तानां सङ्ख्या | पुटसङ्ख्या

कर्मरूपबीजस्याङ्कुरद्वयं (1) अदृष्टं (2) वासना चेति। तत्र अदृष्टं फलोपभोगमन्तरा न नश्यति। वासना तु शुभरूपा चेदसत्सङ्गेनाशुभरूपा चेत्सत्सङ्गेन च नश्येत्। „

१०३. **वेदान्तमते ज्ञानं विना कर्मणः फलोपभोगो नैव निवर्तते।** तत्र सकामस्य कर्म फलभोगं जनयति। निष्कामस्य कर्म चित्तशुद्धिं, शुद्धचित्तस्य श्रवणादिद्वाराऽपरोक्षज्ञानं च जनयति। केनापि कारणेनापरोक्षज्ञानानुदये निष्कामस्य कर्मानिच्छतोऽपि फलमवश्यं जनयत्येव। अतः वेदान्तनये निष्कामस्य कर्मैव ऐकभविकवादेऽपि सञ्चितकाम्यकर्माऽपि इदानीमिच्छाभावमात्रेण फलं न जनयतीत्युक्तिः वेदान्तसिद्धान्ताज्ञानमूलिका॥ 64

१०४. **नित्यनैमित्तिककर्मानुष्ठानजन्यक्लेश एव सञ्चितसकलनिषिद्धकर्मफलमित्यप्यसङ्गतम्।** अनेकप्रकाराणां सञ्चितनिषिद्धकर्मणां फलस्य दुःखस्याप्यनेकविधत्वनियमात्, 65

१०५. **सञ्चितनिखिलकाम्यकर्मणां फलमेकेन जन्मना अनुभूयत इत्यपि न साधु।** अनेकविरुद्धफलानामेकेन शरीरेणोपभोगस्यासंभवात्। एकस्मिन् जन्मनि नानाशरीरमादायोपभोगस्तु योगिविषयत्वात् न प्राकृतस्य संभवति। योगिनोऽपि ज्ञानं विना न मोक्षसिद्धिः। „

१०६. **निष्कृष्टार्थः।** काम्यनिषिद्धकर्माणि वर्जयित्वा नित्यनैमित्तिकान्येवानुतिष्ठतोऽपि तेषामेव नित्यनैमित्तिककर्मणां फलोपभोगाय सञ्चितशुभाशुभकर्मणां फलोपभोगाय च अनेकजन्मानि स्युरेवेति ज्ञानं विना जन्माभावरूपमोक्षसिद्धिरित्यसङ्गतमेव। ज्ञानं विना आविद्यकप्रपञ्चस्यापि न निवृत्तिः। इति ज्ञानद्वारा बन्धनिवृत्तिर्मोक्षश्च ग्रन्थस्य प्रयोजनम्। „

**संबन्धविषयकाक्षेपसमाधाने १०७-१०८।**

१०७. **संबन्धे आक्षेपः**—अधिकार्याद्यसिद्ध्या संबन्धोऽपि न सिद्ध्यतीति विफलोऽयं ग्रन्थः इति। „

१०८. **तत्र समाधानम्**—उपपादितरीत्या अधिकार्यादिसिद्धेः तेषां संबन्धोऽपि सिद्ध इति ग्रन्थः सफल एव। 66

आवर्तानां सङ्ख्या | पुटसङ्ख्या

आवर्तानां सङ्ख्या पुटसङ्ख्या

## पञ्चमस्तरङ्गः

### मध्यमाधिकारिण उपदेशनिरूपणं २२६—३१६

### आवर्तानां विषयः।

---

## षष्ठस्तरङ्गः

| आवर्तानां सङ्ख्या | | पुटसङ्ख्या |
|---|---|---|
| | **४४०—४४२ जहदजहद्भागत्यागलक्षणानां लक्षणम् ।** | |
| ४४०. | जहल्लक्षणा । | 301 |
| | **टीकायाम्**—विस्तरेण तत्पर्यालोचनम् । | |
| ४४१. | अजहल्लक्षणा । | 303 |
| ४४२. | भागत्यागलक्षणा । | ,, |
| | **टीकायाम्**—विस्तरेण अजहल्लक्षणापर्यालोचनम् । | |
| | **४४३—४४९ महावाक्येषु लक्षणा ।** | |
| ४४३. | तत्पदवाच्यार्थः । | 304 |
| | **टीकायाम्**—विस्तरेण भागत्यागलक्षणापर्यालोचनम् । | |
| ४४४. | त्वम्पदवाच्यार्थः । | 305 |
| ४४५. | महावाक्ये लक्षणाश्रयणे निमित्तम् । | ,, |
| ४४६. | महावाक्ये जहल्लक्षणाया असम्भवः । | 306 |
| ४४७. | महावाक्ये अजहल्लक्षणाया असम्भवः । | ,, |
| ४४८. | महावाक्ये भागत्यागलक्षणाङ्गीकारक्रमः । | ,, |
| | **४४९—४५३ आभासप्रतिबिम्बावच्छेदवादाः ।** | |
| ४४९. | आभासवादः । | 307 |
| ४५०. | प्रतिबिम्बवादः । | ,, |
| ४५१. | तयोर्भेदः । | 308 |
| | **टीकायाम्**—विस्तरेण तदुपपादनम् । | |
| ४५२. | अवच्छेदवादः । | 310 |
| ४५३. | चतुर्षु महावाक्येषु भागत्यागलक्षणोपपादनम् । | ,, |
| | **टीकायाम्**—तत्त्वमसि वाक्यस्य संबन्धत्रयेणाखण्डार्थबोधकत्वोपपादनम् । महावाक्यानामवान्तरवैलक्षण्यकथनम् । | |
| ४५४. | पूर्वोक्तार्थसङ्ग्रहः । | 314 |
| ४५५. | महावाक्येषु पदद्वयेऽपि लक्षणाङ्गीकारो निष्फल इत्याक्षेपः । | ,, |
| | **४५६—४६० उक्ताक्षेपसमाधानम् ।** | |
| ४५६. | अन्यतरपदे लक्षणेति पक्षे कुत्रेति विकल्प्य दूषणम् । | 315 |
| ४५७. | ईश्वरवाचकपदमात्रे लक्षणासङ्गता । | 316 |

---

## सप्तमस्तरङ्गः

**जीवन्मुक्तिविदेहमुक्तिवर्णनम् ४६४—५३८. आवर्तानां विषयः ।**

---

# शुद्धाशुद्धपत्रिका

| पुटसङ्ख्या | पङ्क्तिसङ्ख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 1 | 15 | व्यायकं | व्यापकं |
| | ,, | रूय | रूप |
| 2 | 5 | कारणम् | करणम् |
| ,, | 18 | चिदामास | चिदभास |
| 19 | 16 | तदनच्छिन्नं | तदनवच्छिन्नं |
| 25 | 30 | शरीरदि | शरीरादि |
| 27 | 22 | निधानं | निदानं |
| 30 | 6 | एकस्याप्भावो | एकस्याप्यभावो |
| 32 | 15 | विषययि | विषयि |
| 34 | 17 | वस्त्वबुध्यते | वस्त्ववबुध्यते |
| 36 | 1 | द्वितीयात्म | द्वितीयात्मा |
| 36 | 10 | स्माव | स्वभाव |
| 37 | 3 | जायेन् | जायेरन् |
| 38 | 29 | शास्रम | शास्त्रम |
| ,, | 33 | घटन्न | घट |
| 43 | 24 | प्राया | प्राये |
| 48 | 18 | पाय | पाप |
| 52 | 10 | एवाथ्यास | एवाध्यास |
| 53 | 17 | धर्माशब्देन | धर्मशब्देन |
| 57 | 13 | सक्ष्म | सूक्ष्म |
| 60 | 9 | ऽन्तरकरण | ऽन्तःकरण |
| 62 | 10 | बन्ध्या | बन्धा |
| 63 | 1 | निमित्तिक | नैमित्तिक |
| 67 | 27 | मयोधि | मयोपाधि |
| ,, | 28 | ,, | ,, |
| ,, | 29 | ,, | ,, |

| पुटसङ्ख्या | पङ्क्तिसङ्ख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 68 | 18 | वक्ष्ययाण | वक्ष्यमाण |
| ,, | 26 | पूर्वत्व | पूर्वत्वा |
| 69 | 6 | ज्जजनन | ज्जनन |
| 78 | 29 | पर्यसायि | पर्यवसायि |
| 86 | 28 | रज्वच्छिन्न | रज्ववच्छिन्न |
| 88 | 16 | त्रिपुटा | त्रिपुटी |
| 89 | 13 | वृत्युहित | वृत्युपहित |
| 95 | 29 | कपालाश | कपालाकाश |
| 97 | 4 | चैतन्स्य | चैतन्यस्य |
| ,, | 29 | त्येत्त्रयं | त्येतत्त्रयं |
| 103 | 10 | बिम्बत | बिम्बित |
| 105 | 23 | पुपय | पुण्य |
| 115 | 15 | इत्युमा | इत्यनुमा |
| 116 | 19 | प्रतीत्य | प्रतीत्या |
| 118 | 16 | चक्ष | चक्षु |
| 119 | 21 | वच्छि | वच्छिन्न |
| 129 | 18 | वृत्य | वृत्या |
| 132 | 22 | बदु | बहु |
| ,, | 25 | युक्त्यै वा | मुक्त्यैवा |
| ,, | 28 | युक्ति | मुक्ति |
| ,, | 29 | ह्यात्म | हयात्म |
| 135 | 22 | सर्वभौमा | सार्वभौमा |
| 137 | 18 | विकेकात् | विवेकात् |
| 140 | 15 | ह्यर्जने | ह्यार्जने |
| 141 | 19 | मन्ति | मन्त्रि |
| 143 | 2 | दर्श | दर्शन |
| 151 | 16 | द्वैव | द्वैत |
| 153 | 3 | तादज्ञानं | तदज्ञानं |
| ,, | 22 | भूता | भूत |

| पुटसङ्ख्या | पङ्क्तिसङ्ख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 154 | 29 | विविके | विवेके |
| 156 | 12 | तस्मी | तस्मा |
| 158 | 1 | मिका | यिका |
| 159 | 13 | न्द्रिस्य | न्द्रियस्य |
| ,, | 20 | करण | करणं |
| ,, | 28 | त्तथ | त्तथा |
| 161 | 29 | तेजोऽशाः | तेजोंऽशाः |
| 163 | 10 | मियुच्यते | मित्युच्यते |
| ,, | 17 | घ्यष्ठातृ | घधिष्ठातृ |
| ,, | 31 | सेवा | सैवा |
| 164 | 23 | प्रेमास्पदत्वा | प्रेमास्पदत्व |
| ,, | 30 | नामा | नात्मा |
| 168 | 4 | वर्तिक | वार्तिक |
| 169 | 28 | दण्डद् | दण्ड |
| 177 | 28 | पमेश्वरः | परमेश्वरः |
| ,, | 30 | कूरस्थं | कूटस्थं |
| 178 | 11 | विपये | विषये |
| ,, | 32 | लोय | लोप |
| 179 | 3 | विवेचन | विवेचना |
| ,, | 26 | स्वान्तः | स्वान्तः |
| ,, | ,, | रगा | रागा |
| ,, | 29 | राग | रागा |
| 181 | 18 | जस | जल |
| 182 | 8 | नस्ति | नास्ति |
| 183 | 31 | वश्वयं | वश्यं |
| 184 | 20 | ३२६ | ३१६ |
| 185 | 4 | न्तयेण | न्तर्येण |
| ,, | 18 | सर्वस्तू | सर्ववस्तु |
| 189 | 15 | सन्धा | सम्बन्धा |

| पुटसङ्ख्या | पङ्क्तिसङ्ख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 193 | 29 | शक्नुन्ति | शक्नुवन्ति |
| 194 | 8 | नययि | नयति |
| 196 | 13 | चैतन्य | चैतन्यं |
| ,, | 14 | मुकार | मकार |
| 198 | 20 | तत्राय्य | तत्राप्य |
| 204 | 15 | रथान | रथान् |
| ,, | 23 | स्वप्नदार्थाः | स्वप्नपदार्थाः |
| 206 | 28 | थिक | र्थिक |
| 207 | 21 | वच्छि | वच्छिन्न |
| 208 | 20 | रहित | ररहित |
| 209 | 22 | पुत्तो | पुत्रो |
| 210 | 14 | विचरो | विचारो |
| 216 | 15 | स्वप्नवान् | स्वप्नवन् |
| 218 | 13 | ज्ञानत् | ज्ञानात् |
| ,, | 20 | वचनी | वचनीय |
| 220 | 10 | मन्दानों | मन्दानां |
| 221 | 23 | स्वप्न | स्वप्नव |
| 223 | 8 | स्वल्का | स्वल्पका |
| 224 | 24 | न्यिथ्यैव | न्मिथ्यैव |
| 233 | 28 | र्नहि महद | र्नाहम |
| 237 | 3 | मेदो | भेदो |
| 240 | 33 | ध्रव | ध्रुव |
| 241 | 16 | ज्ञाहेतुः | ज्ञानहेतुः |
| 242 | 8 | दार्थ | पदार्थ |
| 243 | 26 | षेत्धा | षेधा |
| 245 | 5 | शरीण | शरीरेण |
| 253 | 14 | स्थिा | स्थिता |
| 259 | 9 | भवेदु | भवेयु |
| 263 | 27 | सनने | सनेन |

| पृष्ठसङ्ख्या | पङ्क्तिसङ्ख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 266 | 1 | गमना | गमन |
| ,, | 27 | कर्मफल | कर्मफलं |
| 270 | 18 | श्रम | श्रमा |
| 271 | 22 | तब्रह्म | ब्रह्म |
| 272 | 14 | कतव्या | कर्तव्या |
| ,, | 25 | रूत्वा | रूपत्वा |
| 276 | 15 | वृत्र्थ | वृत्यर्थ |
| 277 | 18 | सञ्चातः | सञ्जातः |
| 278 | 17 | द्वार | द्वारा |
| 279 | 23 | धृक् | दृक् |
| 287 | 18 | यदस्य | पदस्य |
| ,, | 21 | रूदि | रूढि |
| 291 | 7 | हेतता | हेतुता |
| 293 | 21 | कार्मज | कर्मज |
| 295 | 26 | ऽन्तर्भति | ऽन्तर्भवति |
| 299 | 29 | दोयुक्त | दोषयुक्त |
| ,, | 30 | पहि | परि |
| 302 | 15 | शक्याथ | शक्यार्थ |
| 306 | 14 | अहल्लक्षणा | अजहल्लक्षण |
| 310 | 15 | प्राब्ध | प्रारब्ध |
| 317 | 29 | त्वपदार्थ | त्वम्पदार्थ |
| 329 | 17 | घोच्ये | घोच्यते |
| 335 | 17 | रत्यतं | रत्यन्तं |
| ,, | 20 | दैत | द्वैत |
| 336 | 2 | सभव | सम्भव |
| ,, | 7 | भीजना | भोजना |
| ,, | 10 | तस्य प | तस्य न |
| 336 | 12 | सुखार्यि | सुखार्थि |
| 338 | 7 | अधिक्रियते | अति क्रियेत |

| पुटसङ्ख्या | पङ्क्तिसङ्ख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 342 | 10 | सर्वर्था | सर्वथा |
| 348 | 6 | उदोत्त | उदात्त |
| 353 | 19 | साङ्ख | साङ्ख्य |
| 357 | 6 | चञ्चल्य | चाञ्चल्य |
| ,, | 16 | विज्ञानाति | विजानाति |
| 359 | 16 | चाय | चायं |
| 361 | 17 | सवे | सर्वे |
| 362 | 6 | गाळ्णे | गाणे |
| 364 | 15 | विष्वा | विष्णवा |
| 365 | 13 | इत्थ | इत्थम् |
| ,, | 28 | सन्ते | सन्तते |
| 368 | 6 | ईश्व | ईश्वर |
| 370 | 11 | विष्वा | विष्णवा |
| 372 | 20 | कर्तु | कर्तुं |
| 375 | I7 | ग्रमे | ग्रामे |

भारती विजयम् प्रेस् , मद्रास्–५.

॥ ओम् ॥

श्रीचिद्घनगणेशाय नमो मह्यम् ।

श्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचितः

# संस्कृतविचारसागरः ।

तदीयया टिप्पण्या समलङ्कृतः ।

## तत्रानुबन्धानां सामान्यतो निरूपणं नाम प्रथमस्तरङ्गः—

(आ० १-११) वस्तु[1]निर्देशरूपम[2]ङ्गलाचरणम्—

(१) जीवब्रह्मैक्यरूपमङ्गलम्—

> सुखं[3] नित्यं[4] स्वप्रकाशं[5] व्यापकं[6] नाम[7]रूपयोः ।
> अधिष्ठानं बुद्ध्यबोध्यं बुद्धेर्दृग्यत्तु निर्मलम् ॥ १ ॥
> अपारं सर्ववेदान्तवेद्यं प्रत्यक् परं महः ।
> तदेवाहं न मत्तोऽन्यदिति मे निश्चिता मतिः ॥ २ ॥

अस्यार्थस्तु—'तदेवाहम्' इत्युक्त्या महावाक्यार्थप्रत्यगभिन्नपरमात्मैव स्वस्वरूपमिति । तद्विशेषणानि निरूप्यन्ते—तत् प्रत्यक् परं महः (ब्रह्म) कथं भूतम् ?—सुखं, नित्यं, स्वप्रकाशं, व्यायकं, नामरूपयोरधिष्ठानं च भवति। पुनश्च तद्ब्रह्म कथं भूतम् ?—बुद्ध्यबोध्यं बुद्धेर्दृक् च भवति । अस्यार्थः—बुद्ध्यबोध्यं=न हि बुद्धिर्ब्रह्म विजानाति=प्रकाशयति । "नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा," ( क. 2-3.12) "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह," ( तै. ब्र. 4+9 ) "न तत्र सूर्यो भाति" ( क. 2-2-15, मु. 2-2-10, श्वे. 6-14 ) इत्यादिश्रुतिभ्यः । किन्तु बुद्धेर्दृक्=सर्वसाक्षि ब्रह्मैव बुद्धिं

---

१. निर्गुणब्रह्मात्मावबोधनम् ।

२. विघ्नध्वंसानुकूलव्यापारविशेषः ।

३. परमप्रेमास्पदीभूतनिरतिशयानन्दः ।

४. त्रिकालाबाध्यं कूटस्थसत्यम् ।

५. अनन्याधीनप्रकाशरूपं, चिन्मयमिति यावत् ।

६. देशकालवस्तुपरिच्छेदशून्यं, अनन्तं, निरतिशयमहत् ।

७. विवर्तोपादानकारणम् ।

प्रकाशयति। "यन्मनसा न मनुते येनाहुर्मनो मतम्", (के. 1-5) "तस्य भासा सर्वमिदं विभाति" (क. 2-2-15, मु. 2-2-10. श्वे. 6-14) इत्यादि-श्रुतिभ्यः। (2) बुद्धिर्न शब्दस्य शक्तिवृत्त्या ब्रह्म विजानाति, किन्तु लक्ष-णावृत्त्या। (3) मलविक्षेपादिदोषयुक्ता बुद्धिर्न ब्रह्म विजानाति, किन्तु तद्रहिता। "शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने कारणम्" इति गीता-भाष्यवचनात् (भ. गी. 2-21)। असौ बुद्धिरपि फल[1]व्याप्त्या न ब्रह्म विजानी-यात्, किन्तु वृत्ति[2]व्याप्त्यैव। इयञ्च वृत्तिर्दीपो यथा स्वसंबद्धपदार्थान् प्रकाशयति न तथा ब्रह्म प्रकाशयितुं प्रभवति। किन्त्वन्धकारे घटाद्यावृतरल-प्रदीपादिर्यथा घटादिस्वावरणभङ्गे स्वयमेव प्रकाशते, एवं 'अहं ब्रह्मास्मि' इति प्रमाणजन्यप्रमारूपवृत्तिर्ब्रह्मावारकाज्ञाननाशमात्रं करोति, ब्रह्म तु बुद्ध्यादिसाधनान्तरनिरपेक्षमेव स्वसंबद्धसर्वावभासकत्वरूपस्वयंज्योतिष्ट्वेन नित्या-परोक्षरूपत्वात् स्वयं प्रथते। इति ब्रह्मणः स्वप्रकाशत्वबोधकमिदं विशेषणम्।

पुनश्च तद्ब्रह्म कथं भूतम्? [3]निर्मलं=शुद्धम्, [4]अपारं=देशकालवस्त्व-परिच्छिन्नं च भवति।

(२) अथ विशेषणानां प्रत्येकं प्रयोजनमुच्यते—

(i) सुखं नित्यम्—सुखस्य नित्यत्वविशेषणानुपादाने वैषयिके सामये

---

१. वृत्तिप्रतिफलितचिदाभासविषयत्वं फलव्याप्तिः।

२. केवलवृत्तिविषयत्वं वृत्तिव्याप्तिः। तथा चोक्तं पञ्चदश्याम्—
"स्वप्रकाशोऽपि साक्ष्येव धीवृत्त्या व्याप्यतेऽन्यवत्।
फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्॥ (तृप्तिदीपे. ९०)
बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्॥ ९१॥
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता।
स्वयं स्फुरणरूपत्वान्नाभास उपयुज्यते॥ ९२॥
चक्षुर्दीपावपेक्ष्येते घटादेर्दर्शने, तथा।
न दीपदर्शने, किन्तु चक्षुरेकमपेक्ष्यते॥ ९३॥

३. मायातत्कार्यैरहितत्वान्निर्मलं=शुद्धम्।

४. पारः=अन्तः। स च देशकालवस्तुकृतभेदात् त्रिविधः। तदभावादपारं ब्रह्म। (१) तत्र देशः=प्रदेशः, यत् सर्वत्राव्यापित्वेनैकदेशवर्ति तस्य देशतोऽन्तोऽस्ति, यथा घटादेः, न तु ब्रह्मणः, तच्च सर्वत्र व्याप्यावतिष्ठते। सर्वस्यापि देशस्य मायया तस्मिन्नध्यस्तत्वेन तदनवच्छेदकत्वात्। (२) कालः=अविद्याचित्संयोगः। "कालो माया-

सुखे, नैयायिकाभिमते आत्मगुणे आनन्दे चातिव्याप्तिः। तदुपादाने तु विषयानन्दस्य, आत्मगुणस्य चानन्दस्यानित्यत्वप्रसिद्धेर्नातिव्याप्तिः।

(ii) नित्यं, स्वप्रकाशम्—नित्यत्वमात्रोक्तौ न्यायमतसिद्धकालाकाशादिनित्यपदार्थेष्वतिव्याप्तेस्तद्वारणाय 'स्वप्रकाशम्' इति। आकाशादीनां नित्यत्वेऽपि न्यायमते तेषां जडत्वेन स्वप्रकाशत्वाभावान्नातिव्याप्तिः।

(iii) स्वप्रकाशम्, व्यापकम्—स्वप्रकाशत्वमात्रोक्तौ सूर्यादिज्योतिषि, न्यायमतसिद्धात्म*गुणे ज्ञाने, बौद्धानां क्षणिकविज्ञानात्मनि चातिव्याप्तिप्रसक्तेस्तद्वारणाय 'व्यापकम्' इति। तेषां परिच्छिन्नत्वान्नातिव्याप्तिः।

(iv) व्यापकं, नामरूपयोरधिष्ठानम्—व्यापकत्वमात्रोक्तौ नैयायिकप्राभाकरमतसिद्धात्मनि, आकाशादौ, साङ्ख्यमतसिद्धप्रकृतौ चातिव्याप्तेस्तद्वारणाय 'नामरूपयोरधिष्ठानम्' इति। पूर्वोक्तेष्वाकाशादिषु त्रिषु व्यापकत्वाङ्गीकारेऽपि नामरूपयोरधिष्ठानत्वानङ्गीकारान्नातिव्याप्तिः।

(v) नामरूपयोरधिष्ठानं, स्वप्रकाशम् [बुद्ध्यबोध्यं बुद्धेर्दृक्]—नामरूपयोरधिष्ठानत्वमात्रोक्तौ प्रातिभासिकसर्पादिनामरूपाधिष्ठानरज्ज्वादावतिव्याप्तिस्तद्वारणाय 'स्वप्रकाशं' [बुद्ध्यबोध्यं बुद्धेर्दृक्] इति। रज्ज्वादेर्जडत्वान्नातिव्याप्तिः। अयं च परिष्कारो मन्ददृष्ट्या। वस्तुतस्तु वेदान्तिमते रज्ज्वादिसर्वकल्पनाधिष्ठानं तत्तदुपहितचैतन्यमेव। अतो "नामरूपयोरधिष्ठानम्" इत्येव लक्षणम्।

---

त्मसंबन्धः सर्वसाधारणात्मकः" इत्युक्तेः। यस्य तु जन्मतः प्रागूर्ध्वं चाभावो दृश्यते तस्य कालतोऽन्तोऽस्ति, यथा विद्युदादेः, न ब्रह्मणः जन्मादिविकाराभावात् तस्य, कालस्यापि तदध्यस्तत्वाच्च। (३) वस्तु=पदार्थः। यत् यस्माद्भिद्यते तेन तस्यान्तो भवेत्, यथा घटः पटाद्भिद्यत इति घटेन पटस्यान्तो भवति। ब्रह्मणि तु सर्वस्यापि जगतः मृदि घटशरावादेरिव कल्पितत्वेनावस्तुत्वाच्चवस्तुपरिच्छेदोऽपि तस्य संभवति। तस्माद्ब्रह्म अपारं=अनन्तं=देशकालवस्तुपरिच्छेदशून्यं, ततोऽन्यस्य द्वितीयस्याभावात्।

१. अलक्ष्ये लक्षणस्य सत्वमतिव्याप्तिः, लक्ष्यैकदेशासत्वमव्याप्तिः, लक्ष्यसामान्यासत्वमसंभवः।

[* व्यवसायात्मकज्ञानस्यानुव्यवसायग्राह्यत्ववादिनैयायिकैरप्यनुव्यवसायस्य प्राहकान्तराङ्गीकारेऽनवस्थाभयात् स्वप्रकाशत्वमङ्गीकर्तव्यम्। तथा च व्यवसायात्मकज्ञानस्यापि स्वप्रकाशत्वमस्त्वित्यभिप्रायेणैवमुक्तम्]

२. आकाशादीनां व्यापकत्वमापेक्षिकम्।

३. प्रतीतिकालमात्रसत्ताकं=कल्पितं=मिथ्येत्यर्थः।

(vi) स्वप्रकाशं [ बुद्धयबोध्यं बुद्धेर्द्दक ], निर्मलम्—स्वप्रकाशत्वमात्रोक्तौ केषाञ्चिदुपासकानां मते आत्मन्यतिव्याप्तेस्तद्वारणाय 'निर्मलम्' इति। उपासकमते तु आत्मनः स्वप्रकाशत्वेऽपि अविद्यादिमलवत्वेनैवाभ्युपगमान्नातिव्याप्तिः।

(vii) निर्मलं, अपारम्—निर्मलत्वमात्रोक्तौ साङ्ख्याभिमते आत्मन्यतिव्याप्तिसंभवात्तद्वारणाय 'अपारम्' इति। तन्मते आत्मनो देशकालपरिच्छेदाभावेऽपि वस्तुपरिच्छेदस्येष्टत्वात्। तस्याप्यभावाद्ब्रह्मणो नातिव्याप्तिः॥

(३) **अनेकविशेषणानां प्रयोजनम्**—पूर्वोक्तात्मलक्षणेषु "सुखं, नित्यम्"; "नित्यं, स्वप्रकाशम्"; इति द्वाभ्यां द्वाभ्यामेव लक्षणाभ्यां सर्वत्रातिव्याप्तिदोषनिवृत्तावपि अनेकधातिव्याप्तिनिरासोक्तिस्तु तल्लक्षणप्रयोजनेषु विस्पष्टार्थरुचीनां सर्वप्रकारेण ब्रह्मज्ञानोत्पत्तये। पूर्वोक्ताखिललक्षणलक्षितचिन्मात्रब्रह्मैवाहं न पराग्रूप इति मङ्गलार्थः।

**(आ. ४-११) स्वप्रत्यगात्मविषयकमङ्गलाचरणविषये आक्षेपसमाधानानि।**

(४) **प्रथम आक्षेपः**—ननु हरिहरब्रह्मादिषूपास्येषु सत्सु तत्स्मरणात्मकमङ्गलाचरणं विहाय स्वात्मस्मरणरूपं मङ्गलं किमिति युक्तं कर्तुमिति चेत्।

(५) **समाधानम्**—उच्यते—मय्यखण्डचिदम्भोधौ हरिहरब्रह्मार्केन्द्रचन्द्रवरुणयमशक्तिकुबेरगणपत्याद्युपलक्षिताः सर्वेऽपि देवास्तरङ्गायन्ते। अतो मयि सर्वप्रपञ्चाधिष्ठाने जगत्कारणे स्मृते मत्कार्यभूतास्ते सर्वेऽपि देवाः स्मृता एव भवन्ति। तस्मात्स्वविषयकं मङ्गलाचरणमेव युक्तम्।

(६) **द्वितीय आक्षेपः**—ननु हरिहरादयो देवा मायाविशिष्टचैतन्यात्मकेश्वररूपसमुद्रस्य तरङ्गा इति वक्तुं युक्तम्, न तु तव। अतः ईश्वरविषयकं मङ्गलाचरणं युज्यते। किञ्च वृक्षमूलसेचनेन यथा तच्छाखास्कन्धादयस्तृप्यन्ति, यथा अन्नपानादिजनितप्राणतृप्त्या इन्द्रियादितृप्तिः, एवमीश्वरविषयकमङ्गलाचरणेनैव तद्विभूतिभूतेतरदेवतामङ्गलाचरणं सिद्ध्येत, न तु त्वन्मङ्गलाचरणादिति चेत्।

---

१. अस्य ग्रन्थस्य जीवब्रह्मैक्यं विषय इत्यनेन मङ्गलेन सूच्यते।

(७) **समाधानम्**—उच्यते–योगिभिर्हृदये चिन्त्यमानः सर्वज्ञः कृपालुरीश्वरोऽपि मायोपाधिवशान्मय्येवाखण्डचिन्मात्रे स्वप्नेन्द्रजालमायामरीच्युदकगन्धर्वनगररज्जुसर्पादिवन्मृषाऽध्यारोपितः ।

तथा चोक्तम्—

"मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्" ॥ (कै. 19)

"आत्मत एवेदं सर्वम्" (छा. 7. 26.1)

"अणोरणीयानहमेव तद्वन्महानहं विश्वमिदं विचित्रम् ।
पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि" ॥
(कै. 20)

"स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ।
न सन्ति नास्ति माया च तेभ्यश्चाहं विलक्षणः ॥
सर्वाधिष्ठानरूपोऽस्मि सर्वदा चिद्घनोऽस्म्यहम् ।
रक्षको विष्णुरित्यादि ब्रह्मा सृष्टेस्तु कारणम् ॥
संहारे रुद्र इत्येवं सर्वं मिथ्येति निश्चिनु ॥"

"तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" (के. 1-4-8) "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः"। (बृ. 1-4-10) "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद"। (बृ. 2-4-6) इत्यादिश्रुतिभ्यः ।

"सर्वं चैतदविद्यया त्रिगुणया सेशं मया कल्पितम् ।
स्वस्मिन्नेव स्वप्नवदीशानत्वादिसर्वकल्पनया ॥
जीवः सर्वविकारोपादानमिति ब्रुवन्त्यन्ये ॥"

इत्यादिवचनशतेभ्यश्च—

'यत् यत्र कल्पितं नैव तत्ततोऽधिष्ठानादतिरिच्यते' इति न्यायादीश्वरादीनां मय्यखण्डचिदात्मन्यध्यस्तत्वेन मत्स्वरूपानुसन्धानादेव तेषां देवतान्तराणामपि मङ्गलाचरणं सिद्ध्यतीति न काप्यनुपपत्तिः ॥

(८) **तृतीय आक्षेपः**—ननु शुद्धे ब्रह्मणीश्वरः कल्पित इति शक्यते वक्तुं, न तु सुतरां त्वयि परिच्छिन्ने। अतो निर्गुणब्रह्मस्मरणेनैव कृतानि भवन्तीतरसकलदेवतामङ्गलानि, न तु त्वत्स्मरणादिति चेत्—

(९) **समाधानम्**—उच्यते—यथा अधिष्ठानभूतरज्ज्वाद्यज्ञानात्सर्पादि-भ्रमः, तदधिष्ठानयाथात्म्यज्ञानेन तन्निवृत्तिश्च, तथा सकलजगदधिष्ठानप्रत्यगे-करसब्रह्माज्ञानात् जगत्प्रतीयते, तदापरोक्ष्येण निश्शेषं निवर्तते च। तच्चाधिष्ठानं ब्रह्म प्रत्यगात्मा **अहमेव** ॥

"अयमात्मा हि ब्रह्मैव सर्वात्मकतया स्थितः।
इति निर्धारितं श्रुत्या बृहदारण्यसंस्थया॥"
"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते॥"
"तत्त्वमसि" (छा. 6-8-7) "त्वं तदसि।"
"यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्।"
"सूक्ष्मात्सूक्ष्मतरं नित्यं तत् त्वमेव त्वमेव तत्।" (कै. 16)
"एकमाद्यन्तरहितं चिन्मात्रममलं ततम्।
खादप्यतितरां सूक्ष्मं तद्ब्रह्मासि न संशयः॥" (अन्न. 5-65.)
"अनेन सर्वं ह्येतद्वेद।"

"तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात् प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा। स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यात्। **आत्मानमेव** प्रियमुपासीत।" (बृ. 1-4-8) "आत्मा ह्येषां स भवति।" (बृ. 1-4-10) "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः।" (बृ. 3-4-1) इत्यादिश्रुतिभ्यः। "एव" इत्यवधारणेनांशांशित्वविकार-विकारित्वोपास्योपासकत्वादिद्वित्वनिबन्धनो भेदः सुतरां प्रत्यगेकरसस्य मम, चिन्मात्रस्य ब्रह्मणश्च नास्तीति सिद्ध्यति। एतेन कारणाधीनस्वरूपकार्यत्वं प्रकाशाधीनस्वरूपप्रकाश्यत्वं, अधिष्ठानाधीनस्वरूपाधेय (रोपित) त्वं चेत्येतत्त्रि-विधपारतन्त्र्यं मम न संभवतीति सूच्यते। तस्माच्चिन्मात्रप्रत्यग्रूपस्य मम मङ्गलमेव शुद्धब्रह्मविषयकं मङ्गलं भवति।

(१०) चतुर्थ आक्षेपः—ननु भवद्गुरुपरम्परागतसगुणेष्टदेवतानमस्कारात्मकमङ्गलं युक्तं कर्तुमिति चेत् ॥

(११) समाधानम्—उच्यते–यत्स्वरूपपरिज्ञानाय साधकाः चित्तशुद्धये निष्कामकर्माणि, चित्तैकाग्र्यायोपासनानि च यमाद्यष्टाङ्गसहिता आचरन्ति तादृशप्रत्यगेकरसचिन्मात्राखण्डब्रह्मरूपत्वात् स्वस्य मम, कमन्यं नमस्कुर्याम् । स्वस्वरूपातिरिक्तस्य द्वैतस्याणुमात्रस्याप्यभावात् भेदघटितत्रिपुटीविषयभूतनमस्कारादिव्यवहार एव न संभवतीत्यभिप्रायः ॥

(आ. १२-१३) ग्रन्थमहिमा—

(१२) वेदान्तसिद्धान्तरूपनीरपूर्णोऽतिगम्भीरोऽयं विचारसागराख्यो ग्रन्थः । गुरुमुखात् तीव्रतरश्रद्धाभक्तिसाधनचतुष्टयपूर्वकमस्य ग्रन्थस्य श्रवणमनननिदिध्यासनजन्यस्वस्वरूपापरोक्षसाक्षात्कारेण अविद्याद्यखिलानर्थनिवृत्त्या केवलाद्वितीयचिन्मात्ररूपो धीरः परमानन्दमाप्नोति ।

ननु सत्स्वनेकप्राचीनोद्ग्रन्थेषु सूत्रतद्भाष्यवार्तिकादिषु किमित्ययम-

---

१. रामकृष्णादि ।

२. गुरुशिष्ययोः तत्त्वबुभुत्साकथारूपेण वादेन वा, पूर्वपक्षसिद्धान्तचर्चारूपेण वा, जडचेतनपदार्थयोः उपक्रमादिषड्विधतात्पर्यलिङ्गैर्यो निर्णयः स विचारः । तेन पर्यवसन्नोऽर्थः सिद्धान्तः । स एव सागर इव सागरः । कुतः ?—अनेकशङ्कापङ्कप्रक्षालकसमाधानरूपसलिलपूर्णत्वात् । अनेकाध्यायरूपतरङ्गवत्वात् । कठिनप्रमेयरूपग्राहवत्वात् । शुद्धबोधस्वरूपनिर्णायकसिद्धान्तरूपरत्नानामाकरत्वात् । परकूलप्रापणाय शुद्धबुद्धिरूपनौकावत्वात् । असकृदभ्यासात्मकानुकूलवातेरितत्वात् । अनन्यप्रत्यग्ब्रह्मनिष्ठगुरुरूपनौकादण्डवत्वात् । एतद्ग्रन्थाभ्यासजनितज्ञानगम्यमोक्षरूपतीरवत्वाच्च ।

३. 'धी'शब्दस्य बुद्धिरर्थः । 'र' इत्यस्य विषयेभ्यः परावृत्य तद्रक्षणमर्थः । तथा च विषयेभ्यो बुद्धिं यो नियच्छति स एव धीरः । "पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन् । कश्चिद्धीरः" (क. 2.1-1) इत्यादिश्रुतेः ।

४. "अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥" षड्दर्शन्यात्मकानेकग्रन्थेषु सत्स्वप्यत्र 'सूत्र' शब्देन श्रीकृष्णद्वैपायनप्रणीतं (५५५ सूत्रात्मकं) शारीरकमीमांसाशास्त्रं गृह्यते ।

५. "सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥" एवं सत्स्वप्यनेकेषु भाष्येषु भगवत्पादीयमेवात्र भाष्यं योग्यं ग्रहीतुम् ।

६. "उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते । तदेव वार्तिकं प्राहुर्वार्तिकज्ञा महर्षयः ॥" सत्स्वप्येवंजातीयकेष्वनेकेषु वार्तिकेषु श्रीशङ्करभगवत्पादपूज्यशिष्यमण्डनमिश्राख्यश्रीसुरेश्वराचार्यकृतमेवात्र वार्तिकं ग्राह्यम् ॥

७. आदिपदग्राह्याणि उपनिषद्गीतादीनि ।

पूर्वो ग्रन्थोऽधुना विरच्यत इति चेन्न। तेषामत्यन्तप्रौढोत्तमाधिकारिकत्वेन मन्दानामुपकारायास्य साफल्यात्।

(१३) सत्स्वप्यनेकेषु भाषाग्रन्थेषु पञ्चभाषात्मबोधादिषु विना विचार-सागरं स्वात्मविषयकसर्वसंशया न निवर्तेरन्। यतः केचन ग्रन्थकाराः श्रवण-मात्रं कृत्वा भाषाग्रन्थं रचयामासुः। ततस्तद्गतविषयाः केचन शास्त्रानु-सारिणो न भवन्ति। क्वचित् शास्त्रार्थवैपरीत्यञ्चोपलभ्यते। अपरे केचन स्वल्पशास्त्राभ्यासमात्रेण भाषाग्रन्थान् रचयामासुः। तत्र वेदान्तार्थस्य समग्र-स्यानुक्तत्वात् न तैर्निस्संशयज्ञानमुदेति। अस्मिन् विचारसागरे तु वेदान्तार्थाः समर्मकाः समग्रतया शास्त्रानुसारेण प्रतिपाद्यन्ते। सर्वत्र शास्त्राविरोधेन चात्मज्ञानोपयोगिविषयाः सप्रपञ्चं निरूप्यन्ते। तस्मादयमेव सर्वेभ्यो वेदान्तग्रन्थेभ्य उत्तमोत्तमः। नास्त्यस्य समं ग्रन्थान्तरम्।

(आ. १४-३७) **साधनचतुष्टयनिरूपणम्**—

(१४) **अनुबन्धचतुष्टयम्**—**अधिकारिविषयप्रयोजनसंबन्धाना**-मनुबन्ध इति नाम।

"सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।
यावत्प्रयोजनं नोक्तं तावत् तत्केन गृह्यते॥"

इति वचनात्प्रयोजनादिज्ञानाभावे विवेकिनां ग्रन्थे प्रवृत्त्यनुपपत्तेस्तदङ्ग-भूतोऽनुबन्धः[1] प्रथमं निरूप्यते।

(आ. १५-३२) **अधिकारिनिरूपणम्**—

(१५) **अधिकारिलक्षणम्**—निसर्गत एव सर्वेषामन्तःकरणे मल[2]-

---

१. स्तम्भचतुष्टयाभावे यथा मण्डपो न तिष्ठति तद्वदनुबन्धचतुष्टयाभावे न कस्यापि ग्रन्थे प्रवृत्तिः सिद्ध्येत्। तस्माद्ग्रन्थादौ तत्र प्रवृत्त्यर्थमवश्यं ग्रन्थकर्त्रा तच्चतुष्टयं निरूपणीयम्। स्वज्ञानमनु=स्वविवेकविज्ञानानन्तरमेव मुमुक्षुं ग्रन्थेन बध्नाति=वेदान्त-विचारे प्रवर्तयतीत्यनुबन्धः।

२. स्थूलदेहगतवातपित्तश्लेष्मरूपदोषत्रयजन्यरोगनिवृत्तये यथा धन्वन्तरिप्रभृति-भिरायुर्वेदः प्राणायि, एवं सर्वप्राणिसाधरणान्तःकरणगतमलविक्षेपाज्ञानाख्यदोषत्रयनिवृत्तये कर्मोपासनाज्ञानकाण्डत्रयोपबृंहितं वेदचतुष्टयमीश्वरेणाकारि।

**मलं नाम पापम्**—तच्च संस्कारात्मनातिसूक्ष्मत्वान्न प्रत्यक्षीक्रियते। किन्तु निषिद्धकर्मानुष्ठानेन, विषयासक्त्या, चित्तगताशुभवासनाभिश्चानुमीयते। तद्वान् पुरुषो मलिनो भवति। अतस्तन्निवृत्त्यर्थं निष्कामकर्माणि, भूतदयादि, ईश्वरनामोच्चारणादीनि च साधनानि विहितानि। तत्राद्यद्वयं मलमात्रं निवर्तयेत्। नामोच्चारणं तु विक्षेपमपि।

विक्षेपावरणात्मकदोषत्रयमास्ते । निष्कामकर्मानुष्ठानेनान्तःकरणस्यमलरूप-दोषनिवृत्तिः । उपासनया विक्षेपस्य । यस्य निष्कामकर्मोपासनाभ्यां मलविक्षेपयो-र्निवृत्तावपि स्वस्वरूपावारकाज्ञानं न निवृत्तं, यश्च पुष्कलसाधनचतुष्टय-संपन्नः सोऽधिकारी[1] ।

(१६) **साधनचतुष्टयम्**—(1) नित्यानित्यवस्तुविवेकः, (2) इहा-मुत्रफलभोगविरागः, (3) शमदमादिषट्कसंपत्, (4) मुमुक्षुत्वं चेति ।

(१७) **नित्यानित्यवस्तुविवेकः**—चिन्मात्र आत्मा नित्यः (सत्यः), नाशाप्रतियोगी, क्रियाशून्यः । तद्विलक्षणोऽनात्मा तु दृश्यः प्रपञ्चो नाश-प्रतियोगी, अनित्यः (असत्यः), क्रियासहितश्चेति विवेचनमेव [2]विवेकः ।

---

**विक्षेपो नाम**—चित्तचाञ्चल्यम् । यस्य चित्तं वेदान्तश्रवणे स्वरूपानुसन्धाने वा स्थैर्यं न प्राप्नोति किन्तु विषयाभिमुखीभवति, तेन तन्निवृत्तये ईश्वरनामोच्चारणं, अजपाम-न्त्रावृत्तिः, ईश्वरमूर्तिध्यानं, निर्गुणब्रह्मानुसन्धानमित्याद्युपाया अनुष्ठेयाः । उपासनादि-भिश्चित्तैकाग्र्यसंभवात् ।

**अथ वा**—शरीरवाङ्मनोभिः, पुष्कलेन धनेन, शुश्रूषया च ईश्वर एवास्मदनन्तको-टिजन्मार्जितसुकृतपरिपाकवशात् गुरुमूर्तिरूपेणावतीर्ण इति श्रीसद्गुरूपासनं कुर्यात् । "यस्य देवे पराभक्तिः" इत्यादिश्रुतेः । एतच्च गुरूपासनं विनैव कर्मोपासनादिसाधनकलापं चित्तशुद्धिद्वारा चित्तैकाग्र्यं जनयेत् ।

**अथ वा**–अहर्निशं वेदान्तश्रवण एवात्यन्तमादरेण तीव्रतरा प्रवृत्तिरप्युपायान्तरमेव । तथा च श्रुतिस्मृतिवादाः—"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ. 4. 5. 6.) "वेदान्तविज्ञानसुनिश्चितार्थाः" (मु. 3.2.6) "वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम्" (श्वे. 6. 22.) "दिने दिने च वेदान्तश्रवणात्" (कै. 4.) "आसुप्तेरासृतेः कालं नयेद्वेदान्तचिन्तया" इत्यादयः । एतच्च वेदान्तश्रवणं स्वातन्त्र्येणैव कर्मोपासनादिकमन-पेक्ष्य चित्तशुद्ध्यैकाग्र्यादि जनयेत् ।

"नाहं अखण्डचिन्मात्रब्रह्मरूपप्रत्यगात्मानं जाने" इति व्यवहारहेतु**रज्ञानम्** । तच्च तादृशतत्त्वज्ञानादेव नश्यति ।

१. यथा बृहस्पतिसवे ब्राह्मणस्यैवाधिकारः, राजसूये क्षत्रियस्यैव, वैश्यस्तोमे वैश्यस्यैव, तथा साधनचतुष्टयसंपन्नस्यैव वेदान्तविचारेऽधिकारो नान्यस्य ।

२. हंसस्य नीरक्षीरविवेचनवत् आत्मानात्मनोः दृढतरवेदान्तार्थविचारेण स्वरूप-विवेचनं **विवेकः** । ईदृशविवेकेन जगन्मिथ्यात्वविषयकपरोक्षज्ञानमात्रं जायते, नापरोक्षज्ञानम् । तस्मात्साधनान्तरवतापि मुमुक्षुणा भाव्यम् । ननु वादिविजिगीषूणामपि पण्डितानां "आत्मा नित्यः, ततोऽन्यो देहादिप्रपञ्चरूपानात्माऽनित्यः" इति भेदज्ञानमस्ति । कस्मात् तद्भेदज्ञानं तेषां वैराग्यादित्रयमुत्तरं साधनजातं न जनयतीति चेन्न । तेषां शास्त्राभ्यासवशाद्विवेके सत्यपि निष्कामकर्मोपासनासाध्यचित्तशुद्ध्यभावेन मलिनविक्षि-प्तान्तःकरणत्वात् । यथोषरभूमौ कदलीवृक्षो न प्ररोहति उर्वरावनौ तूत्तरोत्तरमभिवर्धते,

उत्तरेषां त्रयाणामपि साधनानामयं हेतुः, एतस्थित्यधीनोत्पत्तिकत्वाद्वैराग्यादीनां त्रयाणाम्। अतो निमित्ताभावे नैमित्तिकाभावादवश्यमेवादौ विवेकः संपादनीयः।

(१८) **वैराग्यम्**—दोषदृष्ट्या आब्रह्मलोकाद्विपरिवर्तमानेषु भोगेष्वनादररूपोपेक्षैव वैराग्यमित्युच्यते ब्रह्मपारगैः।

(१९) **शमादिषट्कं नाम**—शमदमश्रद्धासमाधानोपरतितितिक्षाः।

**शमो नाम**—प्राचीनविषयवासनात्यागपूर्वकं विषयेभ्यो मनसः प्रतिनिवर्तनम्।

**दमो नाम**—तद्वत् विषयेभ्यो बाह्येन्द्रियाणां प्रतिनिवर्तनम्।

**श्रद्धा नाम**—गुरुवेदान्तवाक्येषु दृढतरविश्वासः, आस्तिक्यम्।

**समाधानं नाम**—लक्ष्ये ब्रह्मणि चित्तैकाग्र्यम्।

---

तथा शुद्धान्तःकरणे मलविक्षेपाभावाद्विवेको वैराग्यादिसाधनान्तराणि जनयेत्, नान्यथा। तस्मान्मुमुक्षुभिश्चित्तशुद्धिपूर्वकं विवेकादि संपादनीयम्।

१. **वैराग्यं नाम**—सर्वविषयतित्याजयिषा, इच्छासामान्याभावो वा। (1) यतमानं, (2) व्यतिरेकः, (3) एकेन्द्रियम्, (4) वशीकरणं चेति तच्चतुर्विधम्। (1) **यतमानं नाम** मन्दविवेकः। (2) **व्यतिरेको नाम**—नकुलो यथा नकुललतामाश्रित्य सर्पेण युद्ध्यते तथा सत्सङ्गेन दुर्गुणपरिहारे सद्गुणसंपादने चोत्साहसंपत्तिः। (3) **एकेन्द्रियं नाम**—विषयेभ्यः इन्द्रियनिग्रह एव। (4) **वशीकरणं नाम** सर्वतो मनोनिग्रह एव। तदपि त्रिविधम्—मन्दं, तीव्रं, तीव्रतरञ्चेति। पुत्रवित्तकलत्रादिहानिकालिकवैराग्योपेतचित्तवृत्तिर्मन्दम्। ऐहिकपुत्रादिविषयोपभोगजसुखेऽस्पृहा **तीव्रम्**। सातिशयत्वपुनरावृत्त्याद्यनेकदोषावमर्शेन लोकान्तरभोगेष्वखिलेष्वपीच्छानुदयस्**तीव्रतरम्**। तत्रापरोक्षज्ञानान्तरङ्गसाधनं तु तीव्रतरवशीकरणाख्यवैराग्यमेव। अतोऽतिप्रयत्नेन संपादनीयं तन्मुमुक्षुभिः।

२. विषयदोषदृष्ट्यात्मकाङ्कुशेन मनोरूपमातङ्गस्य स्वायत्तीकरणं **शमः**।

३. दोषदृष्टिपूर्वकं शास्त्रचिन्तारूपकशाघातेन तत्तच्छब्दादिविषयरूपविषममार्गेभ्य इन्द्रियरूपहयानां स्ववशतापादनं **दमः**।

४. यस्य त्वीश्वराचार्यवेदवाक्यादिषु पूज्यत्वग्रहेण प्रेमातिशयरूपा निरतिशयभक्तिः संजायते तस्यैव वेदशास्त्राचार्यादिषु **श्रद्धा** जायेत, नेतरस्य। अतः श्रद्धा भक्तिमपेक्षते।

५. लक्ष्ये ब्रह्मणि चित्तैकाग्र्यं **समाधानम्**। पूर्वमधिकारिलक्षणे सगुणोपासनया विक्षेपदोषनिवृत्तिजन्यचित्तैकाग्रतोक्ता। अनयोरैकाग्र्ययोर्भेदस्तु—सगुणब्रह्मध्यानेन वा मूर्त्युपासनेन वा प्रथमं जायते। द्वितीयं तु निर्गुणब्रह्मण्यनवरतस्थित्या।

[1]उपरतिर्नाम—[2]स्वसाधनानामैहिकामुष्मिकभोगहेतूनां लौकिकवैदिककर्मणां, स्रक्चन्दनादिविषयाणां, विशेषतः [3]स्त्रीणां च परित्यागो हालाहलवत्।

[4]तितिक्षा नाम— शीतोष्णक्षुत्पिपासादिद्वन्द्वसहनम्।

शमादीनां षण्णामपि साधनानामेकसाधनत्वेनैवाभिप्रेतत्वात् विवेकादीनि चत्वार्येव साधनानि। न नवेति ज्ञेयम्।

---

१. त्यक्तेऽपि विषये कथञ्चित्पुनः प्राप्ते पूर्वानुभवजनितवासनावशात्पुनरिच्छानुदयो वैराग्यस्य फलीभूतावस्था **उपरति**रित्युच्यते। अप्राप्ते विषये दोषदृष्टिपूर्वकमिच्छानुदयो **वैराग्यमिति** भेदः।

२. पत्नीपुत्रवित्तवयोऽवस्थाजात्यभिमानादिकं कर्मसाधनम्।

३. ननु विषयग्रहणेनैव स्त्रीरूपविषयस्य गृहीतत्वात्पुनरुक्तिरनर्थिकेति चेन्न। अतीतानन्तकोटिजन्मार्जितस्त्रीविषयोपभोगजनितवासनायाः तीव्रतरत्वात्, शब्दस्पर्शरूपरसगन्धमैथुनात्मकषडिन्द्रियविषयाणामेकत्रैव स्त्रीपिण्डे संभवात्, सर्वेभ्योऽपि विषयेभ्यः संसारार्णवनिमज्जनहेतुभूतेभ्यः स्त्रीव्यक्तेरेव प्रबलतरत्वात्सर्वानर्थमूलत्वाच्च स्त्रीरूपे विषयेऽतितरां वैरस्यं संपादनीयमित्यभिप्रायं द्योतयितुं पुनर्ग्रहणम्। तथा चोक्तं।

"यस्य स्त्री तस्य भोगेच्छा, निःस्त्रीकस्य क्व भोगभूः।
स्त्रियं त्यक्त्वा जगत् त्यक्तं, जगत् त्यक्त्वा सुखी भवेत्"।

"लिन्दु माभिगाम्, लिन्दु माभिगाम्" (छा. 8. 14. 1.)

"सर्वेन्द्रियाणां जरयन्ति तेजः" (क. 1. 1. 26.) इति।

"अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्" (छा. 8. 5. 1.) इत्यादिना बहुप्रपञ्चेन केवलब्रह्मचर्यस्य स्त्रीविषयपरित्यागलक्षणस्य वैराग्यस्य (मैथुनासमाचारस्य) दहराद्युपासनान्तरप्राप्यब्रह्मलोकावाप्तिसाधनत्वमुच्यते।

(४) वेदान्तश्रवणादिप्रसङ्गे सति तत्प्रतिबन्धकशीतोष्णक्षुत्पिपासादिद्वन्द्वान्तरायसहनरूपा तितिक्षा कार्या। अन्यथा क्षुत्पिपासादिप्रतीकारे व्यापृतचित्तस्य श्रवणादिप्रवृत्त्यसंभवः स्यात्। अतोऽवश्यं तितिक्षा संपादनीया।

(५) "आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥ (क. 1. 3. 3.)
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥ (क. 1. 3. 4.)
यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥ (क. 1. 3. 5.)
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः॥ क. 1. 3.6.)
यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः।
न स तत्पदमाप्नोति संसारं चाधिगच्छति॥ (क. 1. 3.7)

यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ (क. 1. 3.8.)

विज्ञानसारथिर्यस्तु मनःप्रग्रहवान् नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥" (क. 1. 3.9.)

शरीररूपरथस्येन्द्रियाणि हयाः, मनः प्रग्रहः, बुद्धिः सारथिः, आत्मा यजमानो रथी। यस्य यजमानस्य बुद्धिरूपसारथिर्विज्ञानवान् कुशलस्तस्येन्द्रियाश्वाः सन्मार्गे गत्वा यजमानं मोक्षं गमयेयुः । विपरीतबुद्धिसारथ्युपेतस्तु यजमानोऽदान्तेन्द्रियाश्वैर्निषिद्धमार्गेण नरकं प्राप्नुयात् । तस्मान्मुमुक्षुर्बुद्धिसारथिं स्वेच्छाचारात्प्रतिनिवर्तयन् इन्द्रियाश्वान् सन्मार्गे प्रवर्तयेत् । अत्र बुद्धिसारथेः स्ववशतापादनं **शमः**। इन्द्रियाश्ववशीकरणं **दमः** इति । अन्यत्राप्युक्तम्—

"मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥" (प. ब्र. यो. 117)

"चित्तं कारणमर्थानां तस्मिन् सति जगत्त्रयम् ।
तस्मिन् क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥" इति ।

सारथेरश्वानां च यथा परस्पराधीनता तथा बुद्धेरिन्द्रियाणां च परस्पराधीनता वर्तते। विचित्रानेकमणिघटितमालाया यथा चामीकरत्वेनैकत्वव्यवहारस्तथा षण्णामपि विलक्षणानां शमादीनां परस्परापेक्षणेनैकसाधनत्वव्यवहारः ।

**शमादीनां परस्परसहायता चेत्थम्—**

(1) मनोवशीकरणमन्तरेण इन्द्रियस्य जयो न संभवतीति **दमः शममपेक्षते ।**

(2) बहिर्मुखस्य मनसो दारपुत्रवित्ताद्यासक्तस्य वेदान्तशास्त्रगुरुप्रभृतिषु पूर्णश्रद्धाऽसंभवाच्छ्रद्धा **शममपेक्षते ।**

(3) अन्तरा मनोनिरोधं ब्रह्मणि चित्तैकाग्र्यासंभवात्**समाधानं शममपेक्षते ।**

(4) क्षीरादिना संवर्धितो मार्जारः पाशाद्यवशीकृतस्वान्मूषकदर्शनमात्रेण यथा तद्ग्रहणाय धावेदेवं विषयेभ्य उपरतमपि मनो निरोधादिभिरवशीकृतं चेत्, संप्राप्ते विषये प्राचीनवासनावेगाद्धावेदित्यतः **उपरतिः शममपेक्षते ।**

(5) अन्तर्मुखीभूतमनसैव शीतोष्णादिद्वन्द्वसहनं कर्तुं शक्यते, न तु बहिर्मुखीभूतमनसेत्यत**स्तितिक्षापि शममपेक्षते** । **इति शमः दमादीनां पञ्चानां सहकारी ।**

(6) विना त्विन्द्रियदमेन मनो न जीयत इत्यतः **शमोऽपि दममाकाङ्क्षते ।**

(7) रूपरसादिविषयासक्तस्य गुरुवेदान्तवाक्यश्रद्धा न जायेतेत्यतः **श्रद्धापि दममाकाङ्क्षते ।**

(8) इन्द्रियनिग्रहमन्तरा चैकाग्र्यं न मनसो जायेतेत्यतः **समाधानमपि दममाकाङ्क्षते ।**

(9) ऋते त्विन्द्रियदमेनानुभूतविषयकवासनावेगवशात् दृष्टेष्टविषयेषु पुनः पुनरिच्छा जायेतेत्यत **उपरतिरपि दममाकाङ्क्षते ।**

(२०) **मुमुक्षा नाम**—स्वस्वरूपभूतब्रह्मावाप्तिरनर्थनिवृत्तिश्च मोक्ष इति तस्मिन् तीव्रतरेच्छा ॥

(२१) **ज्ञानोत्पत्तिसाधनानि**—विवेकादिचतुष्टयं, श्रवणमनननिदिध्यासनानि त्रीणि, तत्त्वंपदार्थशोधनं चेत्यष्टौ ज्ञानसाधनानि ॥

(२२) **अन्तरङ्गबहिरङ्गसाधनानि**—विवेकादीनि पूर्वोक्तसाधनान्यष्टावप्यन्तरङ्गसाधनानि । यज्ञदानतपआदीनि बहिरङ्गसाधनानि ।

अनयोर्मुमुक्षुर्जिज्ञासौत्कट्येऽन्तरङ्गमेव साधनमनुतिष्ठेत् ।

---

(10) अन्तरेण त्विन्द्रियदमेन विषयसान्निध्यवशात् क्षुभितं सन्मनः शीतोष्णादिद्वन्द्वं न विषहेतेत्यत**स्तितिक्षापि दममाकाङ्क्षते**। इति दमः **शमादीनां पञ्चानां सहकारी ।**

(11) श्रीसद्गुरुवेदान्तशास्त्रेषु तीव्रतरश्रद्धाभावे श्रवणादौ श्रवणोपयोगिशमादिसाधने च प्रवृत्तिर्न जायेतेत्यतः **शमादयोऽपि श्रद्धामपेक्षन्ते** ।

(12) अन्तरेण चित्तैकाग्र्यं शमादिसाधनानि न सिद्ध्येरन्नित्यतः **शमादयः समाधानमपेक्षन्ते** ।

(13) विषयेभ्यश्चेत् स्यादनुपरतं चित्तं तदा शमादयो न सिद्ध्येरन्नित्यतः **शमादयः उपरतिमपेक्षन्ते** ।

(14) शीतोष्णक्षुत्पिपासालाभालाभादिविचित्रविषयानुभवजनिततापत्रयासहं चेत् स्याच्चित्तं, मनसः शमः, इन्द्रियाणां दमः, गुरुवेदान्तवाक्ये श्रद्धा, चित्तैकाग्र्यं, प्राप्तोपभोगयोग्यधनादिविषयेभ्य उपरतिश्चेत्यादिसाधनानि न सिद्ध्येरन्नित्यतः **शमादयस्तितिक्षामपेक्षन्ते** ।

इत्थं परस्परसापेक्षत्वात् **शमादिषट्कमपि मिलित्वैकमेव साधनमित्युच्यते** ॥

१. यथा बुभुक्षितस्यानन्यचित्ततया अन्नपानादिसंपिपादयिषा, यथाऽग्निना दग्धस्य तच्छान्त्यर्थं जलाशयान्वेषणं, एवं संसारतापत्रयपरिवेष्टितस्य ततो मुमुक्षायामनन्यचित्ततया तदैकाग्र्यमेव तत्र तीव्रता । 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।' इति न्यायेन मोक्षरूपफले मन्देच्छाभावे निष्कामकर्मानुष्ठाने न कस्यचित्प्रवृत्तिः स्यात् । अतो मन्दमुमुक्षया सकलेतरसाधनेभ्यः प्रथमतो भाव्यम् । तदानीं सा न तीव्रा स्यात् । सिद्धेषु त्वितरसाधनेषु सा तीव्रा भवेत् । **सैव तीव्रेच्छा श्रवणादिप्रवृत्तौ निदानम्** ।

२. यथा हंसेन क्षीरनीरविवेचनं क्रियते, यथा वा दध्नो नवनीतस्य विवेचनं क्रियते एवं चिज्जडयोरुपलभ्यमानकारणकार्यत्वाधिष्ठानारोपितत्व,दृग्दृश्यत्व,साक्षिसाक्ष्यत्वादिस्वरूपस्य शास्त्रानुसारिविचारणमेव **शोधनम्** ।

३. धनुषि लक्ष्यवेधाय सन्धीकृतो वा, धनुषो मुक्तो वा, बाणो यथा तद्वेधनेऽन्तरङ्गसाधनं भवति, एवं ज्ञानोत्पत्तौ विवेकादयोऽष्टावप्यन्तरङ्गसाधनानि, सन्निपत्योपकारकत्वात् ।

४, यथा धनुः लक्ष्यवेधने बहिष्ठमेव सत् बाणसंधानद्वारोपकारकत्वाद्बहिरङ्गसाधनं,

यस्य साधनस्य श्रवणादिकं तत्कार्यभूतमपरोक्षज्ञानं वा दृष्टं फलं, तदन्तरङ्गमित्युच्यते। विवेकादिचतुष्टयं श्रवणे मुख्यसाधनम्; बहिर्विषयाभिमुखस्य विवेकाद्ययोगाच्छ्रवणाद्यसिद्धेः। एवं श्रवणमनननिदिध्यासनान्यपि ब्रह्मसाक्षात्कारे मुख्यसाधनानि, तदभावे तदभावात्। तत्त्वमोः पदार्थज्ञानमप्यखण्डमहावाक्यार्थभेदज्ञाने कारणम्। इत्थं विवेकादिचतुष्टयस्य श्रवणादौ, श्रवणादेश्चापरोक्षज्ञाने, तत्त्वंपदार्थज्ञानस्य महावाक्यार्थज्ञाने च क्रमेण कारणभावापत्तौ **पूर्वोक्तान्यष्टावप्यन्तरङ्गसाधनानीत्युच्यन्ते।** अतस्तानि साधनानि मुमुक्षुणा तीव्रतरश्रद्धया संपादनीयानि॥

यस्य साधनस्य श्रवणं वा ज्ञानं वा दृष्टप्रयोजनं न भवति, किन्तु चित्तशुद्धिमात्रं फलं, तत् ज्ञानस्य बहिरङ्गसाधनम्। एवं **यज्ञादिकर्माणि बहिरङ्गसाधनानीत्युच्यन्ते।** यद्यपि तानि सकामस्यानुष्ठीयमानानि संसारहेतुत्वेन बन्धाय भवन्ति न तु चित्तशुद्धये, तथापि 'यथाक्रतु'श्रुत्या संयोगपृथक्त्वन्यायेन च निष्कामस्य चित्तशुद्धये भवन्ति। तस्मान्निष्कामस्य मुमुक्षोः चित्तशुद्धिद्वारा ज्ञानोत्पत्तिहेतुत्वाद्यज्ञादीनि बहिरङ्गसाधनानीति, विवेकादीनि त्वन्तरङ्गसाधनानीति चोच्यन्ते। बहिरङ्गानि=विप्रकृष्टानि। अन्तरङ्गानि=सन्निकृष्टानि। यज्ञादिनिखिलकर्माणि तत्साधनवित्तदारपुत्रादीनि च निश्शेषं यः सन्न्यस्यति स एव ज्ञाने उत्तमाधिकारी। ज्ञानाधिकारिणि यज्ञादीनामसंभवात्तानि बहिरङ्गानीत्युच्यन्ते॥

(२३) **विवेकादीनामन्तरङ्गसाधनत्वनिरूपणम्**—विवेकादीनां ज्ञानाधिकारिणि संभवात्तान्यन्तरङ्गानीत्युच्यन्ते। अत्रचायं विशेषः—विवेका-

---

एवं नित्यनैमित्तिकयज्ञादीनि श्रौतस्मार्तकर्माणि, सगुणोपासनादीनि च मलविक्षेपादिदोषनिराकरणेन चित्तशुद्धिमैकाग्र्यं चोत्पाद्य जिज्ञासोत्पत्तिद्वारा ज्ञाने आरादुपकारकत्वाद्बहिरङ्गानीत्युच्यन्ते।

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥" (भ. गी. 6. 3.)

इत्यादिवचनैरन्तरङ्गसाधनसिद्ध्यनन्तरमेव बहिरङ्गसाधनानि परित्याज्यानि। अन्यथा विवेकादिसाधनसिद्धेः पूर्वमेव नित्यनैमित्तिकयज्ञादिकर्मपरित्यागे उभयभ्रष्टोऽधः पतेदेव। यथा अन्धकूपे पतितो दुर्बलं तृणाद्यवष्टंभमवलंब्य लंबमानः स्वोद्धरणाय प्रहितदृढतररज्ज्ववलंबनात्पूर्वमेव आक्रान्तावलंबं परित्यजन्नधः पतेत्तद्वत्।

दीनां श्रवणे उपयुक्तत्वात् श्रवणादीनां च ज्ञाने विनियुक्तत्वात् विवेकादीन्यपेक्ष्य श्रवणादीन्यन्तरङ्गसाधनानि। विवेकादीनि तु तदपेक्षया बहिरङ्गानि। यद्यपि सर्वत्र वेदान्तशास्त्रेषु ज्ञानं प्रति विवेकादीन्यन्तरङ्गसाधनत्वेनैवोक्तानि न बहिरङ्गसाधनत्वेन, तथापि विवेकादीनां हि, ज्ञाने अन्तरङ्गसाधनीभूतश्रवणमेव प्रत्यक्षं फलम्। श्रवणादिवद्विवेकादीन्यपि जिज्ञासुना मुमुक्षुणाऽवश्यमादर्तव्यान्येव, न तु यज्ञादिवद्धातव्यानि। तस्मात्कारणात्, यज्ञाद्यपेक्षयाऽन्तरङ्गत्वाच्च तान्यन्तरङ्गसाधनानीत्युच्यन्ते।

**(आ. २४-२६) ज्ञाने मुख्यान्तरङ्गसाधनश्रवणादीनां लक्षणम्–**

**(२४) श्रवणलक्षणम्**—वस्तुतो विचार्यमाणे श्रवणादीन्यपि नान्तरङ्गसाधनानि ज्ञानस्य, किन्तु तत्त्वमस्यादिमहावाक्यान्येव; प्रमाणफलत्वात् ज्ञानस्य। "तं त्वौपनिषदं पुरुषम्" (बृ. 3-9-26) "वेदान्तविज्ञानसुनिश्चितार्थाः" (मु. 3-2-6) इत्यादिश्रुतिभ्यः। **श्रवणं नाम** युक्त्या[1] षड्विधतात्पर्यलिङ्गैर्[2]वेदान्तवाक्यानामद्वितीये प्रत्यगभिन्नब्रह्मणि तात्पर्यनिर्णयानुकूलचेतोवृत्तिविशेषः।

---

१. वेदान्तश्रवणं हि दीर्घकालं नैरन्तर्येणादरेणचानुष्ठेयम्। विवेकादिसाधनचतुष्टयरहितस्य बहिर्मुखस्य निरन्तरायतया श्रवणं न सिद्ध्येत्। श्रवणमन्तरा मनननिदिध्यासने न स्याताम्। अतः श्रवणाद्यङ्गतया विवेकादिचतुष्टयमवश्यं संपाद्य विचारयेत्। लोके शास्त्रज्ञोऽपि विवेकमात्रयुक्तोप्यत्यन्तविषयासक्तः सन् काम्यकर्मसु प्रवर्तते। अतो द्वितीयसाधनेनेहामुत्रफलभोगवैराग्येणाप्यवश्यं भाव्यम्। प्रथमद्वितीयाभ्यां संपन्नोऽपि कश्चित्कोपादिना तप्यत इति तृतीयेनापि शमादिसाधनेन भाव्यम्। सत्स्वपि त्रिषु साधनेषु मुमुक्षाभावे श्रवणादौ न प्रवर्तेतेति चतुर्थ्या अपि मुमुक्षया अवश्यं भाव्यम्। इति।

२. धूमज्ञानेन वह्निज्ञानस्य जायमानत्वाद्यथा धूमो वह्निनिश्चये लिङ्गं, तथाऽद्वैतस्वरूपे प्रत्यगभिन्नब्रह्मणि वेदान्तानां तात्पर्यमिति, उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैर्निर्णीयमानत्वात्तानि तात्पर्यलिङ्गानीत्युच्यन्ते। युक्तिशब्देन चैतानि लिङ्गानि गृह्यन्ते। तानि च लिङ्गानि षड्विधानि—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥" इति वचनात्।

(1) छान्दोग्ये षष्ठप्रपाठके "सदेव सोम्यदमग्र आसीदेकमेवाद्वितीयम्" (छा. 6-2-1) इति प्रकरणोपक्रमे योऽर्थ उक्तः स एवोपसंहारेऽपि "ऐतदात्म्यमिदँ सर्वं तत्सत्यं स आत्मा" (छा. 6-16-3) इत्युपसंहृतः। **इत्युपक्रमोपसंहारैकरूप्यमेकं लिङ्गम्।**

(2) यथा अर्थी पुरुषः स्वाभिलषितमर्थं भिन्नभिन्नवाक्यैः पुनः पुनः प्रकटीकुर्यादेवं भिन्नभिन्नयुक्तिमद्वचनैः प्रत्यग्ब्रह्मैक्यं "तत्वमसि" (छा. 6-8-7) इति नवकृत्वः पुनः पुनरभ्यस्यते। **इत्यभ्यासोऽपि द्वितीयं लिङ्गम्।**

(२५) **मननलक्षणम्**—मननं नाम प्रत्यग्ब्रह्मैक्यसाधक, तद्भेदबाधक-

---

(3) अद्वितीयं प्रत्यगभिन्नं ब्रह्म वेदान्तेतरप्रमाणागम्यमिति स्वप्रकाशत्वेन नित्या-परोक्षमिति चार्थः "श्रद्धत्स्व सोम्य" (छा. 6-12-2) "आचार्यवान् पुरुषो वेद" (छा. 6-14-2) इति गुरुवेदान्तवाक्यश्रद्धामात्रसमधिगम्यत्वबोधकवचनैर्गम्यत इत्यपूर्व-तापि **तृतीयं लिङ्गम्** ।

(4) "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये" (छा. 6-14-2) इत्यनेन कार्यकरणसङ्घाताद्व्यावृत्तो ब्रह्मवित् ब्रह्मैव भवतीत्यद्वैतब्रह्मभावापत्तिरूपफलं प्रतिपाद्यत इति **फलं चतुर्थं लिङ्गम्** ।

(5) "तदैक्षत बहु स्यां प्रजायेय, तत्तेजोऽसृजत" (छा. 6-2-3) इत्यादि-सृष्टिवाक्यैर्भेदनिन्दापूर्वकमभेदः स्तूयत **इत्यर्थवादोऽपि पञ्चमं लिङ्गम्** ।

(6) प्रतिपिपादयिषितस्याद्वैतस्यानुकूलदृष्टान्तप्रदर्शनमु**पपत्तिः** । "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारंभणं विकारोनामधेयं मृत्तिकेत्येव सत्यम्" (छा. 6-1-4) "यथा सोम्यैकेन लोहमणिना........." (छा. 6-1-5) "यथा सोम्यैकेन नखनिकृन्तनेन" (छा. 6-1-6) "एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छा. 6-8-4) इत्यादिवचनैः कारणसद्रूपव्यति-रेकेण कार्यं नास्त्येव, मायामात्रमिदं दृश्यमिति मृल्लोहादिदृष्टान्तमुखेन जगत्सर्वं प्रत्यक्चेतनं ब्रह्मैवेत्युपपत्तिरुच्यत **इत्युपपत्तिरपि षष्ठं लिङ्गम्** ।

एवमुपक्रमोपसंहारादिषड्विधलिङ्गैर्वेदान्तवाक्यानामद्वैते प्रत्यगात्मनि तात्पर्यनिर्णयानु-कूल**चेतोवृत्तिः श्रवणम्** । एवमेव सर्वेषामपि वेदान्तानामद्वैते तात्पर्यावधारणं बोध्यम् । उपक्रमः=प्रकरणारंभः, उपसंहारः=प्रकरणसमाप्तिः ॥

१. **ऐक्यसाधकयुक्तयः**—

(1) **अनुमानप्रमाणम्**—यत् सच्चिदानन्दस्वरूपं, न तत् ब्रह्मणो भिद्यते; यत् सच्चिदानन्दस्वरूपं न भवति, तत् ब्रह्मणो भिद्यते । यथेश्वरः सच्चिदानन्दस्वरूपत्वादेव ब्रह्मणो न भिद्यते, व्यावहारिको घटादिस्त्वनृतजडदुःखात्मकत्वेन सच्चिदानन्दस्वरूपत्वाभा-वाद्ब्रह्मणो भिद्यते । एवं जीवोऽपि ब्रह्मैव, सच्चिदानन्दस्वरूपत्वात् ईश्वरवत् इत्यनुमानम् ।

(2) **उपमानप्रमाणम्**—यथा घटाकाशमठाकाशयोर्घटमठरूपोपाधी विना न स्वतो भेदोऽस्ति, तथा अन्तःकरण(बुद्धि)मायारूपोपाधी अन्तरा जीवब्रह्मणोरपि भेदो नैव सिद्ध्यति ।

(3) **अर्थापत्तिप्रमाणम्**—"नेह नानास्ति किञ्चन" (बृ. 4-4-19); (क. 2-1-11) "न तु तत् द्वितीयमस्ति" (बृ. 4-3-23) "अतोऽन्यदार्तम्" (बृ. 3-7-23) इत्यादिश्रुत्युक्तभेदनिन्दान्यथानुपपत्त्या वस्तुतोऽभेदासिद्धौ श्रुतिवैयर्थ्य-प्रसङ्गादवश्यमैक्यमभ्युपेयम् । यथा देवदत्तशरीरगतपीनत्वबुद्ध्या भोजनाभावबुद्धिर्बाध्यते, एवं भेदधीरपि "नेह नानास्ति" (बृ. 4-4-19); (क. 2-1-11) "नेति नेति" (बृ. 2-3-6) इत्यादिश्रुतिभिर्बाध्यत एव । **इदं च युक्तित्रयमभेदसाधकम्** ।

२. **भेदबाधकयुक्तयः**—

(1) **अनुमानप्रमाणम्**—प्रत्यक्परचितोर्भेदो मिथ्या, उपाध्यधीनत्वात् घटा-

युक्तिभिः सदाऽद्वितीयब्रह्मात्मैक्यानुसन्धानम् ।

(२६) **निदिध्यासनलक्षणम्**—भेदप्रत्यया (अनात्मप्रत्यया) नन्तरितब्रह्माकारप्रत्ययप्रवाह एव [1]निदिध्यासनमुच्यते । निदिध्यासनपरिपाकावस्थैव समाधिरिति, निदिध्यासनेऽन्तर्भावान्न [2]समाधिः पृथक्साधनत्वेन गण्यते ।

(२७) **श्रवणादिप्रयोजननिरूपणम्**—श्रवणादीनि यद्यपि न साक्षाज्ज्ञानसाधनानि, अप्रमाणत्वात्; तथापि तानि ज्ञानप्रतिबन्धकीभूतबुद्धिदोषासंभावनाविपरीतभावनादीन् नाशयन्ति । असंभावना=संशयः[3] । विपरीतभावना=विपर्ययः[4] ।

---

काशमठाकाशयोः भेदवत् । यन्नैवं तन्नैवं (यदौपाधिकं न भवति तन्मिथ्या न भवति), यथा व्यावहारिकघटपटादिभेदः औपाधिकत्वाभावादेव सत्यः (न मिथ्या) तद्वत् । अत एव यत्र यत्रोपाधिनिबन्धनो भेदस्तत्र तत्र मिथ्यैव सः ।

(2) **उपमानप्रमाणम्**—यथा बिम्बप्रतिबिम्बयोर्भेदो मिथ्या तथा जीवब्रह्मणोरपि ।

(3) **अर्थापत्तिप्रमाणम्**—महावाक्यैरुपनिषत्सु जीवब्रह्मणोरभेद एव निश्चितः । यदि प्रतीयमानोऽपि भेदो वस्तुतो न मिथ्यास्यात्तर्हि महावाक्यैरभेदो न प्रतिपाद्येत, प्रतिपाद्यते तु । तस्मादर्थापत्तिप्रमाणादपि जीवब्रह्मणोः भेदो मिथ्यैव ।

(4) **अनुपलब्धिप्रमाणमपि** — जाग्रत्स्वप्नयोरुपाधेः सत्वाज्जीवब्रह्मणोर्भेदः प्रतीयते । सुषुप्तौ तदभावाद्भेदो नैवोपलभ्यत इत्यतो जीवब्रह्मणोर्भेदः परमार्थतो नैवेति निश्चीयते । इत्यनुपलब्धिप्रमाणम् । **एवमेता भेदखण्डनयुक्तयः** ।

१. अयमेव भेदः साक्षात्कारनिदिध्यासनयोः—स्वयमेव नम्रीभूतवृक्षशाखावद्विनैव स्वप्रयत्नं "अहं ब्रह्मास्मि" इति वेदान्तजन्या अनात्माकारवृत्तिरूपान्तरायरहिता ब्रह्माकारवृत्तिः **साक्षात्कार** उच्यते । **निदिध्यासनं तु** स्वप्रयत्नादानमितवृक्षशाखावत्स्वप्रयत्नमात्रसाध्या ब्रह्माकारवृत्तिः । प्रयत्नोपरमे तु शाखाया उन्नमनवत्, निदिध्यासननिवृत्तौ निवर्ततैव ब्रह्माकारवृत्तिरपि । इति ।

२. अत्र समाधिशब्देन त्रिपुटीभानरहितनिर्विकल्पकसमाधिरभिधीयते । निदिध्यासनशब्देन ध्यातृध्यानध्येयात्मकत्रिपुटीयुक्तसविकल्पसमाधिरुच्यते । तथा चोक्तं पञ्चदश्याम् ।

"ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत् ।
एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥ (तत्त्व. 54)
ध्यातृध्याने परित्यज्य क्रमात् ध्येयैकगोचरम् ।
निवातदीपवच्चित्तं समाधिरभिधीयते ॥" (तत्त्व. 55) इति ।

३. इयं रज्जुर्वा सर्पो वेति कोटिद्वयविषयकं ज्ञानं **संशयः** ।

४. रज्जौ 'अयं सर्पः' इत्यविद्यावृत्तिर्विपर्ययः । अयमेव भ्रान्तिज्ञानं, विपरीतभावना, विपरीतज्ञानं, ज्ञानाध्यास इति चोच्यते । प्रकृते मिथ्याभूतेषु देहादिष्वनात्मसु सत्यत्वबुद्धिः आत्मत्वबुद्धिश्च **विपर्ययः** ।

**श्रवणस्योपयोगः**—वेदान्तवाक्यं किमद्वितीयं ब्रह्म बोधयति, उत यत्किञ्चिदर्थान्तरमिति प्रमाणगतसंदेहः[1] श्रवणेन निवर्त्यते।

**मननस्योपयोगः**—जीवब्रह्मणोरभेदः सत्यः उत भेद इति प्रमेय-[2] गतसन्देहः। स चानेकप्रकारोऽपि मननेन निवार्यते।

**निदिध्यासनस्योपयोगः**—'देहादिदृश्यप्रपञ्चः सर्वोऽपि सत्यः, जीवब्रह्मणोर्भेदश्च सत्यः' इति धीर्विपरीतभावना। सा च [3]**निदिध्यासनेन** निवार्यते। एवं श्रवणादित्रयं ज्ञानप्रतिबन्धकीभूतासंभावनाविपरीतभावनानि-वृत्तिद्वारा परम्परया अपरोक्षज्ञानसाधनं भवति। न तु साक्षात्।

(२८) **अपरोक्षज्ञानसाक्षात्साधनम्**—ज्ञानस्य साक्षात्साधनं[4] तु श्रोत्रेन्द्रियसंबद्धवेदान्तवाक्यमेव। तच्च द्विप्रकारम्। अवान्तरवाक्यं महा-वाक्यं चेति। जीवात्मपरमात्मस्वरूपप्रतिपादकवाक्यम**वान्तरवाक्यम्**। तदैक्यप्रतिपादकवाक्यं **महावाक्यमिति** चोच्यते। अवान्तरवाक्येन परोक्षमेव ज्ञानं जायते। महावाक्येन त्वपरोक्षमेव। 'अस्ति ब्रह्म' इति ज्ञानं **परोक्षम्**। 'अहमेव ब्रह्म' इति **ज्ञानमपरोक्षम्**। "त्वमेव ब्रह्मासि" इति गुरूपदिष्टमहावक्यश्रवणानन्तरं श्रोतुः शिष्यस्य पुष्कलसाधनसंपन्नस्य "अहं ब्रह्मास्मि" इत्यपरोक्षमेव ज्ञानं जायते। श्रोत्रेणासंबद्धं वाक्यं नैव ज्ञानं जनयेत्। अतः **श्रोत्रेन्द्रियसंबद्धमहावाक्यमेवापरोक्षज्ञानहेतुः**। **महावाक्येन** सर्वेषां ज्ञानमपरोक्षमेव जायते, न तु परोक्षमिति नियमः।

(आ० २९-३१)—**महावाक्यमपरोक्षज्ञानहेतुरित्यत्राक्षेपसमाधानानि**—

---

१. प्रमाणम् = उपनिषद्वाक्यानि, शब्दप्रमाणम्।

२. प्रमेयः = मोक्षादिज्ञेयविषयः।

३. एवं संशयद्वये निवृत्तेऽपि साक्षात्कारात्पूर्वमविद्यायाः सत्वात् "अहं ब्रह्म न भवामि, जीव एवाहं; मत्तो भिन्नमेव ब्रह्म; देहादिजगत् सत्यम्;" इत्येवंविधानेक-संशयाः [विपर्ययाः] पुनःपुनर्जायेरन्। तन्निवृत्तये सदा निदिध्यासितव्यमेव।

४. नेत्राञ्जनं नेत्ररोगनिवृत्तिद्वारा सूर्यविलोकने उपकरोति नेत्रस्य। नेत्रमेव तु सूर्यं साक्षाद्यथा पश्यति, तथा श्रवणादीन्यपि ज्ञानप्रतिबन्धकीभूतसंशयविपर्ययरूप(दोष)-रोगनिवृत्तिद्वारा ब्रह्मज्ञानसाधनानि भवन्ति। साक्षाज्ज्ञानसाधनं तु श्रोत्रसंबद्धमहा-वाक्यमेव।

(२९) अत्र [१]केचिदाक्षिपन्ति—(1) श्रवणादीनि महावाक्यानि च समुच्चित्यैवापरोक्षज्ञानं जनयन्ति। केवलानि तु वाक्यानि परोक्षमेव ज्ञानं जनयेयुः, नापरोक्षम्। (2) केवलवाक्यान्येव यद्यपरोक्षज्ञानं जनयेयुस्तर्हि व्यर्थानि स्युः श्रवणमनननिदिध्यासनानीति।

न च केवलमहावाक्यादपरोक्षमेव ज्ञानं जायते, श्रवणादीनां त्वसंभावनाविपरीतभावनानिवृत्तावुपयुक्तत्वान्नव्यर्थतेति वाच्यम्। अपरोक्षज्ञान-विषये वस्तुनि कस्याप्यसंभावनाविपरीतभावनानुदयात्, केवलादपि महा-वाक्यादपरोक्षमेव ज्ञानं जायत इति वदतां मते, तत्त्वमस्यादिमहावाक्यैर्ब्रह्मा-परोक्षज्ञानोत्पत्त्यनन्तरमसंभावनाविपरीतभावनानुत्पत्तेः श्रवणादिसाधनानां व्यर्थतैव स्यात्। अस्मन्मते तु (पूर्वपक्षिमते) केवलवाक्येन परोक्षमेव ज्ञानं प्रथमं जायते। श्रवणादिसहकृतेन वाक्येन तु पश्चादपरोक्षमित्यङ्गीकारान्न श्रवणादिवैयर्थ्यम्। इत्यनेकग्रन्थकृत्तात्पर्यमिति।

(३०) **प्रथमाक्षेपस्य समाधानम्**—यदुक्तं शब्दसामान्यं परोक्षमेव ज्ञानं जनयेदिति, नैतत्साधु। यतोऽयमेव स्वभावः शब्दस्य यत् परोक्षापरोक्ष-रूपद्विविधज्ञानजनकत्वमिति। देश[३]कालपरिच्छिन्नं (आवृतं) वस्तु व्यवहितमि-त्युच्यते। तदनच्छिन्नं (तदनावृतं) अव्यवहितमिति च। व्यवहितविषयकं शाब्दं ज्ञानं परोक्षमेव, न कदाचित् कथञ्चिदप्यपरोक्षं भवति; स्वर्गेन्द्रदेवतादीनां व्यवहितानां ज्ञानस्य शास्त्ररूपशब्दप्रमाणेन जायमानस्य नित्यं परोक्षत्वात्। अव्यवहितवस्तुविषयकं शाब्दं ज्ञानं परोक्षमपरोक्षं च भवति। यदा अव्यवहितवस्तुविषयकं ज्ञानं 'अस्ति' इति शब्देन जायते तदा अव्यवहितस्यापि वस्तुनो ज्ञानं परोक्षमेव भवति। यथा "दशमोऽस्ति" इत्यत्र "अस्ति" शब्देन जायमानमव्यवहितस्यापि दशमपुरुषस्य ज्ञानं परोक्षमेव भवति। यदा अव्यवहितवस्तुविषयकं ज्ञानं "इदमस्ति" इत्यादि-शब्दप्रमाणेन जायते तदा तज्ज्ञानमपरोक्षमेव भवति, न परोक्षम्। यथा

---

१. पञ्चदशप्रकरणादिकृद्विद्यारण्यप्रभृतयः। — Is this correct?

२. इदं शारीरकमीमांसायास्तात्पर्यम्।

३. दूरदेशे स्थितं वस्तु देशतो व्यवहितम्। भूतभविष्यद्वस्तु कालतो व्यवहित-मित्युच्यते।

"दशमस्त्वमसि" इत्यत्र "त्वमसि" शब्देन जायमानं दशमपुरुषज्ञानमपरोक्षमेव भवति। एवमेव प्रकृतस्य ब्रह्मणः सर्वप्राणिप्रत्यगात्मभूतत्वादत्यन्ताव्यवहितस्य नित्यापरोक्षरूपस्यापि ज्ञानं, 'तदस्ति' इत्यवान्तरवाक्येन परोक्षमेव जायते। महावाक्यं तु 'दशमस्त्वमसि' इतिवत् श्रोतुरात्मत्वेनापरोक्षतया ब्रह्म बोधयति। अत एव महावाक्येनाव्यवहितप्रत्यग्ब्रह्मापरोक्षज्ञानमेव जायते, न तु परोक्षमिति।

(३१) **द्वितीयाक्षेपस्य समाधानम्**—यदुक्तं महावाक्येनापरोक्षज्ञानोत्पत्त्यङ्गीकारेऽपरोक्षज्ञानोत्पत्त्यधिकरणेऽसंभावनाद्यनुत्पत्तेः श्रवणादीनां वैयर्थ्यं स्यादिति, तदसत्। कश्चन राजा स्वैामात्यं भर्च्छुनामकं चक्षुषा पश्यन्नपि विपरीतभावनया यथा न विवेद तं, तथा महावाक्येन ब्रह्मापरोक्षज्ञानोत्पत्तावपि यस्यान्तःकरणे असंभावनादिदोषाः प्रतिबन्धका वर्तन्ते तस्य सकलङ्कं ज्ञानं नैव फलाय कल्पते। अतः प्रतिबन्धकीभूतदोषनिवृत्त्यर्थं तेन श्रवणादिकमवश्यमावर्तनीयम्। यस्य तु पुनर्बुद्धौ महाभाग्यवशात् रागद्वेषादिकारणीभूतासंभावनादिदोषा नैव विद्यन्ते तस्य श्रवणादिवैयर्थ्यमिष्टमेव। एवञ्च ज्ञानस्य साक्षात्कारणं महावाक्यमेव, न श्रवणादि। श्रवणादि तु ज्ञानप्रतिबन्धकीभूतासंभावनादिदोषापनयनमात्रं कुर्यात्। तावन्मात्रेण श्रवणाद्यपि ज्ञानसाधनमिति गौण्या वृत्त्योच्यते। तथा विवेकादिचतुष्टयमपि श्रवणाद्युपकारकतया ज्ञानसाधनमित्येवोच्यते। तथा च विवेकादिसाधनचतुष्टयसंपन्न एवाधिकारीति सिद्धम्।

१. **दशमपुरुषकथा**—दश पथिकाः देशान्तरगमनसमये मध्येमार्गं काञ्चिन्नदीं गभीरां प्राप्य एकैकशस्तीर्त्वा परं पारमासाद्य सर्वे वयमुत्तीर्णा न वेति सन्दिहानास्तत्प्रत्ययार्थं प्रत्येकं स्वात्मानं विहाय गणयन्तः 'नवैव वयं स्मः एको नद्यां ममार' इति रुरुदुः। तदा कश्चन पान्थः तेषां परिदेवनं श्रुत्वा, बुद्ध्वा च दुःखनिदानं, कृपया प्रथमतो 'दशमोऽस्ति' इत्यवोचत्। तदा तेषां परोक्षमेव ज्ञानं दशमविषयमभूत्। तेष्वेकः 'कुत्रास्ते दशमः' इत्यपृच्छत्। सोऽब्रवीत् "स दशमः त्वमसि" इति। तदैव तस्य स्वविषयकदशमत्वज्ञानमपरोक्षमेवाजायत। तथा चापरोक्ष्ये सत्यपि दशमस्य, करणे च चक्षुषि सति, 'दशमस्त्वमसि' इति परोपदेशमन्तरा स्वविषयकं ज्ञानं परोक्षकल्पमेवासीत्। यथैवात्र 'त्वमेवासि दशमः' इत्याप्तोपदिष्टवाक्यमपरोक्षज्ञाने साक्षात्स्वयं करणं, एवमेव प्रत्यग्ब्रह्मापरोक्षज्ञानेऽपि गुरूपदिष्टमहावाक्यमपि साक्षादेव करणं भवति। तस्य च संशयादिदोषप्रतिबन्धकशून्यशुद्धान्तःकरणं सहकारिसाधनम्। (चतुर्थतरङ्गे अस्य विस्तरः)

२. इयं कथा पञ्चमतरङ्गे विव्रियते।

३. अयं पुरुषो वेदान्तग्रन्थे, तद्विचारद्वारा आत्मज्ञाने, आत्मज्ञानद्वारा मोक्षे चाधिक्रियते।

(३२) **विषयनिरूपणम्**—अयं च ग्रन्थः जीवब्रह्मैक्यं प्रतिपादयति। अतः प्रत्यक्परचितोरैक्यमेवास्य ग्रन्थस्य विषयः। सर्वे वेदास्तमेवार्थं प्रतिपादयन्ति। इतोऽन्यथा द्वैतवादिनो वेदविरुद्धार्थवादित्वाद्वेदबाह्याः शठाः=गूढविप्रियकारिणः=प्रत्यक्षं स्तुतिकर्तारः परोक्षे चातिदूषकाः॥

(आ. ३३-३८) **प्रयोजननिरूपणम्।**

(३३) **प्रयोजनलक्षणम्**—सर्वप्रपञ्चकारणीभूताज्ञानं तत्कार्यदृश्यजातं सर्वं द्वैतं च जननमरणप्रबन्धरूपाखिलदुःखनिदानत्वान्महानर्थ इति श्रुतिस्मृतिपुराणेतिहासानुभवादिसकलप्रमाणसिद्धम्। ईदृशानर्थनिवृत्तिः परमानन्दावाप्तिश्च **मोक्ष** इत्युच्यते। अयमेव मोक्षोऽस्य ग्रन्थस्य परमप्रयोजनम्। ज्ञानं त्ववान्तरप्रयोजनम्। पुरुषस्य यद्विषये उत्कटेच्छा जायते तदेव तस्य **परमं प्रयोजनं** पुरुषार्थ इति चोच्यते। सकलजनानां च दुःखनिवृत्तौ सुखावाप्तौ चेदृशीच्छा संजायते। पूर्वोक्तानर्थद्वैताभावोपलक्षितपरमानन्दचिदेव **मोक्षस्वरूपम्।** अत एव मोक्षः परमप्रयोजनं, न ज्ञानम्। दुःखनिवृत्तावानन्दावाप्तौ च ज्ञानस्य हेतुत्वात्, तस्य दुःखनिवृत्यानन्दरूपत्वाभावाच्च ज्ञानमवान्तरप्रयोजनम्। परमप्रयोजनावाप्तौ यत् द्वारीभवति **तदवान्तरप्रयोजनम्।** यथा कदलीफलप्राप्तौ तत्पत्रपुष्पादि। एतादृशवेदान्तग्रन्थजनितज्ञानद्वारा मुक्तिरूपपरमप्रयोजनफलप्राप्तौ ज्ञानमवान्तरप्रयोजनं भवति।

(३४) अत्र **प्रथमाक्षेपः**—यदुक्तमनर्थनिवृत्तिः परमानन्दावाप्तिश्च ग्रन्थस्य परमप्रयोजनमिति, तन्न सङ्गच्छते। यतः सर्वेष्वपि वेदान्तेषु जीवस्य[1] परमानन्दरूपत्वं[2] वर्णितम्। भवद्भिरपि तथैवाङ्गीकृतम्। लोके त्वप्राप्तस्यैव प्राप्तिर्युज्यते। न तु सदा प्राप्तस्यैव प्राप्तिः कदाचिदपि सङ्गच्छते। तस्मात्सदा परमानन्दस्वरूपस्यैव सत आत्मनः पुनः परमानन्दप्राप्तिकथनं सर्वथाप्यसंभावितमेवेति।

(३५) **तत्समाधिः**—एतादृशपूर्वपक्ष्याक्षेपश्रवणमात्रेणाद्वैतग्रन्थोक्त-प्रयोजनेऽनादरो न कार्यः। वेदान्तज्ञानोपदेष्टृसद्गुरुकृपालेशपात्रीभूतानामीदृशाशेषसन्देहतूलनिरासस्य दृष्टान्तप्रचण्डवातबलेन सुकरत्वात्। तथा हि, कश्चन पुरुषः भ्रान्त्या स्वकरस्थकङ्कणं नष्टं मत्वा अन्वेषमाण इतस्ततो भ्रमन्,

१. जीवशब्देन जीवशब्दलक्ष्यार्थः कूटस्थो बोध्यः।

२. "विज्ञानमानन्दं ब्रह्म" (बृ. 3-9-27) इत्याद्यनन्तश्रुतयः। अस्यार्थस्तु—विज्ञानं जीवचैतन्यं, आनन्दं ब्रह्मैव न ततोऽतिरिच्यते इति।

अन्येन केनचिदाप्तेन प्रबोधितः सन्, प्राप्तमेव करस्थं कङ्कणमपूर्वतया प्राप्तमिति मन्यमानः 'मम कङ्कणमिदानीमुपलब्धम्' इति यथा वदति; तथैव परमानन्दस्वरूपे स्वात्मनि नित्यापरोक्षतया सदा प्राप्तेप्यविद्यावशादप्राप्तत्वभ्रान्त्या 'नाहं परमानन्दस्वरूपः, किन्तु ब्रह्मैव तथा; ततो विलक्षणस्य मम तदुपासनया तादृशब्रह्मप्राप्तिः संपाद्या' इति मूढो भ्रान्त्या प्रतिपद्यते। एवंवित् पण्डितोऽपि मूढतम एव। "अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" (बृ. 1-4-10) "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" (के. 1-4-8) "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा" इत्यादिश्रुतिस्मृतिशतेभ्यो जीवब्रह्मभेदवादिनां मूर्खत्वाङ्गीकारात्। इत्थंभूतानामपि मूर्खाणामनन्तजन्मार्जितपुण्यपुञ्जवशात्संस्कृतचित्तानां, प्रशान्तचित्तात् ब्रह्मविद्वरिष्ठात् सद्गुरोर्यदि कदाचिद्वेदान्तश्रवणं लभ्येत, तदा "परमानन्दो वेदान्तवाक्यैः सद्गुरुकृपाकटाक्षलेशेन चास्माभिः प्राप्त" इति मतिर्जायेत। अयं भावः—आत्मनः परमानन्दस्वरूपत्वेऽपि स्वप्रकाशापरोक्षस्वरूपत्वेऽपि स्वाविद्यावृतत्वादप्राप्तवत्तेषां स्वस्वरूपं पूर्वमभात्। यदा तु श्रीमदाचार्यमुखाद्वेदान्तश्रवणेन स्वस्वरूपभूत एव परमानन्दो बुद्धाववभासते तदैव स अपूर्वतया प्राप्तवद्व्यवह्रियते। **एवमेव प्राप्तस्यापि पुनः प्राप्तिकथनमुपपद्यते।** तस्मात्परमानन्दप्राप्तिरेवास्य ग्रन्थस्य परमप्रयोजनमिति युक्तमेवोक्तम्।

(३६) प्राप्तप्राप्तिरूपप्रयोजनं निरूप्येदानीं **नित्यनिवृत्तनिवृत्तिरूपप्रयोजनमपि युक्तमेवोक्तमित्युच्यते।** रज्जौ सर्पस्य नित्यनिवृत्तस्यापि कदाचिद्भ्रमादवभासे सति, 'रज्जुरेवेयम्' इत्यधिष्ठानसाक्षात्कारमात्रेण स निवर्तते यथा, तथा स्वात्मनि भ्रमात् प्रतीयमानोऽपि संसारः, नित्यनिवृत्त एव स्वस्वरूपापरोक्षसाक्षात्कारेण निश्शेषं निवर्तते। तस्मान्नित्यनिवृत्तस्यापि

---

१. व्यावहारिकदशायां प्रातिभासिकदशायाञ्चावभासमानस्यापि प्रपञ्चस्य "नेति नेति" (बृ. 2-3-6) "अतोऽन्यदार्तम्" (बृ. 3-7-23) "न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तम्" (बृ. 4-3-23) "नेह नानास्ति किञ्चन" (बृ. 4-4-19) इत्यादिश्रुतिभिः युक्तिभिः स्वानुभवैश्च परमार्थतोऽविद्यमानत्वमेव। कालत्रयनिषेध एव नित्यनिवृत्तिरित्युच्यते। पूर्वोक्तप्रमाणैः कालत्रयेऽपि प्रपञ्चो नास्त्येवेति प्रपञ्चयाथात्म्यनिश्चय एव नित्यनिवृत्तस्य तस्य निवृत्तिर्ज्ञेया।

निवृत्तिः, नित्यप्राप्तस्यापि प्राप्तिश्च वेदान्तग्रन्थस्य परमप्रयोजनं सुतरामुपपन्नमेव ।

(३७) **द्वितीयाक्षेपः**—ननु सविलासाज्ञाननिवृत्तिः परमानन्दावाप्तिश्च ग्रन्थस्य प्रयोजनमित्युक्तं न सङ्गच्छते । यतो निवृत्तिर्नाम निश्शेषनाश एव; नाशस्तु प्रध्वंसाभाव एव । अतोऽनर्थनिवृत्तिरूपाभावस्य परमानन्दप्राप्तिरूपभावस्य चैकत्र मुक्तिस्वरूपे सामानाधिकरण्यं न घटेत, भावाभावयोरन्योन्यविरोधात्, विरुद्धयोर्धर्मयोरेकत्र युगपत्समावेशायोगाच्च । तस्मादुक्तप्रयोजनं ग्रन्थस्य न संभवतीति चेत्—

(३८) **तत्समाधिः**—नैष दोषः । सविलासाविद्यानिवृत्तेरधिष्ठानब्रह्मचैतन्यमात्रत्वान्न ततोऽतिरिच्यते सा । यथा आरोपितसर्पनिवृत्तिरधिष्ठानरज्जुमात्रं, एवं कल्पितनामरूपात्मकसकलवस्तुनिवृत्तिरपि तदधिष्ठानचिन्मात्रमेव, न ततोऽतिरिक्तेति सिद्धम् । आरोपितप्रतियोगिकप्रध्वंसस्य प्रतियोग्यधिष्ठाने भासमानस्याधिष्ठानमात्रत्वनियमात् । तदुक्तं वार्तिके "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः" इति । अयमेव भगवत्पादादीनामाशयः आकरादिषु स्फुटतरः । अत एव प्रकृतेप्यनर्थनिवृत्तिर्ब्रह्ममात्रमित्युक्तदोषानवकाशः । सर्वानर्थदृश्यकल्पनाधिष्ठानत्वाद्ब्रह्मणः । तच्च ब्रह्म सिद्धवस्तुस्वरूपत्वाद्भावरूपम् । तस्मादनर्थनिवृत्तेर्भावरूपत्वादेव तस्या अस्मिन् ग्रन्थे प्रयोजनत्वकथनं युक्तमेवेति ॥

---

१. "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" (छा. 8-3-2) इत्यादिश्रुत्युक्तरीत्या गृहेऽन्तर्निहितो हिरण्यनिक्षेपो विद्यमानोऽपि यावदविद्यमविद्यमानवदविद्ययाऽप्राप्तवद्भवति । अञ्जनाद्युपायैर्ज्ञातश्चेत् प्राप्तवद्भवति । इयमेव नित्यप्राप्तस्य प्राप्तिरित्युच्यते । यथाऽयं दृष्टान्तः, एवमेव "अयमात्मा ब्रह्म" (बृ. 2-5-19) "प्रज्ञानं ब्रह्म" (ऐ. 3-1) "सर्वं खल्विदं ब्रह्म" (छा. 3-14-1) "आत्मैवेदं सर्वम्" (छा. 7-25.2.) "ब्रह्मैवेदं सर्वम्" (बृ. 2-5-1.) इत्यादिश्रुतिभिः सर्वस्य ब्रह्मत्वोपदेशेन परमानन्दस्वरूपस्य स्वस्य ब्रह्मत्वात् नित्यप्राप्तत्वेप्यविद्ययाऽप्राप्तत्वभ्रमः । 'अखण्डपरमानन्दचिद्रूपब्रह्मैवाहम्' इति श्रुतियुक्त्यनुभवैर्जायमानस्वस्वरूपसाक्षात्कार एव नित्यप्राप्तस्य प्राप्तिरिति ।

२. रज्ज्वां प्रतीयमानसर्पस्य रज्जुरधिष्ठानत्वेन कथ्यते । मन्दान्धकारे प्रतिभासमानसर्पभ्रमाधिष्ठानस्य प्रकाशसंबन्धे सति 'रज्जुरेवेयम्' इति निश्चये जाते तत्क्षणादेव सर्पो निवर्तते । तस्मात्सर्पनिवृत्तितदधिष्ठानरज्जुसाक्षात्कारयोश्चैकक्षणावच्छेदेन जायमानत्वात् सर्पनिवृत्तिरधिष्ठानरज्जुमात्रं भवति ।

(३९) **संबन्धनिरूपणम्**—(1) ग्रन्थस्य विषयस्य (प्रमेयस्य) च प्रतिपाद्यप्रतिपादकभावः संबन्धः। ग्रन्थः प्रतिपादकः, विषयः (जीवब्रह्मैक्यं) प्रतिपाद्यः। यत्, विषयं विविच्य बोधयति, तत् प्रतिपादकम्, यत् बोध्यते तत्प्रतिपाद्यम्। (2) अधिकारिफलयोः प्राप्यप्रापकभावरूपः संबन्धः। फलं प्राप्यं, अधिकारी प्रापकः। यद्वस्तु लभ्यते तत् प्राप्यं, यो लब्धा स प्रापकः। (3) अधिकारिविचारयोस्तु कर्तृकर्तव्यभावरूपः संबन्धः। अधिकारी कर्ता, कर्तव्यो विचारः। यः करोति स कर्ता, यत् क्रियते तत्कर्तव्यम्। (4) ग्रन्थ-ज्ञानयोः जन्यजनकभावः संबन्धः। विचारद्वारा ज्ञानं प्रति ग्रन्थो जनकः ज्ञानं जन्यम्। यदुत्पादयति तज्जनकं, यदुत्पद्यते तज्जन्यम्। एवमेव संबन्धान्तरमपि बोध्यम्।

यस्तु साधनसंपन्नो जिज्ञासुः प्रथमं पठेत्।
इमं तरङ्गं सततं मुक्तोऽसौ नात्र संशयः॥

इति श्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचिते विचारसागरे अनुबन्धसामान्यनिरूपणं नाम प्रथमस्तरङ्गः।

---

१. संबन्धरूपानुबन्धकथने प्रयोजनम्—यस्य वस्तुनो येन सह संबन्धो भवति तस्य तद्विषयेष्युपयोगोऽस्ति। यथा कुलालादीनां घटादिना सह संबन्धोऽस्ति, अतः कुलालादयो घटाद्युत्पत्तिविषये उपयुज्यन्ते। यस्य येन संबन्धो नास्ति न तस्य तद्विषये उपयोगोऽस्ति। यथा चक्षुषो वाय्वाकाशाभ्यां संबन्धाभावात् तद्विषयीकरणे नोपयोगः। एवं ग्रन्थब्रह्मणोः संबन्धाभावे ग्रन्थस्य न ब्रह्म विषयो भवेत्। ग्रन्थोऽपि न ब्रह्मप्रतिपादकः स्यात्। तस्मात् परस्परोपकारसिद्ध्यर्थमनयोः संबन्धः अतद्व्यावृत्त्या बोध्यबोधकभावरूपः कल्प्यते। इति।

२. संबन्धान्तरशब्देन श्रवणादेर्ज्ञानेन सह, ज्ञानस्य च मोक्षेन सह साध्यसाधन-भावरूपः संबन्धो विज्ञेयः।

संस्कृतविचारसागरे अनुबन्धानां [1]विशेषतो निरूपणं नाम

## द्वितीयस्तरङ्गः

पूर्वतरङ्गे अनुबन्धजातं संक्षेपत उक्तम्। अस्मिंस्तु द्वितीयतरङ्गे तद्विस्तरतः प्रतिपाद्यते।

(आ. ४०-४३) **अधिकारिविषयकाक्षेपाः**—

(४०) **दुःखनिवृत्त्याक्षेपः**—साधनचतुष्टयसंपन्नोऽधिकारीति पूर्वं प्रत्यपादि। तेषु साधनेषु 'मुमुक्षुता' नामैका। सा च साधनेषूत्तमा। मुमुक्षुता नाम तीव्रतरमोक्षेच्छा। मोक्षश्च सो[2]पादानकारणजगन्निवृत्त्युपलक्षितब्रह्मावाप्तिरित्युच्यते। अत्र मोक्षलक्षणघटकविशेषणरूपप्रथमांशे सोपादानकारणजगन्निवृत्तौ पूर्वपक्षी शङ्कते—मूलाविद्यया सह जगन्नाशं न कोऽपि [3]वाञ्छति। किन्तु विवेकी तापत्रयनिवृत्तिमात्रं वाञ्छति। तापत्रयञ्च (1) आध्यात्मिकम् (2) आधिभौतिकम् (3) आधिदैविकञ्चेति। तत्र शरीरे ज्वरादिरोगक्षुत्पिपासादिजन्यं दुःखम[4]ाध्यात्मिकम्, चोरव्याघ्रसर्पादिजन्यं दुःखम[5]ाधिभौतिकम्, यक्षराक्षसप्रेतपिशाचग्रहादिजन्यं शीतवातातपादिजन्यं च दुःखम[6]ाधिदैविकम्। एतत्त्रिविधदुःखनिवृत्तिरेव सर्वैः प्रार्थ्यते। न दुःखादन्यस्य कस्यचिदपि निवृत्तिर्विवेकिभिः प्रार्थ्यते। तस्मान्मूलाविद्या-

---

१. कश्चित्किल गृही गृहप्रासादादिसमारम्भसमये परिसरवर्तिनाऽन्येन गृहस्थेन प्रतिरुद्धो न्यायाधिपतिद्वारा स्वस्वाम्य संसाध्य यथा गृहारम्भे प्रवर्तते, तद्वदेवायं ग्रन्थकर्ताऽपि प्रथमतरङ्गे सामान्यतोऽनुबन्धचतुष्टयं निरूप्य ग्रन्थमारभमाणः पूर्वपक्ष्याक्षेपेण प्रतिबद्धः, श्रुतियुक्त्यनुभवादिप्रमाणावलम्बेन स्वपक्षं संसाधयन्निमं ग्रन्थमारभते।

२. उपादानकारणं=मूलाविद्या।

३. "न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते," "न हि यूकाः सन्तीति वस्त्राणि न परिधीयन्ते," "न हि मृगाः शलभाश्च सन्तीति शालयो नोप्यन्ते"; इति यथा, तथा विवेकी तापत्रयभयाच्च जगतो नाशमिच्छति। किन्तु तापत्रयनिवृत्तिमात्रमिच्छति, इतीयं साङ्ख्यमतानुयायिनां शङ्का।

४. आत्मानमधिकृत्य वर्तमानं स्थूलसूक्ष्मशरीरमध्यात्मं। ततो जायमानं दुःखादिकमाध्यात्मिकम्।

५ स्वशरीरादिसङ्घातव्यतिरिक्तं सत् यत् चक्षुरिन्द्रियगोचरं तदधिभूतं। ततो जायमानं दुःखादिकमाधिभौतिकम्।

६. स्वशरीरादिसङ्घातव्यतिरिक्तं सत् यत् चक्षुरिन्द्रियागोचरं तदधिदैवं। ततो जायमानं दुःखादिकमाधिदैविकम्।

सहितजगन्निवृत्तौ न कस्यापीच्छा जायते । इति ।

(४१) न च सर्वेषां निःशेषसकलदुःखनिबर्हणेच्छा विद्यते, समूलाज्ञानजगन्निवृत्तिमन्तरा न निश्शेषदुःखोच्छेदः सम्भवति, इत्यतो निश्शेषदुःखनिवृत्त्यन्यथानुपपत्त्या समूलाज्ञानजगन्निवृत्तिरर्थादाक्षिप्यत इति वाच्यम् । आर्तानां धन्वन्तर्यादिकृतायुर्वेदोक्तभैषज्यसेवनात् ज्वरादिरोगहेतुकदुःखक्षयदर्शनात् । भोजनेन क्षुज्जन्यदुःखनिवृत्तेः सर्वानुभवसिद्धत्वाच्च । इत्थमेव तत्तत्प्रतीकारेण तत्तद्दुःखनिवृत्तिसंभवे समूलाज्ञानजगन्निवृत्तिमन्तरेणापि दुःखनिवृत्तेः संभावितत्वात्, नापेक्ष्यते दुःखनिवृत्त्यर्थं समूलाज्ञानजगन्निवृत्तिः । तस्मान्मोक्षलक्षणघटकसमूलाज्ञानजगन्निवृत्तिरूपे विशेषणांशे न कस्यापीच्छा जायेत ।

(४२) **सुखप्राप्तिविषयकाक्षेपाः**—मोक्षलक्षणघटकविशेष्यांशे ब्रह्मावाप्तिरूपेऽपि न कस्यापीच्छा जायेत । तथाहि—यदेव वस्तु प्रागनुभूतं तज्जातीयवस्त्वन्तरस्यैव सुखसाधनत्वेन संप्राप्ताविच्छा सर्वेषां जायेत, नाननुभूतसंप्राप्तौ । यथा देशान्तरेषु विद्यमानेष्वत्यद्भुतेष्वप्यनिर्ज्ञातेषु पदार्थेषु, तत्प्राप्तीच्छा न कस्यापि जायत एव । तद्वदेवात्रापि मुमुक्षोरधिकारिणः प्राङ्न ब्रह्मविषयकज्ञानमस्ति । यस्य तु ब्रह्मज्ञानमस्ति स नाधिकारी, तस्य मुक्तत्वात् । मुक्तस्य च मुमुक्षानुपपत्तेरधिकाराभावः । अतो वेदान्तश्रवणात्पूर्वमनिर्ज्ञातस्यब्रह्मणोऽवाप्तीच्छा कस्यापि नोन्मिषत्येव । इत्थं समूलाज्ञानजगन्निवृत्त्यात्मके, तदुपलक्षितब्रह्मावाप्तिरूपे च मोक्षे न जायेतैवेच्छा कस्यचिदपि । तस्मादधिकारी मुमुक्षुर्न कोऽपि सिद्ध्यति ।

(४३) **अधिकार्यभावं प्रकारान्तरेण प्रतिपादयति**—सर्वोपि विषयसुखमेव वाञ्छति । तपस्विनोऽपि पारलौकिकभोगाभिलाषेणैवैहिकान् भोगान् परित्यज्यानेकविधक्लेशान्सहन्ते । तथा चैहिकेभ्यो वाऽऽमुष्मिकेभ्यो वा विषयसुखेभ्य एव सर्वे स्पृहयन्ति । नैवेदमस्ति विषयसुखं मोक्षे । ततो न कोऽपि मोक्षसाधनमिच्छेत् । ततश्च मोक्षेच्छारूपा मुमुक्षा न कस्यापि सिद्ध्येत् । किञ्च ब्रह्मादिस्तम्बान्तस्य लोकस्य विषयसुखाशापाशपरवशीकृतचित्तत्वात् वैराग्योपरमशमदमादिसाधनं न कस्यापि सिद्ध्येत् । तस्मात्साधनचतुष्टयसंपन्नस्याधिकारिणोऽभावाद्विफलोऽयं ग्रन्थारम्भः ।

**(आ. ४४-५४) अधिकारिविषयकाक्षेपाणां समाधानानि ।**

(४४) **मोक्षस्य प्रथमांशभूते समूलाज्ञानजगन्निवृत्तिरूपे इच्छा-**

**संभवप्रकारः**—मोक्षेच्छा न कस्यापि संभवति; यतो मोक्षे अंशद्वयमस्ति, प्रथमः सोपादानकारणजगन्निवृत्तिरूपोंऽशः, द्वितीयो ब्रह्मप्राप्तिरूपोंऽशः। तत्र सोपादानकारणजगन्निवृत्तिरूपे मोक्षस्य प्रथमांशे न कस्यापीच्छा संभवति; अपि तु त्रिविधदुःखनिवृत्तीच्छैव सर्वेषां संभवति। तत्तद्दुःखनिवृत्तिस्तत्तदुपायाद्भवति। तस्मात्सोपादानकारणजगन्निवृत्तिकामो मुमुक्षुरधिकारीत्येतन्न सङ्गच्छत इति हि प्रथमः पूर्वपक्षः। **तत्र समाधिः**—सर्वानर्थबीजभूतमूलाज्ञानतत्कार्यजगन्निवृत्तिव्यतिरेकेण नोपायान्तरेण तापत्रयनाशो निःशेषमुपजायेत। निःशेषमूलाविद्यानिवृत्त्यैव सकलदुःखानि तत्कारणीभूतरोगादयः रोगाद्याश्रयशरीरादयश्च निरवशेषं नश्यन्ति। तस्मात्तापत्रयनिवृत्तये समूलाज्ञानजगन्निवृत्तिरूपे मोक्षलक्षणघटकविशेषणांशे उदेत्येवेच्छा सर्वेषाम्। **अयमाशयः**। यस्तु सकलौषधाद्युपायनिर्माणे निखिलरोगचिकित्सायां चात्यन्तसमर्थस्तस्यापि न नियमेन दुःखशान्तिः दृश्यते। कस्यचिदेव रोगादिजन्यदुःखमौषधाद्युपायैर्निवर्तते, कस्यचिन्नैव। अत एवौषधाद्युपायैः रोगादिजन्यदुःखं न नियमेन सर्वेषां निवर्तते। किञ्च यस्य रोगः औषधाद्युपायैर्निवर्तते तस्यापि कालान्तरे पुनर्जायत एव रोगः। तस्मादौषधाद्युपायैर्दुःखं नात्यन्तिकतया निवर्तते। निवृत्तस्य पुनरपि कदाचिदप्यनुत्पत्तिरेवात्यन्तिकी निवृत्तिरित्युच्यते। औषधाद्युपायैर्नियमेन दुःखनिवृत्त्यसंभवात्, निवृत्तस्य च पुनरुत्पत्तिदर्शनात् तादृशैरुपायशतैरपि न निश्शेषदुःखनिवृत्तिर्जायेत। परं तु सकलदुःखनिदाननिवृत्तावेव नियमेनाशेषदुःखनिवृत्तिः स्यात्। तादृशदुःखनिदाननाशे सत्येव भूयो नैव जायेत दुःखलेशोऽपि। तस्मात्सर्वस्यापि लोकस्य दुःखनिवृत्त्यर्थं तन्निदाननिवृत्तीच्छा जायेतैव।

(४'५) **दुःखनिधानं त्वज्ञानं तत्कार्यरूपप्रपञ्चश्चेति** छान्दोग्योपनिषदि भूमविद्याप्रकरणे स्फुटतरं निरूप्यते। तत्र हि "अधीहि भगव इति होपससाद सनत्कुमारं नारदः। तं होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति। (छा. 7-1-1.) स होवाच ऋग्वेदं भगवोऽध्येमि.......................... एतद्भगवोऽध्येमि। (छा. 7-1-2.) सोऽहं मन्त्रविदेवास्मि नात्मवित्। श्रुतं ह्येव

१. यथा ज्वरादिरोगग्रस्त आरोग्यकामनया वैद्योक्तपथ्यपदार्थान् ज्ञात्वा रोगविरुद्धपदार्थपरित्यागेन रोगनिदानानि निरस्यति, तथाऽऽत्यन्तिकदुःखनिवृत्तिकामोऽपि तत्साधनानि गुरूपदिष्टवेदान्तशास्त्रप्रमाणेन ज्ञात्वा तानि दुःखनिदानानि निवर्तयेदेव।

मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोऽहं भगवः शोचामि । तं मा भगवान् शोकस्य पारं तारयत्विति । तं होवाच यद्वै किञ्चैतदध्यगीष्ठा नामैवतत् ।" (छा. 7-1-3.) इत्यादिना द्वाविंशतिभिः खण्डिकाभिरपरब्रह्मोपासनं ज्ञानसाधनमुक्त्वा, ततः परं "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति । भूमैव सुखं, भूमा त्वेव विजिज्ञासितव्यः । भूमानं भगवो विजिज्ञासे । (छा. 7-23-1.) यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं, यो वै भूमा तदमृतम्, अथ यदल्पं तन्मर्त्यम्"। (छा. 7-24-1.) इत्यादिना भूमविद्योपदिश्यते। **अत्रायमर्थः**— सकलकलाभिज्ञोऽपि नारदः आत्मानं शोकाक्रान्तमेवापश्यत् । निश्शेषतः शोकतरणं चात्मज्ञानान्नान्यतो भवतीति श्रुतवांश्च । ततश्चात्मनः शोकनिदानाज्ञाननिवृत्तये आत्मज्ञानलाभाय च सनत्कुमारं पप्रच्छ "तं मा भगवान् शोकस्य पारं तारयतु" (छा. 7-1-3.) इति । स चानेकसाधनोपदेशानन्तरं शोकशून्यमपरिच्छिन्नं निरतिशयसुखस्वरूपं भूमानमुपदिश्य, ततोऽन्यत् सर्वं दृश्यजातं परिच्छिन्नं दुःखमेवेति, भूमा तु ब्रह्मैवेति चावोचत् । तथा च मूलाज्ञानतत्कार्यभूतदृश्यप्रपञ्चमात्रस्य ब्रह्मणोऽन्यत्वात् तदेवात्र सकलदुःखनिदानमित्युक्तं भवति । तादृशदुःखनिदानस्य द्वैतप्रपञ्चस्य मूलाज्ञानसहितस्य "नेति नेति" (बृ. 2-3-6.) इत्यादिश्रुत्युक्तरीत्या स्वरूपतो निवृत्तौ सत्यामेव निखिलदुःखानां निश्शेषतया नियमेन निवृत्तिरुपपद्येत । तस्मान्निश्शेषदुःखनिवृत्तये समूलाज्ञानप्रपञ्चनिवृत्तिरूपे मोक्षलक्षणविशेषणांशे जायेतैवेच्छा[1] ।

---

१. समूलाज्ञानजगन्निवर्तनेच्छा सर्वेषां जायेतेत्यत्रैवमाशङ्का जायेत—प्रागनुभूतवस्तुन्येवेच्छा जायेत न त्वननुभूते। न हि ब्रह्मरूपाधिष्ठानसाक्षात्कारेण समूलाज्ञानप्रपञ्चनिवृत्तौ मुमुक्षोः पूर्वानुभवोऽस्ति। अतस्तन्निवृत्तीच्छा न कस्यापि जायेतेति। तन्न, प्रागनुभूत एवेच्छा जायेतेति नियमस्याभावात्। तथा सत्यतीतभोजनादाविच्छा पुनरपि प्रसज्येत। न तु तथा भवति। किन्तु पूर्वानुभूतभोजनसजातीये भोजनान्तरे इच्छा जायत इत्येव नियमः। तथा च पूर्वोक्तशङ्काया नावकाशः। तथाहि, यथाऽऽरोपितसर्पस्य रज्जुरधिष्ठानं तथाऽऽरोपितसमूलाज्ञानप्रपञ्चस्य ब्रह्माधिष्ठानमिति, रज्जुब्रह्मणोरधिष्ठानत्वांशे साजात्यमस्ति। एवमारोपितसर्पादिनिवृत्तेरारोपितसमूलाज्ञानप्रपञ्चनिवृत्तेश्चास्ति परस्परं साजात्यम्। मुमुक्षोश्च पूर्वं रज्ज्वाद्यधिष्ठानसाक्षात्कारेण सर्पादिनिवृत्तावनुभवोऽस्ति। ततश्च तत्सजातीयायां निखिलदृश्यप्रपञ्चाधिष्ठानभूतब्रह्मसाक्षात्कारप्रयुक्तसमूलाज्ञानप्रपञ्चनिवृत्ताविच्छा मुमुक्षोर्जायेतैव।

(४६) **द्वितीयाक्षेपस्य समाधानम्**—यत्तूक्तं प्रागनुभूतस्यैव वस्तुनः प्राप्तीच्छा जायते । ब्रह्मणस्तु केनाप्यननुभूतपूर्वत्वात् तत्प्राप्तिरूपे मोक्षस्य द्वितीयांशे न कस्यापीच्छा जायेतेति । तदसत् । सर्वैः सुखस्यानुभूतत्वात्सर्वेषां तत्रेच्छा जायते । ब्रह्मणश्च नित्यनिरतिशयसुखस्वरूपत्वेन सर्ववेदान्तप्रसिद्धत्वात् साधनचतुष्टयसंपन्नस्योत्तमाधिकारिणः सुखस्वरूपब्रह्मप्राप्तीच्छा जायेतैव ।

(४७) **तृतीयाक्षेपस्य समाधानम्**—यत्तावदभिहितं सर्वोऽपि लोको विषयेन्द्रियसंयोगजसुखमेव वाञ्छति । न ह्येतदस्ति मोक्षे, अद्वितीयत्वान्मोक्षस्य; द्वैतप्रपञ्चायत्तत्वाच्च विषयसुखस्य । अतोऽधिकारिणो मुमुक्षोरभावात् ग्रन्थारम्भो निरर्थक इति । तत्रास्ति तावत्प्रष्टव्यम्—किं मुमुक्षुरेव नास्ति कश्चिदपीत्युच्यते, उत सत्यपि मुमुक्षौ तस्य ग्रन्थे प्रवृत्तिरेव न जायेतेति । नाद्यः । सर्वेषामात्यन्तिकदुःखनिवृत्तौ नित्यनिरतिशयसुखावाप्तौ चेच्छादर्शनात् । निश्शेषदुःखध्वंसपूर्वकनित्यनिरतिशयसुखस्यैव मोक्षरूपत्वात् । तस्मात्सर्वेऽपि मुमुक्षव एव ।

(४८) **वैषयिकमेव सुखं सर्वेऽभिलषन्तीत्येतदसमञ्जसम्** किन्तर्हि, सर्वे सुखसामान्यमिच्छन्ति । तच्च सुखं विषयजन्यं वास्तु तदितरद्वा । यदि विषयजन्यसुखमेवेच्छन्तीत्युच्येत तर्हि सुषुप्तिसुखे न स्यादेवेच्छा कस्यचिदपि; विषयाजन्यत्वात्तस्य । अतः सुखसामान्यमेव सर्वेऽपीच्छन्ति, न वैषयिकसुखमेवेति नियमः । प्रत्युत सर्वेषां प्रत्यहं सुषुप्तिगमनात् स्वात्मसुखेच्छैव जायत इति वस्तुस्थितिः । 'सुखमहमस्वाप्सम्' इति परामर्शेन निरतिशयसौषुप्तसुखस्यात्मस्वरूपसुखत्वेन निश्चितत्वात् । किञ्च तारतम्योपेतं वैषयिकं सुखं सर्वप्राणिनां सिद्धमेव । अतश्चासिद्धे नित्यनिरतिशयैकविधसुखप्राप्तावेवेच्छा नैसर्गिकी सर्वप्राणिनाम् । तादृशं च सुखं नित्यसिद्धात्मस्वरूपसुखमेव । आत्मस्वरूपसुखमेव च मोक्षः, नेतरत् । तस्मात् सर्वेऽपि मुमुक्षव एव । नास्त्येव मुमुक्षुः कश्चिदपीति साहसमात्रम् ।

---

१. यद्यनुभूतसामान्ये इच्छा जायेतेति नियमस्तर्हि पूर्वानुभूते प्रतिकूले रोगतन्निमित्तकदुःखादौ चेच्छाऽऽपद्येत । न तु तथा लोके दृश्यते । तस्मादनुकूले प्रागनुभूतसुखतत्साधनसजातीये एवेच्छा जायत इत्येव नियमः । ब्रह्मानन्दप्रतिबिम्बभूतं वैषयिकं सुखं च सर्वानुभवप्रसिद्धम् । ततश्च तत्सजातीयबिम्बभूतनित्यनिरतिशयाद्वितीयब्रह्मानन्दे सर्वेषामिच्छा जायेतैव ।

(४९) **सत्यपिमुमुक्षौ तस्य मोक्षग्रन्थे प्रवृत्त्यनुपपत्तेस्तदारम्भो विफल इति द्वितीयोऽपि पक्षो न सङ्गच्छते।** अत्र वादी प्रष्टव्यः—(१) अस्मिन् ग्रन्थे मुमुक्षोः प्रवृत्त्यभावकारणं किमस्य ग्रन्थस्य मोक्षसाधनत्वाभावो वा (२) किं वा इतोप्युत्कृष्टस्य साधनतमस्य ग्रन्थान्तरस्य सत्त्वं वा (३) उत वेदान्तग्रन्थेषु यानि साधनानि शमदमादीन्युक्तानि अधिकारिविशेषणत्वेन तादृशशमदमादिसाधनचतुष्टयसहितस्य ज्ञानसंपादनयोग्याधिकारिण एकस्याप्यभावो वा। **नाद्यः**। न हि ग्रन्थो मोक्षसाधनम्। यतः "तमेव विदित्वाऽतिमृत्यमेति" (श्वे. 6.15) इत्यादिप्रमाणैर्ज्ञानमेव मोक्षसाधनं नान्यदिति सिद्धान्तः। तच्च ज्ञानं वेदान्तश्रवणादेव जायते। श्रवणमपि द्विविधम् (१) प्रथमं वेदान्तवाक्यस्य श्रोत्रेन्द्रियेण संयोगरूपम्। (२) वेदान्तवाक्यार्थविचाररूपं तु द्वितीयम्। एतयोर्ज्ञानस्य मुख्यसाधनं प्राथमिकं श्रवणमेव, न तु द्वितीयम्। शाब्दबोधं प्रति श्रोत्रेण शब्दसन्निकर्षस्यैव सर्वत्र कारणत्वाङ्गीकारात्। अतो वेदान्तवाक्यस्य श्रोत्रेन्द्रियेण सह संयोगरूपश्रवणमेव ब्रह्मापरोक्षज्ञानहेतुर्भवति। तत्रावान्तरवाक्यश्रवणं परोक्षज्ञानहेतुः। महावाक्यश्रवणं तु अपरोक्षज्ञानहेतुरिति च प्राक् प्रतिपादितम्। यस्य तु पुनर्ज्ञानोदयानन्तरमप्यसंभावनाविपरीतभावने संभवतः, स तु द्वितीयं विचाररूपश्रवणं मननं निदिध्यासनञ्च तन्निवृत्तये करोतु। इदञ्च द्वितीयं वेदान्तवाक्यार्थविचाररूपश्रवणं, 'किं वेदान्तवाक्यानि ब्रह्माद्वितीयं प्रतिपादयन्ति, आहोस्विदर्थान्तरमित्येवमात्मकं' वेदान्तवाक्येषूत्पद्यमानमसंभावनारूपसंशयं निरस्यति। मननं हि प्रमेयगतासंभावनां 'किं जीवब्रह्मैक्यं वास्तवं उत तद्भेद' इत्यादिसंशयात्मिकां

---

१. किमियं रज्जुर्वा सर्पो वेत्यादिद्विकोटिकज्ञानं संशय इत्युच्यते। आत्मानात्मनोश्च नानाविधः संशयः संभवेत्। अनात्मविषयकसंशय उपेक्ष्यतेऽत्र, निष्फलत्वात्। **आत्मविषयकसंशयस्तु द्विप्रकारः प्रमाणगतः प्रमेयगतश्चेति**। तत्रोपनिषद्रूपवेदान्तवाक्यानि, किं द्वैतं प्रतिपादयन्ति आहो स्विदद्वैतमुतार्थान्तरमित्येवंरूपः **प्रमाणगतसंशयः**। अयञ्च श्रवणात्प्राक् संभवति।

वेदान्तप्रमाणवेद्यमोक्षादिपदार्थाः सर्वेऽपि प्रमेया उच्यन्ते। एतद्विषयकसंशयः **प्रमेयगत** इति। अयञ्च प्रमेयगतसंशयः विषयभेदादनन्तविधः—

तथाहि (1) **मोक्षसाधनविषयकसंशयाः**—सर्वानर्थनिवृत्तिः परमानन्दावाप्तिश्च मोक्ष इति सिद्धान्तः। तत्र साक्षान्मोक्षसाधनं किं कर्म, उतोपासनं, अथ वा ज्ञानमिति मोक्षसाधने संशयाः। (2) **ज्ञानसाधनविषयकसंशयाः** ज्ञानस्य मोक्षसाधनत्वे, अपरोक्षज्ञानं प्रति साक्षात्साधनं किं यज्ञादिकर्म, उतोपासनमथवा विवेका-

निवर्तयति । निदिध्यासनन्तु 'देहादिदृश्यप्रपञ्चस्य जीवब्रह्मणोश्च भेदः सत्य' इत्याद्यनादिकालसिद्धविपरीतभावनां निश्शेषमुन्मूलयति । इत्थं प्राथमिकं श्रवणं ब्रह्मात्मैक्यज्ञानद्वारा मोक्षहेतुः । वाक्यार्थविचाररूपं द्वितीयं श्रवणं, मननं निदिध्यासनं चेत्यादिरसंभावनाविपरीतभावनानिवृत्तिद्वारा मोक्षहेतुः । वेदान्ता इति उपनिषद एवोच्यन्ते । यद्यप्येतस्मात् पौरुषेयात् प्रकरणात्ताः भिन्नास्तथापि तदर्थस्यैवायं ग्रन्थो बालानां सुललितं बोधको भवति । एतद्ग्रन्थश्रवणेऽनायासेन यथा आत्मस्वरूपसाक्षात्कारो जायेत, तथोपरिष्टात्प्रपञ्चयिष्यते । इत्थमयमपि ग्रन्थो ज्ञानोत्पत्तिहेतुत्वेन मोक्षकारणं भवति, असंभावनाद्यशेषदोषशङ्कापाकरणसमर्थश्रवणमननात्मकत्वादस्य ग्रन्थस्य । तस्मान्नानेन ग्रन्थेन मोक्षो जायेतेत्येतत् केवलं हठः ।

(५०) यद्यप्यस्य ग्रन्थस्य मोक्षहेतुत्वमस्ति तथापि प्राचीनैः प्रौढग्रन्थान्तरैः साधनतमैर्मोक्षोपायस्य सम्यक्प्रतिपादितत्वाद्विफलोऽयं ग्रन्थ इति वदन् वादी प्रष्टव्यः—कानि तानि साधनतमानि ग्रन्थान्तराणीति ? स यद्याह—जीवब्रह्मैक्यबोधकनिखिलोपनिषद्गीतासूत्रतद्भाष्यादयोऽनेकग्रन्थाः प्रौढाः प्रागेव सिद्धाः । तेभ्यो ग्रन्थेभ्यो ज्ञानद्वारा मोक्षः सिद्ध्यति, अतोऽयं ग्रन्थो विफल इति—तर्हि तादृग्ग्रन्थविचारासमर्थानां मुमुक्षूणां तादृशग्रन्थैर्ज्ञानोदयासंभवात्,

दिसाधनचतुष्टयं, श्रवणादित्रयं वा, तत्त्वंपदार्थशोधनरूपावान्तरवाक्यार्थज्ञानं वा, आहोस्वित्तत्त्वमस्यादिमहावाक्यार्थोपदेशो नेत्यादिज्ञानसाधनविषयकसंशयाः । (३) **वेदान्तज्ञानविषयीभूतजगत्त्वंपदार्थजीवतत्पदार्थेश्वरविषयकसंशयाः** — ज्ञानस्य विषयः किं भेदः अभेदो वा । **अभेदे** किं प्रत्यग्ब्रह्मणोरभेदः, उतान्तःकरणविशिष्टचिदात्मकजीवस्य विराड्ढिरण्यगर्भान्तर्यामिरूपेश्वरेणाभेदः । **प्रत्यगात्मा** किं स्थूलदेहाद्भिन्नः अभिन्नो वा । **भिन्नत्वे** आत्मा किं जडः उत चिद्रूपः, अथवा चिज्जडोभयात्मकः । **चेतनत्वे** हि कर्तृभोक्तृस्वरूपो वा, अकर्तृभोक्तृस्वरूपो वा । **आत्मा** किमणुपरिमाणो वा, मध्यपरिमाणो वा, महापरिमाणो वा । **आत्मनोऽभेदः** किं तत्पदवाच्यार्थेन, उत तत्पदलक्ष्यार्थेन । **जगतः कारणं** किं प्रधानादिः, उतेश्वरः । **ईश्वरश्चेत्स** किं परिच्छिन्नः, उत व्यापकः । **स चेश्वरो** जगतः किमुपादानकारणमाहोस्विन्निमित्तमुताभिन्ननिमित्तोपादानकारणम् । **ईश्वरः** किं जीवादृष्टवशात्सृजति, उत विषमदृष्ट्या । **आत्मा** किं ब्रह्मणोऽभिन्न. उत भिन्नः । **अभिन्नश्चेत्** किं सदाऽभिन्नः, उत मोक्षदशायामेव । **आत्मा** किमानन्दादियुक्तः अथवा न । **सच्चिदानन्दादयो**ऽस्यात्मनः किं गुणाः, उत स्वरूपमेव । **ते च सच्चिदानन्दादयः** किं परस्परं भिन्नाः, उताभिन्ना एव । इत्येवमाद्यनन्तसंशया जायन्ते । एवंरूपान् प्रमाणप्रमेयगतसन्देहानादौ श्रवणमनननिदिध्यासनैरपोह्य ब्रह्मापरोक्षज्ञानेन तान् निश्शेषं नाशयेत् ।

अत्र च मन्दमतीनां तीव्रतरमुमुक्षूणां प्रवृत्तिसंभवाच्च सफलोऽयं ग्रन्थ इति प्रतिब्रूयात् ।

(५१) प्रौढग्रन्थैर्मन्दमतीनां मुमुक्षूणां बोधानुदयादयं ग्रन्थो यद्यपि तेषां मोक्षोपयोगी स्यात् तथापि मुमुक्षामात्रेणास्मिन् ग्रन्थे प्रवृत्तिर्न जायेत। विवेक-वैराग्यशमदमादिसाधनकलापयुक्तमुमुक्षुजनासंभवादिति शङ्कमानो विकल्प्यते–किमधिकारिणो बहवो न सन्ति, उत नैकोऽपीति । आद्ये इष्टापत्तिः सर्ववादि-संप्रतिपत्तेः । न द्वितीयः—ज्ञानयोग्याधिकार्येव नास्तीत्येतदसङ्गतमेव । तथा हि, सर्वेषामप्यन्तःकरणं निसर्गत एव मलविक्षेपस्वरूपावरणाख्यदोषत्रयदूषितं वर्तते । मलम्=पापम्, विक्षेपः=चाञ्चल्यम्, आवरणं=स्वरूपाज्ञानम् । तत्र शुभकर्मणा मलस्य, उपासनया विक्षेपस्य, ज्ञानेन स्वरूपावरणस्य च निवृत्तिर्जायत एव । यस्यान्तःकरणे मलविक्षेपादिदोषाः सन्ति न सोऽधिकारीति सिद्धम् । यस्य तु पुनरिह जन्मनि जन्मान्तरे वाऽनुष्ठितशुभकर्मोपासनादिभिर्मलविक्षेपादि-दोषा अन्तःकरणान्निवृत्ताः स एव वेदान्तविचारजनितज्ञाने मुख्यो योग्याधि-कारी भवति । तस्यास्मिन् ग्रन्थे जायेतैव प्रवृत्तिः ।

(५२) **पामरविषयिणोर्लक्षणम्**–यदुक्तं सर्वेऽपि विषयसुखासक्ता एव, न कोऽपि नित्यनिरतिशयसुखं वाञ्च्छतीति, तन्न । **पामरो, विषयी, जिज्ञासुर्मुक्त**श्चेति लोके चतुर्विधाः पुरुषाः । तत्र विहितप्रतिषिद्धेष्वैहिक-विषयभोगेष्वासक्तः सन् शास्त्रीयसंस्कारशून्यो यः स **पामरः** । शास्त्रानुसारि-विषयभोगान् भुञ्जानः सन् इहामुत्रार्थफलभोगावाप्तये कर्म कुर्वाणो **विषयी** ।

(५३) **जिज्ञासुलक्षणम्**—यस्तु शास्त्रीयोत्तमसंस्कारबलादध्यात्मादि-सच्छास्त्रश्रवणं करोति तस्य वक्ष्यमाणरीत्या विवेको जायते । तथा विवेको यस्य भवति स एव **जिज्ञासुः** ।

(1) तत्र **वैषयिकं सुखं सर्वमपि दुःखमेवेति प्रथमतो विवेको** भवति । तथा हि, विषयसुखं सर्वमनित्यमेव विषयेन्द्रियसंयोगज-त्वेनागमापायित्वात् । सुखं च वैषयिकं स्वावस्थितिसमयेऽपि यत्किञ्चिद्दुः खानुषङ्ग्येव भवति । स्वविनाशेनापि दुःखहेतुर्भवति । किञ्च वैषयिकं सुखमनु-भवदशायामपि, इतः परमीदृशं सुखं क्षीयेत किलेति व्याकुलतोत्पादनेनापि दुःखनिदानमेव । एवञ्च वैषयिकं सुखं सर्वं दुःखेन कवलीकृतमेव वर्तते । तस्माद्विषयजन्यं सुखं वस्तुतः सुखस्वरूपमपि विषयोपाधिसंबन्धाद्दुःखमेव ।

भवति सर्वदा। न चैतद्दुःखं केनचिदपि लौकिकोपायेन परिहर्तुं शक्यते। उपायान्वेषणकुशलस्यापि निश्शेषदुःखनिवृत्तेरदर्शनात्। निवृत्तमिव च सदपि पुनरुत्पद्यत एव।

(2) ततः, यावच्छरीरस्थिति दुःखं न निवर्ततेति विवेको भवति। "न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" (छा. 8-12-1) इति, शरीरमात्रस्य पुण्यपापफलत्वात्, शरीरान्वयव्यतिरेकाभ्यां सुखदुःखसंबन्धतदभावौ श्रूयेते।

तत्र मनुष्यशरीरं तु पुण्यपापमिश्रकर्मफलमिति प्रसिद्धमेव। देवशरीरमपि मिश्रकर्मफलमित्येव वक्तव्यम्; केवलपुण्यफलत्वे तु, देवानां देवतान्तरविभूत्यतिशयदर्शनेन न तापो जायेत। जायत इति हीतिहासपुराणादिषु कथ्यते। किञ्चाशेषदेवप्रधानभूतस्यापीन्द्रस्यानेकदैत्यदानवादिभ्यो भयान्महद्दुःखं पापफलभूतं जायत इति शास्त्रेण प्रतिपाद्यते। यदि देवशरीरं केवलपुण्यफलं स्यात् नैव स्यात्कदाचिदपि देवनां दुःखम्। तस्माद्देवशरीरमपि पुण्यापुण्यमिश्रकर्मफलमित्येव निश्चीयते। न च "न ह वै देवान् पापं गच्छति पुण्यमेवामुं गच्छति" (बृ. 1-5-20) इत्यादिश्रुतेर्न देवानां पापसंबन्धोऽस्तीति वाच्यम्—अन्यपरत्वात् तस्याः श्रुतेः; कर्माधिकारयोग्यं शरीरं मानुषमेव, नेतरत् देवतिर्यगादिशरीरम्। अतो देवताशरीरेण कृतपुण्यापुण्यफलं जन्मान्तरे न तान् गच्छतीत्यर्थः न तु तेषाम् कर्मफलाभावमात्रमिति। किन्तर्हि; देवशरीरोत्पत्तेः प्राग्जन्मनि शरीरान्तरकृतशुभाशुभकर्मफलं देवजातिशरीरेऽनुभूयत एव। तस्माद्देवादिशरीरमपि मिश्रकर्मफलमेव।

तिर्यक्पशुपक्षिमृगादीनामपि शरीरं मिश्रकर्मफलमेव। तैरनुभूयमानप्रचुरदुःखानां पापकर्मफलत्वेऽपि मैथुनादिजन्यसुखस्य पुण्यफलत्वाभ्युपगमात्। तिर्यक्=कीटादिः। पशुः=चतुष्पात्। पक्षी=पक्षाभ्यां गगनचारी। मृगः=व्याघ्रादिः। केचन पशुपक्ष्यादीनपि तिर्यगित्याचक्षते।

एवं निखिलमपि शरीरं पुण्यापुण्यकार्यमित्येव सिद्धान्तः। तथाऽपि, देवशरीरस्य पापोपसर्जनपुण्यातिशयजन्यत्वात् तदभिप्रायेण शास्त्रेषु देवशरीरं पुण्यफलमित्युच्यते। अतो नात्र विरोधशङ्कावकाशः। यथा ब्राह्मणप्रचुरो ग्रामो 'ब्राह्मणग्राम' इत्युच्यते, एवं पुण्यातिशयफलत्वाद्देवशरीरं पुण्यस्य फलमित्युपचर्यते, न तु वस्तुतः। तिर्यगादिशरीरं पुण्योपसर्जनपापातिशय-

फलम्। उत्तममनुष्यशरीरं देवशरीरसममेव। नीचशरीरं सर्पादिशरीरतुल्यम्। एवं निखिलमपि शरीरं पुण्यापुण्यफलमेव। अत एव पापफलत्वाद्दुःखस्य शरीरसंबन्धो यावत् तावद्दुःखक्षयो न स्यात्।

(3) ततः, सर्वशरीरिणां स्वस्वशरीरं स्वस्वार्जितधर्माधर्मफलभूतमेवेति विवेक उत्पद्यते। विना तु निश्शेषधर्माधर्मादिनिवृत्तिं नात्यन्तिकतया शरीरविनाशः संभवेत्। प्रारब्धनाशादद्यतनशरीरनाशेऽपि पुनः शरीरान्तरं प्राचीनानन्तकोटिजन्मार्जितपुण्यापुण्यवशाज्जायेतैव। तस्मान्निश्शेषकर्मक्षयमन्तरा नात्यन्तिकशरीरनाशरूपमोक्षः संभवति।

(4) पुण्यापुण्ययोश्च क्षयो न रागद्वेषादिनिवृत्तिमन्तरा घटेतेति विवेकस्ततो जायते। एतच्छरीरारम्भकपुण्यापुण्ययोर्भोगेन क्षयेऽपि रागद्वेषवशात्पुण्यापुण्यरूपकर्मान्तरोत्पत्तिः स्यात्। तस्मान्निश्शेषरागद्वेषनिवृत्तिमन्तरा नाशेषकर्मक्षयः।

(5) रागद्वेषौ चेष्टानिष्टसाधनताज्ञानप्रयोज्याविति ततो जानाति विवेकी। इष्टे रागोऽनिष्टे द्वेषश्च सर्वप्राणिसाधारणौ। तस्मादिष्टानिष्टसाधनताबुद्धिनिवृत्तिमन्तरा न रागद्वेषौ निवर्तेते।

(6) इष्टानिष्टसाधनताबुद्धिरपि भेदधीनिबन्धनेति विवेकस्ततो जायते। यदा स्वस्वरूपादन्यदिव द्वितीयं वस्त्ववबुद्ध्यते तदा तत्रेष्टसाधनताबुद्धिर्वा अनिष्टसाधनताबुद्धिर्वा जायेत। स्वस्वरूपमात्रे तु कस्यचिदपि इष्टसाधनताबुद्धिर्वा अनिष्टसाधनताबुद्धिर्वा न जायते। सुखसाधनं=अनुकूलम् इष्टसाधनमिति चोच्यते। दुःखसाधनं=प्रतिकूलं अनिष्टसाधनमिति चोच्यते। स्वस्वरूपं तु न सुखस्य वा दुःखस्य वा साधनं भवति, तस्य सुखस्वरूपत्वेन सुखसाधनत्वासंभवात्। अतः स्वस्वरूपातिरिक्तत्वेनावगते वस्तुनि आनुकूल्यप्रातिकूल्यबुद्धी यथासंभवं जायेते। एवञ्चाखण्डानन्दाद्वितीयासङ्गचिद्रूपस्वस्वरूपादतिरिक्तवस्तुसङ्कल्पनमेवानुकूल्यप्रातिकूल्यबुद्धिहेतुः। ईदृग्भेदबुद्धिनिवृत्तिमन्तरा आनुकूल्यप्रातिकूल्यबुद्धी न निवर्तेते।

(7) ईदृग्भेदबुद्धिः स्वस्वरूपाज्ञानाज्जायते इति विवेकस्ततो भवति। "यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति," (बृ. 2-4-14) "यत्र वाऽन्यदिव स्यात् तत्रान्योऽन्यत्पश्येत्" (बृ. 4-3-31) "यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते" (बृ. 4-3-20) इत्याद्यनन्तश्रुतयः स्वस्वरूपाज्ञानदशाया-

मेव सकलद्वैतप्रपञ्चव्यवहार इति बोधयन्ति। एवमशेषदुःखनिदानं स्वस्वरूपाज्ञानमिति सिद्धम्।

(४) ततः स्वस्वरूपाज्ञानं स्वस्वरूपज्ञानेनैव निवर्तते नान्येन, तयोः तमःप्रकाशवत्परस्परविरोधित्वादिति विवेक उत्पद्यते। यद्विषयकमज्ञानं भवति तदज्ञानं तद्विषयकापरोक्षज्ञानेनैव निवर्तते; यथा रज्ज्वज्ञानं रज्जुसाक्षात्कारेणैव निवर्तते, तद्वत्। तस्मात् स्वस्वरूपापरोक्षज्ञानमेवाखिलानर्थनिदानस्वस्वरूपाज्ञाननिवृत्तिद्वारा निश्श्रेयसात्मकनिखिलदुःखनिवृत्तिहेतुर्भवति। स्वस्वरूपस्यैव सत्यज्ञानानन्तानन्दब्रह्मरूपत्वात् स्वस्वरूपज्ञानेन ब्रह्मावाप्तिर्भवति। ब्रह्म च नित्यनिरतिशयाखण्डानन्दरूपं दुःखासंभिन्नमिति सर्ववेदान्तप्रमाणसिद्धम्। अत एव स्वस्वरूपसाक्षात्कारेणैव नित्यनिरतिशयदुःखासंभिन्नस्वस्वरूपभूतब्रह्मानन्दोऽवाप्यते। एवं निखिलदुःखनिवृत्त्युपलक्षितस्वस्वरूपभूताखण्डानन्दप्राप्तेः साक्षात्साधनं स्वस्वरूपज्ञानमेव। तस्मात् स्वस्वरूपविचार एव कर्तव्यः। इत्थं यस्य विवेको जायते स एव जिज्ञासुरित्युच्यते।

**मुक्तलक्षणम्**—स्थूलसूक्ष्मकारणात्मकशरीरत्रयविलक्षणं पञ्चकोशविलक्षणं च स्वस्वरूपं अखण्डाद्वितीयस्वयंज्योतिस्स्वभावानन्दघनब्रह्मरूपेण यः साक्षादपरोक्षीकरोति करतलामलकवत् स एव मुक्त इत्युच्यते॥

(५४) **जिज्ञासोरस्मिन् ग्रन्थे प्रवृत्त्युपपत्तिः**—एवं पूर्वोक्तचतुर्विधेषु पुरुषेषु पामरविषयिणौ विषयोपभोगजन्यसुखेनैवात्मानं तृप्तं कृतार्थं च मन्यमानौ वर्तेते। केषाञ्चिद्विषयिणां पारलौकिकपरमसुखेच्छायां सत्यामप्यतत्प्राप्तिसाधनमेव तत्प्राप्तिसाधनत्वेनान्यथा गृहीत्वा तत्रैव ते प्रवर्तन्ते, साधुसङ्गसच्छास्त्रश्रवणादिरूपपरमानन्दप्राप्तिसाधनज्ञानाभावात्तेषाम्। ततश्च पामरविषयिणोः परमानन्दावाप्त्यर्थं नास्मिन् ग्रन्थे प्रवृत्तिर्जायेत। दुःखहत्यै च न तेषामत्र ग्रन्थे प्रवृत्तिः, उपायान्तरे प्रवृत्तत्वात्। तस्मान्निरतिशयसुखावाप्तये आत्यन्तिकदुःखहानाय च पामरविषयिणोरस्मिन्ग्रन्थे न संभवति प्रवृत्तिः। मुक्तस्यापि नास्त्यधिकारोऽस्मिन् ग्रन्थे। ज्ञानी हि कृतकृत्यो मुक्त इत्युच्यते।

१. अज्ञानदशायां ऐहिकभोगादिसिद्ध्यर्थं कृष्यादिव्यवसायाः, आमुष्मिकभोगार्थं काम्यकर्मोपासनादयः, चित्तशुद्ध्यैकाग्र्यार्थं निष्कामकर्मोपासनादयः, वेदान्तश्रवणाय विवेकवैराग्यादिचतुर्विधसाधनम्, अद्वितीयात्मसाक्षात्काराय गुरूपदेशः, संशयादिनिवृत्त्यर्थं श्रवणादयः, तत्पदार्थविषयकपरोक्षत्वभ्रमनिवृत्तये त्वंपदार्थविषयकपरिच्छिन्नत्वभ्रमनिवृत्तये चान्योन्यव्यतिषङ्गः, (व्यतिहारः, ओतप्रोतभावः), मोक्षार्थं दृढतराद्वितीयचिन्मात्रात्मापरोक्षसाक्षात्कारश्चेत्येवमादिपुष्कलसाधनानुष्ठानं, तत्संपादनञ्च 'कर्तव्यम्' इत्युच्यते। एतदनुष्ठानसंपादनरूपं कर्तव्यं येन कृतं स एव 'कृतकर्तव्यः'='कृतकृत्यः' इत्युच्यते।

नैवास्ति तस्य कर्तव्यान्तरं दृढतराद्वितीयात्मपरोक्षज्ञानवत्वात् । लीलयाऽत्र कालयापनार्थं प्रवृत्तोऽपि नास्त्यस्य ग्रन्थतः प्रयोजनम् । तस्मान्न मुक्तोद्देशेनाप्ययं ग्रन्थः प्रवृत्तः । किन्तु मुमुक्षुरूपजिज्ञासुमुद्दिश्य प्रवृत्तोऽयं ग्रन्थः । न तस्यास्ति विषयसुखेच्छा । निरतिशयभूमानन्दलिप्सया तस्य संसारदुःखजिहासावत्वात् । नित्यनिरतिशयपरमानन्दप्राप्तिः आत्यन्तिकदुःखनिवृत्तिश्चापरोक्षात्मज्ञानं विना कर्मयोगसांख्ययोगोपासनादिभिर्न सिद्ध्यतीति विवेको यस्य सत्सङ्गाज्जायते तस्य जिज्ञासोरद्वैतवेदान्तग्रन्थे प्रवृत्तिर्जायेतैव ।

(आ. ५५-६०) **विषये आक्षेपाः**—

(५५) **जीवब्रह्मणोरैक्यरूपविषये आक्षेपः**—यदुक्तं जीवब्रह्मणोरैक्यमेवास्य ग्रन्थस्य विषय इति, तन्नोपपद्यते; तयोः स्भावभेदात् । तथा हि, ब्रह्म तु अविद्याऽ[1] स्मिता[2] राग[3] द्वेषा[4] भिनिवेशा[5] त्मकपञ्चक्लेशशून्यं व्यापकमेकं स[6] जातीयभेद-

१. विचारे क्रियमाणे स्वरूपसत्ताभावाद्या न विद्यते सा अविद्या । सा द्विप्रकारा मूलाविद्या तूलाविद्येति च । शुद्धचिन्मात्रावारिका मूलाविद्या घटाद्युपहितचैतन्यावारिका तूलाविद्या । मूलाविद्या तु कार्यकारणभेदेन द्विविधा । आवरणविक्षेपशक्तिसहिताऽनादिभावरूपा **कारणाविद्या** । वस्तुनोऽन्यथाप्रतीतिरेव **कार्याविद्या** । कार्याविद्या चतुर्विधा—(१) अनित्यस्वर्गादिलोकेषु तत्रत्यविषयेषु च नित्यताबुद्धिरूपा प्रथमा । (२) अशुद्धशरीरस्त्रीपुत्राद्यालिङ्गनचुम्बनादिनिकृष्टकार्येषु शुचित्वबुद्धिरूपा द्वितीया । (३) दुःखात्मकधनादिषु भोगसाधनेषु सुखत्वबुद्धिरूपा तृतीया । (४) अनात्मदेहादिषु आत्मत्वभ्रमरूपा चतुर्थी । पञ्चक्लेशान्तर्गताविद्याशब्देनेयमेव कार्याविद्या गृह्यते ।

२. बुद्ध्यात्मनोरविवेकेनाभेदधीः **अस्मिता** । इयमेव सामान्याहङ्कार इत्युच्यते ।

३. प्राचीनविषयानुभवजन्यसंस्कारवशादनुकूलविषयकभोगेच्छा **रागः** ।

४. प्रतिकूलविषयकहानेच्छा **द्वेषः** ।

५. मरणभयाच्छरीरसंरक्षणायाऽऽग्रहोऽ**भिनिवेशः** ।

६. ब्रह्म हि सजातीयविजातीयस्वगतभेदशून्यम् । तथा हि सजातीयानां परस्परं भेदः **सजातीयभेदः**, यथा ब्राह्मणादीनामन्योन्यभेदः । स्वभिन्नजातीयवस्त्वन्तरात् स्वस्य भेदो **विजातीयभेदः**, यथा ब्राह्मणक्षत्रिययोरन्योन्यभेदः । अवयविनः स्वावयवाद्भेदः **स्वगतभेदः** । यथा शरीरस्य करचरणादिभ्यः, वृक्षस्य शाखादिभ्यश्च भेदः ।

"सर्वं खल्विदं ब्रह्म" (छा. 3-14-1) इति सर्वस्य द्वैतस्य ब्रह्ममात्रत्वोक्त्या ब्रह्मान्तराभावाच्च **ब्रह्म सजातीयभेदशून्यम्** । ब्रह्मान्तराभावश्च "एकमेवाद्वितीयम्" (छा. 6-2-1) इति श्रुत्या 'एक' शब्देनोच्यते ।

ब्रह्मरूपप्रत्यक्चैतन्याद्विलक्षणजडदृश्यप्रपञ्चो विजातीयः । स चेत्सत्यः स्यात् ब्रह्मापि तदा विजातीयभेदसहितं स्यात् । न तु प्रपञ्चः सत्यः । रज्ज्वारोपितसर्पवन्मिथ्यैव । यन्मिथ्या न तदधिष्ठानादतिरिच्यते । तस्मात् **ब्रह्म विजातीयभेदशून्यमिति** 'एव'-कारेणोच्यते ।

रहितं च; ब्रह्मणः सजातीयब्रह्मान्तराभावात्। जीवस्तु निखिलक्लेशभाक् परिच्छिन्नोऽनेकश्च। यावन्ति शरीराणि तावन्तो जीवाः। सर्वशरीरेषु जीवस्यैकत्वाभ्युपगमेत्वेकशरीरे जायमानसुखदुःखादयः सर्वशरीरेषु जायेन्। न तु तथाऽस्ति।

---

ब्रह्म निरवयवम्। सच्चिदानन्दादयस्तु ब्रह्मणः स्वरूपलक्षणत्वादसाधारणधर्माः, न त्ववयवाः। पुष्पादिगतरूपरसगन्धस्पर्शादिगुणा यथा पुष्पादिस्वरूपभूतास्तथा सच्चिदानन्दादयो धर्माः ब्रह्मस्वरूपभूता एव, न ततोऽतिरिक्ताः। तस्मात् ब्रह्म **स्वगतभेदरहितश्चेति** 'अद्वितीय' पदेनोच्यते।

१. भिन्नः।

२. **जीवब्रह्मैक्यविषये आक्षेपसमाधानानि—**

**आक्षेपः**—सर्वशरीरेषु यद्येक एवात्मा स्यात्तदा जीवात्मपरमात्मैक्यमपि स्यात्। न तु तथाऽस्ति। अनेकत्वादात्मनः।

**समाधिः**—आत्मनोऽनेकत्वे न किञ्चिदपि प्रमाणमस्ति। अज्ञजनप्रसिद्धात्मभेदविषयकैन्द्रियकप्रत्यक्षं तु नात्मभेदायत्तं, किन्तूपाधिभूतशरीरभेदनिबन्धनम्। "नावेदविन्मनुते तं बृहन्तम्", "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ. 3-9-26) इत्यादिश्रुतिभ्यः वेदेतरप्रमाणानवगम्यत्वादात्मनः। "एको देवः सर्वभूतेषु गूढः" (श्वे. 6-11) इत्यादिश्रुतिभिः सर्वशरीरेषु ब्रह्मादिस्तम्बान्तेषूपलभ्यमान आत्मा एक एव। अनेकघटेषूपलभ्यमानोप्याकाशो यथा एक एव, तथा शरीरभेदेष्वप्यात्मा एक एव। "अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च।" (क. 2-2-9) इत्यादिश्रुतिभ्यः। तस्मात् जीवब्रह्मैक्यं युज्यते।

**आक्षेपः**—आत्मनोऽनेकत्वे न प्रमाणाभावः, प्रत्यक्षाद्यनेकप्रमाणसत्त्वात्। तथा हि—

(1) **प्रत्यक्षप्रमाणम्**—'ब्राह्मणोऽहम्' 'क्षत्रियोऽहम्' इत्यहङ्कारपूर्वकं प्रतिप्राणिशरीरमात्मभेदः प्रत्यक्ष एव; अहङ्कारभेदस्यात्मभेदनियामकत्वात्। सर्वदेहेष्वात्मन एकत्वे 'त्वं' 'अहं' 'अयं' इत्यादिभेदव्यवहारो न स्यात्। तस्मादात्मनानात्वं प्रत्यक्षसिद्धम्।

(2) **अर्थापत्तिप्रमाणम्**—आत्मनो नानात्वाभावे 'त्वं' 'अहं' 'अयं' इत्यादिभेदव्यवहारो न स्यात्। तस्मात् भेदव्यवहारसिद्ध्यन्यथानुपपत्त्या आत्मभेदोऽङ्गीकार्य इत्यर्थापत्तिरपि तत्र मानम्।

(3) **अनुमानप्रमाणम्**—विमत आत्मा प्रतिशरीरं भिन्नः, प्रतिशरीरं 'त्वं' 'अहं' 'अयं' इति व्यवहारभेदात्, तत्तच्छरीररूपव्यक्तिभेदाच्च; घटशरावादिवत्। इत्यनुमानप्रमाणमपि।

(4) **श्रुतिपुराणादिप्रमाणम्**—श्रुतिपुराणादिषु देवदानवयक्षराक्षसगन्धर्वकिन्नरकिंपुरुषमानवादिभेदवाददर्शनादात्मनानात्वमेव सिद्ध्यति।

(5) **युक्तिः**—यद्यात्मा सर्वशरीरेष्वेकोऽभ्युपगम्येत, तदैकस्य सुखदुःखादिना सर्वेषां तदुपलब्धिसाङ्कर्यं स्यात्। तथैकस्य ज्ञानातिशयेन सर्वे ज्ञानिनः

स्युः। तथा सति विधिप्रतिषेधशास्त्राणां वैयर्थ्यप्रसङ्गः, ज्ञानिनो विधिनिषेधातीतत्वात्। तथैवैकस्य बन्धेन सर्वे बद्धाः स्युः। तस्मादात्मनानात्वमेव युक्तम्।

**समाधिः—**(1) यदुक्तं अहमहमिति अहंप्रत्ययस्य भेदादात्मा अनेक इति, तन्न युज्यते—तथाहि 'अहं शिशुरहं कुमारोऽहं युवाऽहं वृद्ध' इत्यादिव्यवहारेषु शैशवाद्यवस्थाभेदैरहंप्रत्ययस्य भेदेऽप्येक एवात्मा सर्वावस्थास्वनुवर्तते। न हि यौवनाद्यवस्थासु कौमाराद्यवस्थान्तरानुवृत्तिरस्ति, तथापि भिन्नासु सर्वास्वप्यवस्थास्वेक एवाहंशब्दाभिधेय आत्माऽनुवर्तमानोऽनुभूयते। तस्मादहंप्रत्ययभेदो नात्मभेदनियामकः। किञ्च तत्तदवस्थागत आत्मा भिन्नो यदि, तर्हि शैशवाद्यवस्थान्तरकृतकर्माणि यौवनाद्यवस्थान्तरे स्मरणगोचराणि न स्युः। तस्मान्नप्रत्यक्षविषय आत्मभेदः।

(2) एकस्मिन्नेव देहे यथा अवयवभेदमाश्रित्य शिरःपाणिपादादिव्यवहारः सिद्ध्यति, तथा सकलशरीरेष्वात्मन एकत्वेऽपि तत्तच्छरीरभेदमाश्रित्य 'त्वं' 'अहं' 'अयं' इत्यादिभेदव्यवहार उपपद्येत। न ह्ययं भेदव्यवहारः आत्मभेदनिबन्धनः। तस्माद्भेदव्यवहारसिद्ध्यन्यथानुपपत्त्या आत्मभेदः सिद्ध्यतीत्यर्थापत्तिरपि न प्रमाणम्।

(3) शरीरव्यक्तिभेदात्, 'त्वं,' 'अहं,' 'अयं' इत्यादिव्यवहारभेदाच्चात्मनानात्वानुमानं न प्रमाणम्। स्थूलसूक्ष्मकारणशरीराणां जाग्रत्स्वप्नशरीराणां च भेदेऽपि अहमहमिति प्रत्यभिज्ञायमानस्यात्मनो भेदाभावात्।

(4) पूर्वोक्तश्रुतिस्मृतिपुराणेतिहासादिसिद्धदेवदानवमनुष्यादिभेदव्यवहारस्तु ब्रह्मादिस्तम्बान्ततत्तद्देहभेदाधीनो नात्मभेदनिबन्धनः। सर्वशरीरेष्वपि चैतन्यस्यैकरूपत्वेन चैतन्यस्वरूपस्यात्मनो भेदासिद्धेः। "एको देवः सर्वभूतेषु गूढः," (श्वे. 6-11) "एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्" (बृ. 4-4-20) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति," (बृ. 4-4-19) (क. 2-1-11) "सलिल एको द्रष्टाऽद्वैतो भवति" (बृ. 4-3-32) "एकस्तथा सर्वभूतान्तरात्मा" (क. 2-2-9) "तत्र को मोहः कः शोकः एकत्वमनुपश्यतः" (ई. 7) इत्यादिश्रुतिशतेभ्य आत्मनः एकत्वनिश्चयाच्च।

(5) न चात्मैकत्वे सुखदुःखादिव्यवस्था प्रत्यक्षसिद्धा न सिद्ध्येदिति वाच्यम्, अन्तःकरणरूपोपाधिभेदनिबन्धनत्वात्तस्याः। तत्तदुपाधिगतसुखदुःखादिव्यवस्थायास्तत्तत्प्रारब्धकर्माधीनत्वात्। एकस्मिन्नेव देहे सुखदुःखादीनां वैचित्र्यं कर्मभेदादुपपद्यते। तस्मात्सुखदुःखादीनां पुण्यापुण्यकर्मकार्यत्वेन, तद्भेदात्, चिदाभासयुक्ततत्तदन्तःकरणरूपभोक्तृभेदाच्च सुखदुःखादिव्यवस्था संभवत्येव।

आत्मन एकत्वे एकस्य सर्वज्ञत्वे सर्वे सर्वज्ञाः स्युः, ततो विधिनिषेधादिशास्त्रसमनर्थकं स्यादितीयमपि शङ्का न युज्यते। यद्यप्येक एवात्मा सर्वदा सर्वत्र सर्वं विजानाति, तथापि तत्तद्देहस्थान्तःकरणवृत्तिद्वारैव घटपटादिविषयविशेषान् जानाति। यतो देहभेदनिबन्धनो बुद्धिभेदस्तत एव प्रतिदेहं ज्ञानभेदोऽप्यवश्यं जायेतैव।

अथवा तत्तद्बुद्धिवृत्त्या सम्बद्धमेव घटपटादि वस्तु भासते, नेतरत्। बुद्धिवृत्तिरूपं ज्ञानं परिच्छिन्नम्। यस्मात् परिच्छिन्नायास्तत्तद्बुद्धिवृत्तेस्तत्तद्वस्तुभिरेव संबन्धो न सर्वैः; तस्मान्न सर्वेषां सर्वज्ञत्वापत्तिः। शब्दोत्पादकस्याकाशस्यैकत्वेन सर्वव्यापितया च सर्वत्र भेरीमृदङ्गादिसंबन्धे सत्यपि दण्डादिभिरभिघातो यत्र भवति तत्प्रदेशमात्रे शब्द उत्पद्यते नान्यत्रेति यथा, एवमेवैकस्य चिन्मात्रस्यात्मनः परिपूर्णस्यापि, यत्र बुद्धिवृत्तेः येन वस्तुना

(आ. ५६-६०) साक्षिब्रह्मैक्यविषये आक्षेपः—

(५६) जीवातिरिक्तसाक्षी नास्ति; सत्वेऽपि साक्षी नानेति शङ्का—यदुक्तं सुखदुःखादयोऽन्तःकरणधर्माः । तच्चान्तःकरणमनेकम् । तस्मादेकोपाधिस्थसुखदुःखादयो धर्माः उपाध्यन्तरसंबन्धिनो न भवन्ति । साक्षी तु सर्वसुखदुःखादिसाक्ष्यधर्मासंबद्ध एक एव । तस्य च ब्रह्मणैक्यं वक्तुं शक्यत एवेति । तन्न । कर्तृत्वभोक्तृत्वादिधर्मविशिष्टजीवातिरिक्तसाक्षिसत्त्वे प्रमाणाभावात् । साक्ष्यङ्गीकारपक्षेऽपि स एक इत्यभ्युपगन्तुं न शक्यते । किन्त्वनेके साक्षिण इत्येव युक्तम् । तथा हि, अन्तःकरणं तद्धर्मसुखदुःखादयश्च नान्तःकरणेन न वेन्द्रियेण विषयीक्रियन्ते, किन्तु साक्षिणैवेति वेदान्तसिद्धान्तः । साक्षिणश्चैकत्वे यदा एकान्तःकरणस्थसुखदुःखादयः साक्षिणा विषयीक्रियन्ते तदा सर्वान्तःकरणगतसुखदुःखादयोऽपि विषयीक्रियेरन् । तथाऽनुभवाभावादेवानेके साक्षिणः इत्यभ्युपगन्तव्यम् । नचास्त्यस्मिन् पक्षे कोऽपि दोषः । यस्य हि साक्षिणो यदन्तःकरणमुपाधिः तदन्तःकरणगता एव धर्मास्तेन साक्षिणा विषयीक्रियेरन्, नान्योपाधिगताः । एवं च साक्षिणोऽनेकत्वात् न तेषामेकेन ब्रह्मणैक्यं युज्येत ।

(५७) अन्तःकरणस्येन्द्रियाविषयत्वम्—

इन्द्रियाणि पञ्चीकृतभूततत्कार्याण्येव विषयीकुर्युः । अत्राप्यस्ति वक्ष्यमाणरीत्या भेदः । चक्षुरिन्द्रियं नीलपीतादिवर्णयुक्तघटादिनिष्ठनैल्यादिरूपं तदाधारभूतघटादि च विषयीकरोति । त्वगिन्द्रियमपि स्पर्शं तदाश्रयं चोभयं विषयीकरोति । जिह्वाघ्राणश्रवणानि तु त्रीणीन्द्रियाणि वस्त्वाश्रितरसगन्धशब्दानेव क्रमाद्विषयीकुर्वन्ति, न तु तदाश्रयद्रव्यम् । अत एवैतत्त्रयेणापी-

सह संबन्धो भवति तत्रैव तद्वृत्तिमात्रविषयकं ज्ञानं जायते, न त्वन्यत्र । तस्मादनेकत्वादव्यापकत्वाच्चान्तःकरणतद्वृत्तीनां न सर्वेषां सर्वज्ञत्वापत्तिः ।

विधिनिषेधादिपरशास्त्राणां चाज्ञजनप्रवृत्तिनिवृत्तिविषयकत्वात् न वैयर्थ्यापत्तिः । जीवानां सर्वज्ञत्वाभावात्तेषां मध्ये यस्तु वेदान्तश्रवणजन्यज्ञानेन प्रत्यगभिन्नं परं ब्रह्म स्वात्मस्वरूपत्वेन 'अहं ब्रह्मास्मि' इति निर्विशङ्कं जानाति स एव मुक्तो नान्यः । तस्माद्बन्धमोक्षव्यवस्था च सिद्ध्यति । इत्थं पूर्वोक्ताक्षेपासंभवात् जीवब्रह्मैक्यरूपविषयश्च सिद्ध्यत्येव ।

१. तथा हि—रसाद्याश्रयद्रव्यं चक्षुषो वा त्वचो वा विषयीभवति, न तु जिह्वादेः । तथा हि माधुर्याद्यास्वादने जिह्वया माधुर्यादिगुण एव गृह्यते, न तदाश्रयद्रव्यम् । तच्च त्वगिन्द्रियेणैव गृह्यते ।

न्द्रियेणान्तरमन्तःकरणं न विषयीक्रियते। तथैव न चक्षुषा त्वचा चान्तःकरणं विषयीक्रियते। यतो बाह्यपञ्चीकृतभूतानि, तत्कार्यं रूपाश्रयं स्पर्शाश्रयं वा वस्तु, चक्षुषा त्वचा च विषयीक्रियन्ते। अन्तःकरणं त्वपञ्चीकृतभूतकार्यत्वात् नेत्रत्वचोर्न विषयीभवति। अत एवापञ्चीकृतभूतकार्यं नेत्रेन्द्रियमपि नेत्रेन्द्रियेण न विषयीक्रियते। बाह्यवस्तून्येव सर्वेन्द्रियाणां विषयीभवन्ति। इन्द्रियापेक्षया आन्तरत्वादन्तःकरणं नेन्द्रियाणां विषयीभवति।

(५८) **अन्तःकरणस्य स्ववृत्त्यविषयत्वम्**—किञ्चान्तःकरणं न स्ववृत्तेरपि गोचरीभवति। अन्तःकरणस्य वृत्त्याश्रयत्वान्न तत् स्वाश्रितवृत्तेर्विषयीभवितुमर्हति। यथा अग्न्याश्रिता दाहशक्तिः स्वाश्रयातिरिक्तेन्धनाद्येव विषयीकरोति, तथाऽन्तःकरणवृत्तिरपि स्वाश्रयान्तःकरणव्यतिरिक्तमेव वस्तु विषयीकुर्यात्। तस्मादन्तःकरणं नैव स्ववृत्तेर्विषयीभवति।

(५९) **अन्तःकरणधर्माः नान्तःकरणवृत्तेर्विषयाः**—एवमेवान्तःकरणवृत्तिः स्वाश्रयान्तःकरणाश्रितरागद्वेषसुखदुःखादिधर्मानपि न विषयीकर्तुं शक्नोति। यद्यन्तःकरणवृत्तिः स्वाश्रयभूतमन्तःकरणं विषयीकुर्यात्तर्हि तदाश्रिततद्धर्मभूतान् सुखदुःखादीनपि विषयीकुर्यात्। यतोऽन्तःकरणं विषयीकुर्वाणा वृत्तिर्नान्तःकरणाभिमुखा भवति, तस्मादन्तःकरणवत् तद्धर्माश्च नान्तःकरणवृत्तेर्विषयीभवन्ति। **अस्ति चायमत्र नियमः**—वृत्तिर्हि स्वाश्रयात् किञ्चिद्विप्रकृष्टमेव वस्तु विषयीकुर्यात्, नातीव विप्रकृष्टं नाप्यत्यन्तं सन्निकृष्टं वेति। यथा नयनवृत्तिः स्वाश्रयसमीपस्थमञ्जनादिकं न विषयीकरोत्यत्यन्तं सन्निकृष्टत्वात्, तथाऽन्तःकरणवृत्तिरपि स्वाश्रयान्तःकरणगतान् सुखदुःखादीनत्यन्तसन्निहितान् धर्मान् न विषयीकुर्यात्। इत्थमन्तःकरणं तद्धर्माश्च नेन्द्रियाणामन्तःकरणवृत्तेश्च विषयीभवन्ति, किन्तु केवलसाक्षिणा ते विषयीक्रियन्ते; इति हि वेदान्तसिद्धान्तः।

---

१. ननु अन्धकारावृतं गृहं यथाऽन्धकारस्याश्रयो विषयश्च भवति, यथा वा चैतन्यमेकमेव स्वाज्ञानस्याश्रयो विषयश्च भवति; एवमेवान्तःकरणमपि स्ववृत्तेराश्रयो विषयश्च कुतो न स्यादिति चेन्न। गृहान्धकारवत् यत्राश्रयाश्रयिणौ भिन्नौ भवतस्तत्रैकस्यैवाश्रयत्वं विषयत्वं च स्यात्। यत्र तु वह्नितदाश्रितदाहशक्तिवदाश्रयाश्रयिणौ न भिन्नौ भवतः तत्रैकमेव वस्त्वाश्रयो विषयश्च न स्यात्। प्रकृते चान्तःकरणतद्वृत्त्योश्च भेदाभावान्नान्तःकरणं स्ववृत्तेर्विषयीभवति। किन्त्वाश्रयमात्रं भवति, उपादानकारणत्वादन्तःकरणस्य स्ववृत्तिं प्रति।

(६०) **अनेकसाक्षिणामेकेन ब्रह्मणैक्यासंभवः**—एवं चान्तः-करणतद्धर्माणां केवलसाक्षिवेद्यत्वमते साक्षिण एकत्वाङ्गीकारो न युज्यत एव। पूर्वमेव प्रदर्शितरीत्या एकेन साक्षिणा यदा एकान्तःकरणस्थसुखदुःखादयो विषयीक्रियन्ते तदा सर्वान्तःकरणगतसुखदुःखादेरपि विषयीकरणापत्तेरनिवार्यत्वात्। लोके तथाऽननुभवादनेके साक्षिण इत्येवाभ्युपगन्तव्यम्। साक्षिण अनेकत्वपक्षे यथा न दोषस्तथोक्तमेव प्राक्। तथा चानेकसाक्षिणामेकेन ब्रह्मणैक्यं न युज्यत एव।

(आ. ६१-६५) **विषयविषयकाक्षेपाणां समाधानानि**—

(६१) **साक्षिस्वरूपम्**—यदुक्तं जीवो रागद्वेषादिक्लेशविशिष्टः, तद्रहितश्च ब्रह्म; तस्मात् तयोर्जीवब्रह्मणोरैक्यरूपो विषयो ग्रन्थस्य न सिद्ध्येदिति—यद्यपि तत्सत्यमेव, तथापि रागादिवियुक्तसाक्षिणो ब्रह्मणैक्यं युज्यत एव। न च कर्तृत्वभोक्तृत्वादिधर्मविशिष्टजीवादन्यः साक्षी वन्ध्यासूनुसमत्वान्नास्तीति वाच्यम्, उपहितस्य साक्षित्वात्। कर्तृत्वभोक्तृत्वादिरूपसंसारिविशेषणानां यो विशेष्यांशः स एव **साक्षीत्युच्यते**। तादृशसाक्षिनिषेधे, संसारिणो विशेष्यांशापलापे कर्तृभोक्तृस्वरूपसंसारिनिषेध एव पर्यवस्येत्। एकस्यैव चैतन्यस्य साक्षित्वे विवक्षितेऽन्तःकरणमुपाधिर्भवति। तस्यैव कर्तृत्वभोक्तृत्वविशिष्टजीवत्वे विवक्षितेऽन्तःकरणं विशेषणञ्च भवति। विशेषणेन युक्तं विशिष्टमुपाधिना युक्तमुपहितमिति चोच्यते।

कार्यानन्वयित्वे सति विद्यमानत्वे सति व्यावर्तकः उपाधिः[1]। यथा न्यायमते कर्णगोलकान्तर्गत आकाशः श्रोत्रेन्द्रियमित्युच्यते। तत्र कर्णगोलकं श्रोत्रस्योपाधिः, यतः कर्णगोलकं स्वावच्छिन्नमाकाशं श्रोत्रेन्द्रियत्वेन बोधयित्वा स्वयं तेनासंबद्धं भवति। तस्मात्कर्णगोलकं श्रोत्रस्योपाधिः। एवमन्तःकरणमपि स्वोपहितं चैतन्यं साक्षित्वेन बोधयित्वा स्वयं तेनासंबद्धं वर्तते। तस्मादन्तःकरणं साक्षिण उपाधिरिति, अन्तःकरणस्थचैतन्यमात्रं साक्षीति च सिद्ध्यति।

(६२) **जीवस्वरूपम्**—कार्यान्वयित्वे सति विद्यमानत्वे सति व्यावर्तकं **विशेषणम्**[2]। यथा 'कुण्डली आगतः' इत्यत्र कुण्डलं

---

१. यद्वस्तु स्वसमीपस्थं वस्त्वन्तरं व्यावर्तयति, अपि तु स्वयं तेन न संबध्यते, स उपाधिरित्युच्यते।

२. स्वात्मना सहैव वस्तुनोऽवभासकं विशेषणमित्युच्यते।

विशेषणं, स्वविशिष्टस्यैव पुरुषस्यागमनक्रियाकर्तृत्वेन बोधकत्वात्। यथा वा 'नीलं घटमपश्यम्' इत्यत्र नीलवर्णो विशेषणं, घटस्येव नीलवर्णस्यापि दर्शनक्रियायां कर्मत्वेनान्वयात्। तथाऽन्तःकरणमपि कर्तृत्वभोक्तृत्वविशिष्टजीवचैतन्यस्य विशेषणं, स्वावच्छिन्नचैतन्ये कर्तृत्वभोक्तृत्वव्यवहारास्पदत्वस्य बोधनात्। तस्मात्संसारिणो जीवस्यान्तःकरणं विशेषणम्। तथा चान्तःकरणं तदवच्छिन्नचैतन्यं चैकीकृत्य **संसारीति** व्यपदेशः। अयञ्चोत्तरत्र स्पष्टीक्रियते।

(६३) **ऐक्योपपत्तिः**—रागद्वेषादयः क्लेशाः संसारिण्येव वर्तन्ते, न तु साक्षिणि। तत्रापि संसारिणो विशेषणीभूतान्तःकरणमेवाश्रितास्ते, न तु विशेष्यभूतचैतन्यम्। संसारिणो विशेष्यभूतचैतन्यमेव साक्षीति व्यवह्रियते। एकमेव चैतन्यमन्तःकरणविशिष्टञ्चेत् संसारीत्युच्यते, तद्विरहितं चेत् **साक्षीति** च। तस्मात्साक्षिस्वरूपस्य, संसारिणो विशेष्यस्वरूपस्य च शब्दभेदं विना न कोप्यर्थतो भेदः। यदि विशेष्यस्वरूपेऽपि क्लेशा अङ्गीक्रियेरन् तर्हि साक्षिणोऽपि तेऽङ्गीकृताः स्युः। न चैतदिष्टम्। "साक्षी चेता केवलो निर्गुणश्च," (श्वे 6-11) "न लिप्यते लोकदुःखेन बाह्यः," (क. 2-2-11) "असङ्गो ह्ययं पुरुषः," (4-3-15 and 16) "स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्," (बृ. 4-4-22) "न वर्धते कर्मणा नो कनीयान्" (बृ. 4-4-23) इत्यादिश्रुतिभ्यः साक्षिणो न क्लेशगन्धोप्यस्तीति वेदान्तसिद्धान्तात्। अतः संसारिणो विशेष्यस्वरूपे न क्लेशाः सन्ति, किन्तु विशेषणीभूतान्तःकरणमात्रे। "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव," (बृ. 1-5-3.) "कामा येऽस्य हृदि श्रिताः," (बृ. 4-4-7) (क. 2-3-14) "अकामं रूपं शोकान्तरम्," (बृ. 4-3-21.) "तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति" (बृ. 4-3-22) इत्यादिश्रुतिभ्यः,

"रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः" ॥ (अ. बो. 23.)

इति वृद्धवचनाच्च रागादयो बुद्धिधर्मा एव, न तु जीवात्मधर्माः इत्युक्तम्।

तथा चान्तःकरणविशिष्टस्य जीवस्य ब्रह्मणा सहैक्यासंभवेप्यन्तःकरणोपहितसाक्षिणस्तत्संभवत्येव।

(६४) **साक्षिणो नानात्वेऽप्येकेन ब्रह्मणैक्यं संभवति**—यदुक्तं साक्षिणोऽनेकत्वादेकत्वाच्च ब्रह्मणः, अनेकसाक्षिणामेकेन ब्रह्मणैक्यं न युज्यते, यदि युज्यते तर्हि ब्रह्मण इव साक्षिणोऽपि सर्वशरीरवर्तित्वव्यापकत्वैकत्वसिद्ध्या युगपत्सर्वशरीरेषु सुखदुःखसाक्षात्कारप्रसङ्ग इति, तन्न। यतः साक्षी द्विविधः, ईश्वरसाक्षी जीवसाक्षी चेति। तत्राद्य एक एव। द्वितीयोऽनेकः परिच्छिन्नश्च, तथापि व्यापकब्रह्मणो न भिन्नः। यथा घटाकाशो नाना परिच्छिन्नोऽपि महाकाशादनन्यतया महाकाशस्वरूप एव भवति, तथा जीवसाक्षी नाना परिच्छिन्नोऽपि तत्त्वतो ब्रह्माभिन्नतया ब्रह्मैव भवति।

(६५) **सुखदुःखादयो वृत्त्यारूढसाक्षिविषयाः**—सुखदुःखादयोऽन्तःकरणवृत्तिं विना साक्षिविषयीभवन्तीति यदुक्तं, नैतदस्ति। यद्यपि सुखदुःखादयः साक्षिभास्याः, ते च साक्षिणो नाना; तथापि न केवलः साक्षी सुखदुःखादीन् भासयति, किन्तु वृत्तिद्वारैव। तथा हि, यदाऽन्तःकरणस्य सुखदुःखाद्याकारः परिणामो भवति, तदैवान्तःकरणस्यान्यापि वृत्तिः सुखदुःखादिविषयकज्ञानाकारा भवति। तादृशज्ञानरूपवृत्त्यारूढः साक्षी सुखदुःखादीन् प्रकाशयति। अनया रीत्या सुखदुःखादयः साक्षिणो विषयीभवन्ति, वृत्तिमन्तरा तु न केवलसाक्षिणो विषयीभवन्ति; इति हि प्राचीनग्रन्थकारा आहुः। **अत्रैतदाकूतम्**—केवलेऽप्याकाशे 'घटाकाश' इति नाम जलाहरणादिकं कार्यं च घटरूपोपाधिदृष्टिमनु प्रतीयते, न तु तामुपाधिदृष्टिं विना। उपाधिदृष्ट्यभावे त्वाकाश एव केवलः प्रतीयते। अतो घटाकाशोऽपि महाकाश एव, विकारस्य वाचारम्भणमात्रत्वेन मिथ्यात्वात्। एवमेव साक्षाच्छुद्धचैतन्यमात्रे 'साक्षी,' इति नाम सुखदुःखादिधर्माश्रयान्तःकरणप्रकाशकत्वरूपकार्यञ्चान्तःकरणरूपोपाधिदृष्टिमनुसृत्यैव प्रतीयते, न तु तां विना। उपाधिदृष्ट्यभावे तु चिन्मात्रंब्रह्मैव केवलं भासते। अतः साक्ष्यपि ब्रह्मैव। ईदृगभिप्रायेणैवोक्तं 'साक्षी एक' एवेति, यत उपाधिप्रयुक्तभेददृष्टिमन्तरा साक्षिणोऽनेकत्वपरिच्छिन्नत्वादिकं न स्वतोऽवभासते। अयमेव साक्षी जीववा-

१. यथा स्वतः शुभ्रे पत्रे मषीरेखाभिरक्षराणीव भासन्ते। वस्तुतस्त्वक्षराणां पत्रस्य च शब्दतः केवलं भेदः। मषीरूपोपाधिदृष्टिमन्तरा पृथगक्षराणामनुपलम्भात्, शुद्धपत्रमात्रस्य चाशिष्टत्वाच्च। तथाऽन्तःकरणरूपोपाधिजनितभेददृष्टिमन्तरा साक्षीति नामापि न सिद्ध्यति, शुद्धचिन्मात्रमेवास्ते।

चकत्वंपदलक्ष्यार्थः। उपरिष्टादेतत्स्पष्टीक्रियते। इत्थं **जीवब्रह्मैक्यमस्य ग्रन्थस्य विषय इति युक्तमेवोक्तम्।**

**(आ. ६६-८२) प्रयोजनविषयकाक्षेपाः—**

**(आ. ६६-७२) न ज्ञानेन बन्धनिवृत्तिरित्याक्षेपः—**

**(६६) बन्धः सत्य इत्याक्षेपः**—अहङ्कारादिदेहान्तानात्मभूतदृश्यवस्तुजातं सर्वमपि बन्ध इत्युच्यते। स बन्धो यद्यध्यस्तः स्यात्तर्हि ज्ञानेन निवर्त्येत। अनध्यस्तश्चेन्नैव ज्ञानेन निवर्त्येत। ज्ञानस्य ह्येषः स्वभावः—यत् स्वविषयीभूतवस्तुनिष्ठाज्ञानतत्कार्याध्यासनिवर्तकत्वमिति। यथा रज्जुसाक्षात्कारः स्वविषयीभूतरज्ज्वध्यस्तसर्पादीन् रज्ज्वज्ञानञ्च निवर्तयति। भ्रमज्ञानविषयीभूतमिथ्यावस्तु तद्विषयकभ्रान्तिज्ञानं चाध्यास[1] इत्युच्यते। यत्र यद्वस्तु मिथ्यात्वमन्तरा परमार्थतो वर्तते, नास्ति तस्य ज्ञानान्निवृत्तिः। एवमात्मन्यप्यहङ्कारादिबन्धो यद्यध्यस्तः स्यात् तर्हि ज्ञानेन निवर्त्येत। आत्मनि मिथ्याभूतबन्धाध्याससामग्री नास्ति, तथाप्यात्मनि प्रतीयते च बन्धः। तस्माद्बन्धः सत्य एव भवितुमर्हति। सत्यत्वादेव ज्ञानेन बन्धनिवृत्त्याशा निरर्थिकैव।

**(६७) अध्याससामग्र्यः**[2]— (1) सत्यवस्त्वनुभवजन्यसंस्कारः, (2) प्रमातृ[3]दोषाः, (3) प्रमाण[4]दोषाः, (4) प्रमेय[5]दोषाः, (5) अधिष्ठानविशेषाज्ञानं तत्सामान्यज्ञानं चेत्येता अध्याससामग्र्यः। विना त्वाभिरध्यास एव न सिद्ध्येत्। शुक्तिकायां रजताध्यासः, रज्ज्वां सर्पाध्यासश्च जायते। स च यस्य परमार्थसत्यरजतसर्पाद्यनुभवाहितसंस्कारो वर्तते तस्यैव जायते,

---

१. अध्यासो नामातस्मिंस्तद्बुद्धिः—अतस्मिन्=कालत्रयेऽपि सर्पाभाववति रज्ज्वादौ, तद्बुद्धिः=प्रातिभासिकसर्पादिबुद्धिः। तादृशसर्पादि तज्ज्ञानं चाध्यास इत्युच्यते। अयञ्चाध्यासो द्विविधः—अर्थाध्यासो ज्ञानाध्यासश्चेति। भ्रान्तिज्ञानविषयीभूतमिथ्यासर्पादिर**र्थाध्यासः**। तादृशमिथ्यार्थज्ञानं **ज्ञानाध्यासः**। इदञ्च ज्ञानं परोक्षत्वापरोक्षत्वधर्मभेदाद्विविधं। तच्च विषयाधीनं। ज्ञानाध्यास एव 'मिथ्याज्ञानं' 'भ्रान्तिः' इति चोच्यते। अर्थाध्यासोऽपि स्वरूपाध्याससंसर्गाध्यासभेदेन द्विविधः। अज्ञानतत्कार्यादीनां चेतने आत्मनि स्वरूपाध्यासः। सच्चिदानन्दरूपस्यात्मनोऽज्ञानतत्कार्यादौ संसर्गाध्यासमात्रम्।

(२) सामग्री नाम=कारणकलापः। यथा पाकस्य चुल्ल्युदककाष्ठादिः।

(३) प्रमाता=जीवः।

(४) प्रमाणम्=इन्द्रियादिकरणम्।

(५) प्रमेयः=विषयः।

तद्रहितस्य तु न; इत्यतः सत्यवस्तुप्रमाहितसंस्कारोऽध्यासहेतुः। शुक्तिकायां सर्पाध्यासस्य रज्जौ रजताध्यासस्य चानुदयात्प्रमेयगतसादृश्यदोषोऽप्यध्यासहेतुर्भवति। एवं प्रमातृगतलोभभयादिदोषाः, चक्षुरादिप्रमाणगतकाचकामलादिदोषाश्चाध्यासहेतवः। शुक्तिकायां रजताध्याससमये 'इयम्' इत्यधिष्ठानसामान्यज्ञाने सति 'इयं शुक्तिः' इति विशेषज्ञानेऽसति चाध्यासो भवति। 'शुक्तिः' इति विशेषज्ञाने सति वा 'इयम्' इति सामान्यज्ञानेऽसति वा अध्यासो नैव जायते। तस्मादधिष्ठानसामान्यज्ञानं तद्विशेषाज्ञानं चाध्यासहेतुः। पूर्वोक्तसामग्रीणां पञ्चानामन्यतमाभावे नाध्यासः सिद्ध्यति। घटोत्पत्तौ कुलालदण्डचक्रमृत्सलिलादयः सामग्र्यः। यथैतेषामन्यतमाभावे नैवोत्पद्यते घटस्तथाऽध्याससामग्रीणामन्यतमाभावेऽप्यध्यासो नोत्पद्येत। तस्मात्पूर्वोक्तानां पञ्चानां सामग्रीणामावश्यकत्वात्तासां सर्वासां सत्त्व एवाध्यासो जायेत, नान्यथा।

(६८) **बन्धाध्यासे प्रथमसामग्र्यभावः**—बन्धस्याध्यस्तत्वसाधको नैकोऽपि हेतुः संभवति। तथा हि, यद्यन्यत्र कदाचित्सत्यबन्धोऽनुभूतः स्यात्तदा तत्प्रमानुभवजन्यसंस्कारवशादात्मनि बन्धाध्यासो जायेत, न तु तदस्ति। वेदान्तसिद्धान्ते आत्मनोऽन्यस्य सर्वस्यापि मिथ्यात्वेन सत्यस्य वस्तुनोऽणुमात्रस्याप्यभावनिश्चयात। तस्मात् सत्यबन्धानुभवजनितसंस्काराभावादात्मनि बन्धाध्यासो न युज्यते।

(६९) **द्वितीयतृतीयसामग्र्यभावः**—प्रमातृप्रमाणदोषावपि बन्धाध्यासकारणभावं न भजतः। प्रमात्रादिनिखिलप्रपञ्चोऽध्यासरूप इति, स चाध्यास एव बन्ध इति च वेदान्तसिद्धान्तः। तथा च बन्धाध्यासात्पूर्वं प्रमातृप्रमाणस्वरूपस्यैवासिद्धेस्तद्गतदोषाणां सुतरामसिद्धिः। तस्मात्प्रमातृप्रमाणदोषासिद्धेर्बन्धाध्यासो न सिद्ध्यति।

---

(१) रज्जौ, सर्पवत्कौटिल्यदीर्घत्वादि, शुक्तौ च रजतवच्चाकचक्यादि च प्रमेयगतसादृश्यदोषः।

(२) यो भ्रान्तिदशायमपि प्रतिभाति, यदभावे भ्रान्तिरेव न स्यात् स एव सामान्यांशः आधार इति चोच्यते।

(३) यो भ्रान्तिदशायां न भाति, यद्भाने भ्रान्तिर्निश्शेषं नश्येत्, स एव विशेषांशोऽधिष्ठानमिति चोच्यते।

(४) चैतन्यरूपब्रह्मणोऽन्यस्याज्ञानतत्कार्यभूतस्थूलसूक्ष्मप्रपञ्चस्य द्वैतमात्रस्य सर्वस्यापि दृश्यस्य चैतन्ये ब्रह्मण्यध्यस्ततयाऽन्तःकरणात्मकप्रमातुरिन्द्रियात्मकप्रमाणस्य च दृश्यान्तर्गतत्वेन प्रमातृप्रमाणे अप्यध्यस्ते एव। तस्मात्प्रपञ्चाध्यासात्पूर्वं प्रमात्रादयः प्रपञ्चाध्यासकारणत्वेन न सिद्ध्यन्तीत्युपनिषत्सिद्धान्तः।

(७०) **चतुर्थसामग्र्यभावः**—बन्धात्मनोरन्योन्यं सादृश्यरूपप्रमेय-दोषोऽपि नास्ति, तमःप्रकाशवद्विरुद्धस्वरूपत्वात्तयोः । आत्मा=प्रत्यक् आन्तरश्च ; बन्धः=अनात्मा पराक् बाह्यश्च । आत्मा विषयी=प्रकाशकः ; बन्धस्तु विषयः=प्रकाश्यो जडश्च । प्रतीचि पराचः, पराचि प्रतीचश्चा-ध्यासो न संभवति । पुत्राद्यपेक्षया स्वदेहः प्रत्यक्, स्वदेहे पुत्रादीनां पुत्रादौ स्वदेहस्य चाध्यासो न भवति । तथा विषये विषयिणः विषयिणि विषयस्य चाध्यासो न भवति । विषयात्मकघटादिषु दीपादिविषयिणां, दीपादौ वा घटादीनां नाध्यासः । एवमेव सादृश्याभावात्प्रतीचि विषयिण्यात्मनि पराचो विषयस्यानात्मनो बन्धस्य नैवाध्यासः सम्भवति । प्रत्यक्पराचोर्यथा परस्परं विरोधः, एवं विषयविषयिणोरपि । तस्मादीदृशयोरात्मानात्मनोः सादृश्याभावादात्मनि बन्धाध्यासो न शक्यते वर्णयितुम् ।

(७१) **पञ्चमसामग्र्यभावः**—बन्धाध्यासे अधिष्ठानविशेषांशाज्ञानमपि न संभवति, बन्धाधिष्ठानब्रह्मणः स्वयंप्रकाशज्ञानस्वरूपत्वात् । "यत्साक्षाद-परोक्षात् ब्रह्म" (बृ. 3-4-1.) and (बृ. 3-5-1.) इति श्रुतेः । एतादृशे ब्रह्मणि, आदित्ये अन्धकारवदज्ञानं न कथञ्चन युज्येत । यथा प्रकाशात्मकसवितुरन्धकारस्य च विरोधोऽपरिहार्यः एवं स्वप्रकाशचैतन्यात्मकब्रह्मणस्तमोरूपाज्ञानस्य च परस्पर-विरोधोऽस्ति । तस्मात्स्वयंप्रकाशरूपत्वादधिष्ठानस्य तद्विशेषांशाज्ञानासंभव एव ।

(७२) **ब्रह्मणो निर्विशेषत्वादप्यध्याससामग्र्यभावः**—इतोऽपि ब्रह्मणि बन्धाध्यासो न संभवति । यतोऽत्यन्तमविज्ञाते वा विशेषतो ज्ञाते वाधिष्ठानेऽध्यासो न संभवति । किन्तु विशेषतोऽज्ञाते सामान्यतो ज्ञात एवाधिष्ठानेऽध्यासो जायेत । ब्रह्म हि सामान्यविशेषादिधर्मशून्यं निर्विशे-षमिति च वेदान्तसिद्धान्तः । तत्कथं ब्रह्म विशेषतोऽज्ञातं सामान्यतो ज्ञातमिति च वक्तुं शक्यते । अपि चाध्यासलोभेन सामान्यविशेषधर्मकमेव ब्रह्मेति यद्यभ्युपगम्येत, तर्हि निर्विशेषं परं ब्रह्मेत्यभ्युपगमहानिः स्यात् । एवं च निर्विशेषस्वप्रकाशस्वरूपे ब्रह्मणि विशेषाज्ञानस्य सामान्यज्ञानस्य चासंभ-वादध्यासो नैव युज्यते । तस्माद्ब्रह्मणि बन्धोऽध्यस्त इति न शक्यत एव वक्तुम् । प्रत्युत बन्धः सत्य इत्येव वक्तव्यम् । सत्यश्चेद्बन्धो न ज्ञानान्नि-वर्तेत। तस्मादस्य ग्रन्थस्य ज्ञानाद्बन्धनिवृत्त्यात्मकमोक्षरूपप्रयोजनकथनमसङ्गतं स्यात् ।

(आ. ७३-८१) कर्मणैव मोक्षः सिद्ध्यतीत्यैकभविकवादमवलम्ब्याक्षेपः—

(७३) **कर्मणोऽवश्यकर्तव्यत्वम्**—पूर्वं ज्ञानमात्रान्न सत्यबन्धनिवृत्तिरित्युक्तम्। अधुना त्वैकभविकवादरीत्या कर्मणैव मोक्षसिद्धिरित्यभिप्रायः प्रपञ्च्यते। सत्यबन्धो न ज्ञानमात्रान्निवर्ततेति पूर्वं साधितत्वान्मुमुक्षुणा नित्यं नैमित्तिकं च कर्मैव यावज्जीवं कर्तव्यम्।

(७४) **कर्मविवरणम्**—कर्म हि विहितं प्रतिषिद्धञ्चेति द्विविधम्। तत्र पुरुषप्रवृत्तिमधिकृत्य यद्वेदेन विधीयते **तद्विहितम्**। वेदेनैव यत्प्रतिषिध्यते **तत्प्रतिषिद्धम्**। स्वभावसिद्धरागद्वेषादिवशादनुष्ठीयमानास्तु चेष्टारूपाः क्रिया न कर्माणीत्युच्यन्ते। प्रवृत्तिनिवृत्त्यर्थं वेदोक्ता एव क्रियाः कर्माणीत्युच्यन्ते, न तूदासीनक्रियाः[1] सर्वा अपि। तस्माद्द्विप्रकाराण्येव कर्माणि। न ततोऽधिकानि।

(७५) **विहितकर्मविवरणम्**—विहितं कर्म चतुर्विधम्। (1) नित्यं (2) नैमित्तिकं (3) काम्यं (4) प्रायश्चित्तं चेति। तत्र पापपरिहारार्थं विहितं कर्म **प्रायश्चित्तमित्युच्यते**। यथा प्रमादात्[2] कश्चन सन्यासी द्रव्यार्जनेन पापं करोति यदि, स तत्पापक्षयार्थमर्जितं धनं सर्वं दूरतस्त्यक्त्वा त्रिरात्रं यदुपवसति, तत्तस्य पापस्य प्रायश्चित्तं भवति। फलार्थं विहितं कर्म **काम्यम्**। यथा वृष्टिकामेन क्रियमाणकारीर्यादियागः, स्वर्गाद्यर्थिना क्रियमाणाग्निहोत्रज्योतिष्टोमादिकं च काम्यं कर्म। यस्याननुष्ठानात्प्रत्यवायः श्रूयते, अनुष्ठानाच्च पुण्यापुण्यफलाभावः, यच्च न नित्यमेव विहितं, किन्तु यत्किञ्चिन्निमित्तमधिकृत्यैव विधीयते तत्कर्म **नैमित्तिकम्**। यथा सूर्योपरागादिनिमित्ते क्रियमाणश्राद्धस्नानादिकं, वयोवृद्धजातिवृद्धाश्रमवृद्धविद्यावृद्धधर्मवृद्धज्ञानवृद्धादीनामागमनेऽवश्यकर्तव्यप्रत्युत्थानादिकं च कर्म **नैमित्तिकम्**। अत्र विद्याशब्देन शास्त्रजन्यपरोक्षज्ञानं ज्ञानशब्देनापरोक्षज्ञानञ्च ग्राह्यम्। पूर्वोक्तेषु यथाक्रममुत्तरोत्तरो वरिष्ठः। यस्याननुष्ठानात्प्रत्यवायो भवति, अनुष्ठानाच्च न सुकृतं भवति, यच्च नित्यतया

---

१. वेदेनानिषिद्धमविहितं च सदरागद्वेषतःकृतं गमनागमनशौचादि स्वाभाविकं सर्वप्राणिसाधारणं कर्म **उदासीनमिति** कथ्यते।

२. अवश्यानुष्ठेयकर्मणो विस्मरणं, सत्यामपीच्छायामननुष्ठानं वा **प्रमादः**।

विहितम्, **तन्नित्यं कर्म**। यथा स्नानसन्ध्याग्निहोत्रादिकम्। इत्थं चतुर्विधानि विहितकर्माणि। निषिद्धेन सह पञ्चविधानि कर्माणि भवन्ति।

**(आ. ७६-८०) मुमुक्षुणा अनुष्ठेयकर्मणां निरूपणम्—**

(७६) **मुमुक्षुणा नित्यनैमित्तिककर्माणि कर्तव्यानि**—मुमुक्षुणा काम्यनिषिद्धानि कर्माणि सर्वथा नानुष्ठेयानि; काम्यकर्मणां देवाद्युत्तमजन्महेतुत्वात्, निषिद्धानां कर्मणां कृमिकीटस्थावरादिनीचजन्महेतुत्वाच्च। तस्मान्मुमुक्षुस्तानि काम्यनिषिद्धानि कर्माणि वर्जयित्वा सदा नित्यान्यनुतिष्ठेत्, सति च निमित्ते नैमित्तिकान्यपि। अन्यथा नित्यनैमित्तिकाननुष्ठायी प्रत्यवेयात्, प्रत्यवायेन तिर्यगादिनीचयोनिं च प्राप्नुयात्। तस्मात् पापपरिहाराय नित्यनैमित्तिकानि कर्माण्यवश्यमनुष्ठेयान्येव। नित्यनैमित्तिककर्मणां तदननुष्ठानप्रयुक्तप्रत्यवायपरिहार एव फलम्, न तु फलान्तरमस्ति। तस्मादवश्यं नित्यनैमित्तिककर्माणि कुर्यादेव मुमुक्षुः।

(७७) **मुमुक्षुणा प्रायश्चित्तकर्माप्यनुष्ठेयम्**—यः प्रमादात्पापं कर्म कदाचित्सकृत्प्रसङ्गात्समाचरेत् तद्दोषपरिहाराय तदुक्तप्रायश्चित्तं तेनानुष्ठेयम्। इह जन्मनि निषिद्धाचरणासंभवेऽपि जन्मान्तरार्जितपापपरिहाराय साधारणप्रायश्चित्तमवश्यं सर्वैरनुष्ठेयम्। प्रायश्चित्तं च द्विविधं साधारणमसाधारणञ्चेति। अस्य पापस्येदं प्रायश्चित्तमिति शास्त्रविहितं **यत्तदसाधारणं**, यथा पूर्वोक्तोपवासादि। सर्वपापक्षयाय शास्त्रविहितं प्रायश्चित्तं **साधारणं**, यथा गङ्गादिपुण्यतीर्थस्नानेश्वरनामोच्चारणपञ्चाक्षरादिजपोपवासादि। एवं शास्त्रेणैव द्विविधमपि प्रायश्चित्तं विहितम्। तत्र चेह जन्मनि बुद्धिपूर्वकृतपापपरिहाराय शास्त्रोक्तासाधारणप्रायश्चित्तं कार्यम्। इह जन्मनि जन्मान्तरे वाऽनुष्ठितस्याज्ञातस्य सर्वस्य पापस्य परिहारार्थं शास्त्रविहितसाधारण प्रायश्चित्तमनुष्ठेयम्। असाधारणप्रायश्चित्तस्य ह्ययं स्वभावः—यत्पापनिवृत्तये यत् प्रायश्चित्तत्वेन विहितं तेन तत्पापमवश्यं निवर्तते, तद्भिन्नपापनिर्हरणे तदसमर्थमिति। इदमित्थमेवेति जन्मान्तरानुष्ठितपापापरिज्ञानात्तन्निवृत्तये साधारणप्रायश्चित्तमेवानुष्ठेयम्।

(७८) **साधारणप्रायश्चित्तस्य द्विविधं फलम्**—साधारणप्रायश्चित्तेन सर्वाण्यपि पापानि निवर्तन्ते। गङ्गास्नानादिसाधारणप्रायश्चित्तानि न केवलं प्रायश्चित्तत्वेन भवन्ति, किन्तु काम्यानि भवन्ति कामिनां, प्रायश्चित्तरूपाणि च

भवन्ति पापक्षये । गङ्गास्नानेश्वरनामोच्चारणादीन्युत्तमदेवादिलोकप्राप्तिहेतुत्वेन शास्त्रविहितत्वात् काम्यानि, पापपरिहाराय विहितत्वात्प्रायश्चित्तरूपाण्यपि । यथाऽश्वमेधक्रतुर्ब्रह्महत्यादिपापं निवर्तयति, स्वर्गादिकाम्यफलं च प्रयच्छतीत्युभयात्मकः, एवं गङ्गास्नानेश्वरनामोच्चारणादीन्यपि पापपरिहारहेतुत्वात् प्रायश्चित्तात्मकानि, उत्तमलोकप्राप्तिहेतुत्वाच्च काम्यानीत्युभयात्मकान्युच्यन्ते । गङ्गास्नानादिकं कामिनां पापपरिहारद्वारोत्तमलोकञ्च प्रयच्छति । उत्तमलोकप्राप्तिमनिच्छतो मुमुक्षोस्तु पापपरिहारमात्रं करोति । तस्मात्सकामेन कृतगङ्गास्नानादि प्रायश्चित्तरूपं काम्यं च भवति, मुमुक्षुणा कृतं तु केवलप्रायश्चित्तरूपम् । यथा वेदान्तिनां मते सर्वाण्यपि कर्माणि सकामस्य संसारकारणानि, निष्कामस्यान्तःकरणशुद्धिद्वारा मोक्षकारणानि च भवन्ति ; तथा गङ्गास्नानेश्वरनामोच्चारणादिकं कर्म सकामस्य काम्यं प्रायश्चित्तरूपं च भवति, निष्कामस्य तु मुमुक्षोः केवलप्रायश्चित्तरूपम् । तस्मान्मुमुक्षुणा साधारणप्रायश्चित्तमनुष्ठेयम् । इत्थमेव जन्मान्तरसञ्चितं सर्वमपि पापं ज्ञानं विनैव नश्यति ।

(७९) **मुमुक्षोः सञ्चितं काम्यकर्म न फलहेतुः**—किञ्च मुमुक्षोर्जन्मान्तरानुष्ठितानि काम्यकर्माणि वन्ध्यावत् फलं न प्रसुवते । यथा वेदान्तसिद्धान्ते कर्मानुष्ठानकाले सत्यामेव फलेच्छायां तत्कर्म स्वर्गादिलोकप्राप्तिहेतुर्भवति, फलेच्छाऽभावे तु स्वर्गादिफलप्राप्तिहेतुर्न भवति ; तथैकभविकवादेऽपि कर्मणः सिद्ध्यनन्तरमपि पुरुषेच्छैव फलहेतुः । यद्यपि जन्मान्तरे फलेच्छया काम्यं कर्मानुष्ठितं, तथापीदानीं तस्यैव पुरुषस्य मुमुक्षुत्वेन फलेच्छानिवृत्तौ तदीयसञ्चितं काम्यं न फलहेतुर्भवति । यथा कश्चन दरिद्रः कञ्चन धनवन्तं धनेच्छया आराधयति, पश्चात्कतिपयकालानन्तरं येन केनचिद्धेतुना भाग्योदये धनेच्छा तस्य व्यपगच्छति, तदानीं न तस्य धनिकाद्धनप्राप्तिरूपमाराधनफलं जायते ; तथा जन्मान्तरीयकर्मभ्यः काम्येभ्यः फलेच्छाविरहान्मुमुक्षोर्न फलं जायते । तस्मात् केवलकर्मणा मोक्षो जायेतैव ।

(८०) **मुमुक्षोः प्रारब्धं भोगेन नश्यति**—वर्तमानजन्मनि काम्यनिषिद्धकर्माननुष्ठानादूर्ध्वाधोलोकप्राप्तिर्न संभवति । जन्मान्तरीयाणां प्रारब्धफलानां निषिद्धकाम्यकर्मणां भोगेनैव क्षयः । नित्यनैमित्तिककर्माननुष्ठानजन्यप्रत्यवायरूपपापं तदनुष्ठानेन मुमुक्षोर्न जायते । जन्मान्तरसञ्चितनिषिद्धकर्माणि साधारणप्रायश्चित्तेन निवर्तन्ते । जन्मान्तरसञ्चितकाम्यकर्माणि तु

मुमुक्षोरिच्छाभावादेव फलं न प्रयच्छन्ति। तस्मान्मुमुक्षुणा नित्यनैमित्तिकसाधारणप्रायश्चित्तरूपाणि कर्माण्यनुष्ठेयानि। वर्तमानजन्मनि बुद्धिपूर्वमाचरितपापकर्मक्षयार्थमसाधारणप्रायश्चित्तमप्यनुष्ठेयमेव।

(८१) **मुमुक्षोः प्रायश्चित्तमप्यनावश्यकम्**—अथवा मुमुक्षुणा नित्यनैमित्तिककर्ममात्रमनुष्ठेयम्, प्रायश्चित्तरूपं कर्म त्यक्तुं शक्यते। तथाहि, (1) मुमुक्षोः सञ्चितनिषिद्धकाम्यकर्माणि निष्फलानि भवन्ति। यथा वेदान्तिनां मते ज्ञानिनः सञ्चितकर्माणि नश्यन्तीत्युच्यते, तथैतन्मतेऽपि निषिद्धानि काम्यानि च वर्जयित्वा नित्यनैमित्तिकान्यनुतिष्ठतोऽस्य मुमुक्षोः सञ्चितानि सकलान्यपि कर्माणि क्षीयन्ते। (2) अथवा सञ्चितानि काम्यनिषिद्धानि कर्माणि सकलान्यपि सम्भूयैकमेवान्यज्जन्म प्रयच्छेयुर्मुमुक्षोः। अतो मुमुक्षुणा वर्तमानजन्मनोऽन्यदेकमेव जन्म प्रतिपत्तव्यं भवेत्। (3) अथवा योगी कायव्यूहेनेव, मुमुक्षुरपि भाविजन्मन्येकस्मिन्नेव सकलसञ्चितकर्मभिर्युगपदारब्धानन्तशरीरैर्जन्मान्तरसञ्चिताशेषकर्मणां फलमनुभवितुं शक्नुयात्। (4) अथवा नित्यनैमित्तिकानुष्ठानजनितक्लेश एव जन्मान्तरसञ्चितनिषिद्धकर्मणां फलं भवति। अतो न जन्मान्तरसञ्चितनिषिद्धं कर्म पुनर्जन्महेतुर्भवति। सञ्चितकाम्यकर्म निखिलमपि भाव्येकस्मिन्नेव जन्मनि नानाशरीरारम्भद्वारा स्वफलं सर्वं दास्यति। तज्जन्मनि मुमुक्षोः क्लेशलेशोऽपि न भवेत्, तस्य जन्मनः पुण्यफलत्वात्सुखमेव जायेत; यतो जन्मान्तरसञ्चितेन निखिलेन विहितेन कर्मणा तज्जन्म लब्धम्। सञ्चितं सर्वमपि निषिद्धं कर्म नित्यनैमित्तिकानुष्ठानजनितक्लेशेनैव प्रकृते जन्मन्येकस्मिन्नेव नश्यति। इत्थं विनैव प्रायश्चित्तं नित्यनैमित्तिककर्माणि मोक्षं प्रदास्यन्ति। तस्मात् सदा नित्यकर्माणि, निमित्ते सति नैमित्तिकानि चावश्य-

(१) साधारणासाधारणप्रायश्चित्तानुष्ठानेऽत्यन्तं श्रममुपलभ्य स्वमते मुमुक्षुर्न प्रविशेदिति मत्वा पूर्वपक्षी मोक्षार्थमुपायान्तरं लघुतया कल्पयति।

(२) "अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि।" इत्यादिशास्त्रविरोधपरिहाराय पूर्वपक्षी समाधत्ते—अथवेति।

(३) अनेकपरस्परविलक्षणजन्मप्रयोजकानेककर्मणां फलमेकस्मिन्जन्मन्यसंभावितमिति शङ्कायां सदृष्टान्तमाह—अथवेति।

(४) यद्यनेकजन्मार्जितसुकृतकर्मफलं सुखरूपं युगपदेकजन्मन्युपभुज्येत, तर्हि दुष्कृतकर्मफलं दुःखमपि भाविजन्मनि भोक्तव्यं भवेदिति मत्वा मुमुक्षुः स्वमते न प्रविशेदिति तत्र प्रवर्तयितुं लाघवादयं पक्ष उपन्यस्यते—अथवेति।

मनुष्ठेयान्येव । शास्त्रीयप्रसिद्ध्या त्वस्य मतस्यैकभविकवाद[1] इति व्यपदेशः ।

(८२) **कर्मणैव बन्धनिवृत्तिसिद्धेरयं ग्रन्थो विफलः**—यदुक्तं अयं ग्रन्थो ज्ञानद्वारा बन्धनिवृत्तिहेतुरिति, नायं समीचीनः सिद्धान्तः । यद्येन जायते नान्येन, तत्तस्य फलमित्युच्यते । यथा रूपज्ञानं नेत्रं विना नान्येन केनचिदपि जायते ; तस्माद्रूपज्ञानं नेत्रस्यैव प्रातिस्विकं फलम् । बन्धनिवृत्तिस्तु एतद्ग्रन्थजनितज्ञानमन्तरा कर्मणैव जायेतेति नास्य ग्रन्थस्य प्रयोजनम् । एवञ्चास्य ग्रन्थस्य प्रयोजनं न सिद्ध्यतीति नास्यारम्भो युक्तः ।

**(आ. ८३-१०६) प्रयोजनविषयकाक्षेपाणां समाधानानि ।**

**(आ. ८३-९८) 'बन्धः सत्यः, स च ज्ञानेन न निवर्तेत' इत्याक्षेपस्य समाधानानि ।**

(८३) **बन्धो मिथ्या**— 'बन्धः सत्यः, न स ज्ञानेन निवर्त्येते' इत्याक्षेपोऽसङ्गतः । बन्धस्य मिथ्यात्वेन ज्ञानैकनिवर्त्यत्वात् ।

(८४) **सत्यवस्तुज्ञानमध्यासहेतुरिति न नियमः**—यदुक्तं 'परमार्थसत्यवस्तुज्ञानं संस्कारद्वारा अध्यासहेतुः । यथा परमार्थसर्पज्ञानं संस्कारद्वारा प्रातिभासिकसर्पाध्यासहेतुः । यदि बन्धोप्येवं सत्यः स्यात् तदा सत्यबन्धज्ञानं स्यात्, तच्च संस्कारद्वाराऽध्यासहेतुः स्यात । न तथाऽद्वैतसिद्धान्तः, सिद्धान्ते आत्मनोऽन्यस्यानात्ममात्रस्यासत्यत्वात् । तस्मात्संस्कारद्वाराऽध्याससामग्रीभूतसत्यबन्धज्ञानस्यासिद्धेर्न बन्धोऽध्यस्त इति वक्तुं शक्यते । किन्तु सत्य' इति—तदयुक्तम् ।

न हि सत्यवस्तुज्ञानमेव संस्कारद्वाराऽध्यासहेतुः, किन्तु वस्तुज्ञानमात्रम् । ज्ञानस्य विषयीभूतं वस्तु सत्यं वा मिथ्या वाऽस्तु, न तत्रादरः । यदि नियमेन संस्कारद्वारा सत्यवस्तुज्ञानमेवाध्यासहेतुरित्यभ्युपगम्येत, तर्हि वक्ष्यमाणोऽध्यासो न घटेत । तथा हि, कश्चित्पुरुषः परमार्थाम्रवृक्षमजानानः ऐन्द्रजालिकप्रदर्शितमिथ्याम्रवृक्षमेव भृशमनुभूय, 'अयमाम्रवृक्ष' इति तद्वचः श्रुत्वा च मिथ्याम्रवृक्षज्ञानसंस्कारसंस्कृतो भवति । तस्य कदाचिदपि केनचिदपि प्रमाणेन मधूकवृक्षविषयकदर्शनश्रवणादिरूपज्ञानमपि नास्ति । स पुरुषो यदृच्छया मार्गमध्ये मधूकवृक्षं कञ्चन दृष्ट्वा तस्मिन् 'आम्रवृक्षोऽयम्', इत्याम्रवृक्षाध्यासं

---

(१) ऐकभविकं नाम=एकमेव जन्म, कर्मैव वा, मोक्षसाधनमिति वादः=कथनम् । कर्मैव मोक्षसाधनमिति प्रतिपादकमतस्य शास्त्रे ऐकभविकवाद इति प्रसिद्धिः ।

करोत्येव । सोऽयमध्यासः पूर्ववादिमतरीत्या न संभाव्येत, तस्य पुरुषस्य सत्याम्रवृक्षविषयकप्रमाहितसंस्काराभावात् । सिद्धान्ते तु, तस्य पुरुषस्यैन्द्रजालिकप्रदर्शितमिथ्याम्रवृक्षज्ञानजसंस्कारस्य सत्त्वान्मधूकवृक्षे आम्रवृक्षाध्यासो भवितुमर्हति । तस्मात्पूर्वपूर्वसजातीयवस्तुज्ञानजन्यसंस्कार एवोत्तरोत्तराध्यासहेतुः । ईदृक्संस्कारजनकं ज्ञानं तद्विषयश्च सत्यो वास्तु मिथ्या वा, नादरस्तत्र । संस्कारद्वारा ज्ञानमेव हेतुः । ज्ञानजन्यसंस्कारो हेतुरिति पक्षेऽपि नार्थतोऽस्ति भेदः । यथो ज्ञानं संस्कारहेतुः, स च संस्कारोऽध्यासहेतुरित्यवसितम् । तस्मात्संस्कारद्वारा'ज्ञानं हेतुरित्युक्तेऽपि ज्ञानजन्यसंस्कार एवाध्यासहेतुरिति सिद्ध्यति ।

**(८५) कारणस्य कार्याव्यवहितपूर्वकालवर्तित्वनियमात्संस्कार एवाध्यासहेतुः**—वस्तुज्ञानमात्रमध्यासहेतुरिति तु न युक्तमेव, कारणस्य कार्याव्यवहितपूर्वकालवर्तित्वनियमात् । तथाहि, घटकारणदण्डचक्रादयो यथा नियमेन घटोत्पत्त्यव्यवहितपूर्वकालवर्तिनो भवन्ति,तथा वस्तुज्ञानमात्रस्याध्यासहेतुत्वे तेनापि नियमेनाध्यासाव्यवहितपूर्वकालवर्तिना भाव्यम् । न तु तथाऽस्ति, सर्पज्ञानात्परं मासानन्तरमपि रज्जौ सर्पाध्यासोत्पत्तिदर्शनात् । वस्तुज्ञानजन्यसंस्कारस्य हेतुत्वे तु न दोषः । सर्पज्ञानस्य मासात्पूर्वं नष्टत्वेऽपि तज्ज्ञानजन्यसंस्कारस्य रज्जौ सर्पाध्यासाव्यवहितपूर्वकालवर्तित्वात् । तस्मात् ज्ञानजन्यसंस्कार एवाध्यासहेतुः । न वस्तुज्ञानमात्रम् ।

**(८६) अत्रैवमाक्षेपः** — कारणेन कार्याव्यवहितपूर्वकालवर्तिना भाव्यमिति नियमो मास्तु । किन्तु कार्यनियतपूर्वकालवर्तित्वमात्रं कारणविशेषणमस्तु । स च पूर्वकालो व्यवहितो वास्त्वव्यवहितो वा । किञ्च, यद्येकान्ततः कार्याव्यवहितपूर्वकालवर्त्येव कारणमिति नियमोऽभ्युपगम्येत, तर्हि विहितं कर्म स्वर्गप्राप्तये, निषिद्धञ्च कर्म नरकप्राप्तये हेतुरिति वदच्छास्त्रमप्रमाणं स्यात् । कायिकवाचिकमानसिकचेष्टारूपक्रियाणामेव कर्मेति नाम । ताश्च क्रियाः अनुष्ठानोत्तरक्षणे नश्यन्ति, स्वर्गनरकादितत्तत्फलं तु कालान्तरे भविष्यति । तस्मात्स्वर्गनरकादिफलप्राप्तेरव्यवहितपूर्वकाले तत्कारणीभूतविहितप्रतिषिद्धकर्माणि न सन्ति । यथैवैतानि व्यवहितपूर्वकालवर्तीन्यपि शुभाशुभकर्माणि स्वर्गनरकादिप्राप्तिकारणानि भवन्त्येवमेव व्यवहितपूर्वकालवर्ति सर्पज्ञानमपि रज्जौ जायमानसर्पाध्यासहेतुर्भवेदेव ।

---

१. मासेत्युपलक्षणमधिककालद्योतनार्थम् ।

(८७) **तत्र समाधानम्**—नैवायं साधुराक्षेपः। तथा हि,नष्टज्ञानकर्मादिकं यदि क्रमेणाध्यासस्वर्गनरकादिहेतुर्भवेत् तदा मृतकुलालनष्टदण्डचक्रादयोऽपि घटादिकार्यं जनयेयुः। यथा रज्जुसर्पाध्यासस्य व्यवहितपूर्वकालवर्ति सर्पज्ञानं कारणम्, यथा च स्वर्गनरकादिप्राप्तेः व्यवहितपूर्वकालवर्तिशुभाशुभकर्माणि कारणानि, तथा घटस्यापि व्यवहितपूर्वकाले, इदानींविनष्टकुलालदण्डचक्रादयोप्यभूवन्नेवेति तैरपि घटाद्युत्पद्येतैव। न तु तथा विनष्टैः कुलालादिभिः घट उत्पद्यमानो दृष्टः। तस्माद्व्यवहितपूर्वकालवर्ति कारणं न कार्यं जनयेत्, किन्त्वव्यवहितपूर्वकालवर्त्येव कारणं कार्योत्पादनक्षममिति युक्तम्।

(८८) **अपूर्वरूपस्य कारणस्य कार्याव्यवहितपूर्वकालवर्तित्वनियमः स्वर्गादिविषयेऽप्यस्ति**—तथा हि शुभाशुभकर्माण्यपि न स्वतः कालान्तरभाविस्वर्गनरकादिप्राप्तिहेतवो भवन्ति, क्षणिकत्वात्। किन्तु तानि कर्माणि स्वनाशोत्तरक्षणे धर्माधर्माख्यापूर्वरूपसंस्कारमुत्पादयन्ति। तौ च धर्माधर्मावन्तःकरणमाश्रित्य तिष्ठतः। तेन धर्माधर्मादिना कार्याव्यवहितपूर्वकालवर्तिना स्वर्गनरकादिफलं कालान्तरे सिद्ध्यति। ततो धर्माधर्मादि नश्यति। एतदभिप्रायेणैव शास्त्रे शुभाशुभकर्माण्यपूर्वद्वारा फलहेतवो, न साक्षादित्युच्यते। धर्माधर्मयोरेव **अपूर्वः, अदृष्टम्, पुण्यापुण्ये** इत्यादिशब्दा वाचकाः। केचन धर्माधर्महेतुभूतशुभाशुभकर्माण्यपि धर्माधर्माशब्देन वदन्ति, कार्यकारणयोरभेदात्। लोकोऽपि शुभकर्मकारिणं 'अयं धर्मं चरति महात्मा' इति, अशुभकर्मकारिणं 'अयमधर्मं चरति दुष्टः' इति चाचष्टे। वस्तुतस्तु, शुभाशुभकर्मणोर्न साक्षाद्धर्माधर्मशब्दवाच्यत्वमुचितम्। अपि तु शुभाशुभकर्मणी धर्माधर्मौ जनयतः, तस्माच्छुभाशुभकर्मणोर्धर्माधर्मत्वप्रसिद्धिः। 'आयुर्वै घृतम्' इत्यायुर्वर्धकघृते आयुःशब्दः शास्त्रेण यथा प्रयुज्यते, तद्वत्। तस्मादव्यवहितपूर्वकाले हेतुना भाव्यमेव।

(८९) **संस्कारस्यैव सर्वत्राध्यासहेतुत्वम्**—रज्ज्वादौ जायमानसर्पाद्यध्यासं प्रति नियमेनाव्यवहितपूर्वकाले सर्पादिज्ञानं नास्ति, तस्मात्सर्पादिज्ञानं न रज्जुसर्पाद्यध्यासहेतुः; किन्तु सर्पाद्यनुभवजन्यसंस्कार एव नियमेन सर्पाद्यध्यासहेतुरिति पर्यवस्यति। एवमेव शुक्तिरजताद्यध्यासं प्रत्यपि रजताद्यनुभवजन्यसंस्कार एव हेतुः। सर्वत्र हि तत्तदनुभवाहितसंस्कार एवाध्यासत्वावच्छिन्नं प्रति नियमेन कारणं भवति।

(९०) **सजातीयवस्तुज्ञानजन्यसंस्कार एवाध्यासहेतुः**—वस्तुज्ञानं संस्कारहेतुः। शुभाशुभकर्मजन्यधर्माधर्माख्यापूर्वो यथान्तःकरणे सूक्ष्मरूपेण वर्तते, तथा तत्तद्वस्तुज्ञानजन्यसंस्कारोऽप्यन्तःकरणे एव वर्तते। यस्य हि पूर्वानुभवः सर्पविषयो नाभूत्, तस्यान्यवस्तुज्ञानजन्यसंस्कारे सत्यपि रज्जौ सर्पाध्यासो न जायेतैव। यस्य वस्तुनोऽध्यासो भवति तत्सजातीयवस्त्वनुभवाहितसंस्कारोऽध्यासहेतुः, न तु विजातीयवस्त्वनुभवाहितसंस्कारः। सर्पस्य सर्प एव सजातीयो नान्यः। यस्य पुनः सर्पविषयकज्ञानमेव नाभूत्तस्य सत्यप्यन्यविषयकज्ञाने, सजातीयवस्तुज्ञानजन्यसंस्काराभावान्न रज्जौ सर्पाध्यासो जायेत। संस्कारो हि नाम सूक्ष्मावस्थैव। एवञ्चाध्यासात्पूर्वभाविसजातीयवस्तुज्ञानजन्यसंस्कार एवाध्यासहेतुः। 'सत्यवस्तुज्ञानजन्यसंस्कार एवाध्यासहेतुर्न मिथ्यावस्तुज्ञानजन्यसंस्कारः' इति परोक्तनियमस्यापवादः प्रागैन्द्रजालिकाम्रवृक्षदृष्टान्तेनोक्तः। तस्मान्मिथ्यार्थनुभवजन्यसंस्कारोऽप्यध्यासहेतुः, न प्रमाहितसंस्कार एवेति नियमः।

(९१) **स च संस्कारो बन्धाध्यासेऽपि घटते**—अहङ्कारादिनिखिलानात्मवस्तुजातं तज्ज्ञानञ्च **बन्ध** इत्युच्यते। इदञ्च प्रत्यगात्मविलक्षणं बन्धरूपमनात्मवस्तुजातं, रज्जुसर्पस्वप्नेन्द्रजालादिवत् यदा प्रतीयते तदैवास्ति; अप्रतीतिदशायां तस्य सत्ता नास्त्येवेति **वेदान्तसिद्धान्तः**। अत एव "न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्", (मा. आ. 5) "न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्" (बृ. 4-3-23) "स यदा तेजसाऽभिभूतो भवति अत्रैष देवः स्वप्नान्न पश्यति" (प्र. 4-6.) "एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते" (प्र. 4-7.) "पृथिवी च पृथिवीमात्रा च" (प्र. 4-8.) इत्यादिवेदान्तेषु सुषुप्तौ निखिलद्वैतदृश्यप्रपञ्चस्य निश्शेषाभावः प्रतिपादितः। यस्मान्न किञ्चिदपि द्वैतं सुषुप्तावुपलभ्यते तस्मात्सुषुप्तौ निखिलद्वैतप्रपञ्चः प्रविलीयते, प्रबोधे च पुनरेवोत्पद्यते। "यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति, तथैनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वै रूपैः सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः सहाप्येति। स यदा प्रतिबुद्ध्यते यथाऽग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः।" "सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति" (कै. 13)। "पुरत्रये क्रीडति यश्च जीवस्ततस्तु

जातं सकलं विचित्रम् ।" (कै. 14) "अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद ।" (बृ. 2-1-19.) "स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोका सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति ।" (बृ. 2-1-20) इत्येवमादिश्रुतिभिरयमर्थः प्रतिपादितः । अयमेव **दृष्टिसृष्टिवाद** इति वेदान्तशास्त्रे प्रसिद्धः । उत्तरत्र चैषः प्रपञ्च्यते ।

इत्थमेवाहङ्कारादिदेहान्ता विषयास्तज्ज्ञानानि चासङ्ख्येयतया प्रतिक्षणमुत्पद्य विनश्यन्ति । ज्ञातैकसत्ताकत्वेनाज्ञातसत्ताभावादेव स्वप्नहस्ति-शुक्तिरजतादिवत् जाग्रत्यहङ्कारादयोऽपि यदा प्रतीयन्ते तदानीमेवोत्पद्यन्ते, अप्रतीतिदशायां प्रलीयन्ते च । अहङ्कारादीनां तज्ज्ञानानाञ्चाध्यासत्वमनिर्वचनीयख्यातिप्रस्तावे निरूपयिष्यते । अहङ्कारः केवलसाक्षिभास्य इति विषयप्रस्तावे निरूपितत्वादहङ्कारप्रतीतिः केवलसाक्षिरूपैव । साक्षिणश्चोत्पत्तिलयादयो न सन्ति । तथापि साक्षी अहङ्कारादीन् स्वविषयान् वृत्तिद्वारैव प्रकाशयति, न तु साक्षात् । साक्ष्यविषयकवृत्तेरुत्पत्तिलय-सत्त्वादेवाहङ्कारप्रतीतेरप्युत्पत्तिलयादयोभ्युपगम्यन्ते । इत्थमेवोत्तरोत्तराहङ्कारादीनां तद्विषयकज्ञानानां चोत्पत्तिं प्रति पूर्वपूर्वमिथ्याहङ्काराद्यनुभवजन्यसंस्कार एव कारणम् ।

(९२) **प्राथमिकाध्यासे संस्कारस्य हेतुत्वासंभव इत्याक्षेपः**—स्यादेतत्—यद्यप्युत्तरोत्तराहङ्काराद्यध्यासं प्रति पूर्वपूर्वाध्यासानुभवजन्यसंस्कारः कारणमिति युक्तं, तथापि प्राथमिकाहंकारस्य तज्ज्ञानस्य चोत्पत्तौ संस्कारो हेतुरिति न युज्यते, ततः पूर्वं संस्काराभावात् । यदि प्राथमिकाहङ्कारोत्पत्तेः पूर्वमहङ्कारान्तरं स्यात्तदा तद्विषयकज्ञानेन संस्कारो जायेत । न तु प्राथमिकाहङ्कारात्पूर्वमहङ्कारान्तरमस्तीत्यभ्युपगम्यते । एवमेव सकलवस्तूनां प्राथमिकाध्यासस्य हेतुःसंस्कार इति वक्तुं न शक्यते ।

(९३) **तत्र समाधिः**—सिद्धान्तानभिज्ञतयायमाक्षेपः । वेदान्त-सिद्धान्तस्त्वयम्—"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः" ॥ इति ।

---

१. दृष्टिर्नाम अविद्यावृत्तिरूपं ज्ञानम् । तादृशज्ञानकाल एव विषयाणामुत्पत्तिरिति यो वादः स एव दृष्टिसृष्टिवाद इति शास्त्रेषु कथितः ।

(1) जीवः, (2) ईश्वरः, (3) ब्रह्म, (4) अनादिवस्तूनां परस्परं भेदः, जीवेशयोश्च भेदः, (5) अविद्या, (6) अविद्याचैतन्ययोः संबन्धः (स एव काल इत्युच्यते) षडेतानि स्वरूपतोऽनादिवस्तूनि। उत्पत्तिशून्यत्वं **स्वरूपतोऽनादित्वम्**। षडप्येतान्यनादीनि भवन्ति, उत्पत्तिशून्यत्वात्, सम्मतवत्। अथवा, अहङ्कारादीनां श्रुतावुत्पत्तेः श्रूयमाणत्वात्तेषां स्वरूपतोऽनादित्वाभावेऽपि **प्रवाहतोऽनादित्वमेष्टव्यम्। एवमेव सकलवस्तूनामपि सिद्धमेवानादित्वम्**, 'घटादिकं वस्तु नास्ति' इति व्यवहारयोग्यकालस्यैवाभावात्। तस्मात् घटादीनां प्रवाहोऽनादिरेव। एवमात्मातिरिक्तसर्ववस्तुप्रवाहोप्यनादिः। प्रलयकालेऽपि सुषुप्ताविव सर्वं जगत् संस्काररूपेण स्वकारणे वर्तते। तस्मात्प्रपञ्चप्रवाहस्यानादिकालसिद्धत्वात्**प्रपञ्चोऽनादिः।** ईदृग्ज्ञानशून्यस्यैव 'प्रथमाध्यासहेतुभूतसंस्कारो न युज्यत'

---

१. (1) अविद्याया अप्यधिष्ठानत्वान्नाविद्यातो ब्रह्म जायते। अन्तरेण ब्रह्म जीवेश्वरादयो न सिद्धयन्तीति न तेभ्यश्चतुर्भ्योऽपि ब्रह्म जायते। तस्माद**नादिसिद्धं ब्रह्म**।

(2) ब्रह्मणो निर्विकारत्वान्न ततोऽविद्या जायते। ईश्वरादिचतुष्टयसिद्धेरविद्यासिद्धयधीनत्वान्न ततोप्यविद्या जायते। इत्यविद्याप्यनादिरेव।

(3, 4) जीवेश्वरौ न केवलब्रह्मणो वा केवलमायाया वा उत्पद्येते। नापीश्वराज्जीवो वा जीवादीश्वरो जायते। जीवेश्वरभेदस्य च जीवेश्वरसिद्धयधीनत्वान्न ततोऽपि जीवेश्वरोत्पत्तिः। अविद्याचित्संबन्धसिद्धयधीना जीवेश्वरसिद्धिः। अविद्याचित्संबन्धश्चानादिरेव। अनाद्यविद्याचित्संबन्धाधीनजीवेश्वरावप्यनादी एव।

(5) अविद्याचितोरनादित्वात् तयोस्तादात्म्यरूपसंबन्धोप्यनादिरेव। तस्मात् ब्रह्मणो वाऽविद्यातो वा न तस्योत्पत्तिः। ईश्वरादित्रयसिद्धिश्चाविद्याचित्संबन्धाधीना। अतस्तेभ्योऽपि न तस्योत्पत्तिः। अतः अविद्याचित्संबन्धोप्यनादिः।

(6) एतेषामन्योन्यभेदोप्यनादिरेव, षण्णामप्येतेषामुत्पत्त्यभावात्। स्वरूपतोऽनादीनि षडेतानि। तत्र कालत्रयाबाध्यत्वात् अनाद्यनन्तं च कूटस्थनित्यं ब्रह्म। ज्ञानबाध्यत्वात्त्वितराणि पञ्च अनादिसान्तानीति विवेकः।

२. अनादिकालसिद्धत्वात् चिरकालावस्थायित्वाच्च प्रपञ्चः सत्य इत्याक्षेपस्यैवं समाधानम्—रज्जुसर्पादिभ्रमः स्वप्नभ्रमश्च सर्वजनसाधारणः। स चानियमेनैकघटिकाप्रभृत्यनेकयामावस्थायी भवति, पूर्वसिद्धत्वेन अनादिसिद्धत्वेन च भाति। तथापि रज्जुतत्त्वसाक्षात्कारे जाग्रत्प्रबोधे च सति, रजतस्वप्नादीनां त्रैकालिकनिषेधप्रतियोगित्वनिश्चयो जायते। एवमेव प्रपञ्चाध्यासोऽपि भ्रमदशायमनादिरिव सत्य इव च भाति, तत्त्वावबोधे तु कालत्रयेऽपि नास्तीति निश्चयो जायते। तस्मात्प्रपञ्चो मिथ्या।

इति शङ्का जायेत। वेदान्तसिद्धान्ते न कोप्यध्यासः 'अयमेव प्रथमाध्यास' इति वक्तुं शक्यते, किन्तु सर्वोप्युत्तरोत्तराध्यासः स्वपूर्वपूर्वाध्यासकार्यमेव। तस्मादियं शङ्कैव न युक्ता। तथा च पूर्वोक्तरीत्यैव सजातीयवस्तुनः पूर्वानुभव-जन्यसंस्कारमात्रेणाहङ्कारादिबन्धाध्यासः संभवति।

**(९४) सादृश्यदोषो नावश्यमध्यासहेतुः**—यदुक्तं अध्यासहेतुभूता दोषास्त्रयः, तेषु बन्धाध्यासे हेतुतयाऽन्यतमस्याप्युपलम्भाभावात् बन्धः सत्य इति; तन्न। यथा तुरीतन्तुवेमाद्यभावे पटो नोत्पद्यते, तथा दोषाभावेऽध्यासो यदि नोत्पद्येत तदा दोषोऽध्यासहेतुः स्यात्। न तु तथा भवति, सादृश्य-दोषं विनैवात्मनि जात्यध्यासस्य जायमानत्वात्। ब्राह्मण्यादिजातिः स्थूल-देहधर्मो, नात्मनो नापि सूक्ष्मशरीरस्य। यतः पूर्वशरीरस्थित एवात्मा, सूक्ष्मशरीरं च शरीरान्तरप्राप्तावप्यनुवर्तते, न तु पूर्वशरीरस्थिता जातिः; सा तु भिद्यते। पूर्वशरीरस्थितजातिरेव शरीरान्तरेप्यनुवर्तनीयेति न नियमः। आत्मनो वा सूक्ष्मशरीरस्य वा यदि जातिर्धर्मः स्यात्तर्हि जन्मान्तरीयशरीरे विलक्षणा जातिर्न स्यात्। अतो जन्मान्तरे जात्यन्तरविशिष्टशरीरस्याप्युपलब्धेर्न जातिरात्मनो वा सूक्ष्मशरीरस्य वा धर्मो भवति, किन्तु स्थूलशरीरस्यैव। तथापि 'अहं द्विजः' इत्यहमर्थे ब्राह्मणत्वक्षत्रियत्ववैश्यत्वादिजातिप्रतीत्यन्यथानु-पपत्त्या आत्मनि ब्राह्मणत्वादिजात्यध्यासोऽभ्युपेयः। यथा रज्जौ परमार्थतः कालत्रयेप्यविद्यमानोऽपि सर्पः प्रतीत्यन्यथानुपपत्त्याऽध्यस्त इत्यभ्युपगम्यते, तथैवात्मनि परमार्थतः कालत्रयेप्यविद्यमानापि ब्राह्मणत्वादिजातिः प्रतीयमानत्वा-दध्यस्यते इत्यङ्गीकार्यम्। परं तु जात्यात्मनोर्न किञ्चिदपि सादृश्यमस्ति। आत्मा व्यापकः प्रत्यक् विषयी चिद्रूपः। जातिस्तु परिच्छिन्ना पराचीना विषया-त्मिका जडा च। तथाप्यात्मनि तद्विलक्षणजात्यध्यासो जायते। यथा सादृश्य-मन्तराऽऽत्मनि जात्यध्यासः संभवति तथा विनैव सादृश्यमहङ्कारादिबन्धाध्या-सोप्यात्मनि संभवत्येव। तस्मात्सादृश्यदोषो नाध्यासहेतुः। किञ्च, सादृश्यस्या-ध्यासहेतुत्वाभ्युपगमे शङ्खे पीतिमाध्यासः, गुडे तिक्तताध्यासश्च न स्यात्;

१. 'नित्यमेकमनेकानुगतं सामान्यम्' इति न्यायमते अनेकपदार्थसमवेता एका नित्या च जातिरित्यङ्गीकाराज्जात्यात्मनोर्लक्षणसादृश्यात्मकप्रमेयदोषसिद्धेरात्मनि जात्यध्यासो जायेत। अतः प्रमेयदोषोऽध्यासहेतुरिति कश्चन मन्येतेति मनसि निधाय शङ्खे पीतत्वाध्यासो दृष्टान्तत्वेनोच्यते।

२. ननु शङ्खे पीतिमा नाध्यस्यते। किन्तु, काचकामलादिदोषदूषितनेत्रस्थपीतवर्णेन

सादृश्याभावात् । प्रत्युत श्वैत्यपीतिम्नोः माधुर्यतिक्तत्वयोश्च विरुद्धयोरप्यध्यासोऽनुभूयते । तस्मादधिष्ठाने मिथ्यावस्तुनः सादृश्यरूपदोषो नाध्यासहेतुः ।

(९५) **प्रमातृदोषोऽपि नावश्यमध्यासहेतुः**—प्रमातुर्लोभभयादिदोषाः नाध्यासहेतवः, लोभादिशून्यविरक्तानामपि शुक्तिकादौ रजताद्यध्यासदर्शनात् । परपक्षरीत्या दोषरूपहेत्वभावान्नाध्यासो जायेत । तस्मान्न प्रमातृदोषोऽध्यासहेतुः ।

(९६) **प्रमाणदोषोऽपि नावश्यमध्यासहेतुः**—प्रमाणदोषोऽपि नाध्यासहेतुः । तथाहि, सर्वेषामेव नीरूपेऽऽकाशे नैल्यमिन्द्रनीलकटाहाकारश्च भाति । ततः सर्वेषामाकाशे समतया नैल्याद्यध्यासस्य जायमानत्वात्सर्वेषां नेत्रेन्द्रियप्रमाणे पित्तादिदोषसद्भावकल्पना वाच्या ; सा च नाञ्जसी । तस्मात् प्रमाणदोषोऽपि नाध्यासहेतुः । आकाशे नैल्याद्यध्यासविषये न केवलं प्रमाणदोषाभावः, किन्तु सर्वदोषाभावोऽपि । सादृश्याभावः प्रमातृदोषाभावश्च तत्र सिद्ध एव । यथा सकलदोषाभावेऽप्याकाशे नैल्याद्यध्यासो जायते तथात्मन्यपि बन्धाध्यासो दोषं विनैव जायते । तस्मात् 'दोषाभावात् बन्धोऽध्यासरूपो न भवति' इतीयं शङ्का न युक्ता । यतः सर्वदोषविरहे सत्यप्याकाशे नैल्याद्यध्यासो जायते सकलपुरुषाणां तस्माद्दोषो नाध्यासहेतुः । पित्तादिदोषशून्यनेत्रस्याप्याकाशे इन्द्रनीलकटाहाद्याकारो भासते । तस्मात्प्रमाणदोषो नाध्यासहेतुः ।

---

लिप्तत्वाच्छङ्खः पीतो भातीति चेन्न—घटे खचितं रत्नं, सुवर्णादिलेपो वा तत्कर्तुः सुवर्णकारादेरन्यस्यापि यथा सममेव प्रतीयते, तथा न सर्वेषां शङ्खे पीतवर्णः प्रतीयते । किन्तु काचादिदोषदूषितनेत्रस्यैव भाति, नान्यस्य । तस्मात् दोषदूषितनेत्रात् पीतवर्णो बहिर्निर्गत्य शङ्खेन नैव संसृज्यते । अपि तु शङ्खे पीतिमप्रतीतिर्भ्रम एव ।

नन्वाकाशे परिपतन् पक्षी यस्य नेत्रवृत्तिसंयुक्तदेशादूर्ध्वमुड्डीय गतः, तस्यैव केवलं बहुदूरगमनपर्यन्तमनुसृत्य पश्यतो विषयीभवति, नान्यस्य । एवं यस्य नेत्रस्थपीतवर्णो लिप्तः शङ्खे, तस्यैव परमुपलभ्यते सः, नान्यस्येति चेन्न । आकाशे परिपतन् पक्षी यस्य नेत्रगोचरीभूताद्देशादूर्ध्वमुड्डीय गतः, स एवान्यस्मै तमङ्गुल्या निर्दिश्य दर्शयति चेत्परोऽपि तं पक्षिणं पश्यत्येव । न त्वेवं शङ्खपीतिमवर्णोऽङ्गुल्या निर्दिश्य प्रदर्शितोऽपि परस्योपलभ्यते । तस्मान्न शङ्खे पीतवर्णः सत्यः, किन्त्वध्यस्त एव ।

इत्थं शङ्खपीतिमाध्यासोऽन्तरेणैव सादृश्यमुत्पद्यमानोऽपि, स दृष्टान्तः शङ्कासमाधानाभ्यामेव सिद्ध्यतीत्यतो निर्विवाददृष्टान्तं दर्शयति-गुडे तिक्ततेति ।

इत्थं दोषो[1] नाध्यासहेतुः। अतो बन्धाध्यासे न दोषापेक्षाऽस्ति। संक्षेपशारीरके बन्धाध्यासप्रस्तावे दोषोऽपि[2] कारणत्वेनोक्तः। ग्रन्थविस्तरभयान्नेह स निरूपितः। दोषो यद्यध्यासहेतुर्भवेत्तदा तद्विशेषविचारो युज्येत। तदसंभवादेव नेह स प्रपञ्च्यते।

(आ. ९७-९८) कारणाध्यासनिरूपणम्[3]—

(९७) **स्वयंप्रकाशेऽपि ब्रह्मण्यज्ञानोपपत्तिः**—विशेषतोऽनवगते वस्तुन्यध्यासो जायेत। स्वयंप्रकाशस्वरूपत्वादात्मन्यज्ञानमेव न घटेत, तयोरन्योन्यं तमःप्रकाशयोरिव विरोधात्। प्रौढप्रकाशे सति सर्पाद्यध्यासो रज्ज्वादौ यथा न जायेत, तथा सदा स्वयंप्रकाशस्वरूपे आत्मनि बन्धाध्यासोऽपि न जायेतेति कृताक्षेपोऽपि न साधुः।

यद्यप्यात्माऽलुप्तस्वयंप्रकाशस्वरूपस्तथापि तस्य स्वरूपप्रकाशो नाज्ञान-

---

१. अत्रेदमवगन्तव्यम्—निखिलदोषसमवाये सत्येवाध्यासो जायेतेति नियमाभावेऽपि यत्किञ्चिद्दोषे सत्येवाध्यासः संभवतीति वक्तव्यम्। यदपि आकाशे नैल्याद्यध्यासे न कोपि दोषो दृश्यते इत्युक्तं, तत्राप्ययमाशयः—यस्मिन्नध्यासे हेतुत्वेन सादृश्यादिरूपविशेषदोषः कोपि नापेक्ष्यते तत्राप्यविद्याख्यो दोषोऽपेक्ष्यत एव। सर्वथा दोषाभावे अध्यास एव न संभवेत्। आकाशे नैल्याद्यध्यासेऽपि विशेषदोषत्रयानपेक्षायामप्यविद्याख्यदोषोऽपेक्ष्यत एव। यस्य कस्यापि दोषलेशस्याप्यभावेऽध्यासस्यासंभवादेवाद्वैतसिद्धौ मधुसूदनसरस्वतीभिः 'दोषजन्यत्वं भ्रमस्य लक्षणम्'इति कथितम्। दोषं विनाध्यासो जायेतेति मूलोक्तिः प्रौढिवादेन। प्रौढ्यर्थं=स्वविद्यातिशयख्यापनार्थं, वादः=कथनं, तेनेत्यर्थः॥

२. अन्तःकरणस्थाज्ञानस्य विक्षेपहेतुभूतशक्तिनिष्ठशुभाशुभकर्मजन्यसंस्काररूपादृष्टं **प्रमातृदोषः**।

चैतन्ये स्वातिरिक्तप्रमाणाभावात् स्वस्वरूपमेव प्रमाणम्। तदाश्रिताऽविद्या **प्रमाणदोषः**।

निरपेक्षान्तरत्वं (प्रत्यक्त्वं) चैतन्येऽस्ति, प्रपञ्चे तद्विपरीतं सापेक्षान्तरत्वमस्ति। चैतन्यं परमार्थवस्तु, प्रपञ्चोऽनिर्वचनीयवस्तु। तस्मात् आन्तरत्ववस्तुत्वरूपधर्माभ्यां चैतन्यप्रपञ्चयोः सादृश्यं सिद्धम्। अयं च **प्रमेयदोषः**। इत्थं दोषाः अध्यासकारणत्वेन संक्षेपशारीरकादिग्रन्थेषु निरूपिताः।

३. ननु प्रपञ्चकारणमधिष्ठानस्य विशेषांशाज्ञानं। तस्याध्यास एव कारणाध्यास इत्युच्यते। तत्र प्रपञ्चाध्यासकारणमज्ञानम्, अज्ञानाध्यासस्य तु न किञ्चित्कारणान्तरमस्ति। तस्मादज्ञानाध्यासो न स्यादिति यस्य कस्यचिदाक्षेपे सति तन्निरासः एवम्—दीपो यथा स्वयमेव प्रकाशमानः सन् स्वसंबद्धानितरांश्च पदार्थान् स्वपरनिर्वाहकत्वादितरानपेक्षं प्रकाशयति तथाऽज्ञानमपि स्वस्य स्वकार्यप्रपञ्चस्य चाध्यासकारणं भवतीति।

विरोधी। यद्यात्मनः स्वरूपप्रकाशोऽज्ञानविरोधी भवेत्तदा सुषुप्तौ स्वयंप्रकाशात्मनि नाज्ञानमुपलभ्येत। अपि तु गाढं सुप्तोत्थितः 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति सुषुप्तौ स्वानुभवसिद्धमज्ञानं परामृशति। सुषुप्त्यनुभवस्य विषयः सुखमज्ञानञ्च। सुप्तोत्थितस्य जाग्रद्दशायां जायमानमिदं सुखाज्ञानविषयकं ज्ञानं न प्रत्यक्षम्। अपरोक्षविषयकं हि ज्ञानं प्रत्यक्षमित्युच्यते। जाग्रत्काले सौषुप्तसुखस्य तदज्ञानस्य चाभावात्तदुभयविषयकं जाग्रत्कालीनं ज्ञानं न प्रत्यक्षम्, किन्तु स्मृतिः। सा च स्मृतिरननुभूतविषयिणी न स्यात्। अतः सुषुप्तौ सुखाज्ञानयोरपरोक्षज्ञानमभ्युपगन्तव्यम्। सुषुप्तौ तद्विषयकं ज्ञानं नैवान्तःकरणेनेन्द्रियैश्च जायते। तदाऽन्तरकरणस्येन्द्रियाणां च सर्वेषां कारणे प्रलीनानामभावात्। तस्मात्सुषुप्तौ सुखाज्ञानयोरवभासकं ज्ञानं स्वयंप्रकाशात्मस्वरूपचैतन्यमेव। प्रकाशः ज्ञानं चैतन्यमित्यनर्थान्तरम्।

इत्थं सुषुप्तौ स्वयंप्राकाशस्वरूपे आत्मनि भासमाने एव तस्मिन् स्वरूपसुखमज्ञानञ्च प्रतीयेते। यद्यात्मनः स्वरूपप्रकाश एव साक्षादज्ञानविरोधी स्यात्तर्ह्यज्ञानमेव सुषुप्तौ नानुभूयेत। सुषुप्तावात्मा स्वयंप्रकाशस्वरूप एवास्ते, तथाप्यात्मनः स्वरूपप्रकाशो नाज्ञानविरोधी भवति। प्रत्युत आत्मनः स्वरूपप्रकाशः सर्वाधिष्ठानत्वादज्ञानस्यापि सत्तास्फूर्तिप्रदत्वेन साधक एव भवति।

एतदेवाभिप्रेत्योक्तं वेदान्तेषु सामान्यरूपं स्वरूपचैतन्यं नाज्ञानविरोधि, किंतूपाध्यभिव्यक्तविशेषात्मकं चैतन्यमज्ञानविरोधीति। सर्वत्र व्याप्य वर्तमानमखण्डचैतन्यं सामान्यम्। अन्तःकरणवृत्त्यारूढचैतन्यं विशेषात्मकमिति विवेकः। अरण्यां व्याप्य वर्तमानोऽग्निः सामान्यः, सोऽनभिव्यक्तत्वान्नान्धकारविरोधी। स एव काष्ठमथनेनोद्भूतरूपोऽभिव्यक्तो दीपवर्त्त्यारोपितो विशेषात्मकः सन्नन्धाकारविरोधी भवति। एवं व्यापकं सामान्यं ब्रह्मचैतन्यमविरोध्यप्यज्ञानस्य, तदेव चैतन्यं विचारितवेदान्तप्रमाणजनितसाक्षात्कारात्मकाखण्डब्रह्माकारान्तःकरणवृत्त्यारूढं सन्विशेषतया अज्ञाननाशहेतुत्वात्तद्विरोधि भवति। इत्थं च केवलचैतन्यं नाज्ञानविरोधि, किन्तु वृत्त्यारूढं चैतन्यं, चैतन्यविशिष्टा वृत्तिर्वाऽज्ञानविरोधितयोच्यते। आद्यपक्षेऽज्ञाननाशस्य चैतन्यं हेतुर्वृत्तिः सहकारिणी; द्वितीये तु तन्नाशे वृत्तिः साक्षाद्धेतुश्चैतन्यं साधकम्। इदं त्ववच्छेदवादरीत्योक्तम्[1]।

---

१. अवच्छेदवादे वृत्तिविशिष्टचैतन्यं, चैतन्यविशिष्टा वृत्तिर्वा **विशेषचैतन्यमित्यु**च्यते। एतदेवाज्ञानविरोधि भवति। आवरणनिवृत्तौ वृत्तेरेव नियामकत्वात् द्वितीयः पक्षः श्रेयान्।

**आभासवादरीत्या तु** सामान्यचैतन्यवद्विशेषचैतन्यमपि नाज्ञानविरोधि, किन्तु वृत्तिसहिताभासो वा आभाससहिता वृत्तिर्वाऽज्ञानविरोधितयोच्यते।

इत्थं शुद्धं स्वयंप्रकाशस्वरूपचैतन्यं नाज्ञानविरोधि। ततश्चाज्ञानं स्वरूपचैतन्यमेवाश्रित्य वर्तते। तेनाज्ञानेनावृते आत्मनि बन्धाध्यासो युज्यत एव।

(९८) **आत्मा सामान्यतो ज्ञातो विशेषतोऽज्ञातश्च**—यदुक्तं सामान्यतो ज्ञाते विशेषतोऽज्ञात एव वस्तुन्यध्यासो जायेत। सामान्यविशेषधर्माभावान्निर्विशेषे आत्मनि ज्ञातत्वाज्ञातत्वव्यपदेशोऽध्यासश्च नैव संभवतीति; तन्निरस्यते—'अयमहमस्मि' इत्यात्मास्तित्वानुभवस्तावत्सर्वलोकप्रसिद्धः। आत्मा हि नाम **स्वस्वरूपमेव**। न 'नाहमस्मी'ति कोऽपि प्रत्येति। किन्तु 'अहमस्मि'इत्येव सर्वः प्रत्येति। अत आत्मनं सद्रूपेण समान्यतो विजानाति लोकः। परं तु न कोऽपि 'प्रज्ञानघनोऽखण्डानन्दस्वरूपो व्यापको नित्यशुद्धो नित्यमुक्तश्चाहम्' इति विशेषरूपेणात्मानं जानाति। तस्माच्चिदानन्दादिलक्षणलक्षितत्वेन विशेषतो नात्मा विज्ञायते, किन्तु सामान्यतः सत्स्वरूपेण ज्ञायत एव। इदञ्च सर्वानुभवसिद्धम्। न चेदं केवलयुक्त्याऽपह्नोतुं शक्यते।

पामरादिसर्वसाधारण्येन भासमानं सद्रूपमात्मनः **सामान्यस्वरूपमित्युच्यते**। केवलब्रह्मानुभविसिद्धचिदानन्दादिस्वरूपं तु **विशेषरूपम्**। अधिकदेशकालवर्ति यत्तत्सामान्यस्वरूपमिति, न्यूनदेशकालवर्ति यत्तद्विशेषस्वरूपमिति च लौकिकपदार्थानां विवेकः। चिदानन्दयोरप्यात्मनः स्वरूपत्वादेव सद्रूपवत् चिदानन्दस्वरूपमपि व्यापकमेव वर्तते। अत एवात्मनः सत्तापेक्षयाऽऽनन्दादिकं व्याप्यमिति वा, आनन्दाद्यपेक्षया सत्ता व्यापिनीति वा न शक्यते वक्तुम्। तथा चात्मनः सद्रूपं सामान्यं, चिदानन्दरूपं विशेषरूपमिति यद्यपि न सङ्गच्छते, तथाप्यात्मनः सत्तास्वरूपस्य प्रतीतिः सर्वलोकसाधारण्येनाविद्यादशायामपि जायते, नैवं चिदानन्दस्वरूपप्रतीतिरविद्यादशायां सर्वेषां जायते। केवलं चिन्मात्रनिष्ठानां ज्ञानिनां तु सदा सर्वांशप्रतीतिरस्ति।

---

१. प्रचण्डप्रकाशे सूर्ये तमोवत् स्वयंप्रकाशात्मचैतन्येऽज्ञानसंसर्गः कथं घटेतेत्याक्षेपो न युक्तः। विषमो दृष्टान्तः—सूर्यादिज्योतींषि महातेजसो विशेषरूपाणि, न तु सामान्यरूपाणि। आत्मनः स्वरूपचैतन्यन्तु सामान्यप्रकाश एव। नैतदज्ञानविरोधि। तस्मात्सूर्यादिदृष्टान्तोऽत्र न समञ्जसः।

यद्यप्यविद्यादशायां चैतन्यानन्दस्वरूपमप्यास्ते एव, तथाप्यविद्यया न तत् प्रतीयत इत्यविद्यमानवत्कृत्वा चैतन्यानन्दस्वरूपं परिच्छिन्नदेशकालवर्ति, सत्तास्वरूपं सकलदेशकालवर्तीति चोच्यते। परमार्थतो नैवास्ति सामान्यविशेषभावः सच्चिदानन्दस्वरूपस्यात्मनः। अविद्वत्प्रतीत्यनुसारेण तु स कल्प्यते। 'आत्मा निर्विशेषः' इत्यस्य सिद्धान्तस्य न काप्यनुपपत्तिरनेन। यद्यात्मनः सामान्यविशेषभावः पारमार्थिकोऽभ्युपगम्येत तदा 'आत्मा निर्विशेषः' इत्यादिवेदान्तसिद्धान्तो बाध्येतैव। परंतु नैव तथाभ्युपगम्यते। किन्तु सामान्यविशेषभाववानिवाविद्यया आत्मनो विभाव्यमानत्वादेवाज्ञजनबोधार्थं सामान्यविशेषव्यवहारः कल्प्यते। इत्थं सत्तारूपसामान्यस्वरूपेण विदिते नित्यशुद्धबुद्धमुक्ताखण्डचिदानन्दाद्वितीयब्रह्मात्मना चाविदिते आत्मनि बन्ध्याध्यासः संभवत्येव। आध्यासिकस्य च बन्धस्य ज्ञानान्निवृत्तिरपि युज्यत एव। अत एव ग्रन्थस्य प्रयोजनमपि संभवत्येव।

## (आ० ९९-१०६) कर्मणा मोक्षो न सिद्ध्यति—

(९९) **पूर्वपक्षसङ्ग्रहः**—मुमुक्षुणा निषिद्धानि काम्यानि च वर्जयित्वा नित्यनैमित्तिकानि कर्माणि प्रायश्चित्तरूपाणि च कर्माण्यवश्यमनुष्ठेयानि। निषिद्धकर्माभावान्न हीनलोकप्राप्तिः। काम्यकर्माभावान्नाप्युत्तमलोकप्राप्तिः। नित्यनैमित्तिककर्माननुष्ठानजन्यप्रत्यवायरूपपापं तदनुष्ठानेन नैवोत्पद्यते। इह जन्मनि जन्मान्तरे वा प्रागनुष्ठितानि पापानि सर्वाण्यपि साधरणासाधारणप्रायश्चित्ताभ्यां निश्शेषं विनश्यन्ति। नित्यनैमित्तिककर्मानुष्ठानक्लेशैरपि सञ्चितानि निषिद्धकर्माणि विनश्यन्ति। सञ्चितकाम्यकर्माण्यपि मुमुक्षोरिदानीं तत्फलेच्छाया निवृत्तत्वात्स्वफलं न प्रयच्छन्ति। तस्मान्मुमुक्षोरनायासेन विनैव ज्ञानं जन्माभावरूपमोक्षः सिद्ध्यतीति।

(१००) **नित्यनैमित्तिकाभ्यां स्वर्गफलं स्यादेव**—विना ज्ञानं कर्मणैव मोक्ष इत्येतन्न युज्यते। नित्यनैमित्तिककर्मणामपि फलावश्यंभावनियमस्य तत्र तत्र भाष्येषु युक्त्या प्रमाणेन च सम्यङ्निरूपितत्वात्। अतो नित्यनैमित्तिककर्मभिः प्राप्येतैवोत्तमलोकः फलम्, न तु जन्माभावः सिद्ध्येति। नित्यनैमित्तिककर्मणां फलानभ्युपगमे तद्बोधकवेदो निष्फलो भवेत्। यदि नित्यनैमित्तिककर्माननुष्ठानात्पापं जायेत, तदा तदनुष्ठानात्पापानुत्पत्तिस्तत्फलत्वेनेष्येत। न च नित्यनैमित्तिककर्माननुष्ठानात्पापं जायते इति वक्तुं युक्तं, अभावाद्भावोत्पत्त्यदर्शनात्। तेषामननुष्ठानमभावः, पापञ्च भाव-

रूपम्, न ह्यभावाद्भाव उत्पद्येत। तस्मान्नित्यनमित्तिककर्माननुष्ठानात्पापोत्पत्ति-वचनमसङ्गतमेव। नित्यनैमित्तिककर्माननुष्ठानात् पापोत्पत्त्यभ्युपगमे "कथमसतः सज्जायेत" (छा. 6-2-2) "नासतो विद्यते भावो नाभावो विद्यते सतः" (भ. गी. 2-16) इत्यादिश्रुतेर्भगवद्वचनस्य च विरोधः स्यात्। तस्मान्नित्य-नैमित्तिककर्माननुष्ठानरूपाभावाद्भावरूपपापोत्पत्तिरनुपपन्नैव। इत्थं च नित्य-नैमित्तिककर्मणां प्रत्यवायानुत्पत्तिरेव फलमिति वचनमसङ्गतम्, विनापि नित्यनैमित्तिककर्माणि पापानुत्पत्तेः सिद्धेः। किञ्च, नित्यनैमित्तिककर्मणां स्वर्गादिफलानङ्गीकारे निष्फलानि तानि स्युः, निष्फलं कर्म विदधच्छास्त्रमपि विफलं भवेत्। तस्मान्नित्यनैमित्तिककर्मणां स्वर्गादिफलमवश्यमभ्युपगन्त-व्यमेवेति सिद्धम्।

(१०१) **प्रायश्चित्तादखिलसञ्चितपापक्षयासंभवः**—यदुक्तं साधा-रणासाधारणप्रायश्चित्तात्सकलाशुभकर्मक्षयो भवतीति, तन्न संभवति। विचित्राण्य-नेककल्पानुष्ठिताशुभकर्माण्येकस्मिन्नेव जन्मनि न युगपत् प्रायश्चित्तेन विन-श्येयुः। सकलपापक्षयकरत्वेनोक्तगङ्गास्नानेश्वरनामोच्चारणादिसाधारणप्रायश्चित्त-मपि चित्तशुद्ध्यादिद्वारा सकलपापक्षयकरज्ञानोत्पत्तिहेतुत्वाद्गौण्या वृत्त्या पापक्षयकरमित्युच्यते, न तु साक्षात्। सकलपापानां युगपत् साक्षान्नाश-कन्तु ब्रह्मज्ञानमेव। "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे," (मु. 2-2-8) "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" (भ. गी. 4-37) इत्यादिश्रुतिस्मृतिभ्यः।

(१०२) **सञ्चितकाम्यकर्माण्यज्ञस्यावश्यं फलं प्रदद्युः**—यच्चोक्तं जन्मान्तरसञ्चितकाम्यकर्माणि, इदानीं मुमुक्षोः तत्फलेच्छाभावमात्रेण न फलाय कल्पन्त इति, तदप्यसङ्गतमेव। तथाहि कर्मरूपबीजादङ्कुरद्वयं जायते, **अदृष्टं वासना चेति**। धर्माधर्मयोरदृष्टमिति नाम। शुभकर्मणः शुभ-वासना धर्मरूपोऽङ्कुरश्च जायते। अशुभकर्मणोऽशुभवासना अधर्मरूपो-ऽङ्कुरश्च जायते। शुभवासनया पुनरपि शुभकर्मणि प्रवृत्तिर्जायते। तादृश-शुभकर्मजन्येन धर्मेण सुखोपभोगो जायते। एवमेवाशुभवासनया पुन-रप्यशुभकर्मणि प्रवृत्तिः, तादृशाशुभकर्मजन्येनाधर्मेण दुःखोपभोगश्च जायते। इत्थं वासना चादृष्टञ्चेत्यङ्कुरद्वयं कर्मरूपबीजाज्जायते। तत्र वासनारूपोऽङ्कुरः उपायेन नश्यति। अदृष्टरूपोऽङ्कुरस्तु नादत्वा

फलं विनश्यति केनचिदप्युपायेन। अयमेव शास्त्रसिद्धान्तः। अशुभकर्मणो जायमानाशुभवासनारूपोऽङ्कुरः सत्सङ्गाद्युपायैर्विनश्यति। शुभकर्मणो जायमानशुभवासनारूपोऽङ्कुरः दुस्सङ्गादिना विनश्यति। शास्त्रीयसर्वपुरुषार्थसाधनैः स्वाभाविकप्रवृत्तिहेतुवासनाः विनश्यन्ति। अतः पुरुषार्थसाधनानुष्ठानमपि सफलमेव। भोगहेत्वदृष्टन्तु भोगं विना न विनश्यति। तस्मात् 'स्वं फलमदत्वा नैव कर्म क्षीयत' इति शास्त्रोक्तं न विरुद्धयते। इत्थमज्ञानां फलभोगमन्तरा न विनश्यति कर्म। ज्ञानिनां त्वन्तरापि फलभोगं कर्म निश्शेषं समूलं विनश्यति। यस्मात् कर्ता कर्म फलञ्चेत्येतत् त्रयमपि न परमार्थतोऽस्ति। अपि त्वविद्यया स्वप्नवत्कल्प्यते। अस्या अविद्याया ज्ञानं विरोधि। तस्मादविद्याकल्पितानि कर्मादीन्यपि ज्ञानेन नश्यन्त्येव। यथा निद्रया कल्पितस्वप्नोपलब्धपदार्थाः जाग्रति निद्राक्षये नोपलभ्यन्ते, तथाऽविद्यारूपनिद्रया प्रतिभासमानकर्मकर्तृफलात्मकत्रिपुट्यपि ज्ञानात्मकजाग्रद्दशायामविद्यानिवृत्तावभावीभवति। न ह्येतेषां ज्ञानमन्तरा निश्शेषतो नाशः कदापि संभवति।

किञ्चेदानीं भोक्तुरिच्छाभावमात्रेण सञ्चितकर्मफलभोगो यदि न जायेत, तदेश्वरसङ्कल्पो मिथ्या भवेत्। 'फलोपभोगमन्तराऽज्ञानां कर्म न नश्यति' इतीश्वरसङ्कल्पः। भोक्तुरिच्छाभावमात्रेण कर्मफलनाशाभ्युपगमे ईश्वरसङ्कल्पो मिथ्यैव स्यात्। ईश्वरः "सत्यकामः सत्यसङ्कल्पः" (छा. 8-1-5; 8-7-1.) इति हि श्रुतिः। तस्मादिच्छाभावमात्रेण सञ्चितं काम्यकर्म न फलिष्यतीति विरुद्धमेवोच्यते।

अपि चेच्छाभावमात्रेण सञ्चितं काम्यकर्म न फलाय कल्पत इति चेत् तर्ह्यशुभकर्मणोऽपि फलं न कस्यचिदपि संभवेत्, अशुभकर्मफले दुःखे कस्यापीच्छानुदयात्। तस्माज्ज्ञानाभावे कर्मफलाभावो न केनचिदप्युपायेन संभवति। अवश्यं च कृतं कर्म स्वफलं दद्यादेव।

**(१०३) ज्ञानं विना कर्मफलं न नश्येत्**—कर्मानुष्ठानकाले निष्कामस्य पुरुषस्य फलेच्छाभावात् कर्म फलाय न कल्पत इति वेदान्तनिश्चयो यथा, तथैवैकभविकवादे कर्मानुष्ठानानन्तरमपि यस्य पुरुषस्य सञ्चितकर्मफलेच्छा निवर्तते तस्य मुमुक्षोः कर्मफलं न जायते इति यदुक्तं पूर्वं, तद्वेदान्तसिद्धान्तानभिज्ञतयैवोक्तम्। फलाभिसन्ध्यनभिसन्धिपूर्वकं कृतवतोरुभयोरपि कर्मावश्यं फलं ददात्येव। तत्र निष्कामनयानुष्ठितं कर्म मुमुक्षो-

श्चित्तशुद्धिमात्रं फलं जनयेत्। फलाभिसन्धिपूर्वकमनुष्ठितं सकामस्य कर्म भोगरूपमेव फलं प्रयच्छति, न तु चित्तशुद्धिम्। निष्कामनयानुष्ठितं कर्म मुमुक्षोः सत्वशुद्धिश्रवणादिद्वारा अपरोक्षज्ञानं जनयति, न तु काम्यफलम्। निष्कमनया कृतमपि कर्म श्रवणाद्यभावाद्वा, कारणान्तराद्वाऽनुत्पन्नज्ञानस्यानिच्छतोऽपि भोगपरूपफलं प्रयच्छत्येवेति वेदान्तसिद्धान्तः। तस्माज्ज्ञानाभावे फलमदत्वा नैव कर्म क्षीयते।

(१०४) **नित्यनैमित्तिकानुष्ठानजक्लेशः सञ्चितपापफलमिति न**—नित्यनैमित्तिककर्मानुष्ठानजनितक्लेशस्य पूर्वसञ्चितनिषिद्धकर्मफलरूपत्वात् तेषां न पृथक फलमस्तीति यदुक्तं, तन्न। सञ्चितनिषिद्धकर्मणामनेकप्रकारत्वात् तत्फलस्य दुःखस्याप्यनेकविधत्वनियमात्कर्मानुष्ठानजनितक्लेश एव तेषां फलमिति वक्तुं न शक्यते।

(१०५) **सञ्चितसकलकाम्यकर्मफलं नैकेन शरीरेणानुभवितुं शक्यम्**—किञ्च, सकलसञ्चितकाम्यकर्मणां फलत्वेन समुच्चित्यैकमेव शरीरं जायते इति यत्पूर्वमुक्तं, तन्न संभवति। सञ्चितनानाकाम्यकर्मणामनेकविरुद्धफलत्वात्तेषां फलमेकेनैव जन्मनाऽनुभवितुं न शक्यते। एकस्मिन्नेव जन्मनि युगपदेव नानाशरीरैः सकलभोगाननुभवतीति तु सिद्धयोगिविषये घटते, न त्वितरस्य विषये। सिद्धयोगिनोऽपि ह्यष्टैश्वर्यादिसर्वसिद्धिसामर्थ्ये सत्यपि विना ज्ञानं न मोक्षः सिद्ध्यतीति वेदान्तसिद्धान्तः।

(१०६) **निष्कृष्टार्थस्तु**—इत्थं च काम्यकर्माणि निषिद्धकर्माणि च विहाय नित्यनैमित्तिककर्माण्यनुतिष्ठतोऽज्ञस्य तत्तन्नित्यनैमित्तिककर्मणां फलानुभवाय, जन्मान्तरार्जितशुभाशुभकर्मणां फलानुभवाय च प्रत्येकमनेकशरीराण्युत्पद्येरन्नेव, न तु मोक्षः संभवेत्। तस्माज्ज्ञानद्वारा बन्धनिवृत्तिरेवास्य ग्रन्थस्य प्रयोजनमिति युक्तमेवोक्तम्। यथा स्वप्ने उपलभ्यमानमिथ्यावस्तु जाग्रत्प्रबोधमन्तरा न निवर्तते, तथाऽविद्यादशायामुपलभ्यमानमिथ्याप्रपञ्चोऽपि ज्ञानात्मकजागरणमन्तरा न निवर्तेतेति सिद्धम्।

(आ० १०७-१०८) **संबन्धविषयकाक्षेपः समाधानं च**—

(१०७) **आक्षेपः**—अधिकार्याद्यसिद्धेर्न संबन्धोऽपि सिद्ध्यति। तथा हि, (1) विषयासिद्ध्या ग्रन्थविषययोः प्रतिपाद्यप्रतिपादकभावरूपः संबन्धो न सिद्ध्यति। (2) अधिकारिफलयोरभावाच्चानयोः प्राप्यप्रापकभावरूप-

संबन्धो न सिद्ध्यति । (3) अधिकार्यसिद्ध्या अधिकारिविचारयोः कर्तृ-कर्तव्यभावरूपसंबन्धो न सिद्ध्यति । (4) निष्फलत्वाज्ज्ञानस्य ग्रन्थज्ञानयो-र्जन्यजनकभावः संबन्धोऽपि न सिद्ध्यति । सफलं च वस्तूत्पद्येत न निष्फलं, ज्ञानं तु पूर्वोक्तरीत्या न सफलम् । (5) किञ्च ज्ञानस्य स्वरूपासिद्ध्यैव न ज्ञानग्रन्थयोः संबन्धो घटते । सिद्धान्ते हि जीवब्रह्माभेदनिश्चय एव ज्ञान-मित्युच्यते । जीवब्रह्माभेदासंभवादेव स च निश्चयो मृषेति प्राग्विषयप्रस्तावे आक्षिप्तत्वादभेदनिश्चयरूपं ज्ञानं न सिद्ध्यति । इत्थमधिकार्याद्यनुबन्धचतुष्टया-सिद्ध्याऽस्य ग्रन्थस्यारम्भो विफल, इति ।

(१०८) **समाधानम्**—पूर्वोक्तप्रकारेण ग्रन्थस्याधिकारिविषयप्रयो-जनानां श्रुतियुक्त्यनुभवैः प्रसाधितत्वादेषां संबन्धोऽपि संभवति । तस्मादस्य ग्रन्थस्यारम्भः शक्यत एव कर्तुम् ।

**इति श्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचिते संस्कृतविचारसागरे अनुबन्धानां विशेषतो निरूपणं नाम द्वितीयस्तरङ्गः ॥**

अथ संस्कृतविचारसागरे गुरुशिष्यस्वरूपनिरूपणं नाम

## तृतीयस्तरङ्गः ।

(१०९) **ग्रन्थारम्भप्रतिज्ञा**—यस्त्वनुबन्धचतुष्टयं सम्यक् विज्ञाय वेदान्तविज्ञानसुनिश्चितार्थं स्थितप्रज्ञं वरिष्ठं श्रोत्रियं सद्गुरुमासाद्य तत्प्रसादाद्वेदान्तग्रन्थं पठति, शृणोति चात्यादरेण श्रद्धया भक्त्या च, स एव मोक्षसाधनं ज्ञानं प्राप्नोति ।

गुरुशिष्यसंवादरूपेणार्थनिरूपणे कृते श्रोतृणां सुखावबोधो भवेदिति गुरुशिष्यप्रश्नप्रतिवचनरूपेण ग्रन्थ आरभ्यते ।

(११०) **गुरुलक्षणम्**—यः साङ्गवेदाध्यायी तदर्थज्ञो जीवब्रह्मैक्यविषयकदृढतरनिश्चयात्परिनिष्ठितात्मसाक्षात्कारवान् स एव गुरुः[1] । न हि वेदाध्ययनवत्त्वमात्रेणात्मज्ञानशून्यो गुरुर्भवति । आत्मज्ञोऽपि वेदाध्ययनशून्यः, स्वयं मुक्तोऽपि परोपदेशयोग्यगुरुर्न स्यात् ; यतो जिज्ञासुशिष्यहृद्गतसन्देहनिवर्तनक्षमाणां युक्तीनां प्रतिभानं वेदाध्ययनशून्यस्य न जायते । सन्देहशून्यस्योत्तमसंस्कारवतश्चरमजन्मनो जिज्ञासोरुपदेशे समर्थोऽप्ययम्, साधारण्येन सर्वमुमुक्षुजनोपदेशसामर्थ्याभावान्नाचार्यो भवितुमर्हति । तस्माद्वेदाध्ययनसंपन्नः आत्मज्ञश्चैवाचार्य इत्युच्यते । स हि शिष्यबुद्धिगतपञ्चविधभेदान्नानायुक्तिभिर्निवर्तयितुं समर्थः स्यात्[2] । ते च भेदाः—(1) जीवेश्वरभेदः, (2) जीवानां परस्परभेदः, (3) जीवजडभेदः, (4) ईश्वरजडभेदः, (5) जडानां परस्परभेद इति । सर्वानेतान् भेदान् खण्डयितुं स एव समर्थः । भेदश्च

---

१. यथा स्वयं मार्गज्ञो मार्गोपदेशे समर्थस्तथा ब्रह्मस्वरूपज्ञ एव ब्रह्मोपदेशयोग्यो भवति ।

२. **पञ्चभेदखण्डनयुक्तयः**—

(1) घटाकाशमठाकाशभेदवत् जीवेश्वरभेदोऽविद्या, मायारूपोपाधिजनितत्वात् कल्पितः ।

(2) नानाघटाकाशभेदवत् जीवानां परस्परभेदः आभाससहितान्तःकरणरूपोपाधिजनितत्वात् कल्पितः ।

(3) जीवजडभेदः साभासान्तःकरण, निराभासनामरूपमयोधिजनितत्वात्कल्पितः ।

(4) ईश्वरजडभेदः साभासमाया, नामरूपमयोधिजनितत्वात्कल्पितः ।

(5) रज्ज्वारोपितसर्पदण्डादिभेदवत् जडानां परस्परभेदो नामरूपमयोधिजनितत्वात्कल्पितः ।

भयहेतुः। "उदरमन्तरं कुरुते," (तै. ब्र. 7) "द्वितीयाद्वै भयं भवति" (बृ. 1-4-2.) इत्यादिश्रुतिभ्यः। तस्माद्भेदोऽवश्यं खण्डनीयः। उक्तलक्षण एवाचार्यः स्वशिष्यं 'अविद्यादिसर्वमलशून्याद्वितीयब्रह्मैवाहमस्मि' इति साक्षादपरोक्षानुभववन्तं कर्तुं शक्नुयात्। तादृशसाक्षात्कारवानेव शिष्यः, 'सर्वोऽपि संसारो दृश्यप्रपञ्चो द्वैतः स्वप्नादिवन्मयि चिन्मात्रे स्वाज्ञानवशान्मिथ्या प्रतिभासते' इति साक्षाज्जानीयात्। ईदृशाद्भुतदुर्दृशस्वात्मतत्वोपदेष्टैवाचार्य इत्युच्यते। संसारमहाग्राहग्रस्तं शिष्यं तन्मुखाज्जीवब्रह्माद्वैतोपदेशेन यो मोचयति स एव गुरुः।

"बहवो गुरवः सन्ति शिष्यवित्तापहारकाः।
दुर्लभोऽयं गुरुर्देवि! शिष्यहृत्तापहारकः॥" इति स्मृतेः।

(१११) **शिष्यलक्षणम्** — वेदान्तग्रन्थप्रवृत्तिसंपादकं प्रथमतरङ्गे यदधिकारिविशेषणमुक्तं साधनचतुष्टयरूपं, तत्संपत्तिरेव शिष्यस्य लक्षणं भवति।

(११२) **गुरुभक्तेः फलम्**—ईश्वरापेक्षयाप्यधिकतया श्रद्धाभक्तिप्रणामादिकं गुरौ शिष्येण कर्तव्यं। यतोऽखिलशास्त्रव्युत्पन्नोऽपि गुरूपदेशमन्तरा स्वात्मतत्त्वं न जानीयात्। "नैषा तर्केण मतिरापनेया" (क. 1-2-9) "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" (क. 1-2-23) & (मु. 3-2-3) "आचार्यवान् पुरुषो वेद" (छा. 6-14-2) "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" (छा. 4-9-3) इति श्रुतेः। अयमेवार्थो वक्ष्यमाणदृष्टान्तेन स्फुटीक्रियते। तथा हि—वेदरूपसमुद्रो गुरूपदेशाभावे क्षारो भवति। क्षारसागरे पतितस्तज्जलं पीत्वा केवलं दुःखमेवानुभवति यथा, तथा गुरूपदेशं विनैव शास्त्रान्तरकुशला अपि स्वातन्त्र्येण वेदार्थं विचारयन्तो गुरुसंप्रदायाभावाद्भेद एव सर्ववेदार्थ इति स्वमतिविभवानुसारेण निश्चित्य भेदरूपक्षारजलमेवास्वाद्य जननमरणप्रबन्धात्मकदुःखमेवाविश्रममनुभवन्ति; न तु मुक्तिरूपनित्यनिरतिशयानन्दं लभन्ते।

१. जननमरणात्मकं भयम्।

२. श्रीवासिष्ठद्विविधभागवतसूतसंहितादिसकलेतिहासपुराणादिष्वद्वैतमेव प्रतिपाद्यते। तथाष्टोत्तरशतोपनिषत्स्वपि। अपि चानधिगताबाधितापूर्वत्वच्चाद्वैतमेव शास्त्रार्थः।

किञ्च, "बृह बृहि वृद्धौ" इति धातुर्वृद्धिमाचष्टे। सा च वृद्धिरत्र प्रतियोगिविशेषानुपादानान्निरतिशयैव विवक्षिता। सति तु वस्त्वन्तरे तेन परिच्छेदाद्वृद्धेर्निरतिशयत्वं भज्येत। तथा च वस्त्वन्तरकृतपरिच्छेदरहितमेव ब्रह्मशब्दवाच्यम्। देशकालयोरपि वस्तुत्वात्, वस्तुमात्रस्य च ब्रह्मस्वरूपेऽध्यस्तत्वेन, वस्तुकृतपरिच्छेदनिरासेनैव ब्रह्मणि देशकालकृतपरिच्छेदनिरासो बोध्यः।

जीवब्रह्मैक्योपदेष्टैव गुरुरिति गुरुलक्षणं निरूपितम्; तादृशादखण्डब्रह्मात्मैकत्व-विदः सद्गुरोर्मुखाद्ये वेदान्तविचारं कुर्वन्ति, ते देवामृतादप्यधिकं निरतिशयं ब्रह्मानन्दमनुभवन्ति। यथा स्वभावतः क्षारं समुद्रजलं पात्रेण गृहीत्वा पीतश्चेत्तदा क्षारमेव भवति, तदेव समुद्रजलं मेघैराकृष्य वृष्टं सत् पीतं चेदतिमधुरं भवति; तथा वेदार्थोऽपि स्वातन्त्र्येण गुरुसंप्रदायं विना विचारितश्चेज्जननमरणदुःखहेतुर्भवति, स एवाद्वैतब्रह्मात्मापरोक्षानुभविश्री-सद्गुरुमुखादवाप्यते चेन्नित्यनिरतिशयापरोक्षाखण्डानन्दस्वरूपात्माधिगमाय भवति। तस्माद्गुरुमुखादेव वेदार्थो ग्राह्यो वैदिकेन।

(११३) **ब्रह्मज्ञाद्गुरोरेव वेदार्थो ग्राह्यः**—यथा दृतिमुखाद्वा घटमुखाद्वा गृहीतं समुद्रजलं स्वविलक्षणरसास्वादनहेतुर्न भवति, तथाऽज्ञपुरुषमुखाद्गृहीतं वेदरूपसमुद्रस्यार्थरूपं जलं विलक्षणानन्दजनकं न भवति। तस्मादज्ञः पाठक-गुरुर्दृतिघटादिसमः। ज्ञानी गुरुः मेघसम इति प्रागुक्तम्। तस्मान्मुमुक्षुर्दृतिघटादि-तुल्यमज्ञपाठकगुरुं हित्वा मेघतुल्यब्रह्मज्ञगुरुमुखाद्वेदार्थश्रवणं कुर्यात् "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्।" (मु. 1-2-12) "उपदे-क्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" (भ. गी. 4-34) इत्यादिश्रुतिस्मृतिभ्यः।

(११४) **पौरुषेयप्रबन्धादपि ज्ञानं जायेत**—ब्रह्मविन्मुखादेव वेदार्थो ग्रहीतव्य इति पूर्ववर्ते उक्तत्वाद्वेदान्तवाक्यार्थविचारेणैव जीवब्रह्मैक्यज्ञानं जायेत, न त्वितरैः पौरुषेयैः संस्कृतग्रन्थैर्वा भाषाप्रबन्धैर्वेति सिद्धम्। अस्य प्रबन्धस्य पौरुषेयत्वादारम्भो व्यर्थ इत्याशङ्कायामुच्यते—"स यो ह वै तत् परं ब्रह्म वेद ब्रह्मैव

१. "बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्॥"
"आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि।
स्वयमाचरते यस्मादाचार्यस्तेन कथ्यते॥"
"गुकारो ह्यन्धकारः स्यात् रुकारस्तन्निवर्तकः।
ब्रह्मान्धकारनाशित्वाद्गुरुरित्युच्यते बुधैः॥"

२. पौरुषेयवेदान्तप्रकरणग्रन्थैर्ज्ञानं न जायेतेति वदन् वादी प्रष्टव्यः। (1) किं तादृशग्रन्थैर्वेदवचनानुसारित्वाभावाच्च ज्ञानं जायेत, उत वेदार्थानुसारित्वाभावाद्वेति।

वेदवचनानुसारित्वाभावादिति चेत्—स्मृतीतिहासपुराणादीनामपि तथात्वात्ते-भ्योऽपि ज्ञानानुत्पत्तिप्रसङ्गः। अथ वेदार्थानुसारित्वाभावादिति चेत्, तन्न। यथा बहवः स्मृतिपुराणादयो ग्रन्था वेदार्थानुसारिण एव तथा संस्कृतप्राकृतभाषादिमयवेदान्तप्रकरण-ग्रन्था अपि बहवो वेदार्थानुसारिणो भवन्त्येव। यथा चायुर्वेदानुसारिसंस्कृतप्राकृतादिग्रन्था रोगतन्निवर्तकौषधादिज्ञानं जनयन्ति, तथा वेदार्थानुसारिसंस्कृतप्राकृतादिवेदान्तप्रकरणग्रन्था अपि अद्वितीयात्मविज्ञानं तदुपायज्ञानं च जनयेयुरेव।

भवति", (मु. 3-2-9) इत्यादिश्रुत्या ब्रह्मवित् ज्ञानी ब्रह्मैव। अत एव तस्य वाक् वेदरूपैव। सा च वाक्, संस्कृतरूपा वाऽस्तु भाषाप्रबन्धादिरूपा वास्तु; सर्वथा तस्य वचनं भेदभ्रमं निवर्तयति निश्शेषम्। ननु "वेदान्तविज्ञानसुनिश्चितार्थाः" (मु. 3-2-6) "तं त्वौपनिषदं पुरुषम्" (बृ. 3-9-26) इत्यादिश्रुतिभिर्वेद-वाक्यादेव ब्रह्मज्ञानं जायेत न तु प्रमाणभूतैरपि प्रबन्धान्तरैरिति चेन्न; तथाऽदर्शनात्। आयुर्वेदोक्तरोगतन्निदानस्थानौषधादीनां ज्ञानमितरसंस्कृतवैद्यग्रन्थैः प्राकृतभाषादिग्रन्थैश्च यथा सममेवोत्पद्यते, तथा सर्वेषां प्रत्यक्चैतन्याभिन्नाद्वितीय-ब्रह्मज्ञानमपि पौरुषेयग्रन्थैरपि जायेतैव। अत एव सर्वज्ञैर्मुनिभिर्महर्षिभिर्ब्रह्मनिष्ठैः वेदान्तार्थानुवादकैः स्मृतीतिहासपुराणादिबहुग्रन्थैरद्वितीयब्रह्मात्मविद्या स्फुटं विवृता वर्तते। विनौपनिषदा ज्ञानं चेन्नोत्पद्येत, तदा तैः स्मृत्यादिप्रणयनं व्यर्थं प्रसज्येत। तस्मादुपनिषदामविरोधेनात्मस्वरूपप्रतिपादनपरैर्यैः कैश्चिदपि ग्रन्थैर्ज्ञानं जायेतैवेत्यभ्युगन्तव्यम्। तत्प्रतिपादकवाक्यानि वैदिकानि वा सन्तु भाषान्तर-भूतानि वा, नैवास्ति विशेषः। एवञ्च पौरुषेयग्रन्थैरपि ज्ञानं जायेतेति सिद्धम्।

(११५) **श्रीगुरुसेवा**—यस्य ब्रह्मविदो वाक् वेदवाक्यसमा तमेव ब्रह्मविदमाचार्यबुद्ध्योपासीत जिज्ञासुः। यदोपासनया गुरुरावर्जितो भवति तदा जिज्ञासुर्निजस्वरूपमपरोक्षीकरोति। एतेन गुरुसेवाऽभ्यधिकेश्वरसेवात इति सिद्ध्यति। ईश्वरसेवाऽदृष्टफलमात्रहेतुः, सद्गुरुसेवा तु दृष्टादृष्टोभयफलहेतुः। धर्माधर्मोत्पत्तिद्वारा फलहेतुर्यो भवति सोऽदृष्टफलहेतुरिति, धर्माधर्मोत्पत्तिं विनैव साक्षात्फलहेतुर्यो भवति स दृष्टफलहेतुरिति चोच्यते। ईश्वरसेवा धर्मोत्पत्तिद्वाराऽन्तःकरणशुद्धिरूपफलहेतुर्भवति; अत एवेश्वरसेवाऽदृष्टफलहेतुः। सद्गुरुसेवा तु धर्मनिरपेक्षा आचार्यप्रसादमात्रेणोपदेशात्मकफलहेतुर्भवति। तस्मात् दृष्टफलहेतुः सद्गुरुसेवेत्युच्यते। किञ्च सद्गुरुसेवा धर्मोत्पत्तिद्वाराऽन्तःकरण-शुद्धिरूपफलहेतुश्चेश्वरसेवावद्भवति। अतोऽदृष्टफलहेतुरपि भवति। एतेना-चार्यसेवा ह्यीश्वरोपासनातोऽधिकतरा विज्ञायते। तस्मात्सर्वथा जिज्ञासुमुमुक्षुभिः श्रीसद्गुरुवरो ब्रह्मनिष्ठ एव सदा सेव्यः।

(११६) **गुरुसेवाक्रमः**—श्रीसद्गुरुलाभोत्तरक्षणे तद्दर्शनमात्रात्सा-

१. "पद्भ्यां कराभ्यामूरुभ्यामुरसा शिरसा भुवि।
पतनं दीर्घतरुवत् प्रणामोऽष्टाङ्ग उच्यते॥"
"पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा।
वचसा मनसा चैव प्रणामोऽष्टाङ्ग उच्यते॥"

ष्टाङ्गं नमस्कृत्य तच्चरणकमलरजांसि परिशुद्धतमानि स्वोत्तमाङ्गे धारयेत्। पश्चात् सद्गुरुप्रसादाद्बन्धमोचनाकाङ्क्षी तीव्रतरमुमुक्षुर्गुरुकुले ब्रह्मचारी वसेत्। तस्मै स्वशरीरमनोवाग्धनादीनि समर्पयेत्।

(११७) **शरीरार्पणम्**—श्रीसद्गुरोरभिमतशुश्रूषां बहुतरं कृत्वा मनागपि तदाज्ञानतिलङ्घनेन वर्तनमेव शरीरार्पणमित्युच्यते।

(११८) **मनोऽर्पणम्**—ब्रह्मविष्णुशिवात्मक एव श्रीसद्गुरुर्नान्य इति मनसा निश्चित्य तस्मिन् परमां भक्तिं[1] प्रेमातिशयं च कृत्वा, यथा तस्य कृपाकटाक्षः स्वस्मिन् पतेत्तथा तमनुवर्तेत। स्वप्नेऽपि तस्मिन् दोषदृष्टिं न कुर्यात्। स एव हरिः, हरो, ब्रह्मा, गङ्गा, सूर्यः, इति[2] विजानीयात्। निरतिशयक्षेमार्थी मुमुक्षुः श्रीसद्गुरोः स्वरूपं हृदि धारयन् सदा तमेव ध्यायेत्। एतत्सर्वं मनोऽर्पणमुच्यते।

(११९) **वागर्पणम्**—"यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि" (तै. शि. 11-2.) इत्यादिश्रुत्युक्तप्रकारेण श्रीसद्गुरुप्रारब्धकर्माधीनशरीरादिगत-गुणगणकीर्तनमन्तरा तन्निष्ठदोषाणामनुच्चारणमेव वागर्पणमुच्यते।

(१२०) **धनार्पणम्**—पत्नीपुत्रभूमिपशुदासीदासद्रव्यगृहधान्यानां धनमिति लोकप्रसिद्धिः। एतत्सर्वं सन्यस्य शरणत्वेन श्रीसद्गुरोरुपसदनमेव धनार्पण-मुच्यते। सन्यासित्वेन सर्वसङ्गपरित्यागस्य कृतत्वात्कृतार्थः श्रीसद्गुरुर्न धनादिकं किञ्चिदप्यपेक्षेत शिष्येभ्यः। अत एव सर्वपरिग्रहत्यागपूर्वकं स्वार्पणमेव गुरवे धनार्पणमित्युच्यते। यदि स्याद्गुरुर्गृहाश्रमी तदा सर्वं धनं तस्मा एव समर्पयेत्। "इमे विदेहाः अयमहमस्मि" (बृ. 4-2-4.)

१. सा च भक्तिर्नवविधा—(1) श्रवणम् (2) कीर्तनं (3) स्मरणम् (4) पादसेवनम् (5) अर्चनम् (6) वन्दनम् (7) दास्यम् (8) सख्यम् (9) आत्मनिवेदनम्, इति तथा चोक्तमन्यत्र—

"श्रवणं कीर्तनं चैव स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥" इति।

२. श्रीसद्गुरुर्यदा शिष्ये प्रसन्नो भवति तदा स विष्णुरूपेण वर्तते। यदा क्रुद्धस्तदा शिवरूपेण, यदा राजसव्यापारेण युक्तस्तदा ब्रह्मरूपेण, यदा प्रशान्तस्तदा गङ्गारूपेण, यदा वेदान्तवाक्यकिरणैः शिष्यभ्रमसंशयादिसहिताज्ञानं निश्शेषं निवर्तयति तदा सूर्यरूपेण च वर्तते इति विज्ञेयम्। इत्थं ब्रह्मनिष्ठे श्रीसद्गुरौ शिष्येण साक्षादीश्वरबुद्धिः कार्या। स्वप्नेऽपि तद्दोषग्राहिणा न भाव्यम्। ज्ञानलाभाय ज्ञानावाप्तेः प्राक् गुरुः सेव्यः। परमपि कृतघ्नतादोषनिवृत्तये गुरुः सेव्यः। तथा चोक्तम्—

"आदौ ज्ञानाप्तये पश्चात् कृतघ्नत्वनिवृत्तये।
यावज्जीवं त्रयो वन्द्याः वेदान्तो गुरुरीश्वरः॥" इति।

इतिवत् । अयमपरो धनार्पणप्रकारः । न च ब्रह्मविच्चेद्गुरुः स कथं गृहाश्रमी स्यादिति शङ्क्यम् । वसिष्ठविश्वामित्रव्यासयाज्ञवल्क्योद्दालकरामकृष्णादयोऽपि श्रीसद्गुरवो गृहाश्रम एवावर्तन्त इति श्रुतिस्मृतिशतेभ्योऽवगम्यते । तस्माद्गृहाश्रमे वर्तमाना अपि ब्रह्मनिष्ठा गुरवो भवेयुः ।

(१२१) **श्रीसद्गुरुलाभानन्तरं शिष्याचरणप्रकारः**—निःश्रेयसार्थिना मुमुक्षुणा पूर्वोक्तप्रकारेण शरीरादीन् श्रीसद्गुरवे समर्प्य, तद्वसतावन्यत्र वा गुरोः समीपे वसता, दृढतरात्मापरोक्षसाक्षात्कारपर्यन्तं [१]भिक्षाशिना च भाव्यम् । तां च भिक्षां स्वातन्त्र्येण न भुञ्जीत, श्रीसद्गुरुसन्निधौ समर्पयेत् । श्रीसद्गुरोरनुज्ञा स्याच्चेत् तदाश्नीयाद्भिक्षाम् । यदि गुरुः शिष्यभक्त्यतिशयपरीक्षणाय नानुमन्येत तदा तूष्णीमेवोपवसेत् । न चैकस्मिन्दिवसे द्विर्भिक्षार्थं ग्रामं प्रविशेत् । ततः परेद्युर्यथाविधि भिक्षाचर्यं चरेत् । एवं गुरुं सेवमानो न मनागपि मनोविकृतिमापद्येत । यदा चिरकालमेवं सेव्यमानो गुरुः प्रसीदति तदा तत्समयं प्रतीक्ष्य स्वजिज्ञासां तस्मै निवेदयेत् ।

"स्वामिन्नमस्ते नतलोकबन्धो कारुण्यसिन्धो पतितं भवाब्धौ ।
मामुद्धरात्मीयकटाक्षदृष्ट्या ऋज्व्याऽतिकारुण्यसुधाभिवृष्ट्या ॥"

इत्यादिस्तुतिपूर्वकं प्रश्नेच्छां निवेदयेत् । यदि पृच्छेत्यनुमतिं दद्यात्तदा स्वसंशयो निवेदनीयः । शिष्यस्यानन्तजन्मान्तरार्जितपुण्यपुञ्जवशात् श्रीसद्गुरुः कृपया केवलं धनाद्यनपेक्षया यद्युपदिशेत्, तदोत्तमाधिकारिणस्तस्य निरतिशयकल्याणं जायेत । तत्रोत्तमोत्तमब्रह्मनिष्ठश्रीसद्गुरुसेवायाः फलं द्विविधम्; श्रीसद्गुरोर्निरतिशयप्रसादलाभः प्रथमं फलं, द्वितीयं फलं तु कामक्रोधादिसर्वमलनिवृत्तिद्वाराऽन्तःकरणशुद्धिः । एतद्द्वयमप्युत्तमाधिकारिणः शिष्यस्य सिद्धमेव भवति ।

गुरवे यो मनोवाचौ कायार्थादि समर्प्य तम् ।
सेवते, भवति ब्रह्म प्रसादातिशयाद्गुरोः ॥

यस्तु मनोवाक्कायधनादिकं श्रीसद्गुरवे समर्प्याहोरात्रं तं शुश्रूषते स हि ब्रह्मैव भवति । सद्गुरुश्चास्मै साहाय्यं करोति ।

**इति श्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचिते विचारसागरे**
**गुरुशिष्यस्वरूपनिरूपणं नाम**
**तृतीयस्तरङ्गः ॥**

---

१. अयं च नियमो ब्रह्मचारिसंन्यासिनाम्, न गृहस्थस्य ।

अथोत्तमाधिकारिण उपदेशनिरूपणं नाम

## चतुर्थस्तरङ्गः

इदानीं गुरुशिष्यसंवादात्मिका काचनापूर्वाऽऽख्यायिका[1] विरच्यते। एतच्छ्रवणमात्रेण जिज्ञासुर्मुमुक्षुरात्मविचारे भृशं समर्थो भवेत्।

**(आ. १२२-१२५) शुभसंततेः राज्ञः, तत्त्वदृष्टिरिति, अदृष्टिरिति, तर्कदृष्टिरिति समाख्यातानां तत्पुत्राणां च कथा—**

**(१२२) शुभसन्ततेस्त्रैलोक्याधिपत्यम्**—शुभसन्ततिर्नाम कश्चन राजा लोकत्रयमनुशशास। तस्यासंस्त्रयः पुत्राः—तत्त्वदृष्टिः, अदृष्टिः, तर्कदृष्टिरिति च विख्याताः, चतुश्शास्त्रप्रवीणाश्च। ते च क्रमेणास्मिन् ग्रन्थे चतुर्थपञ्चमषष्ठतरङ्गेषूत्तममध्यमकनिष्ठाधिकारित्वेन वर्ण्यन्ते। राजा तु शुभसन्ततिः शैशवं क्रीडायां, यौवनं च स्त्रीभोगे विनियुञ्जानोऽपि स्वभुजबलेन लोकत्रयमपि न्याय्येन मार्गेणापालयत्।

**(१२३) पुत्रेषु राज्यं समर्प्य शुभसंततेः प्रव्रजनम्**—तस्य राज्ञः कदाचित्स्वपूर्वपुण्यवशात् 'आत्मा अजो नित्यो निरतिशयानन्दस्वरूपश्च; ततोऽन्यत् सर्वं दुःखात्मकम्' इति विवेक उदियाय। तदा सोऽचिन्तयत्—'अहमात्मविचारं कुर्याम्, त्रयः पुत्रा मम लोकत्रयं पालयन्तु' इति। ततो मन्त्रिद्वारा पुत्रान् स्वसमीपमानाय्य स्वस्य भोगे वैराग्यमेकान्ते रतिं च तेभ्यो निवेद्य राज्याधिकारमङ्गीकर्तुं तानाज्ञापयन्नेकैकस्मै एकैकं लोकं विभज्यादात्। विभज्य राज्यादाने पुत्राणां मिथः कलहः, तन्मूलकतया प्रजानां दुःखं च भवेदिति मन्वानो राजा स्वयमेव स्वराज्यं पुत्रेभ्यो विभज्यादात्। यत्र मानवो मृतः सन् परमेश्वरात्तारकमन्त्रोपदेशं[2] लब्ध्वाऽनायासेन मुक्तिं लभेत, यत्र च सर्वान्तर्यामी विश्वेश्वरः सदा सन्निहितः, यत्र चातिगभीरा गङ्गा 'उत्तरवाहिनी' इति प्रथिता प्रवहति, तत्र काशीनगरे स्थित्वा स्वस्व-

---

१. श्रुत्यादिषूपलभ्यमानजनकयाज्ञवल्क्याद्याख्यायिकावदियं गुरुशिष्यसंवादात्मिका कथा पुराणाद्यप्रसिद्धाऽपि स्वबुद्धिमात्रेणापूर्वतया कल्प्यते।

२. काश्यां हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे, येनासावमृतो भूत्वा मोक्षं लभते।

"यत्र कुत्रापि वा काश्यां मरणे स महेश्वरः।
जन्तोर्दक्षिणकर्णे तु मत्तारं समुपादिशेत्॥" इति श्रुत्यभिप्रायोऽत्र दर्शितः।

राज्यं पालयितुं पुत्रानादिदेश स राजा। पुनरपि स पुत्रानवोचत्—'अयमपारः संसारो दुःखरूपः। पामरास्तु तं सुखरूपं मत्वा सांसारिकभोगाय धनमेवात्यादरेणोपार्जयन्ति। न तु मुक्त्यर्थमात्मविचारं कुर्वन्ति। ईदृशपामरजनैः सह वासं विहायैकान्ते निजसुखलाभायाहं यतिष्ये' इति।

(१२४) **पुत्राणामपि राज्यजिहासा**—पितृवाक्यमिदं श्रुत्वा सद्युक्तिबुद्धियुक्तास्त्रयोऽपि पुत्रा एकान्ते सम्भूयैवं समालोचयन्—'पिताऽस्मान् संसारसागरे दुःखोदर्के पातयित्वा स्वयं ब्रह्मानन्दं प्रतिपित्सति। यस्मादात्मविचारासक्तोऽपारदुःखरूपत्वादखण्डमसपत्नमपि राज्यं पिता जिहासति, तस्माद्वयमपीदं राज्यमत्यन्तदुःखरूपं परित्यजेम' इति।

(१२५) **स्वगृहान्निर्गत्य त्रयाणां गुरूपसदनम्**—एवं निर्णीय ते त्रयोऽपि पुत्राः मुमुक्षवः शुभसन्ततिरिति पितुर्नामान्वर्थीकुर्वन्तः सद्गुरुमन्वेष्टुं राजगृहान्निर्ययुः। अनेकदेशानटित्वाऽन्ततस्ते गङ्गातटमेव प्राप्य तत्र विविक्ते देशेऽत्युन्नतशाखास्कन्धफलपलाशशालिभिर्वृक्षैर्निबिडिते वने कस्यचिद्वटतरोर्मूले चिन्मुद्रया[1] जीवब्रह्मैक्यं स्वशिष्येभ्यो निर्दुष्टेभ्य[2] उपदिशन्तं गुणातीतं श्रीसद्गुरुं ददृशुः। कैलासे महाभाण्डीरवटमूले सनकादिभ्यस्तत्त्वमुपदिशन्तं परमशिवं श्रीदक्षिणामूर्तिमिवते तं विभाव्य, साष्टाङ्गं प्रणिपत्य, मोक्षेच्छया यथाविधि[3] तं शरणं गतास्तन्निकटे षण्मासान् ब्रह्मचर्यमूषुः। ततः श्रीसद्गुरुः प्रसन्नो भूत्वा मधुरया गिरा केन प्रयोजनेनागता यूयम्? के यूयम्? कुतो वात्रागमनम्? इति तान् पप्रच्छ। तदा तत्त्वदृष्टिर्भ्रात्रोरिङ्गितज्ञः साञ्जलिपुटः सविनयं प्रत्यब्रवीत्।

(१२६) **तत्त्वदृष्टिर्गुरोरनुमतिं प्रार्थयते**—'हे भगवन्! वयं त्रयोऽपि भ्रातरः शुभसन्ततेः राज्ञः कुमाराः अज्ञाः अत्यन्तं शोच्याः निजस्वरूपजिज्ञासवो भवन्तं शरणं गताः। भवान् हि कृपासमुद्रः कल्पतरुचिन्तामणिकामधेनुवच्च विराजते। वयं तु दुःखवशंवदाः। यद्याज्ञा दीयते

---

१. अङ्गुष्ठतर्जनीयोगश्चिन्मुद्रेति कीर्त्यते। इयं भद्रामुद्रा, लोपामुद्रा, तर्कमुद्रा, ज्ञानमुद्रा चेति कीर्त्यते।

२. स्तेयं, हिंसा, अब्रह्मचर्यमित्येते त्रयः शरीरदोषाः। अनृतं, परनिन्दा, कटुभाषणं, वृथालाप, इत्येते चत्वारो वाग्दोषाः। इच्छा, चिन्ता, बुद्धिमान्द्यमित्येते त्रयो मनोदोषाः। नृसिंहतापिन्युपनिषत्प्रसिद्धाः एते दश दोषाः।

३. तृतीयतरङ्गोक्तविधानेन।

तर्ह्यस्मदभिप्रायं निवेदयाम' इति तत्त्वदृष्टिः प्राह। 'हे शिष्य! शृणु मे वचः। तच्छ्रवणेन त्वद्धृदयग्रन्थयः संशयाश्च समूलमुन्मूलिता भवेयुः, त्वं च परमानन्दं प्राप्नुयाः' इति गुरुरवोचत्।

(१२७) **मुमुक्षाभिव्यञ्जकस्तत्त्वदृष्टिप्रश्नः**—

श्रीगुरोः कारुण्यं ज्ञात्वा हृदयानन्दसन्दोहतुन्दिलः संस्तत्त्वदृष्टिः स्वाभिलषितकार्यं सिद्धमिति निश्चित्य सविनयं पप्रच्छ-हे भगवन्! भवान् कृपानिधिः श्रीसदाशिवदक्षिणामूर्तिसमः सर्वज्ञः। वयं तु सर्वेऽज्ञाः जननमरणादिदुःखरूपसंसाराद्बिभीमः। अस्माकं तन्निवृत्तेः परमानन्दप्राप्तेश्चोपायो वक्तव्यः। नानाप्रकारोपासनानि कर्माणि चानुष्ठितानि। नैवास्मदभिलषितार्थसिद्धिरभूत्, प्रत्युत संसारात्मकबन्ध एव दृढीभवति। तस्मात् येनोपायान्तरेण वयं कृतार्था भवेम तमुपायमस्मान् शाधि भोः।

(आ. १२८-१६८) **ज्ञानोपदेशः**—

(१२८) **शिष्यस्य मोक्षेच्छा भ्रान्तिजन्येत्युपपादनपूर्वकं महावाक्यार्थोपदेशः**—आत्यन्तिकदुःखनिवृत्तिः परमानन्दप्राप्तिश्च मोक्ष इति कथ्यते। शिष्यस्य मोक्षेच्छां ज्ञात्वा गुरुस्तदुपायभूतं वेदान्तैकसमधिगम्यं ज्ञानमुपदिशति। ज्ञानस्वरूपस्य नानाशास्त्रेषु नानाप्रकारेणोक्तत्वेऽपि जीवब्रह्मभेदनिवर्तकज्ञानस्यैव मोक्षसाधनत्वेन वेदेषु प्रतिपादितत्वात्तादृशमेव ज्ञानमुपदिशति—हे शिष्य! परमानन्दावाप्तौ जननमरणादिदुःखरूपसंसारनिवृत्तौ च तवोत्पन्नेच्छा भ्रान्तिजन्येत्यवेहि। यतस्त्वं निसर्गत एव निरतिशयपरमानन्दस्वरूपोसि तस्मात्सदा परमानन्दस्वरूपेणैव सतस्तव पुनस्तत्प्राप्तीच्छा न युज्यते। यन्न प्राप्तं तल्लाभायैवोचितेच्छा। त्वत्स्वरूपं तु त्वया सर्वदा प्राप्तमेवेत्यतस्तत्प्राप्तये तव जायमानेच्छा भ्रममन्तरा न सङ्गच्छते।

किञ्च जननमरणादिरूपः संसारो यदि कदाचित् त्वय्यभूत्तदा तव तन्निवृत्तये इच्छोचिता भवेत्। वस्तुतस्तु स संसारः ईषदपि कालत्रयेऽपि नास्त्येव त्वयि। तस्मात्कालत्रयेऽप्यविद्यमानस्य संसारदुःखस्य निविवृत्सा ते भ्रममन्तरा न घटते। हे शिष्य! त्वं तु जननमरणादिसर्वसंसारशून्यचिन्मात्रस्वरूपब्रह्मैवासि। तस्मान्मा स्मर कदापि जननमरणादिदुःखरूपं संसारम्।

(आ. १२९-१६८) **अत्राक्षेपसमाधानानि**—

(आ. १२९-१३२) **सुखविषयकाक्षेपसमाधानानि**—

**(१२९) आत्मन आनन्दरूपत्वे विषयसंबन्धादानन्दभानं नोचितमित्याक्षेपः**-हे स्वामिन्! ममात्मा यदि नित्यनिरतिशयपरमानन्दरूप एव भवति, तदा विषयेन्द्रियसंबन्धाधीनतया आत्मन्यानन्दानुभवो नोपपद्येत। अनुभूयत एव तु विषयसंबन्धादात्मन्यानन्दः। तस्मान्नैवानन्दस्वरूप आत्मा। किन्तु विषयसंबन्धादेवात्मन्यानन्दो जायते।

**(१३०) अज्ञस्य विषयप्रवृत्तौ सत्यां तदीयान्तर्मुखवृत्तौ आत्मानन्दो भाति; विषयेषु नास्त्यानन्द इति समाधानम्**—हे शिष्य! यस्य बुद्धिरात्मस्वरूपं न जानाति तस्य विषयेच्छा जायते। भोगसाधनानां स्त्रीधनपुत्रादीनामत्र विषयशब्देन ग्रहणम्। विषयेच्छस्य पुंसो बुद्धिश्चञ्चला भवति। चञ्चलायां बुद्धावात्मस्वरूपानन्दप्रतिबिम्बो न भासते। अभिलषितविषयलाभे तु क्षणमात्रं बुद्धिः स्थिरीभवति। तदा बुद्धिवृत्तिरन्तर्मुखा भवति। तस्यामन्तर्मुखायां वृत्तावात्मस्वरूपानन्दः प्रतिफलति। तादृशात्मस्वरूपानन्दप्रतिबिम्बमनुभवितुः पुंसो 'विषयेभ्यो ममानन्दोऽजायत' इति भ्रान्तिरुत्पद्यते। वस्तुतस्तु नैवास्ति जडे विषये आनन्दलेशोऽपि।

किञ्च आनन्दोत्पत्तेर्विषयाधीनत्वे यत्किंचिद्विषयजन्यानन्दमनुभवतः पुंसो विषयान्तरे इच्छोत्पत्तिदशायामपि प्राचीनविषयानन्दोऽनुवर्तितुमर्हति; न तु तथाऽस्त्यनुभवः। अस्मत्सिद्धान्ते तु विषयन्तरासक्त्या पुनरपि बुद्धिचाञ्चल्ये सति तस्यां चञ्चलबुद्धौ न स्वरूपानन्दप्रतिबिम्बो भातीति समाधानं ज्ञेयम्।

---

१. आत्मा स्वभावत एवानन्दस्वरूपः। मनसो व्याकुलतायां सन्निहितोऽपि पदार्थो यथा न चक्षुर्गोचरो भवति, तथा यावद्रजोगुणसंपर्काद्बुद्धिश्चञ्चला भवति तावदात्मन आनन्दांशो न बुद्धौ प्रतिभासते। यथा दर्पणे प्रचलति सति तस्मिन्नुपलभ्यमानोऽपि मुखादिप्रतिबिम्बो नैव स्फुटस्तथा रजोगुणसंपर्काच्चलन्त्यां बुद्धावात्मनः सच्चिदंशयोः प्रतिबिम्बे भासमानेऽपि नानन्दांशप्रतिबिम्बो भासते। इष्टवस्तुलाभे सति तद्विषयकेच्छायाः, रजोगुणहेतुकबुद्धिचाञ्चल्यस्य च निवृत्तौ सत्यां प्राप्तेष्टवस्तुविषकज्ञानरूपया सात्त्विकवृत्त्या विषयोपहितचैतन्यस्वरूपानन्दो विभाव्यते। **अथवा** इष्टवस्तुलाभमात्रेण तद्विषयकेच्छारूपवृत्तिर्निवर्तते। तेनैव हेतुनाऽन्या काचिदन्तर्मुखा सात्त्विकी वृत्तिरुदेति। तया अन्तःकरणोपहितात्मानन्दः प्रकाशते। ईदृशान्तर्मुखान्तःकरणवृत्तिप्रतिफलितात्मस्वरूपानन्दप्रतिबिम्बो विषयानन्दः, प्रतिबिम्बानन्दः, लेशानन्दः इति च कथ्यते।

२. दुःखात्मकविषयानुभवकालीनसुखस्य वस्तुत आत्मस्वरूपसुखत्वेऽपि, विषयनिष्ठतया तज्जन्यत्वेन च तत्सुखस्य भानं भ्रमाद्भवति। यथा शुनः शुष्कास्थिखादनकाले स्वतालुजन्यरक्ते अस्थिजन्यत्वभ्रमस्तद्वत्।

किञ्चान्यत्, यदि विषयादेवानन्दो नियमेन जायेत तदा प्रवासादागतपुत्रदर्शनजन्यानन्दः सदाऽनुवर्तितुमर्हति ; न तु तथा भवति । तथा हि—कस्यचित् प्रियतरः पुत्रश्चिरप्रवासी कालान्तरे प्रत्यागमत् । तद्दर्शनक्षणे जायमानः पितुरानन्दः चिरकालमविच्छिन्नतयाऽनुवर्तितुमर्हति, आनन्दहेतोः पुत्रस्य सदा सन्निहितत्वात् । न तु तथाऽनुभूयते । सिद्धान्ते तु पुत्रदर्शनादितत्तद्विषयजन्यानन्दस्य चिरमननुवृत्तिरेवमुपपद्यते—तत्तद्विषयलाभक्षणे बुद्धिर्निश्चलीभवति । तदा निश्चलायां बुद्धिवृत्तावात्मस्वरूपानन्दः प्रतिबिम्बितो भवति । स एवानन्दोऽनुभूयते । ततो विषयान्तरेच्छया पुनरपि बुद्धेश्चाञ्चल्ये सति तस्यां बुद्धौ स्वरूपानन्दप्रतिफलनस्य विच्छेदात्, पुरत एव सत्यपि प्राचीनविषये, नानन्दानुवृत्तिः । तस्मान्न विषयेऽस्त्यानन्दः । किञ्च यदि नियमेन विषयाधीन एवानन्दो भवेत्तदा समाधौ[1] योगानन्दो न प्रकाशेत । तथा सुषुप्तावपि नानन्दभानं स्यात् । सुषुप्तिसमाध्योर्[2] दृश्यरूपविषयसंबन्धस्याभावात् । तस्मान्न विषये आनन्दलेशोऽप्यस्ति । किन्त्वात्मस्वरूपानन्द एव सर्वात्मना सर्वत्रावभासते । "रसो वै सः, रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति" (तै. ब्र. 7) "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृ. 4-3-32.) इत्यादिश्रुतेः ।

हे शिष्य! निरतिशयानन्दस्वरूप एवात्मेति विषयसंबन्धाच्च स आनन्दोऽभिव्यज्यते इति च जानीहि—

"अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना ।
तथाऽनुभवमात्रात्मा दृश्येनात्माऽवलोक्यते ॥" इति स्मृतेः ।

अयमेव समीचीनः सिद्धान्तः । यद्यस्त्यत्र ते संशयो निर्व्यलीकमेव पृच्छ । पुनः सुस्फुटमेव त्वां बोधयेयमिति गुरुराह ।

(१३१) **ज्ञानिनोऽपि विषयेष्विच्छा, विषयसंबन्धादात्मानन्दावभासश्च भवति न वेति तत्त्वदृष्टिः पृच्छति**—हे सद्गुरो! विषयसंबन्धादात्मानन्दावभासक्रमोऽज्ञानिविषये प्रतिपादितो भवद्भिः, न ज्ञानिविषये । यतो यस्य बुद्धिरात्मस्वरूपविमुखा, तमधिकृत्य प्रस्तावः कृतः पूर्वं भवद्भिः । तादृशश्चाज्ञान्येव, न ज्ञानी । तस्मादिदानीं ज्ञानिनोऽपि विषयेष्विच्छा

१. चित्तैकाग्रतारूपयोगाभिव्यङ्ग्य आनन्दः ।
२. सुषुप्तिदृष्टान्तस्तु सर्वजनप्रसिद्ध्यर्थम् ।

तस्यापि विषयसंबन्धात्पूर्वोक्तक्रमेण सुखाभिव्यक्तिश्च जायते न वेति बोधयितु-मर्हन्ति भवन्तः, इति ।

(१३२) **व्यवहारकाले ज्ञान्यप्यात्मविमुख एव; सः विषयानन्दस्यस्वरूपानन्दादभिन्नतां मन्यते**—हे शिष्य! शृणु सावधानमनाः। यदुक्तमात्मस्वरूपवैमुख्यमेव विषयेच्छादिकारणमिति, तत् न केवलमज्ञस्यैव, किन्तु ज्ञानिनोऽपि तुल्यमेव तत्। ज्ञानी च यदा व्यवहारे प्रवर्तते तदा सः तत्त्वविस्मरणपूर्वकमेव प्रवर्तते । विषयप्रवृत्तिकालेऽज्ञवदास्ते ज्ञान्यपि । ज्ञानिनो हि चित्तं सदैवात्माकारमेव यदि स्यात्तदा तस्य जीवनादिनिमित्तभोजनादिव्यवहारोऽपि न सिद्धयेत् । तस्मादात्मविमुखा बुद्धिरुभयोः समा । अज्ञस्य बुद्धिः सदा विषयासक्तत्वादात्मविमुखैव तिष्ठति । ज्ञानिनस्तु बुद्धिर्यदाऽऽत्मनो विमुखा भवति, तदा विषयेच्छा तत्संपर्कादात्मस्वरूपानन्दाभिव्यक्तिश्चाज्ञस्येव तस्यापि जायते । तथाप्यस्त्यत्र विशेषः—विषयसंपर्काद्भासमानोप्यानन्दः स्वस्वरूपानन्दान्नातिरिच्यते, किन्तु तदाभास एवेति विजानाति ब्रह्मवित् । तथा च विषयभोगेऽपि ज्ञानिनैः समाधिरेव सिद्धयति। अज्ञस्तु 'अयमानन्दः स्वरूपानन्द एवेति' नैव वेद । परमार्थतस्तु ज्ञानी अज्ञानी चेत्युभयोरपि स्वरूपमानन्द एव; अज्ञस्य विषये आनन्दप्रतीतिर्भ्रान्तिरेव ।

**(आ. १३३-१६८) दुःखविषयकप्रश्नप्रत्युक्तयः—**

(१३३) **सांसारिकदुःखस्याश्रयप्रश्नः**—हे सद्गुरो स्वामिन्!

---

१. जाग्रदाकारवृत्त्युद्भवे न स्वप्नाकारवृत्तिर्जायते, स्वप्नाकारवृत्त्युद्भवे च न जाग्रदाकारवृत्तिर्जायते । एवमेव ज्ञानिनो बुद्धिः यदा आत्माकारा तदा नानात्माकारा भवति, यदा अनात्माकारा तदा नात्माकारा भवति । यद्यप्येकान्तःकरणाधिकरणकभिन्नविषयकसामान्यविशेषरूपवृत्तिद्वयं युगपज्जायेत, तथापि विशेषरूपवृत्तिद्वयं तु नैव जायेत । यथा व्यवहारान्तरासक्तः पुरुषः पेटिकास्थधनं हस्तेन स्पृशन्नपि न स्मरति तत् धनम्, व्यवहारावसाने तु तद्धनं स्मरति ; एवमेव ज्ञान्यपि व्यवहारदशायां यदा विषयाभिमुखो भवति तदा तस्य तत्त्वविस्मरणं भवति, व्यवहारसमाप्तौ पुनरपि तत्त्वनिष्ठ एव स भवति । अत एवोक्तं भाष्यकारैः श्रीभगवत्पूज्यपादैरध्यासप्रकरणे—"पश्वादिभिश्चाविशेषात् । अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः । " इति ।

२. ज्ञानिनो विषयोपभोगकालेऽपि, विषये दोषदर्शनरूपविवेकस्य, विषयमिथ्यात्वनिश्चयपूर्वकवैराग्यस्य, विषयभोगानां परिणामे दुःखपर्यवसायित्वावधारणस्य, विषयानान्दस्य स्वरूपानन्दाव्यतिरिक्तत्वनिश्चयस्य च जागरूकत्वात्, स्वरूपानुसन्धानरूपसमाधिसदृशत्वाच्च 'सिंहो माणवक' इतिवत् ज्ञानिनो विषयोपभोगे समाधित्वोक्तिरौपचारिकी ।

'त्वम् परमानन्दस्वरूपोऽसि' इति भवता यदुक्तं प्राक्, तदहं सम्यग्जानामि। 'जननमरणादिसंसाररूपमहादुःखं कालत्रयेऽपि त्वयि नास्त्येव; अतस्तन्निवृत्तये तवेच्छाऽत्यन्तासङ्गतेति' भवदुक्तविषये तु कश्चन संशयो भवति। यद्यनुभूयमानमिदं जननमरणादिदुःखं मयि नास्ति, तर्हि मदन्यं कमाश्रित्य तदवतिष्ठते इति दयया मे वद भोः! संसारदुःखस्याश्रयान्तरावगमे हि मयि तन्नास्तीति मम दृढा प्रतीतिः स्यादिति शिष्यः पृच्छति।

**(१३४) न कस्यापि संसारोऽस्तीति गुरोरुत्तरम्**—हे शिष्य! शृणु मे वचनं, तेन ते सर्वसंशयनिवृत्तिः स्यात्। जननमरणादिसंसारदुःखं न कुत्रचिदप्यस्ति। अनुभूयमानमपीदं दृश्यं जगत् कालत्रयेऽपि त्वयि मयि अन्यत्र वा कुत्रचिदप्यणुमात्रमपि नास्त्येव। अत एवास्य जगतोऽत्यन्तनाशः[1] न कुत्रचिदपि संभवति। इति।

**(१३५) असतः संसारस्य कथं प्रतीतिरिति प्रश्नः**—हे कृपालो सद्गुरो! जननमरणादिसंसारदुःखं मयि वान्यत्र वा कुत्रचिदपि न स्याच्चेत्, कथं तर्हि तत्प्रत्यक्षीभवति। न ह्यत्यन्तासद्वस्तु कदाचिदप्युपलभ्यते। वन्ध्यापुत्रगगनारविन्दाद्यसद्वस्तुवत् संसारोऽप्यत्यन्तासंश्चेन्न कदाचिदप्युपलभ्येत, उपलभ्यते तु, तस्माज्जन्ममरणादिदुःखरूपः संसारो नास्तीत्युक्तिर्न युज्यते; इति शिष्यः पृच्छति।

**(१३६) संसारप्रतीतिर्मिथ्येति गुरोरुत्तरम्**—जननमरणादिप्रवाहरूपं जगत् परमार्थतः कालत्रयेप्यसदपि, प्रत्यगात्मैव ब्रह्मेत्यजानतां केवलं मिथ्याभूतमवभासते। यथा स्वप्ने अनुभूयमानपदार्थाः, आकाशे नैल्यं, रज्जौ सर्पादयश्च परमार्थतः कालत्रयेप्यसन्तोऽपि मिथ्यैवावभासन्ते, तद्वज्जगत् परमार्थतोऽसदपि मिथ्यारूपेणावभासते[2]।

---

१. यथा रज्जौ कल्पितसर्पस्य व्यावहारिकसत्तयाऽत्यन्ताभावोऽस्ति, तथा ब्रह्मणि कल्पितस्य जगतः पारमार्थिकसत्तयाऽत्यन्ताभावोऽस्ति। तथा च पारमार्थिकसत्तया जगतोऽत्यन्ताभाव एव तस्य नित्यनिवृत्तिरित्युच्यते।

२. "अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा॥ १॥
अविद्यमानोप्यवभासते द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा।
तत्कर्मसङ्कल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात्॥ २॥"

इति भागवते।

(१३७) **रज्जौ सर्पप्रतीतिः कथमिति प्रश्नः**—रज्जौ प्रतीयमान-सर्पादयो यथा मिथ्या तथैव प्रत्यगात्मनि प्रतीयमानसंसारदुःखमपि मिथ्येति यदुक्तं, तत्र दृष्टान्तज्ञानमन्तरा दार्ष्टान्तिकज्ञानासंभवाद्रज्जौ सर्पः कथमवभासत इति प्रथमतस्तावन्मां बोधयन्तु भवन्त इति शिष्यो दृष्टान्तविषये पृच्छति ।

(आ. १३८-१४३) शिष्यः स्वप्रश्नस्याशयं वर्णयति—

(१३८) **ख्यातिचतुष्टयम्**—रज्जुसर्पशुक्तिरजतादिभ्रमविषये मत-चतुष्टयं श्रूयते । तत्र (१) शून्यवादी असत्ख्यातिमाह । (२) क्षणिक-विज्ञानवादी आत्मख्यातिमाचष्टे । (३) नैयायिका वैशेषिकाश्चान्यथाख्याति-मातिष्ठन्ते । (४) साङ्ख्याः प्राभाकराश्चाख्यातिं वदन्ति ।

(१३९) **असत्ख्यातिः**—तत्रासत्ख्यातिमङ्गीकुर्वतां शून्यवादिना-मेवमाशयः—रज्जौ तावत्सर्पोऽत्यन्तमसन् । तथैवान्यत्रापि (वल्मीकाद-वपि) सर्पोऽत्यन्तमसन्नेव । एवमत्यन्तासतः सर्पस्य प्रतीती रज्जौ भवति । इमामेवासत्ख्यातिमाहुः शून्यवादिनः । अत्यन्तासतः सर्पस्य ख्यातिः= स्फुरणमभिवदनं चासत्ख्यातिरिति ।

(१४०) **आत्मख्यातिः**—विज्ञानवादिनोऽभिप्रायस्तु-रज्जौ वाऽन्यत्र वा बुद्धेर्बहिः कुत्रचिदपि न सर्पोऽस्ति । एवं सकलपदार्था अपि न बुद्धेर्बहिर्वर्तन्ते । बुद्धिरेव सकलपदार्थानामकारान् धत्ते । सा च बुद्धिः क्षणिकविज्ञानरूपा । प्रतिक्षणमुत्पत्तिविनाशशालि यद्विज्ञानं तदेव सर्पात्मना अवभासते । इयमात्माख्यातिरिति वर्ण्यते । आत्मा=क्षणिकविज्ञानरूपा बुद्धिः, तस्याः ख्यातिः=स्फुरणमभिवदनञ्चात्मख्यातिरिति ।

(आ. १४१-१४२) अन्यथाख्यातिः—

(१४१) **तत्र नैयायिकवैशेषिकाणां मतम्**—वल्मीकादौ पारमार्थि-कसर्पोऽस्ति । व्यवहितोऽपि स सर्पश्चक्षुषा गृह्यते । चक्षुर्गतदोषबलात् व्यवहि-तोऽपि सर्पः पुरतश्चक्षुःसन्निकृष्टो भाति । पारमार्थिकसर्पस्य चक्षुषश्च मध्ये कुड्यादिरूपव्यवधानसत्वेऽपि दोषसचिवचक्षुषा व्यवहितसर्पोऽपि गृह्यत एव ।

---

"नास्ति प्रतीत्यवसरे न पुरा न पश्चात्
आश्चर्यमेतदवभाति तथापि विश्वम् ।
बद्धा किमद्भुतमिवेह महेन्द्रजालं
मायाविकल्पितमपि प्रतिभासते हि ॥ ३ ॥"

ननु दोषसमवधानेन वस्तुनः सामर्थ्यहानिरेव दृश्यते, न वृद्धिः। यथा वातपित्तकफादिदोषैर्जाठराग्नेरशितपीतपाचनशक्तिः कुण्ठिता भवति, तथा तिमिरादिदोषैश्चक्षुषः शक्तिरपि कुण्ठितैव भवेत्। किञ्च, यदि वल्मीकस्थः सर्पो दोषसहितचक्षुषा गृह्यते, तर्हि शुद्धनेत्रेण व्यवहितवस्तुप्रत्यक्षं न भवति, किन्तु दुष्टनेत्रेणैवेति वक्तव्यम्[1]। तस्माद्दोषसहितचक्षुषः सामर्थ्यं वर्धत इत्यत्र दृष्टान्तो नास्तीति चेत्।

नायं दोषः, दृष्टान्तसद्भावात्। तथा हि, पित्ताधिक्यप्रयुक्तभस्मकरोगाभिभूतस्य कस्यचिच्चतुर्गुणितमप्यन्नं क्षुधां शमयितुं नालं भवति। तत्र पित्तदोषेण यथा जाठराग्नेः पाचनशक्तिर्वर्धते, तथा चक्षुषोऽपि दोषैर्व्यवहितसर्पादिप्रत्यक्षीकरणशक्तिर्वर्धत इति वक्तुं युक्तम्। इत्थं च वल्मीकादिप्रदेशान्तरे स्थितसर्पस्य, अन्यथा=प्रकारान्तरेण=पुरोऽवस्थितरज्जुदेशे ख्यातिः=स्फुरणमभिवदनं चान्यथाख्यातिरिति[2] कथ्यते।

**(१४२) अत्र नव्यनैयायिकचिन्तामणिकारमतम्**— दोषसहितचक्षुषा वल्मीकगतः सर्पो यदि दृश्येत तर्हि मध्यस्थपदार्थान्तरदर्शनमप्यापद्यते। तस्माद्व्यवहितं वस्तु न नेत्रेण गृह्यते। किन्तु दुष्टनेत्रस्य रज्जुर्न स्वस्वरूपेण भासते, भासते तु सर्पाद्याकारेण। तस्मात् रज्जोः, अन्यथा=प्रकारान्तरेण=सर्पाद्याकारेण ख्यातिः=स्फुरणमभिवदनं चान्यथाख्यातिरिति[3]।

**(१४३) अख्यातिमतम्, पूर्वोक्तमतत्रयखण्डनं च**—तत्राख्यातिवादिनोऽयमाशयः— असत्ख्यातिमतरीत्या यद्यसदपि प्रतीयेत तर्हि वन्ध्यापुत्रशशशृङ्गादयोऽपि प्रतीयेरन्। तथा प्रतीत्यभावादसङ्गतमेवासत्ख्यातिमतम्।

यदि क्षणिकविज्ञानवादिमतरीत्या प्रतिक्षणमन्यथा भवन्ती बुद्धिः सर्पाद्याकारतां प्राप्नुयात्तदा क्षणादूर्ध्वं तस्य सर्पस्य प्रतीतिर्न स्यात्। परं तु यावद्भ्रमकालं सर्पप्रतीतिरनुवर्तते। तस्मादात्मख्यातिमतमप्यनुपादेयमेव।

१. व्यवहितं वस्तु शुद्धनेत्रेण नोपलभ्यते, किन्तु दुष्टनेत्रेणोपलभ्यत इत्युक्तिर्लोकविरुद्धा।

२. इदं प्राचीनमतम्। अस्मिन्मते देशान्तरस्थवस्तुनो देशान्तरे भानमेव भ्रान्तिरित्युच्यते। सिद्धान्तोक्तार्थाध्यासज्ञानाध्यासरूपभ्रान्तिर्नास्मिन् मतेऽभ्युपगम्यते।

३. चिन्तामणिकारमते एकस्य वस्तुनो रूपान्तरेण भासमानता भ्रान्तिरिति कथ्यते। अयमेव ज्ञानाध्यासः।

४. दोषबलाद्दूरस्थरजतं यदि शुक्तौ भ्रान्तिदेशे भासेत, तदा आपणं तत्स्थसुवर्णादिनिखिलं वस्तु च दोषवशादुपलभ्येत। न चैवमुपलभ्यते।

अन्यथाख्यातेः प्रथमः प्रकारः चिन्तामणिकारमतेन खण्डितः। चिन्तामणिकारप्रदर्शितान्यथाख्यातिप्रकारोऽप्यसङ्गत एव। 'ज्ञेयाधीनं ज्ञानम्' इति हि प्रसिद्धिः। अत्र तु ज्ञेया रज्जुः, ज्ञानं तु सर्पविषयकमिति सुतरां विरुद्धमुच्यते। तस्माच्चिन्तामणिकाराभिमतान्यथाख्यातेरादरानर्हत्वात्, अख्यातिरेव शरणमिति साङ्ख्याः प्राभाकराश्चाहुः।

**अख्यातिमतम्**—रज्जौ सर्पादिभ्रमदशायां नेत्रं स्ववृत्तिद्वारा रज्ज्वा सह संयुज्य 'अयम्' इति रज्जोः सामान्यज्ञानं जनयति। तदा सर्पस्मरणं च जायते। ततः 'अयं सर्पः' इति ज्ञानं जायते। तत्र ग्रहणस्मरणात्मकज्ञानद्वयमस्ति। 'अयं' इति रज्जोः सामान्यांशप्रत्यक्षज्ञानम्। 'सर्पः' इति तु पूर्वानुभूतसर्पस्य स्मरणरूपमपरं ज्ञानम्। इत्थं 'अयं सर्पः' इत्यत्र ज्ञानद्वयमस्ति। अत्र 'अयम्' इति रज्जोः सामान्यांशज्ञानस्य पूर्वानुभूतसर्पस्मरणरूपज्ञानस्य च परमार्थत्वेऽपि भयरूपप्रमातृदोषेण तिमिररूपप्रमाणदोषेण च, मम ज्ञानद्वयमभूत् तत्रैकं रज्जुसामान्यांशप्रत्यक्षं सर्पस्मरणरूपज्ञानमपरमिति, विवेकः पुरुषस्य नोत्पद्यते। एतज्ज्ञानद्वयाविवेक एव भ्रम इति साङ्ख्याः प्राभाकराश्च वदन्ति। भ्रमोत्पत्तिस्थले च सर्वत्रैवमेव बोद्धव्यमिति चाहुः।

एवं रज्ज्वादौ सर्पादिभ्रमोत्पत्तिविषये मतचतुष्टयं पूर्वोक्तप्रकारेण श्रूयते। तत्र भवदभिमतमुत्तमं मतं यत्, तद्भवदुपदेशाद्विजिज्ञासे इति तत्त्वदृष्टिः पृच्छति।

**(आ. १४४-१४५) अख्यातिमतखण्डनम्—**

**(१४४) भयपलायनाद्यनुपपत्त्या रज्जौ सर्पानुभवो वाच्यः—** हे सोम्य! भ्रमस्थले, असत्ख्यातिः, आत्मख्यातिः, अन्यथाख्यातिः, अख्यातिः इत्येतन्मतचतुष्टयमपि युक्तिविरहितम्। पूर्वोक्तमतचतुष्टयविलक्षणमनिर्वचनीयख्यातिनामकं मतान्तरमस्ति पञ्चमं; तदेवोपादेयम्। पूर्वोक्तासत्ख्यात्यादिम-

---

१. पूर्वोक्तमतचतुष्टयातिरिक्तं 'सत्ख्यातिः' इति पञ्चमं पूर्वपक्षिमतमस्ति। तन्मतरीत्या, शुक्तौ शुक्त्यवयवैः सह रजतावयवोऽपि सदा वर्तते। शुक्त्यवयववद्रजतावयवोऽपि सत्यो, न मिथ्या। यथा शुक्तौ दुष्टनेत्रेन्द्रियसंप्रयोगवशात् सिद्धान्तेऽविद्यापरिणामरूपानिर्वचनीयरजतं तत्काले जायते, तथाऽत्र मते दुष्टनेत्रेन्द्रियसंप्रयोगवशाद्रजतावयवेभ्यः सत्यरजतमपि शुक्तौ जायते। सिद्धान्ते अधिष्ठानसाक्षात्कारादनिर्वचनीयरजतनिवृत्तिवत्, अत्र मते शुक्तिज्ञानात् सत्यरजतमपि स्वावयवेषु लीयत इति वदन्ति। इदमपि मतं हेयमेव। शुक्तिरजतदृष्टान्तेन हि प्रपञ्चमिथ्यात्वानुमितिर्जायते। सत्ख्यातिवादे तु शुक्तिरजतस्य सत्यत्वात् तद्दृष्टान्तेन न प्रपञ्चमिथ्यात्वं साधयितुं शक्यते। एतन्मतखण्डनपरयुक्त्यन्तराणि बालानां दुर्बोधत्वान्नेह लिख्यन्ते।

तत्रयं नोपादेयमित्यख्यातिवादिना दर्शितं; अख्यातिमतमपि नोपादानमर्हतीति प्रदर्श्यतेऽधुना।

अख्यातिमतरीत्या 'अयं सर्पः' इति ज्ञाने 'अयम्' इति रज्ज्वात्मकाधिष्ठानसामान्यांशप्रत्यक्षज्ञानम्। 'सर्पः' इति त्वन्यत्र पूर्वदृष्टसर्पस्य स्मरणात्मकज्ञानमिति स्थितिः। तत्र पूर्वदृष्टसर्पस्मरणमेवाङ्गीकृत्य पुरोवर्तिरज्जौ सर्पज्ञानानङ्गीकारे, पुरोऽवस्थितरज्जुं दृष्ट्वा पुरुषो भीत्या न पलायेत, रज्जुं दृष्ट्वा पुरुषः पलायत इति तु सर्वजनीनम्। तस्मात्पुरोवस्थितरज्ज्वामेव सर्पः प्रत्यक्षतया भासते इति, न तु पूर्वदृष्टसर्पस्मरणमात्रमिति च वाच्यम्। अन्यथा रज्जौ सर्पज्ञानाभावेन पुरुषस्य पलायनादि नोपपद्येत।

(१४५) **बाधज्ञानबलादपि रज्जौ सर्पानुभवो वाच्यः**—किञ्च रज्जुयाथात्म्यज्ञानानन्तरं 'मम मिथ्यासर्पो रज्ज्वामभात्' इति बाधरूपानुभवबलादपि पुरुषस्य रज्जावेव सर्पः स्वरूपतः प्रतीतः, न तु पूर्वानुभूतसर्पस्मरणमात्रमभवदिति वक्तव्यं भवति। अपि च 'अयं सर्पः' इत्यत्र जायमानं ज्ञानमेकमेव, न तु ज्ञानद्वयम्। न ह्येकस्मिन् क्षणे एकान्तःकरणवृत्तित्वेन स्मरणात्मकमनुभवात्मकं च ज्ञानद्वयं जायेत। तस्मादख्यातिमतमप्यसङ्गतत्वादनुपादेयमेव। पूर्वोक्तमतचतुष्टयलक्षणं तत्खण्डनादिकं च विवरणस्वाराज्यसिद्ध्यादिग्रन्थेषु विस्तरतो वर्णितम्। तेषां मतानां स्वरूपमात्रजिज्ञासूनां ज्ञानसौकर्यार्थं तत् संक्षिप्योक्तमत्र।

(आ. १४६-१५९) **सिद्धान्तिनोऽनिर्वचनीयख्यातिनिरूपणम्**—

(१४६) **अनिर्वचनीयख्यातिलक्षणम्**—अन्तःकरणवृत्तिश्चक्षुरादिकरणद्वारा बहिर्निर्गत्य विषयसमानाकारा भवति। तया वृत्त्या विषयावरणभङ्गे सति विषय उपलभ्यते। तस्याः वृत्तेः सौराद्यालोकोऽपि साधको भवति। आलोकं विना पदार्थो न प्रकाशते, तस्मादालोकः सहकारी; इति क्रमः।

रज्ज्वादौ सर्पादिभ्रमोत्पत्तिदशायामन्तःकरणवृत्तिश्चक्षुर्द्वारा बहिर्निर्गत्य रज्ज्वा सह संयुज्यते। तथापि सा तमआदिदोषैः[1] प्रतिबद्धा सती न रज्जु-

---

१. तमःशब्देन मन्दान्धकारो गृह्यते। तथाहि, प्रौढप्रकाशे रज्ज्वाद्यधिष्ठानस्य विशेषांशाज्ञानं न जायेत। गाढतमसि अधिष्ठानस्य सामान्यांशज्ञानमपि न जायेत। अधिष्ठानस्य सामान्यांशज्ञानं, विशेषांशाज्ञानं च विना अध्यासो नैव जायेतेति द्वितीयतरङ्गे (६७) आवर्तेऽभिहितम्। मन्दान्धकारे अधिष्ठानसामान्यांशज्ञानतद्विशेषांशाज्ञानयोः संभवात्तमःशब्देन मन्दान्धकारग्रहणमेव न्याय्यम्। नेत्रमान्द्यरूपतिमिरदोषोऽपि तमःशब्देन गृह्यते। आदिपदेन काचकामलादिनेत्ररोगाश्च गृह्यन्ते।

समानाकारा भवति । ततो न रज्जोरावरणभङ्गो जायते । इत्थमावरण-भञ्जकवृत्तिसंसर्गे सत्यपि यदा दोषैः रज्ज्वामावरणभङ्गो न जायते तदा अधिष्ठानभूतरज्ज्ववच्छिन्नचैतन्यनिष्ठाविद्यायां कश्चन विक्षेपो जायते । तदा साऽविद्या सर्पाकारेण परिणमते । स चाविद्याकार्यभूतः सर्पो यदि सन् स्यात्, न स रज्जुसाक्षात्कारेण निवर्तेत; निवृत्तिश्चानुभूयते । तस्मान्नैव सन् स सर्पः । अत्यन्तासंश्चेत्स्यात्स सर्पो वन्ध्यापुत्रादिवन्नोपलभ्येत, उपलभ्यते तु । तस्मान्नाप्यसन् स सर्पः । किन्तु सदसद्विलक्षणोऽनिर्वचनीयः[1] । एवमेव शुक्त्याद्यधिकरणेष्वपि आरोपितरजतादयस्तात्कालिकतया अनिर्वचनीयतयोत्पन्नाः सन्तः प्रतिभान्ति । अस्यानिर्वचनीयस्य सर्पादेः ख्यातिः=प्रसिद्धिः=प्रतीतिः =स्फुरणमभिवदनश्चानिर्वचनीयख्यातिरित्युच्यते ।

(१४७) **भ्रमस्थले सर्पज्ञानमप्यविद्यापरिणामः; सर्पतज्ज्ञान-योर्युगपदेवोत्पत्तिलयौ; सर्पः साक्षिभास्यश्च**—यथा सर्पादिरविद्या-परिणामस्तथा तादृशसर्पादिज्ञानरूपवृत्तिरप्यविद्यापरिणाम एव, न त्वन्तः करणपरिणामः । अत एवाधिष्ठानरज्ज्वादिसाक्षात्कारेण आरोपितसर्पा-दिरिवारोपितसर्पादिज्ञानमपि बाध्यते । तस्यान्तःकरणपरिणामत्वे तु न बाधो युज्यते । अतः आरोपितसर्पादिवत् तज्ज्ञानमप्यविद्याकार्यत्वात् सदसद्वि-लक्षणमनिर्वचनीयं भवति । अपि त्वयं विशेषः—प्रातिभासिकसर्पादिः रज्ज्वाद्युपहिताधिष्ठानचैतन्यस्थतमोगुणप्रधानाविद्यांशपरिणामः । तद्विषयकवृत्ति-ज्ञानन्तु इदमाकारवृत्त्यभिव्यञ्जकसाक्षिचैतन्यस्थसत्त्वगुणप्रधानाविद्यांशपरिणाम इति विवेकः । रज्ज्वाद्युपहितचैन्यस्थाऽविद्या यदा सर्पाद्याकारेण परिणमते, तदैव तद्वृत्त्युपहितसाक्षिचैतन्यस्थाप्यविद्या सर्पादिज्ञानाकारेण परिणमते। येन कारणेन रज्ज्वाद्युपहितचैतन्यस्थाविद्यायां क्षोभो[2] जायते तेनैव कारणेन साक्षिचैतन्यस्थाविद्यायामपि क्षोभो जायते । तस्माद्भ्रमस्थले सर्पादि-

---

१. ननु सद्विलक्षणमसत् । अतः सद्विलक्षणस्यानिर्वचनीयत्यासद्विलक्षणत्वोक्ति-र्विरुद्ध्यते । तथाऽसतो विलक्षणं सदेव । अतोऽसतो विलक्षणस्यानिर्वचनीयस्य सद्विलक्षणत्वोक्तिरप्यसङ्गतैव । तस्मात्सदसद्विलक्षणतृतीयपदार्थस्यैवाभावादनिर्वचनीयपदात् शाब्दबोध एव नोदेष्यतीति चेन्न । त्रिकालाबाध्यत्वस्यैव सत्वात्, तद्विलक्षणमित्यस्य कालत्रयेऽपि बाद्ध्यमित्यर्थः सिद्ध्यति । निस्स्वरूपवन्ध्यापुत्रादि असदित्युच्यते । ततो विलक्षणमित्यस्य स्वरूपवदित्यर्थः । तस्माद्बाध्यत्वे सति स्वरूपवत्वमनिर्वचनीयपदस्यार्थः । तथा च रज्जुसर्पादेरिव प्रपञ्चस्याप्यनिर्वचनीयतयैव भानं वेदान्तनिपुणानां भवति ।

२. उपादानस्य कार्याभिमुखत्वं क्षोभः ।

विषयास्तज्ज्ञानानि च युगपदेवोत्पद्यन्ते, रज्ज्वाद्यधिष्ठानसाक्षात्कारेण युगपदेव प्रलीयन्ते च। इत्थं च भ्रमस्थले बाह्यचैतन्यस्थाविद्यांशः सर्पादिविषयोपादानकारणं भवति। अन्तःसाक्षिचैतन्यस्थाविद्यांशः सर्पादिविषयकज्ञानरूपवृत्त्युपादानकारणं भवति। स्वप्ने त्वन्तःसाक्ष्याश्रयाविद्यागततमोगुणांशो विषयाकारेण परिणमते, तादृशाविद्यागतसत्त्वगुणांशस्तज्ज्ञानाकारेण परिणमते। अत एव स्वप्नेऽन्तस्थाऽविद्यैव विषयतज्ज्ञानयोरुभयोरुपादानकारणं भवति। अनेनैव हेतुना बाह्यरज्जुसर्पादयः आन्तरस्वाप्निकपदार्थाश्च साक्षिभास्या इत्युच्यन्ते। अविद्यावृत्तिद्वारा यद्यत् साक्षी प्रकाशयति तत्तत् **साक्षिभास्य**मित्युच्यते।

(१४८) **रज्जुसर्पः तज्ज्ञानं चाविद्यायाः परिणामश्चेतनस्य विवर्तश्च**—अनिर्वचनीयरज्जुसर्पादिस्तज्ज्ञानं च **भ्रम** इति **अध्यास** इति चोच्यते। अयं च भ्रमोऽविद्यायाः परिणामश्चैतन्यस्य विवर्तश्च भवति। उपादानकारणसमस्वभावकोऽन्यथाभावः **परिणामः**, अधिष्ठानविषमस्वभावकोऽन्यथाभावो **विवर्त** इति च विवेकः। उपादानकारणमविद्या, सा चानिर्वचनीया। तथा रज्जुसर्पादि तज्ज्ञानञ्चानिर्वचनीयमेव। तस्माद्रज्जुसर्पादि तज्ज्ञानञ्चाविद्यासमस्वभावकतदन्यथाभावरूपत्वादविद्यापरिणामो भवति। रज्ज्वाद्यवच्छिन्नाधिष्ठानचैतन्यं तु सत्स्वरूपमास्ते। रज्जुसर्पादि तज्ज्ञानं हि सद्विलक्षणं भवति। तस्माद्रज्जुसर्पादि तज्ज्ञानं च स्वाधिष्ठानचैतन्याद्विरुद्धस्वभावकतदन्यथाभावरूपत्वाच्चैतन्यविवर्तो भवति। ततो रज्जुसर्पादि तज्ज्ञानञ्चाविद्यापरिणामः, चैतन्यस्य विवर्तश्चेति सिद्धम्।

(१४९) **रज्जुसर्पतज्ज्ञानयोः क्रमेण रज्जूपहितचैतन्यमन्तःकरणोपहितचैतन्यं चाधिष्ठानम्। रज्जुतत्त्वज्ञानं तयोर्निवर्तकम्**—मिथ्याभूतसर्पाद्यधिष्ठानं रज्ज्वाद्युपहितचैतन्यमेव, न तु रज्ज्वाद्यचेतनं; रज्ज्वादेरपि सर्पादिवत्कल्पितत्वात्। न ह्येकं कल्पितं वस्तु कल्पितवस्त्वन्तरस्याधिष्ठानं भवेत्। अतो रज्ज्वाद्युपहितचैतन्यमेव सर्पाद्यधिष्ठानम्, न रज्ज्वाद्यचेतनम्। रज्जुविशिष्टचैतन्यस्याधिष्ठानत्वाङ्गीकारे, उभयोः रज्जोश्चैतन्यस्य चाधिष्ठानत्वं भवेत्। तत्र रज्जोरधिष्ठानत्वस्य बाधितत्वात्, रज्जूपहितचैतन्यमेवाधिष्ठानं न तु रज्जुविशिष्टचैतन्यम्। तथा सर्पादिज्ञानस्यापि साक्षिचैत-

---

१. उदाहरणम्–यथा घटं प्रति मृदुपादानकारणम्। कुलालादिर्निमित्तकारणम्।

न्यमेवाधिष्ठानम् । इत्थं सर्वत्र भ्रमस्थले विषयस्य तज्ज्ञानस्य चोपाधिभेदाद-धिष्ठानं भिद्यते, नत्वेकम् । विशेषरूपेण रज्जोरज्ञानं यथाऽविद्यायां क्षोभोत्पादनद्वारा सर्पादेस्तज्ज्ञानस्य च कारणं तथा विशेषरूपेण रज्जुज्ञानं तदुभयोर्निवृत्तिकारणं भवति ।

(आ. १५०-१५९) अत्राक्षेपसमाधानानि—

(१५०) **रज्जुज्ञानेन सर्पनिवृत्तिर्न स्यादित्याक्षेपः**—ननु रज्ज्वादिज्ञानेन न सर्पादिर्निवर्तेत । मिथ्यावस्तुनो यदधिष्ठानं, तज्ज्ञानेनैव मिथ्यावस्तु निवर्तेतेत्यद्वैतसिद्धान्तः । मिथ्याभूतसर्पाद्यधिष्ठानं तु रज्ज्वाद्युपहित-चैतन्यमेव, न रज्ज्वादिरिति प्रागभिहितम् । तस्माद्रज्ज्वादिज्ञानेन न सर्पादि-निवृत्तिर्भवेदिति चेत्—

(१५१) **रज्जुज्ञानमेव सर्पाद्यधिष्ठानज्ञानं भवतीति समाधिः**—अत्रोच्यते—रज्ज्वादिजडपदार्थविषयकज्ञानमन्तःकरणवृत्तिरूपम् । वृत्तेस्तु प्रयोजनमावरणभङ्गः । इदञ्चावरणमज्ञानस्य शक्तिः । यस्मादावरणं जडमनाश्रित्य तदधिष्ठानचैतन्यमेवाश्रयति, तस्मादन्तःकरणवृत्त्या रज्ज्वादिविषयाकारापन्नया रज्ज्वाद्यवच्छिन्नचैतन्यावरणमेव भज्यते । वृत्तिस्थचिदाभासस्तु रज्जुमात्रं प्रकाशयति । चैतन्यस्य स्वयंप्रकाशरूपत्वात्तत्प्रकाशाय नाभास उपयुज्यते । अयमर्थो विस्तरतः उपरिष्टादस्मिन्नेव तरङ्गे कथयिष्यते । इत्थं चिदाभासविशिष्टान्तःकरण-वृत्तिरूपज्ञानस्य केवलवृत्तिरूपांशश्चैतन्यनिष्ठावरणं नाशयति, चिदाभास-रूपांशस्तु रज्जुं प्रकाशयतीति प्रयोजनद्वयं सिद्ध्यति । तस्माद्वृत्तिज्ञानस्य न केवलजडात्मकरज्जुर्विषयीभवति । किन्त्वधिष्ठानचैतन्येन सहिता रज्जुः चिदा-भाससहितवृत्तेर्विषयीभवति । अत एव सिद्धान्तग्रन्थे 'अन्तःकरणजन्यवृत्तिज्ञानं अखण्डं ब्रह्म विषयीकरोति' इत्यभिहितम् । इत्थं यतो रज्जुज्ञानेन भग्नावरणं सत् सर्पाद्यधिष्ठानरज्ज्वाद्यवच्छिन्नचैतन्यं स्वयमेव प्रकाशते, ततो रज्जुज्ञानमेव सर्पा-द्यधिष्ठानज्ञानरूपमपि भवति । ततश्च रज्जुज्ञानेन सर्पादिनिवृत्तिर्युज्यत एव ।

(१५२) **रज्जुज्ञानेन सर्पज्ञानं न निवर्तेतेत्याक्षेपः**—ननूक्तप्रकारेण रज्जुज्ञानेन सर्पे निवृत्तेऽपि सर्पविषयकज्ञानं नैव निवर्तेत । सर्पस्याधिष्ठानं रज्ज्ववच्छिन्नचैतन्यं, सर्पज्ञानस्याधिष्ठानं तु साक्षिचैतन्यमिति भेदः । उक्तरीत्या तु रज्जुसाक्षात्कारेण रज्ज्ववच्छिन्नचैतन्यमेव प्रकाशेत, न साक्षिचैतन्यम् । अतो रज्जुज्ञाने उत्पन्नेऽपि सर्पज्ञानाधिष्ठानसाक्षिचैतन्यं नैव ज्ञायते । अज्ञाते

चाधिष्ठाने तदारोपितनिवृत्तिर्न दृष्टा, किन्तु ज्ञाते एवाधिष्ठाने। तस्माद्रज्जुज्ञानेन सर्पज्ञानस्य निवृत्तिर्नोपपद्यत इति चेत्—

(आ. १५३-१५५) **सर्पाभावात्सर्पज्ञानस्य कारणे लयरूपनिवृत्तिरिति समाधिः**—

(१५३) **सर्पाभावात्सर्पज्ञानाभावः**—अत्रोच्यते। विषयाधीनं हि ज्ञानं भवति। रज्जुसाक्षात्कारेणोक्तरीत्या रज्ज्ववच्छिन्नचैतन्यारोपितसर्परूपविषयनिवृत्त्या सर्पज्ञानमपि स्वविषयाभावान्निवर्तत एव।

(१५४) **साक्षिज्ञानमन्तरा सर्पज्ञानं न निवर्तेतेत्याक्षेपः**—ननु कथमधिष्ठानज्ञानमन्तरा तदारोपितभ्रमो निवर्तेत। सर्पज्ञानमपि कल्पितम्। तस्य ह्यधिष्ठानं साक्षिचैतन्यम्। तज्ज्ञानमन्तरा तत्र कल्पितसर्पज्ञानं न निवर्तेतेति चेत्—

(१५५) **साक्षिज्ञानमन्तरापि सर्पज्ञानं निवर्तेतेति समाधानम्**—अत्राप्युच्यते। निवृत्तिर्द्विविधा—आत्यन्तिकनिवृत्तिः, कारणात्मनाऽवस्थितिरूपा निवृत्तिश्चेति। स्वकारणेन सहैव कार्यस्य निवृत्तिरात्यन्तिकी निवृत्तिरित्युच्यते। कल्पितवस्तूनां सर्वेषां कारणं तु तदधिष्ठानचैतन्याश्रिततदावारकाज्ञानमेव। तस्मादधिष्ठानचैतन्यापरोक्षज्ञानेनैवाज्ञानं तत्कार्यञ्च सर्वमारोपितं निश्शेषं निवर्तते। कार्यस्य कारणे लयरूपनिवृत्तिस्तु विनाप्यधिष्ठानज्ञानं जायेत। सुषुप्तौ प्रलये च सकलपदार्थानां विनैवाधिष्ठानज्ञानमज्ञाने स्वकारणे लयो भवति। तदा सर्वदृश्यपदार्थलयहेतुस्तत्तद्भोगप्रदकर्मोपरम एव। एवमेवान्तराप्यधिष्ठानसाक्षिज्ञानं, सर्पज्ञानं निवर्तते। तत्र सर्पज्ञानविषयीभूतसर्पाभाव एव सर्पज्ञाननिवृत्तेः कारणं भवति। इत्थं च रज्जुज्ञानेन सर्पो निवर्तते, ततश्च सर्पज्ञानविषयीभूतसर्पाभाव एव सर्पज्ञानस्य लयरूपनिवृत्तौ निमित्तं भवति।

(१५६) **रज्जुज्ञानसमये सर्पज्ञानाधिष्ठानभूतसाक्षिभानमपि संभवतीति समाधानम्**—अथवा सर्पस्तज्ज्ञानं चेत्युभयमपि रज्जुज्ञानेनैव निवर्तते। तथाहि, रज्जुसाक्षात्कारसमयेऽन्तःकरणं नेत्रद्वारा बहिर्निर्गत्य रज्जुदेशं प्राप्य तत्समानाकारा भवति। अतो रज्जुसाक्षात्कारसमये वृत्त्युपहितचैतन्यं रज्जूपहितचैतन्यञ्चेत्युभयमप्येकीभवति। न तयोरस्ति भेदः।

---

१. पटस्य स्वोपादानभूततन्तुभिः सह दाहः आत्यन्तिकनिवृत्तिः। घटस्य ध्वंसे मृद्भावापत्तौ लयरूपनिवृत्तिः।

**अत्रायं हेतुः**—न हि क्वचिदपि चैतन्यस्यास्ति भेदः स्वरूपतः, किन्तूपाधिनिबन्धन एव सः। वृत्त्युपहितचैतन्यस्य रज्जूपहितचैतन्यस्य च भेदप्रयोजकोपाधिर्वृत्तिः रज्जुश्च। यदा वृत्तिः रज्जुश्चेत्युपाधिद्वयं विभिन्नदेशस्थं तदा तदुपहितचैतन्ययोर्भेदः सिद्ध्यति। यदा तूपाध्योरेकदेशस्थत्वं भवति तदा नोपहितचैतन्ययोर्भेदः। अयमर्थः वेदान्तपरिभाषादिग्रन्थेषु प्रसिद्धः। विभिन्नदेशस्थोपाधिभ्यामेवोपहितचैतन्ययोर्भेदः कल्प्यते। द्वयोरप्युपाध्योरेकदेशस्थत्वे तु ताभ्यामुपहितं चैतन्यमप्येकमेवेति सिद्ध्यति। उक्तरीत्या रज्जुसाक्षात्कारदशायां रज्जूपहितचैतन्यं वृत्त्युपहितचैतन्यञ्चेत्येतदुभयमेकीभवति। तत्र साक्षिचैतन्यमेव वृत्त्युपहितचैतन्यमित्युच्यते, अन्तःकरणे तद्वृत्तौ च स्थित्वाऽप्यसङ्गतया तयोरवभासकचैतन्यमात्रस्य साक्षित्वाभिधानात्। उक्तरीत्या रज्जुसाक्षात्कारसमये साक्षिचैतन्यस्य रज्जूपहितचैतन्यस्य चाभेदः सिद्धः। रज्जूपहितचैतन्यं च रज्जुज्ञानेनावभासते। रज्जूपहितचैतन्यादपृथग्भूतं साक्षिचैतन्यमपि रज्जुज्ञानेनैवावभासते। एवं रज्जुसाक्षात्कारसमये सर्पज्ञानाधिष्ठानभूतसाक्षिचैतन्यस्य भानसत्वात्, तत्र कल्पितसर्पज्ञानस्यापि निवृत्तिः संभवति।

**(१५७) सकलत्रिपुटीभानसमये साक्षिभानमवश्यं भवतीति निरूपणम्**—**अथवा** कूटस्थदीपे विद्यारण्यमुनिभिरित्थमुक्तम्—'अन्तःकरणस्य वृत्तिश्चिदाभाससहिता चक्षुरादिकरणद्वारा बहिर्निर्गत्य घटादिविषयान् प्रकाशयति। तत्र घटादिरूपो **विषयः**, चिदाभाससहितवृत्तिरूपं घटादिविषयकं **ज्ञानम्**, चिदाभाससहितान्तःकरणरूपो **ज्ञाता**; एतत्त्रयमपि साक्षी प्रकाशयति'। इति।

**अस्यायमर्थः**—'अयं घटः' इति ज्ञाने साभासान्तःकरणवृत्त्या घटमात्रं प्रकाशते। 'घटमहं जानामि' इत्यत्र तु 'अहम्' इति शब्दस्यार्थो यो ज्ञाता, 'घट' इति यो ज्ञेयः, 'जानामि' इति यत् घटविषयकं ज्ञानं, इत्येतत् त्रयमपि त्रिपुटीरूपं साक्षी प्रकाशयतीति। ज्ञाता, ज्ञेयं, ज्ञानं चेत्येतत् त्रयमपि त्रिपुटीत्युच्यते। इत्थमेव सर्वत्र निखिलत्रिपुटीप्रकाशकःसाक्ष्येव। यदि साक्षी स्वयमज्ञातः स्यात् तदा त्रिपुटीज्ञानं न साक्षिणा जायेत। तस्मात्सकलत्रिपुटीज्ञानदशायां साक्षिज्ञानमप्यवश्यं जायत एव स्वयंप्रकाशत्वात्साक्षिणः, इत्यभ्युपेयम्। अनेन च साक्षिज्ञानेन सर्पज्ञानं निवर्तते। उक्तरीत्या सर्पादिमिथ्याविषयस्य तज्ज्ञानस्य च पृथगेवाधिष्ठानमित्यभ्युपगमपक्षे इयन्त्याक्षेपसमाधानानि समभवन्।

(१५८) **मिथ्यासर्पस्य तज्ज्ञानस्य चाधिष्ठानं साक्ष्येवेति निरूपणम्**—मिथ्यासर्पस्य तज्ज्ञानस्य च पृथगधिष्ठानत्वपक्षे दोषात्तयोरेकमेवाधिष्ठानमितीदानीं निरूप्यते। तत्र न हि बाह्यरज्ज्ववच्छिन्नचैतन्यं सर्पस्य तज्ज्ञानस्य चाधिष्ठानं भवतीति शक्यते वक्तुम् । यावन्ति ज्ञानानि जायन्ते तानि सर्वाण्यपि प्रमातारं साक्षिणं वाऽऽश्रित्य जायन्त इति नियमः। तस्मात् बाह्यरज्ज्ववच्छिन्नचैतन्यं न सर्पज्ञानस्याश्रयो भवितुमर्हति । सर्पस्य तद्विषयकभ्रमरूपज्ञानस्य चाधिष्ठानमन्तःकरणोपहितसाक्षिचैतन्यमित्यभ्युपगमे शरीरस्यान्तरेवान्तःकरणप्रदेशे सर्पोपलब्धिरभ्युपगन्तव्या स्यात्, न तु बाह्यरज्जुदेशे। अन्तरेवोत्पन्नः सर्पो मायाबलेन बहिरवभासते इत्यङ्गीकारे आत्मख्यातिमतसिद्धिः प्रसज्येत । तच्च प्रागेव खण्डितम् । इत्थं रज्जूपहितचैतन्यस्य सर्पज्ञानाधिष्ठानत्वासंभवात्, अन्तःकरणोपहितचैतन्यस्य सर्पाधिष्ठानत्वासंभवाच्च मिथ्यासर्पतज्ज्ञानयोरेकाधिष्ठानत्वपक्षो यद्यप्यसङ्गत इति भाति, तथापि वक्ष्यमाणरीत्या अन्तःकरणवृत्त्युहितचैतन्यस्योभयाधिष्ठानत्वसंभवान्न दोषः ।

तथा हि, चक्षुर्द्वारा रज्जुदेशं गतस्यान्तान्तःकरणस्येदमाकारवृत्त्युपहितचैतन्याश्रिताऽविद्या सर्पाकारेण तज्ज्ञानाकारेण च परिणमते । वृत्त्युपहितचैतन्यस्थाविद्यायास्तमोगुणांशः **सर्पस्योपादानकारणं**; तस्या एव सत्वगुणांशः **सर्पज्ञानस्योपादानकारणम्**। एवं सर्पतज्ज्ञानयोर्वृत्त्युपहितचैतन्यमेवाधिष्ठानम्। अन्तःकरणवृत्तेर्बाह्यरज्जुदेशस्थत्वात्तद्वृत्त्युपहितचैतन्यमपि बहिरेवास्ते। अतस्तदेव **सर्पस्याश्रयः** । अन्तःकरणस्य स्वरूपं यावत्तावदेव साक्षिस्वरूपमपि । शरीरान्तःस्थान्तःकरणमेव वृत्तिरूपेण परिणतम् । तस्मात् वृत्त्युपहितचैतन्यं साक्षी भवति । अतस्तदेव **सर्पज्ञानस्याश्रयः**। रज्जुप्रत्यक्षकाले रज्जूपहितचैतन्यवृत्त्युपहितचैन्ययोरेकीभावात् रज्जुज्ञानेनैव मिथ्यासर्पतज्ज्ञानयोर्निवृत्तिरुपपद्यते ।

(१५९) **एकस्यामेव रज्जौ नानापुरुषाणां भिन्नभिन्नभ्रमादपि साक्षिचैतन्यमेव भ्रमाधिष्ठानम्**—किंचैकस्यामेव रज्ज्वां नानापुरुषाणां भिन्नभिन्नाः भ्रमाः भवन्ति—यथा कस्यचित् सर्प इति, अन्यस्य दण्ड इति, अपरस्य मालेति, एकस्य भूच्छिद्रमिति, इतरस्य तैलधारेति च। अथवा सर्वेषां सर्प इत्येकरीत्यैव भ्रमो जायताम्। तत्र यस्य पुरुषस्य रज्जुसाक्षात्कारो जायते तस्यैव तदीयवृत्त्यवच्छिन्नचैतन्ये कल्पितोऽध्यासो निवर्तते । यस्य तु रज्जुसाक्षात्कारो न भवति तस्याध्यासनिवृत्तिर्नास्ति । तस्मात् वृत्त्यवच्छिन्नचैतन्यमेव कल्पितानां सर्वेषामधिष्ठानम्, न तु रज्ज्वादिविषयोपहितचैतन्यम् ।

रज्जूपहितचैतन्यस्य सर्पदण्डाद्यधिष्ठानत्वे नानापुरुषाणां भिन्नभिन्नतया प्रतीयमानानि सर्पदण्डादीनि वस्तूनि सर्वाण्यपि, एकैकस्यापि पुरुषस्य प्रतीयेरन्; न तु तथा प्रतीयते। वृत्त्युपहितचैतन्यस्य मिथ्यासर्पाद्यधिष्ठानत्व-वादिमतरीत्या तु न दोषः। यस्य पुरुषस्य वृत्त्युपहितचैतन्ये यद्वस्तु कल्पितं तद्वस्तु तस्यैव प्रतीयते, नान्यस्येति वक्तुं शक्यत्वात्।

इत्थं बाह्यभ्रमविषयसर्पादीनां तज्ज्ञानानां च वृत्त्युपहितसाक्षिचैतन्य-मेवाधिष्ठानम्। स्वप्नोपलब्धपदार्थानां तज्ज्ञानानां चान्तःकरणोपहित-साक्ष्येवाधिष्ठानम्।

एवं च सदसद्विलक्षणानिर्वचनीयाविद्यायाः परिणामभूतानिर्वचनीय-सर्पादीनां ख्यातिः=प्रतीतिः =प्रसिद्धिः=स्फुरणं अभिवदन्**श्चानिर्वचनीय-ख्यातिरि**त्युच्यते।

(१६०) **मिथ्याजगत आधाराधिष्ठानविषयकप्रश्नः**—हे स्वामिन्! प्रतीयमानस्यापारस्य मिथ्याभूतस्यास्य जगत आधारः कः? अधिष्ठानं च किम्? कृपया वद मे प्रभो! इति तत्त्वदृष्टिः पृच्छति।

(आ. १६१-१६२) **पूर्वप्रश्नस्योत्तरम्**—

(१६१) **मिथ्याजगत आत्मैवाधारोऽधिष्ठानं च**— हे शिष्य! त्वन्निजस्वरूपाज्ञानात् (आत्मनो ब्रह्मरूपेणाज्ञानात्) तवेदं मिथ्याजगत् प्रतिभासते। अतस्त्वमेवास्य जगत आधारः अधिष्ठानं च। रज्ज्वज्ञानान्मिथ्याभूतः सर्पः प्रतिभासते। तत्र मिथ्याभूतसर्पादीनां रज्जुराधारोऽधिष्ठानं च भवति। यद्यपि मुख्यसिद्धान्तभूतद्वितीयपक्षे मिथ्यासर्पाद्यधिष्ठानं वृत्त्युपहितचैतन्यमिति प्रथमपक्षे रज्जूपहितचैतन्यमिति चोक्तत्वान्न कस्मिंश्चिदपि पक्षे रज्ज्वादि जडमधिष्ठानं भवति, तथापि प्रथमपक्षे चैतन्यनिष्ठाधिष्ठानत्वे रज्जुरुपाधिर्भवतीत्यतः स्थूलदृष्ट्या रज्जु-रेवाधिष्ठानमित्युच्यते। मिथ्याभूतसर्पादेर्यथा रज्जुरधिष्ठानमाधारश्च भवति तथा मिथ्याजगतस्त्वमेवाधिष्ठानमाधारश्च भवसि।

(१६२) **आत्मनः सामान्यरूपमाधारः, विशेषरूपमधिष्ठानम्**:— अत्रेदमाकूतम्—**रज्जोः स्वरूपद्वयमस्ति**, एकं सामान्यरूपं, अपरं विशेष-रूपमिति च। तत्र 'इयम्' इति **सामान्यरूपं**; 'रज्जुः' इति **विशेषरूपम्**।

'अयं सर्प' इति भ्रान्तिदशायां मिथ्याभूतसर्पेण तादात्म्यापन्नं सद्भासमानं 'अयम्' इति यत्स्वरूपं तत्**सामान्यरूपम्**। भ्रान्तिदशायां यत् स्वरूपं न भासते, यस्य स्वरूपस्य साक्षात्कारमात्रेण भ्रमो निवर्तते तदेव रज्जो**र्विशेषरूपम्**।

एवमेवात्मनोऽप्येकं सामान्यरूपमपरं विशेषरूपमिति रूपद्वयमस्ति। तत्र सद्रूपं **सामान्यरूपं**, असङ्गत्वकूटस्थत्वनित्यत्वशुद्धत्वमुक्तत्वादि **विशेषरूपम्**। तथाहि, "स्थूलसूक्ष्मशरीरसङ्घातोऽस्ति" इति कार्यकरणसङ्घातभ्रान्तिदशायामपि मिथ्याभूतकार्यकरणसङ्घातादभिन्नतया सद्रूपं प्रकाशते। अत एव सद्रूपमात्मनः **सामान्यरूप**मित्युच्यते। कार्यकरणसङ्घातभ्रमसमये आत्मनोऽसङ्गत्वकूटस्थत्वनित्यत्वशुद्धत्वमुक्तत्वादिस्वरूपं न प्रतिभाति। आत्मनोऽसङ्गत्वादिस्वरूपेण भाने तु शरीरादिसङ्घातभ्रमो निश्शेषं निवर्तते। तस्मादसङ्गत्वकूटस्थत्वनित्यत्वशुद्धत्वमुक्तत्वाद्वितीयत्वव्यापकत्वादिकमात्मनो **विशेषरूपम्**।

समस्तभ्रमेषु सामान्यस्वरूप**माधारः** इति विशेषरूप**मधिष्ठान**मिति चोच्यते। मिथ्यासर्पाश्रयभूतरज्जोः 'इयम्' इति सामान्यरूपं **सर्पस्याधारः**, 'रज्जुः' इति विशेषरूप**मधिष्ठानं** च यथा भवति, तथा मिथ्याप्रपञ्चाश्रयभूतात्मनः सामान्यात्मकसद्रूपं प्रपञ्च**स्याधारः**, असङ्गत्वाद्वितीयत्वादि विशेषरूप**मधिष्ठानं** च भवति। अयं च विभाग आधाराधिष्ठानयोः श्रीमच्छङ्करभगवत्पादाचार्यप्रशिष्यभूतसर्वज्ञात्ममुनीन्द्रेण संक्षेपशारीरकाख्यस्वग्रन्थे प्रदर्शितः।

**(१६३) मिथ्याजगत आत्मनोऽन्यो द्रष्टा वक्तव्य इति प्रश्नः**—हे स्वामिन् श्रीसद्गुरो! को वास्य मिथ्याभूतजगतो द्रष्टा भवेत्। न ह्यस्य मिथ्याजगत आधाराधिष्ठानोभयात्मक आत्मैव द्रष्टा भवितुमर्हति। तथा अदृष्टत्वात्। तस्मात् सर्वजगत आधाराधिष्ठानभावेन स्थितत्वादात्मनस्तदन्येनैव केनचित् तद्द्रष्ट्रा भाव्यम्। सर्पाद्याधाराधिष्ठानभूतरज्ज्वादेरन्य एव तद्द्रष्टा पुरुषो यथा भवति, तद्वत्। को वाऽस्ति जगतोऽस्य द्रष्टा प्रत्यगात्मनोऽन्य इति शिष्यः पृच्छति।

**(१६४) तत्र समाधानम्**—लोके यद्यन्मिथ्यावस्तु, तत्सर्वं स्वाधिष्ठाने कल्पितं भवति। अधिष्ठानं च द्विविधम्, एकं चेतनात्मकमपरं जडात्मकमिति। यत्राधिष्ठानं जडमित्यङ्गीक्रियते, तत्राधिष्ठानादन्य एव द्रष्टा भवति। यत्र चेतनमधिष्ठानं, तत्र स्वस्मिन्नारोपितस्य सर्वस्याधिष्ठानमेव द्रष्टृ, नान्यत्। यथा

स्वप्नप्रपञ्चस्याधिष्ठानं साक्षिचैतन्यं; तदेव तद्द्रष्टृ च भवति। एवमेवास्य जाग्रज्जगतोप्यात्मैवाधिष्ठानं; स एव तस्य द्रष्टा च।

मन्दाधिकारिसमाधानार्थं स्थूलदृष्ट्या रज्ज्वादिकं सर्पाद्यध्यासाधिष्ठानमित्याश्रित्यैतादृशशङ्कासमाधाने कृते। परमार्थतस्त्वद्वैतसिद्धान्ते सर्पाद्यध्यासाधिष्ठानं साक्षिचैतन्यमेव, द्रष्टृ च तदेव। तस्मात् कल्पितसकलदृश्याण्डकोटिसहस्राणामधिष्ठानभूतात्मैव द्रष्टा। नास्मिन् पक्षे शङ्कासमाधानादिकं प्रसज्यत इति गुरुराह।

(१६५) **मिथ्यासंसारनिवर्तनेच्छा नोचिता**—हे सोम्य! इत्थं मिथ्याभूतं संसारदुःखं भ्रान्त्या त्वयि प्रतिभासते। तस्मान्मिथ्यासंसारदुःखनिविवृत्सा तव न युज्यते। तत्रायं दृष्टान्तः—यदि कश्चन मान्त्रिकः कस्मैचित् पुरुषाय स्वमन्त्रप्रभावान्मिथ्याभूतं शत्रुं प्रदर्शयति, तदा तच्छत्रुविनाशाय न स पुरुषो यतते; तद्वन्मिथ्याभूतसंसारनिवृत्तये तवेच्छा न युज्यते। तथा चोक्तं गौडपादैर्माण्डूक्योपनिषत्कारिकायां—

"प्रपञ्चो यदि विद्येत निवर्तेत न संशयः।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः॥" (आ. 17) इति।

तथा वराहोपनिषदि चोक्तम्—

"अज्ञानमेव न, कुतो जगतः प्रसङ्गो
जीवेशदेशिकविकल्पकथाऽतिदूरे।
एकान्तनिर्मलचिदेकरसस्वरूपं
ब्रह्मैव केवलमहं परिपूर्णमस्मि॥" इति।

(१६६) **मिथ्यासंसारस्यापि दुःखहेतुत्वात्तन्निवृत्त्युपायप्रश्नः**—हे स्वामिन्! 'जगत् त्वयि मिथ्यैव स्वाप्नादिवत् प्रतिभाति, न चास्ति तत् परमार्थसद्रूपेण, इति यदुक्तं तत्सत्यमेव। तथापि, यथा मयि मिथ्यारूपेण वा रूपान्तरेण वा स जननमरणादिरूपः संसारो न प्रतिभासेत, तथा उपायः कृपयोपदिश्यतां मह्यम्। 'मिथ्याभूतसंसारनिवृत्तये साधनान्वेषणं तव युज्यत', इति भवदुक्तं, यद्यपि सत्यमेव तथापि यस्य मिथ्यापदार्थो दुःखहेतुर्भवति तेन स मिथ्यापदार्थस्तन्निवृत्तिसाधनैर्निवर्तनीय एव भवति। तथाहि, कस्यचित् प्रतिदिनं भयङ्करदुःस्वप्नदर्शनं जायते। स च मिथ्याभूतस्यापि तस्य स्वप्नस्य निवृत्तये जपपादप्रक्षालनाद्यनेकोपायाननुतिष्ठति। तथा मिथ्याभूतोप्ययं संसारो

जन्मादिदुःखहेतुत्वेन मे प्रतिभाति। अतस्तन्निवर्तनमिच्छामि। तस्मात्तन्निवृत्त्युपायं कृपया वद भोः इति शिष्यप्रश्नः।

(आ. १६७-१६८) गुरोरुत्तरम् —

(१६७) **आत्माज्ञानहेतुकसंसारनिवृत्तावात्मज्ञानमेवोपायः** —हे शिष्य! जगद्रूपदुःखस्यात्यन्तनिवृत्तये पृष्ट उपायः प्रागेव निरूपितः। श्रद्धाभक्तिपुरस्सरं तत्र दृढनिश्चयः क्रियताम्। ततो जगद्रूपदुःखमणुमात्रमपि त्वयि न दृश्येत। हे सोम्य! अद्वितीयासङ्गचिन्मात्ररूपस्वात्मस्वरूपस्यापरिज्ञानाज्जगद्रूपदुःखं तव प्रतिभाति। तच्च तवात्मस्वरूपपरिज्ञानमात्रान्निवर्तेत। यद्वस्तु यस्याज्ञानाद्भाति तद्वस्तु तस्य ज्ञानान्निवर्तत इति नियमः। रज्ज्वज्ञानात्प्रतीयमानः सर्पः 'रज्जुरेवेयम्' इति रज्जुज्ञानमात्राद्यथा निवर्तते, तथा आत्माज्ञानात्प्रतीयमानं जगदप्यात्मतत्त्वसाक्षात्कारमात्रेण निवर्तेत।

तच्चात्मतत्त्वज्ञानमुपदिष्टपूर्वमपि भूयोऽनुव्याख्यास्यामि—'**कालत्रयेऽपि मयि जगदणुमात्रमपि नास्ति; मिथ्यात्वात्, स्वप्नवत्। यन्मिथ्या तदधिष्ठानं न दूषयेत्। न हि मरीच्युदकमूषरदेशमार्द्रीकरोति। तथा मयि प्रतीयमानमपीदं जगत् मिथ्यात्वान्न मे कामपि हानिं कर्तुं प्रभवति। अहं सच्चिदानन्दानन्ताद्वितीयासङ्गब्रह्मस्वरूप एवास्मि, इत्येवं निश्चय एव **ज्ञान**मित्युच्यते। एतदेव ज्ञानमासुप्तेरामृतेश्च निरन्तरमभ्यस्यमानं **मोक्षसाधनं**, नान्यत् किञ्चिदपि। तदिदं ज्ञानं पूर्वमेवोपदिष्टवानस्मीति गुरुराह।

(१६८) **ज्ञानमेवाज्ञाननाशकं, न कर्मोपासनादि**—हे सोम्य! अस्य जगत उपादानकारणमज्ञानम्। अस्याज्ञानस्य नाशमनु तत्कार्यं सर्वं दृश्यं जगत् स्वयमेव विनश्यति, उपादाननाशानन्तरं तत्कार्यस्य स्थित्ययोगात्। तस्याज्ञानस्य नाशस्तु ज्ञानमात्रेण जायते, न तु कर्मोपासनादिभिः साधनान्तरैः; यतो ज्ञानमेव साक्षादज्ञानविरोधि न कर्मोपासनादिकम्। यथा गृहान्तर्विद्यमानं तमः केनापि व्यापारेणानिवर्त्यमपि केवलप्रकाशेन निवर्त्यते तथाऽज्ञानरूपं निबिडं तमो ज्ञानात्मकप्रचण्डप्रकाशेनैव निवर्त्येत, न तु केनचिदपि साधनान्तरेण। हे सोम्य! द्वैतरूपं जगत् यथा निश्शेषं निवर्तेत तथाऽहं ते साधनमुपादिशम्। तदेतन्मनसि धारयन् पुनःपुनर्युक्तिभिरनुचिन्तय। ततोऽपि संशयो यदि स्याद्यथेच्छं पृच्छेति गुरुराह।

(आ. १६९-२२५) पूर्वोपदिष्टविषये आक्षेपसमाधानानि—

(आ. १६९-१८८) जीवब्रह्मणोरभेदनिरूपणम्—

(आ. १६९-१७१) जीवब्रह्माभेदविषये तत्त्वदृष्टिप्रश्नः—

**(१६९) गुरुपदेशं सङ्ग्रहेणानूद्य शिष्यः स्वशङ्कां सूचयति।** हे स्वामिन्! 'जगत्कारणमज्ञानं, तस्याज्ञानस्य तत्प्रयुक्तजगतश्च नाशो ज्ञानेनैव जायते' इति भवदुपदिष्टं सम्यगवगच्छामि। परन्तु 'जगन्मिथ्या, जीव आनन्दस्वरूपः, अतश्च स जीवो ब्रह्मणो न भिन्नः' इति भवतोपदिष्टेऽर्थे जगन्मिथ्यात्वं, जीवस्यानन्दरूपत्वं चावगच्छामि। 'जीवो ब्रह्माभिन्न' इत्यंशं तु नावधारयामि, तयोर्भेदशङ्कैव मे मनसि परिवर्तते, इति तत्त्वदृष्टिः पृच्छति।

**(१७०) जीवब्रह्मणोः स्वरूपभेदात्तयोरैक्यमसङ्गतमिति शङ्का—** हे स्वामिन्! अहं हि पुण्यपापयोः कर्ता, तत्फलभूतजननमरणसुखदुःखादीन्यनुभवामि। विचित्ररचनाविशिष्टं जगन्मयि प्रतिभाति। जगत्कारणीभूतमूलाज्ञाननिवृत्तयेऽहं ब्रह्म विजिज्ञासे। ब्रह्मणस्तु पुण्यपापे न स्तः। जन्ममरणसुखदुःखादिक्लेशलेशोऽपि ब्रह्मणो न संभवति। अत एव तस्य न ज्ञानेच्छापि। तस्मान्मम ब्रह्मणश्च मिथः स्वरूपतो भेद एव वर्तते। ततो द्वयोरैक्यं नैव घटेत। यद्यपि जन्मादिसंसारः परमार्थतो मय्यपि नास्त्येव, तथापि मिथ्याभूतो जन्ममरणात्मकः संसारो मयि स्वप्नवत् भ्रान्त्या प्रतिभाति। ब्रह्मणि तु तन्नैव प्रतिभाति। जीवब्रह्मणोरित्थं भेदसद्भावादैक्यं न संभवति। अयं च प्रमेयगतसंशयः।

**(१७१) श्रुत्याकर्मोपासनविधिबलाच्च जीवब्रह्मभेदशङ्का—** हे स्वामिन्! मम संशयान्तरमपि जायते। श्रुत्यैव वक्ष्यमाणप्रकारेण जीवब्रह्मणोर्भेदः प्रतिपाद्यते—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।" (मु. 3-1-1) & (श्वे. 4-6.) इति हि श्रुतिः। **अयमर्थः**—बुद्धिरूपे एकस्मिन् वृक्षे द्वौ पक्षिणौ वसतः। तावुभावपि समानस्वभावौ। तत्रैकः कर्मफलभोक्ता अपरः शुद्धो भोगरहितोऽसङ्गः सन् कर्मफलभोक्तारं प्रकाशयति। अनयोः कर्मफलभोक्ता जीव इति, अपरः परमात्मेति च प्रतीयते। इत्येवं श्रुत्यैव जीवब्रह्मणोर्भेदप्रतिपादनान्न तयोरैक्यं युक्तम्।

किञ्च, वेदे नानाप्रकाराणि कर्माण्युपासनानि च तत्र तत्र कथितानि। तानि निरर्थकानि स्युर्जीवब्रह्मणोरेकत्वाभ्युपगमे। तथाहि—जीवब्रह्मणोरेकत्वं, किं ब्रह्मणि जीवस्वरूपान्तर्भावात्, किं वा जीवे ब्रह्मस्वरूपान्तर्भावात्। नोभयथापि संभवति। ब्रह्मणि जीवस्वरूपान्तर्भावाभ्युपगमे जीवस्यैव ब्रह्मरूपत्वात् कर्मोपासनाद्यधिकार्यभावप्रसङ्गात् कर्मोपासनादीनि निरर्थकानि स्युः। जीवे च ब्रह्मस्वरूपान्तर्भावाभ्युपगमे जीवभावापन्नत्वाद्ब्रह्मण उपास्याभावप्रसङ्ग इत्युपासनावाक्यानि निष्फलानि स्युः। अपि च कर्मफलदातुरीश्वरस्याभावात् कर्मानुष्ठानमपि निष्फलं स्यात्। 'कर्मातिरिक्त ईश्वरो नास्ति, स्वतन्त्रं कर्मैव फलं ददाति' इति मीमांसकोक्तिरपि न युज्यते; जडत्वात्कर्मणः। न हि जडस्य कर्मणः फलदातृत्वरूपसामर्थ्यं घटते। अतः सर्वज्ञादेवेश्वरात् कर्मफलसिद्धिर्वाच्या। तस्माज्जीवात्मपरमात्मनोरेकत्वं न युज्यते इति। अयञ्च प्रमाणगतसंशयः।

**(आ. १७२-१८५) स्वरूपभेदाज्जीवब्रह्मणोरैक्यासङ्गतिरिति शङ्कायाः समाधानम्—**

**(१७२) आकाशस्येव चैतन्यस्यापि चतुर्विधो भेदः—** हे सोम्य! त्वत्सन्देहनिवर्तकविचाररूपमुपदेशं शृणु—**यथैकस्यैवाकाशस्य** (१) घटाकाशः, (२) जलाकाशः, (३) मेघाकाशः, (४) महाकाश इति **चतुर्विधभेदोऽस्ति तथैकस्यैव चैतन्यस्य** (१) कूटस्थः, (२) जीवः, (३) ईश्वरः (४) ब्रह्म चेति **भेदचतुष्टयमस्ति।** एषां स्वरूपं विचारपूर्वकं यदा सम्यग्विजानासि तदा त्वदीयसन्देहानां समाधानं त्वं स्वयमेव जानीयाः। अतस्तेषां स्वरूपं मयाभिधीयमानमवधारय। तदधिगमेन तव निस्संशयज्ञानोदयद्वारा जन्मादिदुःखं निश्शेषं विनश्येत्।

**(आ. १७३-१७६) चतुर्विधाकाशवर्णनम्—**

**(१७३) घटाकाशः**—जलपूरितघटावस्थानाय यावानाकाशोऽवकाशं ददाति तावानाकाशः **घटाकाश** इति पण्डितैरुच्यते।

---

१. ननु घटात् बहिः स्थित आकाशो महाकाशः, तस्माद्भिन्नः घटान्तर्वर्त्याकाशो घटाकाश इति च प्रसिद्धिः। तत्र घटाकाशस्य प्रसिद्धं लक्षणं विहाय लक्षणान्तरकरणे किं प्रयोजनमिति चेदत्रोच्यते। 'घटान्तर्वर्त्याकाशो घटाकाश' इति प्रसिद्धलक्षणस्वीकारे घटो यत्र वर्तते स आकाशः पञ्चमः कपालाश इति वक्तव्यं भवेत्। स च पञ्चमप्रकार आकाशः शास्त्राप्रसिद्धः; [सिद्धान्ते आरम्भवादानङ्गीकारात्]। तस्मादिदं द्वितीयं लक्षणमाश्रितं साधु।

(१७४) **जलाकाशः**—जलपूर्णे घटे नक्षत्रादिसहिताकाशः प्रतिबिम्बति। तादृशाकाशप्रतिबिम्बो घटाकाशश्चेत्युभयं मिलित्वा **जलाकाश** इत्युच्यते।

नन्वाकाशस्य प्रतिबिम्बो न युज्यते, किन्तु केवलनक्षत्रादीनामेव स युज्यते। रूपाभावान्नाकाशस्य प्रतिबिम्बः संभवति। रूपवतो हि प्रतिबिम्बः स्यात्। तस्मान्नाकाशस्य प्रतिबिम्बो युज्यत इति चेन्न। जले आकाशप्रतिबिम्बानभ्युपगमे गोष्पदपरिमाणकस्वल्पजले महागजादिपरिमाणकगभीरतायाः प्रतिबिम्बो न स्यात्। तथोपलभ्यमानत्वादाकाशप्रतिबिम्बोऽङ्गीकार्य एव। न च नीरूपपदार्थप्रतिबिम्बो नास्तीति वाच्यम्। नीरूपस्यापि शब्दस्य प्रतिध्वनिदर्शनात्। स च प्रतिध्वनिः शब्दस्य प्रतिबिम्ब एव। तस्मान्नीरूपस्याप्याकाशस्य प्रतिबिम्बो युज्यत एव।

(१७५) **मेघाकाशः**—मेघस्थितये यावनाकाशोऽवकाशं ददाति तावानाकाशः, मेघजले प्रतिबिम्बिताकाशश्चेत्युभयं मिलित्वा **मेघाकाश** इत्यभिधीयते। नन्वाकाशेऽस्ति मेघः। तत्र मेघे जलमाकाशप्रतिबिम्बश्चास्तीत्यत्र किं मानमिति चेन्न। यद्यपि मेघे जलस्याकाशप्रतिबिम्बस्य च न प्रत्यक्षतो ग्रहणमथाप्यनुमानेन ग्रहणं संभवत्येव। तथाहि, मेघाज्जलवृष्टेर्दर्शनात्तत्र जलमस्तीत्यनुमीयते। यदि मेघे जलं न स्यात्तर्हि ततो जलवृष्टिर्न स्यात्। किञ्च, 'मेघस्थं जलमाकाशप्रतिबिम्बविशिष्टं, स्वच्छद्रव्यत्वात्, दर्पणादिवत्' इत्यनुमानेन मेघस्थजले आकाशप्रतिबिम्बानुमानं च सिद्ध्यति। यद्यस्ति जलं तर्हि तज्जलमाकाशप्रतिबिम्बेन विना न स्यादिति हि नियमः। एवं मेघे जलं, तत्राकाशप्रतिबिम्बश्चानुमानेन प्रसिद्ध्यति।

(१७६) **महाकाशः**—ब्रह्माण्डस्यान्तर्बहिश्च व्याप्यैकरूपेण वर्तमान आकाशो **महाकाश** इत्युच्यते विद्वद्भिः।

### (आ. १७७-१८५) चैतन्यस्य चातुर्विध्यवर्णनम्—

(१७७) **उपोद्घातः**—हे सोम्य! चतुर्विधाकाशलक्षणमुक्तम्।

---

१. जलपूरितघटे दृश्यमानाकाशप्रतिबिम्बो घटान्तर्वर्त्याकाशप्रतिबिम्ब इति शङ्काव्यावृत्तये नक्षत्रादिसहितेत्याकाशविशेषणम्। अपि च जलं विना प्रतिबिम्बासंभवात् 'आकाशप्रतिबिम्ब' इत्यनेन घटस्थजलसहिताकाशप्रतिबिम्बो ग्राह्यः।

२. गुणो गुणमाश्रित्य न तिष्ठति, किं तु द्रव्यमेवेति नियमः। अतश्च गुणत्वेनाभिमतानि नीलपीतादिवर्णानि नीरूपाण्येव। तथापि तेषां स्वच्छदर्पणादौ प्रतिबिम्बो दृष्टः। एवमेव रूपरहितयोराकाशचैतन्ययोश्च प्रतिबिम्बः संभवेदेव।

चैतुर्विधचैतन्यलक्षणमप्युच्यमानं शृणु । तस्य श्रवणमात्रेण विचारस्य महाफलं ब्रह्मज्ञानमवाप्येत ।

(१७८) **कूटस्थवर्णनम्** —बुद्धेर्व्यष्ट्यज्ञानस्य वाऽधिष्ठानभूतचैतन्स्य 'कूटस्थ' इत्यभिधा । यन्मते बुद्धिविशिष्टश्चेतनो जीवस्तन्मते बुद्ध्यधिष्ठानचेतनः कूटस्थः इत्युच्यते । यत्र तु मते व्यष्ट्यज्ञानविशिष्टचेतनो जीव इति कीर्त्यते तन्मते व्यष्ट्यज्ञानाधिष्ठानचेतनः 'कूटस्थ' इति वर्ण्यते । **अत्रायं सिद्धान्तः**—जीवत्वापादकं विशेषणं यत् तदधिष्ठानस्य कूटस्थ इति नाम । अयं कूटस्थ उत्पत्त्यादिरहितः । अस्यायमभिप्रायः—ब्रह्मणो व्यतिरिक्ततया चिदाभासो यथोत्पद्यते, न तथा कूटस्थ उत्पद्येत; किन्तु ब्रह्मरूप एव स भवति। यथा घटाकाशो महाकाशान्न व्यतिरिक्तः, किन्तु महाकाशरूप एव भवति, तद्वत् । अयं च कूटस्थः आत्मपदलक्ष्यार्थः । कूटस्थस्यैव **प्रत्यगिति, निजस्वरूपमिति, जीवसाक्षी**ति च व्यपदेशः । कूटस्थो घटाकाशस्थानीयः ।

(आ. १७९-१८३) **जीवस्वरूपवर्णनम्**—

(आ. १७९-१८२) **बुद्धिप्रतिबिम्बितचैतन्यं जीवः**—

(१७९) **जीवस्वरूपम्** — अनन्तकोटिकामकर्मवासनावासितबुद्धौ प्रतिफलितचैतन्यप्रतिबिम्बो **जीव** इति विद्वद्भिरुच्यते । न हि तत् प्रतिबिम्बमात्रं जीव इत्युच्यते ; किन्तु यथा घटाकाशसहिताकाशप्रतिबिम्बो जलाकाश इति कथ्यते, एवं कूटस्थसहितचिदाभासो जीव इति कीर्त्यते। तस्मात् बुद्धिस्थचिदाभासः बुद्ध्यधिष्ठानचैतन्यं चेत्युभयं मिलित्वा जीव इति सिद्ध्यति ।

---

१. केषुचिदद्वैतग्रन्थेषु जीव ईशो ब्रह्मेति चित्त्रैविध्यप्रक्रियाऽऽश्रिता । अनादिपदार्थषट्कनिरूपणे चैतन्यत्रैविध्यमेवोक्तम् । तत्र कूटस्थपरित्यागान्न कोऽपि दोषः स्यात् । कूटस्थब्रह्मणोर्न नाममात्रभेदादृतेऽन्यः कश्चन भेदोऽस्ति । किञ्च विद्यारण्यमुनिकृतदृग्दृश्यविवेकाख्यग्रन्थे कूटस्थः पारमार्थिकजीवः, जाग्रत्कालिकान्तःकरणप्रतिबिम्बो व्यावहारिकजीवः, स्वप्नदृक् प्रातिभासिकजीव इति च निरूपितम् । अनेन कूटस्थो जीवकोटावन्तर्भावितः ।

२. जीवो बुद्धिप्रतिबिम्बः इति, अविद्याप्रतिबिम्बः इति च वक्ष्यमाणत्वादत्र पक्षद्वयं सूचितम् ।

३. अत्र चिदाभासशब्देन बुद्ध्या (अन्तःकरणेन) सहितश्चिदाभासो ग्राह्यः तथाचान्तःकरणमथवा अविद्या, तत्स्थचिदाभासः, तदुभयाधिष्ठानकूटस्थचैतन्यं चेत्येतत्त्रयं मिलित्वा जीव इत्युच्यते । (१) केवलान्तःकरणस्य जीवत्वोक्तौ घटादेर्जडस्यापि तदा-

(१८०) **आभासस्वरूपविवेचनम्**--प्राक् बिम्बरूपकूटस्थसहित-चिदाभासो जीव इति प्रपञ्चितम्। अत इदं प्रतीयते--बुद्धौ प्रतिफलितो यः प्रतिबिम्बः स कूटस्थस्यैव, न तु बाह्यब्रह्मचैतन्यस्य। यस्य प्रतिबिम्बोऽन्यत्र प्रतीयते, स एव बिम्ब इत्युच्यते। प्रकृते कूटस्थस्य बिम्बत्वाङ्गीकारात् जीवस्तत्प्रतिबिम्ब इत्येव प्रतीयते। तथाहि, अत्यन्तरक्तजपाकुसुमाद्युपाध्युपरिस्थस्वच्छस्फटिके तत्पुष्पादिरक्तिमा प्रतीयते। स च स्फटिकादिगतरक्तिमा तत्पुष्पादिप्रतिबिम्ब एव। तथा कूटस्थाश्रितबुद्धौ कूटस्थस्य प्रकाशः प्रतिफलति। स प्रकाश एव [1]चिदाभास इत्युच्यते। अत्यन्तस्वच्छस्फटिकवत् बुद्धिरप्यत्यन्तनिर्मला; सत्त्वगुणकार्यत्वात्तस्याः। तत्रप्रतिफलितकूटस्थप्रकाशस्यैव **प्रतिबिम्ब** इति समाख्या। बुद्धेः कूटस्थाधिष्ठितत्वाद्बुद्धौ कूटस्थस्यैव प्रतिबिम्ब उचित इति जीवः कूटस्थप्रतिबिंब इति पक्षः प्रदर्शितः।

---

पत्तिः। अस्वच्छत्वाद्घटादेस्तन्न संभवतीति चेत्—स्वच्छदर्पणादेस्तदापत्तिः। दर्पणादेर्बाह्यत्वात्तन्नेति चेत्तर्ह्यन्तःस्थानामिन्द्रियाणां तदापत्तिः। इन्द्रियापेक्षया आन्तरत्वादन्तःकरणस्यैव तन्न्याय्यमिति चेत्, ततोऽप्यान्तरस्याज्ञानस्य तदापत्तिः। किञ्च, जीवस्य चेतनत्वादेव नाचेतनस्यान्तःकरणस्य जीवत्वं घटते। (२) केवलप्रतिबिम्बस्यापि न जीवत्वं संभवति; अन्तःकरणरूपोपाधिमन्तरा प्रतिबिम्बायोगात्। (३) अधिष्ठानचैतन्यस्य जीवत्वोक्तिरसङ्गता; निर्विकारत्वात्तस्य विकारात्मकजीवत्वं न युज्यते। (४) प्रतिबिम्बविशिष्टान्तःकरणं जीवोऽस्त्विति चेन्न—उभयोः कल्पितत्वाविशेषाज्जीवस्य नित्यत्वासिद्धौ मुक्ताभावप्रङ्गात्। किञ्च भागत्यागलक्षणा असंभवान्निखिलवाच्यभागत्यागरूपजहल्लक्षणैव सिद्ध्येत्; न चैतद्भाष्यकाराभिमतम्। अपि चाधिष्ठानादपृथग्भूतं सत् यदधिष्ठानमावृणोति तदेवारोप्यमित्युच्यते। न ह्यधिष्ठानमन्तरा पृथगारोप्यं कुत्राप्यवभासते। अनेनानुमानेन 'बुद्धिसहितचिदाभासो जीवः' इत्येतदपास्तम्। (५) अधिष्ठानचैतन्यं प्रतिबिम्बचैतन्यं चेत्युभयं मिलित्वा जीव इति चेन्न; केवलचैतन्यस्य निर्विकारतया कर्तृत्वभोक्तृत्वादिविकारोपेतजीवत्वासंभवात्। (६) अधिष्ठानचैतन्यमन्तःकरणं चेत्युभयं मिलित्वा जीव इति चेत्—दर्पणं दर्पणाधिष्ठानचैतन्यं च मिलित्वा तर्हि जीवः स्यात्। तयोर्जीवत्वं न संभवति। तस्मादन्तःकरणं, तत्प्रतिफलितचैतन्याभासः तदुभयाधिष्ठानकूटस्थचैतन्यं चेत्येतत्त्रयमपि मिलित्वैव **जीव** इत्युच्यते। तत्र कूटस्थस्य संसारासंभवाज्जीव एव संसारीत्यैष्टव्यं भवति। तथा पञ्चदश्यामुक्तम्—

"चैतन्यं यदधिष्ठानं लिङ्गदेहश्च यः पुनः।
चिच्छाया लिङ्गदेहस्था तत्सङ्घो जीव उच्यते॥" इति। (द्वै. 11)

१. पटविलक्षणत्वे सति पटवद्भासमानत्वं पटाभासत्वं यथा, तथा चिद्विलक्षणत्वे सति चिद्वद्भासमानत्वं चिदाभासत्वम्।

**अथवा** ब्रह्मचैतन्यस्य बुद्धौ प्रतिबिम्ब इति पक्षोऽपि संभाव्यत **एव**। तथाहि—घटान्तःस्थजले बाह्यमहाकाशप्रतिबिम्ब एव भवति, न तु घटान्तः-स्थस्याकाशस्य प्रतिबिम्बः। घटस्थजले यावान् विस्तार उपलभ्यते तावान् विस्तारो घटान्तःस्थाकाशस्य नास्ति। घटस्थजले उपलभ्यमानविस्तारः आकाशस्य प्रतिबिम्ब एव। तस्माद्बाह्यमहाकाशस्यैव घटस्थजले प्रतिबिम्बो वाच्यः। एवं बुद्धौ व्यापकब्रह्मचैतन्यस्यापि प्रतिबिम्बो भवितुमर्हति।

व्यापकस्य ब्रह्मचैतन्यस्य प्रतिबिम्बो न युज्यत इतीयमाशङ्का आकाश-दृष्टान्तेनैव निराकार्या। यथा आकाशस्य व्यापकस्यापि प्रतिबिम्बः संभवति, तथा व्यापकचैतन्यस्यापि प्रतिबिम्बः संभवेत्। रूपवत एव पदार्थस्य रूपविशिष्टे एव पदार्थान्तरे प्रतिबिम्बोदयः इति नियमोऽपि नास्ति। नीरूपस्यापि शब्दस्य नीरूपाकाशे प्रतिबिम्बो दृश्यत एवेति प्रागुक्तत्वात्। तस्मात्संभवत्येव व्यापक-नीरूपब्रह्मचैतन्यस्यापि प्रतिबिम्बः।

इत्थं बुद्धिस्थचिदाभासो बुद्ध्यधिष्ठानचैतन्यं चेत्युभयं मिलित्वा **जीव** इत्युच्यते। सोयं जीवः त्वंपदवाच्योऽर्थः। जीवस्थचिदाभासं विहाय परिशिष्टः केवलकूटस्थ एव त्वंपदलक्ष्यार्थः। अहंशब्दस्य वाच्यार्थो जीवः, लक्ष्यार्थस्तु केवलकूटस्थः इति विवेकः।

(१८१) **चिदाभास एव पुण्यपापाद्याश्रयः, न कूटस्थः**—उभयोः कूटस्थचिदाभासयोर्मिलितयोः जीवत्वव्यवहारेऽपि कर्तृत्वादयो जीवधर्माः सर्वे चिदाभासमेवाश्रयन्ति। पुण्यं, पापं, तत्फलभूतसुखदुःखाद्यनुभवः, लोकान्तरं प्रति गमनं, तत इहागमनमित्यादि सर्वं चिदाभासविशिष्टबुद्धिरेव करोति, न तु कूटस्थः। कूटो नामायोघनविशेषः अयस्कारादिप्रसिद्धः। तद्वन्निर्विकारतया तिष्ठतीति **कूटस्थ** उच्यते। **अथवा** मिथ्याभूतबुद्धिचिदाभासयोः कूट इत्या-ख्या। तत्रासङ्गतयाऽऽस्ते इति **कूटस्थ** इष्यते। अतः कूटस्थे कर्तृत्वादयो न संभवन्ति। किंतु चिदाभासस्य भ्रान्त्या ते धर्माः **कूटस्थे** प्रतीयन्ते।

(१८२) **वस्तुतः पुण्यपापादयो न चिदाभासस्यापि धर्माः, किन्तु बुद्धेरेव**—विचार्यमाणे तु पुण्यपापतत्फलसुखदुःखलोकान्तरगमनागमनादि

---

१. पूर्वं प्रतिबिम्बः कूटस्थस्यैवेति साधितम्। अधुना सः ब्रह्मचैतन्यस्यापीत्यु-च्यते।

सर्वं बुद्धेरेव, न तु चिदाभासस्यापि। बुद्धितादात्म्यादाभासे तत्सर्वं भाति। यथा जलपूर्णे घटे ऋजुवक्रादिस्वरूपे सति, तस्मिन् घटेऽन्येन नीयमाने वा आनीयमाने वा सति, तादृशघट संबन्धादेव तत्स्थाकाशाभासस्ताः क्रियाः करोति, न तु स्वतः किञ्चिदपि करोति; तथा कामकर्मात्मकजलपूरित-बुद्धिरूपघटः पुण्यपापादिसकलविक्रियाश्रयो भवति। तत्संबन्धाच्चिदाभासोऽपि विक्रियाश्रयो भवति। कूटस्थस्तु सर्वविकारशून्यः। यथा घटाकाशो जलपूर्ण-घटगतसर्वविकाररहितस्तथा कूटस्थोऽप्यसङ्ग इति विद्धि। अतो जीवत्व-प्रयुक्तनिखिलधर्माश्चिदाभासे भवन्ति। कूटस्थे त्वज्ञानात्प्रतीयन्ते। अतः कूटस्थबुद्धितत्स्थचिदाभाससमुदायो जीव इत्युच्यते।

(१८३) **अज्ञानप्रतिबिम्बितचैतन्यं जीवः** —— प्रागुक्तजीव-स्वरूपेऽङ्गीक्रियमाणे प्राज्ञस्य हानिरुपजायते। तथाहि—सुषुप्त्यभिमानिनो जीवस्य **प्राज्ञ** इति नाम। सुषुप्तौ बुद्धेरभावात्तत्स्थचिदाभासोऽपि न सिद्धयति। ततश्च प्राज्ञस्वरूपप्रतिपादकशास्त्रं निर्विषयं भवेत्। अतः प्रकारान्तरेण जीव-

---

१. जलगतशैत्यं तत्र प्रतिबिम्बितादित्यादीन् यथा न स्पृशति तथाऽन्तःकरण-गता विकारा अपि तत्र प्रतिबिम्बितचिदाभासं न कदाचिदपि स्पृशन्ति; किमु वक्तव्यं तदन्तःकरणाधिष्ठानभूतं प्रत्यगात्मानं न स्पृशन्तीत्यत्र। यथा पृथिव्यादिगताः तत्कार्य-गताश्च विक्रियाः पृथिव्याद्याधारभूतमाकाशं न स्पृशन्ति; तद्वदेवानात्मभूताज्ञानं तत्कार्या-हङ्कारदेहेन्द्रियादिप्रपञ्चधर्माश्च अज्ञानतत्कार्यनिखिलदृश्याधिष्ठानभूतचिद्रूपप्रत्यगात्मानं न स्पृशन्त्येव। अज्ञानात्तु ते धर्माः कूटस्थं स्पृशन्तीव भ्रान्तिर्भवति।

२. वस्तुतस्तु सुखदुःखादिसंसारो न बुद्धेरपि संभवति। तथा चोक्तं गुहाधिकरणभाष्ये (ब्र. सू. 1-2-12) "इदं हि कर्तृत्वं भोक्तृत्वं च सत्त्वक्षेत्रज्ञयोरित-रेतरस्वभावाविवेककृतं कल्प्यते। परमार्थतस्तु नान्यतरस्यापि संभवति; अचेतनत्वात् सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य। अविद्याप्रत्युपस्थापितस्वभावत्वाच्च सत्त्वस्य सुतरां न संभवति। तथा च श्रुतिः—"यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत् पश्येत्"(बृ. 4-3-31) इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहारं दर्शयति। "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" (बृ. 4-5-15) इत्यादिना च विवेकिनः कर्तृ-त्वादिव्यवहाराभावं दर्शयति"। इति।

३. यथा चन्द्रस्य स्वतो निर्विकारतया सदैकरूपत्वेऽपि तिथिपक्षाभ्यां चन्द्रस्य कलानामेव वृद्धिक्षयादिकं भवति; यथा वा सदा वृक्षस्यैकरूपत्वेऽपि तत्फलादीनामेव जन्मादिविकारो जायते; तथा स्वयं निर्विकारेऽपि कूटस्थचिन्मात्रे प्रत्यगात्मनि देहादीनामेव जन्मादिषड्विकाररूपपरिणामो जायते। यदि कूटस्थ एव परिणमेत्, तर्हि स जडः स्यात्। परिणामः = विकारः = प्रकृतेरन्यथाभावः। तस्मात्कूटस्थस्य विकारो न कथञ्चनोपपद्यते।

स्वरूपनिरूपणं क्रियते। अज्ञानस्यैकदेशो **व्यष्टयज्ञानमिति**, संपूर्णाज्ञानं तु **समष्टयज्ञान**मिति चोच्यते। तत्राज्ञानैकदेशप्रतिम्बितचिदाभासः, तदज्ञानांशाधिष्ठाभूतकूटस्थचैतन्यं च मिलित्वा जीव इत्युच्यते। न चैतस्मिन् जीवस्वरूपे प्राज्ञस्याभावः संभवति, सुषुप्तावज्ञानस्य सत्त्वात्। सुषुप्तौ यः चैतन्यप्रतिबिम्बविशिष्टाज्ञानांशः स बुद्ध्यात्मना परिणमते। तत्र चैतन्यप्रतिबिम्बोऽपि सहैव वर्तते। अस्यां चिदाभासयुक्तायां बुद्धौ पुण्यापुण्यादिरूपः संसारः प्रतीयते। अनेनाभिप्रायेण बुद्धिरेव शास्त्रेष्वपि क्वचिज्जीवोपाधितया वर्ण्यते। विचारदृष्ट्या तु **जीवस्योपाधिरज्ञानमेव**

(१८४) **ईश्वरस्वरूपवर्णनम्**—मायायां प्रतिबिम्बितचिदाभासः

---

१. ईश्वरस्वरूपं तु बहुधाऽनेकैर्वर्ण्यते। तथा हि (१) **योगमतानुसारिणस्त्वेवमाहुः**—चैतन्यसमीपस्थप्रकृतिप्रेरको जीवविलक्षणः पुरुष ईश्वरः। स चेश्वरः क्लेशकर्मतत्फलादिभिरसंस्पृष्टो जीववदसङ्गश्चिन्मात्रः। जीवस्यापि क्लेशाद्यभावेप्यविवेकवशात् तत्सत्त्वं प्रतीयते। अयमेव जीवेश्वरयोर्भेदहेतुः।

(२) **न्यायमतानुसारिणस्तु** असङ्गस्येश्वरस्य नियामकत्वासंभवात् योगमतमाक्षिप्य, ईश्वरस्य ज्ञानेच्छाप्रयत्नादिगुणा नित्याः; अतो जीवाद्विलक्षणो भिन्नश्चेश्वर इत्याहुः।

(३) **हिरण्यगर्भोपासकास्तु** ईश्वरज्ञानादीनां नित्यत्वे "सोऽकामयत" (तै. ब्र. 6.) इत्यादिश्रुतिवाक्यानां, सृष्ट्यारम्भसमये ईश्वरज्ञानादीनामुत्पत्तिप्रतिपादकानां विरोधः स्यात्; सदा सृष्टिप्रसङ्गश्च स्यात्। अतोऽसङ्गतं न्यायमतम्। हिरण्यगर्भ एवेश्वरः। अस्य लिङ्गशरीरसत्वेप्यविद्याकामकर्माद्यभावात् जीवविलक्षणः स इत्याचक्षते।

(४) **विराडुपासकास्तु** विना स्थूलदेहं लिङ्गदेहमात्रस्य कुत्राप्यननुभूतत्वाद्विराट्पुरुष एवेश्वर इत्याहुः।

(५) **प्रजापत्युपासकास्तु** प्रजाकामाः सन्तः पाणिपादादियुक्तप्राकृतशरीरवत ईश्वरत्वे क्रिम्यादेरपीश्वरत्वप्रसङ्गात् हिरण्यगर्भोपासकमतमसङ्गतम्, तथा विराडुपासकमतमप्यसङ्गतम्; किन्तु चतुर्मुखो ब्रह्मैवेश्वर इति प्राहुः।

(६) **वैष्णवास्तु** विष्णोर्नाभिकमलोत्पन्नत्वाच्चतुर्मुखस्य ब्रह्मणस्तत्कारणीभूतो विष्णुरेवेश्वर इति कथयन्ति।

(७) **शैवास्तु** शिवस्य पदान्वेषणेऽशक्तत्वाद्विष्णोः, शिव एवेश्वर इति वदन्ति।

(८) **गणपत्युपासकास्तु** त्रिपुरासुरजयार्थमीश्वरेणाप्युपासितो गणपतिरेवेश्वर इति मन्यन्ते।

(९) **भैरवमैरालाद्युपासकास्तु** मारणोच्चाटनवशीकरणस्तम्भनादिसिद्धिहेतुभूतभैरवादिमन्त्रान्, तत्तत्स्तोत्राणि, तद्भवनतर्पणपुरश्चरणादिप्रतिपादकतन्त्रग्रन्थांश्च प्रमाणीकृत्य भैरवादिदेवता ईश्वरत्वेन वर्णयन्ति।

मायाधिष्ठानचैतन्यं चेत्युभयं मिलित्वा **ईश्वर** इत्युच्यते। अयं चेश्वरो मेघाकाशतुल्यो भवति। अयमेवान्तर्यामीत्युच्यते। सर्वेषामन्तःस्थः सन् नियन्तृत्वात्=प्रेरकत्वादन्तर्यामी। अयं नित्यमुक्तः, स्वस्वरूपावारकाज्ञानाभावात्तस्य। अत एव जन्ममरणादिबन्धप्रतीतिरस्य नास्ति, तत एव ईश्वरो **नित्यमुक्त** इत्युच्यते। किञ्चेश्वरः **सर्वज्ञः**, तस्योपाधिभूतमायायाः शुद्धसत्त्वगुणप्रधानत्वादस्य सर्वज्ञत्वसिद्धिः। स्वप्रतिबन्धकीभूतरजस्तमसी अभिभूय स्वयं ताभ्यामनभिभूतो यः सत्त्वगुणस्तस्य **शुद्धसत्त्वमित्याख्या**। सत्त्वगुणादेव ज्ञानमुत्पद्यते। अतः सत्त्वगुणः प्रकाशस्वभावः। एवंभूतसत्त्वगुणप्रधानमायायां प्रतिफलितचैतन्याभासरूपेश्वरस्य स्वविषये विषयान्तरे वा नैवावरणं सम्भवति। तस्मादीश्वरो **नित्यमुक्तः सर्वज्ञश्च** भवति।

जीवेश्वरयोरधिष्ठानभूतं शुद्धचैतन्यं बन्धमोक्षादिनिखिलभेदशून्यं सदाकाशवदेकरसस्वभावं तयोरुभयोरपि वर्तते। बन्धमोक्षादिस्तु आभासांशे एव। अधिष्ठाने चैतन्ये त्वाभासस्य भ्रान्त्या प्रतीयते। तस्मात् केवलाभासे एव बन्धमोक्षादिव्यवहारः।

---

इत्थमनन्तमतानि स्वस्वमतिविलसितानि परस्परविलक्षणान्यन्योन्यविरुद्धानि चोपलभ्यन्ते। सकलमताविरोधेनैतद्ग्रन्थोक्तेश्वरस्वरूपमेव श्रुत्यभिप्रेतम्।

तथा चोक्तं पञ्चदश्याम्—

एवमन्ये स्वस्वपक्षाभिमानेनान्यथाऽन्यथा।
मन्त्रार्थवादकल्पादीनाश्रित्य प्रतिपेदिरे॥
अन्तर्यामिणमारभ्य स्थावरान्तेशवादिनः।
सन्त्यश्वत्थार्कवंशादेः कुलदैवतदर्शनात्॥
तत्त्वनिश्चयकामेन न्यायागमविचारिणाम्।
एकैव प्रतिपत्तिः स्यात् साप्यत्र स्फुटमुच्यते॥ (चित्रदीपे 120-122)

२. मायास्थबुद्धिवासनायां प्रतिफलितचैतन्यप्रतिबिम्ब ईश्वर इति विद्यारण्यकृतपञ्चदश्यामभिहितम्। ईश्वरो मेघाकाशकल्प इत्यत्र 'मेघसदृशी माया, मेघस्थजलसमानाः बुद्धिवासनाः; तज्जलस्थाकाशप्रतिबिम्बसमाश्चिदाभासाः। बुद्धिवासनाप्रतिफलितप्रतिबिम्बसम ईश्वर इति कथने न कोऽपि दोषः प्रसज्यते। मायारूपाज्ञानस्यैवेश्वरत्वापादकोपाधित्वेऽपि बुद्धिगतवासनाः अज्ञाने अन्तर्गता भवन्ति। सर्वज्ञत्वस्य तु कारणमज्ञानगतसत्त्वगुण एव। अयञ्च सत्त्वगुणः ज्ञानरूपसकलबुद्धीनामुपादानकारणं भवति। तस्मात्सुषुप्तौ सकलबुद्धयः स्वोपादानांशे विलीयोपादानात्मनैव वर्तन्ते। उपादानरूपेणावस्थितिरेव सूक्ष्मसंस्कार इत्युच्यते। अयमेव संस्कारः वासनेत्यपि कथ्यते। इत्थमज्ञानगतसत्त्वांशात् पृथग्वासना नाम न काचनास्ति। तस्माद्बुद्धिवासनाशब्देनाज्ञानस्थसत्त्वांश एव ग्राह्यः।

तत्राप्यस्त्येतावान् भेदः—यस्मिन्नाभासे स्वरूपावरणमस्ति तस्मिन्नेव बन्धः। यत्र तन्नास्ति स तु **मुक्त** एव। ईश्वरे आवरणाभावादेव स **नित्य-मुक्तः**। जीवे त्वावरणसत्त्वात् सः **बद्धः**; यतो यस्या अविद्यायाः अंशे प्रतिबिम्बितस्य चिदाभासस्य जीवत्वं भवति तस्या अविद्याया आवारकत्वं स्वभावः। यद्यप्येकस्यैव वस्तुनो माया, अज्ञानं, अविद्या, इत्यादि नामानि तथापि तस्यैव शुद्धसत्त्वगुणप्रधानत्वात् 'माया' इति, मलिनसत्त्वगुणप्रधानत्वाच्च 'अज्ञानं,' 'अविद्या' इति च व्यवहारः। रजस्तमोगुणाभ्यामभिभूतः सत्त्वगुणो **मलिन-सत्त्वगुण** इत्युच्यते। रजस्तमोगुणाधिक्यादेवाविद्या स्वप्रतिबिम्बितजीवरूपचिदाभासांशस्यावरणं करोति। अत एव जीवो बद्धो नेश्वरः। सर्वाधिष्ठानभूतशुद्धचैतन्यसहितो मायाप्रतिबिम्बितचिदाभासरूप ईश्वरस्तत्पदवाच्यार्थः। केवलाधिष्ठानशुद्धचैतन्यं तत्पदलक्ष्यार्थः। ईश्वरो जगदुत्पत्तिस्थितिसंहारान् करोतीति शास्त्रोक्तेरयमभिप्रायः—अधिष्ठानभूतशुद्धचैतन्यमाकाशवदसङ्गम्। मायाप्रतिबिम्बितचिदाभासांशो जगदुत्पत्त्यादिकं करोति। सर्वज्ञत्वादिगुणोऽपि तस्यैव। भक्तानुग्रहादिकर्तृत्वमैश्वर्यान्तरमपि तस्यैव चिदाभासांशस्य। चैतन्यस्वरूपं त्वेकरसं सर्वसमम्। तस्मिन् सत्तास्फूर्तिप्रदत्वमन्तरा[1] अन्यदैश्वर्यादिकं न किञ्चिदप्युपपद्यत। इति।

(१८५) **ब्रह्मस्वरूपवर्णनम्**—महाकाशवत् ब्रह्माण्डानामन्तर्बहिश्च व्याप्य वर्तमानमखण्डपरिपूर्णचैतन्यं ब्रह्मेत्युच्यते। भाष्ये चोक्तम्—"ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते, बृहतेर्धातोरर्थानुगमात्। सर्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः" (ब्र. सू. भा. 1. 1. 1) इति। रत्नप्रभायामप्येवं व्याख्यातम्—"स चार्थो महत्त्वरूप इति व्याकरणान्निश्चीयते; 'बृहि वृद्धौ' इति स्मरणात्। सा च वृद्धिर्निरवधिकमहत्त्वमिति, संकोचकाभावात् श्रुतावनन्तपदेन सह प्रयोगाच्च ज्ञायत" इति, "अतो बृंहणाद्-ब्रह्मेति व्युत्पत्त्या देशकालवस्तुकृतपरिच्छेदाभावरूपं नित्यत्वं प्रतीयते" इति च। तथा सूतसंहिताव्याख्यानेप्युक्तम्। (यज्ञ. ब्रह्मगी. 3-31) "ब्रह्म सत्यज्ञानसुखाद्वयं, बृहधात्वर्थस्यानुगमात्। तथाहि—'बृह बृहि वृद्धौ' इति धातुर्वृद्धिमाचष्टे। सा च वृद्धिः प्रतियोगिविशेषानुपादानान्निरतिशयैव विवक्षिता। सति च वस्त्वन्तरे तेन परिच्छेदाद्-

---

१. सत्तास्फूर्तिप्रदत्वम् = स्थितिभानप्रदत्वम्।

वृद्धेर्निरतिशयत्वं भज्येत । तथा च वस्त्वन्तरकृतपरिच्छेदरहितमेव ब्रह्मशब्दवाच्यं भवितुमर्हति । द्वैतप्रपञ्चस्य तत्स्वरूपेऽध्यस्ततयैव प्रतीतेर्वस्तुतस्तत्स्वरूपानतिरिक्तत्वात् । तथा च वस्तुकृतपरिच्छेदनिराकरणेनैव देशकालकृतपरिच्छेदोऽपि निरस्तो वेदितव्यः । देशकालयोरपि परिकल्पितत्वेन वस्तुतस्तद्रूपानतिरेकात् । एवं द्वैतापरोक्षस्याधिष्ठानत्वेन तद्बाधावधित्वेन च त्रिविधपरिच्छेदरहितं यदद्वितीयं तत्सत्यमेवेष्टव्यम्"। इति ।

इदं च ब्रह्म न दूरे नाप्यन्तिके वर्तते । यद्धि वस्तु स्वस्मादन्यत्वेनानात्मभूतं देशादिरूपोपाधिपरिच्छिन्नं च भवति तदेव दूरे अन्तिके वा वर्तत इत्युच्यते । इदं तु ब्रह्म न प्रत्यगात्मनो भिद्यते; किं तर्हि, सर्वस्य प्रत्यगात्मभूतं देशादिरूपसर्वोपाधिशून्यं च भवति । तस्मादेव तत् दूरेऽन्तिके वा वर्तमानतया नोच्यते ।

ब्रह्मशब्दस्य हि वाच्योऽर्थः सोपाधिक एव, व्यापकत्वधर्मविशिष्टस्य वस्तुनो ब्रह्मशब्दाभिधेयत्वात् । इदं च व्यापकत्वं द्विविधं, सापेक्षं (सातिशयं) निरपेक्षं (निरतिशयं) चेति । यद्वस्तु स्वव्याप्यापेक्षया व्यापकं, स्वव्यापकापेक्षया व्याप्यं च भवति, तदा**पेक्षिकव्यापक**मित्युच्यते । यथा पृथिव्यादिरूपस्वकार्यापेक्षया व्यापिनी माया; चैतन्यापेक्षया तु न व्यापिनी, किन्तु व्याप्या । तस्मान्मायायामापेक्षिकमेव व्यापकत्वमस्ति । यद्वस्तु सर्वापेक्षया व्यापकं भवति तन्निष्ठव्यापकत्वं **निरपेक्षव्यापकत्व**मित्युच्यते । इदं च निरपेक्षव्यापकत्वं चैतन्ये एव वर्तते । "न तत्समश्चाभ्यधिकश्च दृश्यते" (श्वे. 6-8) इत्यादिश्रुत्या तत्समं वाऽधिकं वा न किञ्चन व्यापकं वस्तु विद्यते इति सिद्धत्वात् । तस्माच्चैतन्यस्यैव सर्वापेक्षया व्यापकत्वश्रवणात्तदेव निरपेक्षव्यापकमिति सिद्ध्यति ।

एतद्द्विविधव्यापकत्वविशिष्टं वस्तु **ब्रह्मशब्दस्य वाच्यार्थः** । मायाशबलितचैतन्ये द्विविधमप्येतद्व्यापकत्वं वर्तते । विशिष्टनिष्ठविशेषणीभूतमायारूपांशे आपेक्षिकव्यापकत्वं विशेष्यभूतचैतन्यांशे निरपेक्षव्यापकत्वं च वर्तते । चैतन्यैकदेशे[1] मायायाः सत्वात्, मायाविशिष्टचैतन्यापेक्षया शुद्धचैतन्यस्याधिकव्यापकत्वाच्च तदेव निरपेक्षव्यापकं, न तु माया-

---

१. न हि घटोपादानत्वशक्तिर्मृत्सामान्ये वर्तते, किन्तु मृद्विशेषे एव । एवमेव माया न ब्रह्मणि सर्वत्र वर्तते, किन्त्वेकदेशे एव ।

विशिष्टचैतन्यम् । तथापि यतो मायाविशिष्टचैतन्यं परमार्थदृष्ट्या शुद्धचैतन्या-दनतिरिक्तं सच्छुद्धरूपमेव भवति तस्मान्मायाविशिष्टेऽपि यश्चैतन्यांशस्तत्र निर-पेक्षमेव व्यापकत्वमस्ति । इत्थं मायाविशिष्टचैतन्यमेव ब्रह्मशब्दस्य वाच्यार्थ इति युक्तमेवोक्तम् । शुद्धचैतन्यं तु ब्रह्मशब्दस्य लक्ष्यार्थः । तस्मादीश्वरब्रह्मशब्दयोरेक एवार्थः प्रतीयते ; न भिन्नार्थता । तथाप्यस्त्ययं विशेषः—ब्रह्मशब्दः स्वरसतो लक्ष्यार्थमेव प्रायशो बोधयति, काचित्कतया तु वाच्यार्थमपि । ईश्वर-शब्दस्तु वाच्यार्थमेव प्रायशो बोधयति, लक्ष्यार्थं तु काचित्कतया । ईदृग्भेद-सद्भावादेव लक्ष्यार्थमवलंब्य ब्रह्मशब्दस्यार्थो भिन्नतया निरूपितः ।

(आ. १८६-१८८) **"द्वा सुपर्णा" इति श्रुत्या जीवब्रह्मभेदः अवगम्यत इति, अन्यथा कर्मोपासनाविधिवैयर्थ्यमिति च शङ्कायाः समाधानम्—**

(१८६) **चैतन्याभासो भुङ्क्ते, कूटस्थोऽसङ्गः प्रकाशते**—चतुर्विधं चैतन्यमुक्तम् । तत्र जीवस्वरूपान्तर्गतमिथ्याभूतचिदाभासांश एव पुण्यपापे कृत्वा तत्फलमनुभवति, न कूटस्थः । स त्वसङ्गतया आनन्दस्वरूप एव प्रकाशते । **यदुक्तं** 'बुद्धिरूपवृक्षे जीवः परमात्मा चेति द्वौ पक्षिणौ स्तः, तयोर्जीवः कर्मफलं भुङ्क्ते परामात्मा तं प्रकाशयन्नास्ते इति **द्वा सुपर्णेति** श्रुतेरर्थः ;' इति, **तत्रोच्यते**—न तत्र जीवपरात्मानौ ग्राह्यौ ; किन्त्वाभासः कर्मफलं भुङ्क्ते कूटस्थः प्रकाशमान आस्ते इति तस्याः श्रुतेरर्थो ज्ञेयः ।

(१८७) **चैतन्याभास एव कर्मकर्ता, फलदाता च ; न तु शुद्धचैतन्यम्**—जीवस्वरूपान्तर्गतचिच्छायारूपाभासांशः कर्म करोति ; कर्म कुर्वत आभासांशस्य ईश्वरस्वरूपान्तर्गतचिच्छायारूपाभासांशः फलं प्रयच्छति । आभास एव कर्मकर्ता, आभास एव फलदाता च । अनेनायमर्थः सिद्धः—जीवस्वरूपान्तर्गताभासांशः पुण्यपापे कृत्वा तत्फलानि भुङ्क्ते । ईश्वरनिष्ठा-भासांशस्तु कर्मफलानि प्रयच्छतीति ।

एतदुभयानुगतचैतन्यांशे न कापि वार्ताऽस्ति । जीवगतचैतन्यांशे कर्मकर्तृत्वतत्फलभोक्तृत्वरूपसंबन्धो न वर्तते । ईश्वरगतचैतन्यांशेऽपि न कर्मफलदातृत्वरूपसंबन्धोऽस्ति । यस्तु तस्मिन् चैतन्ये कर्मकर्तृत्वफलदातृ-त्वादिकं कल्पयति स मूर्ख एव । यतश्चैतन्यमुभयत्राप्यसङ्गमेकरूपं च वर्तते ।

चैतन्यमात्रे न कोऽपि भेदगन्धोऽस्ति । यस्तु जीवचैतन्यमीश्वरचैतन्यात्, ईश्वरचैतन्यं वा जीवचैतन्याद्भिन्नतया मन्यते, स विगर्ह्य एव भवति । तथा च श्रुतिः "ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद ; सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद ।" (बृ. 2-4-6) & (बृ. 4-5-7) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।" (क. 2-1-11) & (बृ. 4-4-19) "उदरमन्तरं कुरुते, अथ तस्य भयं भवति ।" (तै. ब्र. 7) इति ।

एतेन, 'जीवेश्वरयोरैक्याभ्युपगमे कर्मोपासनप्रतिपादकवेदभागोऽनुष्ठात्रभावान्निरर्थकः स्यात्' इतीयं द्वितीया शङ्कापीदानीं समाहिता । जीवेश्वरानुगतचैतन्यभागयोरभेदः आभासभागयोर्भेदश्चास्ति ; तस्मादुभयविषयोरपि वेदभागयोः प्रामाण्यं समञ्जसम् ।

(१८८) **जीवब्रह्मणोर्लक्ष्यार्थाभेदसंभवात् 'अहं ब्रह्म' इति जानीयादिति गुरोरुपदेशः**--हे सोम्य! त्वत्कृतप्रश्नद्वयमध्ये 'एकस्मिन् वृक्षे द्वौ पक्षिणौ स्तः ; तयोरेको भोक्ता, अपरो निरीहः ; अतो जीवब्रह्मैक्यं न घटते ;' इति हि प्रथमः प्रश्नः । तत्रैवं समाधानमुक्तम्--'एकवृक्षस्थपक्षिणोर्मध्ये एकः कूटस्थोऽपरो बुद्धौ प्रतिफलितचिदाभास इत्येवं ग्राह्यं, न तु जीवपरमात्मानाविति ग्राह्यमिति ; एतयोर्घटाकाशस्य आकाशच्छायायाश्चेव भेद इति' चोक्तम् ।

त्वत्कृतद्वितीयप्रश्नरीत्या न जीवः कर्मोपासनयोः कर्ता, नापीश्वरस्तत्फलदाता । किन्तु तौ चिदाभासावेव । जीवगताभासांशः कर्मोपासनादि करोति, ईश्वरगताभासांशः फलं ददाति । जीवेश्वरानुगतचैतन्यांशस्तु घटाकाशमहाकाशवद्भेदशून्यः । इत्थम् जीवब्रह्मणोरैक्यं सिद्ध्यति । अतः '**अहं ब्रह्मास्मि**' इत्येव त्वं विजानीयाः । अत्राहंशब्दार्थः कूटस्थ इति, ब्रह्मशब्दार्थो महाकाशसमतयोक्तलक्ष्यार्थभूतशुद्धचैतन्यमिति चावेहि । अहमिति ब्रह्मेति च शब्दयोर्वाच्यार्थयोरैक्यासंभवेऽपि लक्ष्यार्थयोस्तत्सिद्ध्यत्येव । हे सोम्य! यावत् 'अहं ब्रह्म' इत्यपरोक्षसाक्षात्कारस्तव दृढतरो न जायते, तावद्दुःखदैन्यभयादिकं त्वां न जहाति । स्वस्वरूपाद्भिन्नतया परमात्मनो ज्ञानमेव ते भयहेतुर्भवति । "उदरमन्तरं कुरुते, अथ तस्य भयं भवति" (तै. ब्र. 7) इत्यादिश्रुतेः । तस्मात् 'अहं ब्रह्मास्मि' इत्येव त्वं विजानीयाः ।

(आ. १८९-१९८) 'अहं ब्रह्म' इति ज्ञानं कस्येति विचारः—

(१८९) तत्त्वदृष्टिप्रश्नः—हे स्वामिन् । 'अहं ब्रह्म' इति ज्ञानं कस्य जायते ? कृपयैतन्मे वक्तुमर्हसीति । प्रश्नस्यायमभिप्रायः—'अहं ब्रह्म' इति ज्ञानं किं कूटस्थस्य जायते, उत चिदाभासविशिष्टबुद्धेः ? यदि कूटस्थस्येत्युच्यते तदा विकारी स्यात्कूटस्थः । यदि चिदाभासविशिष्ट-बुद्धेरित्युच्यते तर्हि तस्योत्पद्यमानं 'अहं ब्रह्म' इति ज्ञानं भ्रमरूपं स्यात् । 'कूटस्थो ब्रह्म चेत्युभयमेकमेव, आभासस्तु कल्पितत्वाद्ब्रह्मणो भिन्न' इति प्रागभिहितं भवता । तस्मात् ब्रह्मणोऽन्यस्य चिदाभासस्य ब्रह्मत्वेन ज्ञानं भ्रमरूपमेव स्यात् ; यथा सर्पाद्विलक्षणायां रज्ज्वां सर्पज्ञानं जायमानं भ्रान्तिरूपमेव, तद्वत् । एवं च चिदाभाससहितबुद्धेर्जायमानं 'अहं ब्रह्म' इति ज्ञानं न यथार्थानुभवरूपं भवेत्, किन्तु भ्रमरूपमेव स्यात् ।

'अहं ब्रह्म' इति ज्ञानस्य भ्रमत्वाङ्गीकारे न तेन ज्ञानेन मिथ्याभूतं जगन्निवर्तेत । यथार्थज्ञानादेव हि मिथ्याभ्रमनिवृत्तिर्दृष्टा ; रज्जुतत्त्वज्ञानेन मिथ्यासर्पनिवृत्तिवत् । तस्मादाभासविशिष्टबुद्धेः 'अहं ब्रह्म' इति ज्ञानं जायते इत्येतद्वचनमनुपपन्नमेवेति ।

(आ. १९०-१९६) प्रागुक्तप्रश्नस्योत्तरम्—

(आ. १९०-१९१) आभासस्य सप्तावस्थाः—

(आ. १९०) 'अहं ब्रह्म' इति ज्ञानमाभासस्यैव—हे सोम्य ! शृण्विदानीं मयोच्यमानाश्चिदाभासस्य सप्तावस्थाः । आस्ववस्थासु मध्ये न काप्यवस्था चेतनस्य कूटस्थस्य संभवति । 'अहं ब्रह्म' इति ज्ञानमप्यासु सप्तावस्थासु मध्ये पञ्चम्यामवस्थायामन्तर्गतम् ।

(१९१) तासामवस्थानां नामानि—

"अज्ञानमावृतिः सम्यग्विक्षेपश्च परोक्षधीः ।
अपरोक्षमतिः शोकहतिस्तृप्तिर्निरङ्कुशा ॥" इति

(१) अज्ञानम्, (२) आवरणम्, (३) भ्रान्तिः (विक्षेपः), (४) परोक्षज्ञानम्, (५) अपरोक्षज्ञानम्, (६) शोकनाशः (अनर्थनिवृत्तिः), (७) अतिहर्षः (निरतिशयानन्दप्राप्तिः), इति ।

(१९२) अज्ञानावरणयोः स्वरूपम्—हे सोम्य! 'अहं ब्रह्म न जाने' इति व्यवहारे कारणमज्ञानम् । 'ब्रह्म नास्ति, न भाति' इति व्यव-

हारकारणं **त्वावरणम्** । आवरणेन द्विविधो व्यवहारो भवति, यतोऽज्ञानस्य शक्तिद्वयं वर्तते। तत्रैका शक्तिरसत्त्वापादिका, अन्या अभानापादिका । उभयोरपि शक्त्योरावरणमित्येव साधारणं नाम । 'वस्तु नास्ति' इति प्रतीतिहेतुभूता **शक्तिरसत्त्वापादिकेति,** 'वस्तु न भाति' इति प्रतीतिहेतुभूता शक्ति**रभानापादिके**ति चोच्यते । इत्थं 'ब्रह्म नास्ति' इति व्यवहारकारणमज्ञानस्या**सत्त्वापादिका** शक्तिरेव । 'ब्रह्म न भाति' इति व्यवहारकारणमज्ञानस्या**भानापादिका** शक्तिरेव। अनयोः शक्त्योः साधारणाभिधा **आवरणमिति** ।

(१९३) **भ्रान्तिस्वरूपम्**— कूटस्थे भासमानजन्मादिसंसारो वेदे **भ्रान्ति**रित्युच्यते। अयमेव संसारः **शोकशब्देना**प्युच्यते । "तत्र को मोहः कः शोकः एकत्वमनुपश्यतः।" (ई.7) "तरति शोकमात्मवित्।" (छा. 7-1-3.) "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥" (मु. 2-8.) "मत्तः परतरं नान्यत् किञ्चिदस्ति धनंजय।" (भ. गी. 7-7) "न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।" (भ. गी. 5-14.) "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः।" (भ. गी. 5-15.) "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः।" (भ. गी. 7-19.) इत्यादिश्रुतिस्मृतिभिः संसारस्यात्मैकत्वज्ञानमात्रनिवर्त्यत्वबोधिकाभिर्भ्रममात्रत्वं बोधितम् ।

(१९४) **परोक्षापरोक्षज्ञानस्वरूपम्**—'ब्रह्म नास्ति' इत्यसत्त्वापादकावरणांशं 'अस्ति ब्रह्म' इति वेदान्तवाक्यजन्यपरोक्षज्ञानं नाशयति । 'ब्रह्म सत्यज्ञानानन्तस्वरूपं भवति' इति ज्ञानं **परोक्षज्ञान**मित्युच्यते।

१. देहेन्द्रियप्राणमनोहङ्कारादीनां जन्मादितद्विकाराणां चात्मनि प्रत्यक्चैतन्ये भानं, आत्मनस्तद्धर्माणां सत्यज्ञानानन्तानन्दादीनां चानात्मनि भानं चाध्यास इत्युच्यते । अस्यैव **भ्रान्तिः, विक्षेपः, शोकः** इत्यादिव्यपदेशाः ।

२. देशकालवस्तुभिर्यस्यान्तो(परिच्छेदः)न भवति, किंतु सर्वदेशसर्वकालसर्ववस्तुषु च व्याप्य यद्वर्तते **तदनन्तं, विभु, भूमेति** चोच्यते । अत्र 'अनन्तं ब्रह्म' इत्युक्त्या 'आनन्दरूपं ब्रह्म' इत्यर्थात्सिद्ध्यति। अयमेवार्थः छान्दोग्यसप्तमाध्याये नारदाय सनत्कुमारेणोपदिष्टः । "यो वै भूमा तत्सुखम् , नाल्पे सुखमस्ति, भूमैव सुखं, भूमा त्वेव विजिज्ञासितव्य इति, भूमानं भगवो विजिज्ञासे इति ।" (छा. 7-23-1.) "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यति अन्यच्छृणोत्यन्यद्विजानाति तदल्पम् । यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम् ।" (छा. 7-24-1.) "स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणत स उत्तरतः स एवेदं सर्वम् ।" (छा. 7-25-1.) इति। अत्र योऽनन्तरूपो भवति स भूमा भवति, यो भूमा स आनन्दरूपो भवतीत्युक्तम्। अतश्चानन्तत्वादेव ब्रह्मण आनन्दरूपत्वमपि सिद्धम् ।

इदञ्च परोक्षज्ञानं 'नास्ति ब्रह्म' इति प्रतीतिविरोधि, न त्वन्यस्य कस्यचिदपि विरोधि। 'अहं ब्रह्म' इति दृढतरनिर्विचिकित्सापरोक्षज्ञानन्तु सकलस्याविद्या-तत्कार्यस्य विरोधि। अत **एवेदमपरोक्षज्ञानं** (१) 'अहं ब्रह्म न वेद' **इत्यज्ञानं**, (२) 'ब्रह्म नास्ति न भाति' **चेत्यावरणद्वयं**, (३) 'नाहं ब्रह्म किन्तु पुण्यपापादिकर्ता तत्फलानां सुखदुःखानां भोक्ता च जीवः' इति **भ्रान्ति**, चेत्येतावन्तमविद्यासमूहं नाशयति।

(१९५) **भ्रान्तिनाशस्वरूपम्**—'मयि जननमरणादिभावविकारो नास्ति, मयि सुखदुःखादिकं लेशतोऽपि नास्ति, संसारधर्मगन्धोऽपि मयि नास्ति, किन्त्वहं जन्मादिविकारशून्यकूटस्थ एवास्मि;' इत्येवमात्मनि सर्वानर्थानां निषेध एव **भ्रान्तिनाशस्वरूपमित्यवधेयम्**। अत्र च कूटस्थे जन्मनिषेधात्सर्वानर्था अपि निषिद्धा एव भवन्ति, जन्मानन्तरभावित्वादितरा-नर्थव्रातानाम्। आत्मनि जन्मनिषेधात् षडपि भावविकारा निषिद्धा भवन्ति। अयमेव भ्रान्तिनाशः **शोकनाशशब्देनाप्युच्यते**।

(१९६) **अतिहर्षस्वरूपवर्णनम्**—हे शिष्य! 'अहं अद्वितीयब्रह्मैवा-स्मि' इत्येवं निर्विचिकित्सं स्वात्मस्वरूपसाक्षात्काररूपं ज्ञानं यदा तव जायते तदा तव निरतिशयानन्दानुभवो भवत्येव। अयमेव **महाहर्ष** इत्युच्यते।

प्रदर्शिताः सप्तावस्थाश्चिदाभासस्यैव। 'अहं ब्रह्म' इति ज्ञानं पञ्च-म्यामवस्थायामन्तर्गतं भवति।

---

१. महाहर्षरूपोऽयमानन्दः पञ्चदश्यां तृप्तिदीपे विद्यारण्यमुनिभिः 'निरङ्कुशा तृप्तिः' इति व्यपदिष्टः। "साङ्कुशा विषयैस्तृप्तिरियं तृप्तिर्निरङ्कुशा।" (252) विषयानन्दस्तु सातिशयत्वादुत्तरोत्तरानन्देच्छां जनयतीति हेतोः 'साङ्कुश' इत्युच्यते। आत्मानन्दस्तु स्वस्मादुत्कृष्टानन्दाभावान्निरङ्कुशो भवति।

दशमपुरुषाख्यायिकायां दशमः आत्मानं विहायेतरान् नवैव पुरुषान् गणयन् स्वस्य दशमत्वं न जानातीति यत् तदे**वाज्ञानम्**। 'दशमो नास्ति न भाती'त्येत**दावरणम्**। 'दशमो ममारे'ति कल्पयित्वा रोदनं **शोकः**। अयमेव **भ्रान्तिः**, **विक्षेप** इति च कथ्यते। 'दशमो न मृतः, जीवति सः'; इत्याप्तोक्त्या दशमसत्त्ववेदनं **परोक्षज्ञानम्**। 'त्वमेव दशमोऽसि' इति साक्षादुपदिष्टः सन् पुनरपि गणनसमये स्वात्मानं दशमत्वेन गणयित्वा आत्मानं दशमत्वेन जानातीति यत् **तदेवापरोक्षज्ञानम्**। ईदृशादपरोक्षज्ञा-नाद्रोदननिवृत्तिरेव **भ्रान्तिनाशः**। स्वस्यैव दशमत्वज्ञानात् जायमानसन्तोषः **अतिहर्षः**। आस्ववस्थासु, 'अज्ञानं आवरणं, विक्षेप' इतीमास्तिस्रोऽवस्थाः बन्धकारणानि भवन्ति। अवशिष्टास्त्ववस्थाश्चतस्रोऽपि मोक्षसाधनानि भवन्ति।

(१९७) **'अहं ब्रह्म' इत्याभासस्य जायमानं ज्ञानं मिथ्या स्यादित्याक्षेपस्याशयोद्घाटनम्**—गूढाभिसन्धिः शिष्यः स्वाभिसन्धिमुद्घाटयति। हे स्वामिन् सद्गुरो! कूटस्थो ब्रह्माभिन्नः, आभासो ब्रह्मणो भिन्न इति च प्रागुपदिष्टम्। तत्र ब्रह्मणो विभिन्नस्याभासस्य 'अहं ब्रह्म' इति ब्रह्माभिन्नत्वज्ञानं नैव घटेत। 'ममाधिष्ठानभूतकूटस्थो ब्रह्मे'ति ज्ञानं यद्याभासस्य जायेत, तद्यथार्थज्ञानं भवेत्, न तु 'अहं ब्रह्मे'ति ज्ञानम्। 'अहम्' इति शब्दः स्वकीयं निजं स्वरूपमवगमयति। आभासस्य निजं स्वरूपं तु मिथ्यैव। अत एवायं ब्रह्मणो भिन्नः। तस्माद्ब्रह्मणो विभिन्नस्याभासस्य 'अहं ब्रह्म' इति स्वस्य ब्रह्माभिन्नत्वज्ञानं मिथ्यैव स्यात्। सर्पाद्विलक्षणायां रज्ज्वां सर्प इति ज्ञानं यथा मिथ्या, तद्वत्। **मिथ्या नाम भ्रान्तिः**। वेदान्तप्रमाणजन्यमिदं ब्रह्मविज्ञानं भ्रान्तिरूपमिति वदितुं न युज्यते।

(१९८) **अहंशब्दस्य द्वावर्थौ; तत्र कूटस्थस्य ब्रह्मणा मुख्यसामानाधिकरण्यं, चिदाभासस्य बाधायां सामानाधिकरण्यं च**—हे सोम्य! 'अहं ब्रह्म' इति ज्ञानं बुद्धिसहिताभासस्यैव जायते, न तु कूटस्थस्य। तथापि स आभासः कूटस्थं स्वस्वरूपं चैकीकृत्य स्वात्मतया 'अहं' इति जानाति। तथा च कूटस्थसहितचिदाभासः 'अहम्' इति शब्देन गृह्यत इति, स एव अहंशब्दस्यार्थः। तत्र 'अहम्' इति शब्देन प्रतीयमान-

---

१. अत्रैवं शिष्यः प्रष्टव्यः—"ब्रह्मज्ञानं मिथ्या, मिथ्यात्मकसंसारान्तर्गतचिदाभासाश्रितत्वात्; अतोऽनेन मिथ्याज्ञानेन संसारो, मृगतृष्णिकाम्बुना पिपासावत्, कथं निवर्ततेति पृच्छसि वा; **अथवा** ब्रह्मज्ञानं मिथ्या, मिथ्याभूतजीवब्रह्मैक्यविषयकत्वात्; रज्जुसर्पैक्यज्ञानवत्; अतोऽनेन मिथ्याज्ञानेन कथं संसारनिवृत्तिः स्यादिति पृच्छसि वा" इति। उभयमेवेति चेत्—उच्यते।

तत्र तावत् वेदान्तप्रमाणजन्यमनोवृत्त्यात्मकब्रह्मज्ञानं स्वरूपतो मिथ्येति निश्शङ्कमस्माभिरभ्युपगतमेव, ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वात्। तथापि तादृशमिथ्याभूतज्ञानेन मिथ्यात्मकसंसारनिवृत्तिरप्युपपद्यत एव, 'यक्षानुरूपोऽयं बलिः' इति न्यायात्। यस्मान्मिथ्याभूतः संसारस्तस्मात्तन्निवर्तकेन ज्ञानेनापि मिथ्याभूतेनैव भाव्यम्। **अथवा** 'समानसत्ताकयोरेव पदार्थयोः परस्परं साधकबाधकभावः' इति नियमादपि मिथ्याभूतज्ञानेनैव मिथ्याभूतसंसारनिवृत्तिः संभवति। मृगतृष्णिकाम्बुपिपासयोस्तु न समसत्ताकत्वमस्ति, तयोः प्रातिभासिकत्वव्यावहारिकत्वरूपविषमसत्ताकत्वात्। अत एव मृगतृष्णिकोदकेन प्रातिभासिकेन व्यावहारिकपिपासाशान्तिर्न संभवति। अयमर्थः पञ्चमतरङ्गे स्पष्टीभविष्यति। चिदाभासब्रह्मणोरैक्यरूपज्ञानस्य यो विषयः स मिथ्यैव। ततस्तद्विषयकज्ञानमपि मिथ्या स्यादिति द्वितीयप्रश्नस्योत्तरमधुनोच्यतेऽत्रैव मूले १९८ आवर्ते।

कूटस्थस्य सर्वदा ब्रह्मणा सहाभेदः सिद्ध एव; यथा घटाकाशमहाकाशयोरभेदः सर्वदा सिद्धस्तद्वत्। अनेनैव हेतुना कूटस्थस्य ब्रह्मणा सह मुख्यसामानाधिकरण्यं वेदान्तशास्त्रेष्वभिधीयते। यस्य वस्तुनो येन वस्तुना सह सदाऽभेदसंबन्धोऽस्ति तस्य वस्तुनस्तेन वस्तुना सह **मुख्यसामानाधिकरण्य**मुच्यते। **यथा** घटाकाशस्य महाकाशेन सह सदाऽभेदस्य सत्त्वात् घटाकाशो महाकाश एव; तस्मात् घटाकाशस्य महाकाशेन सह **मुख्यसामानाधिकरण्यं** भवति। इत्थं कूटस्थब्रह्मणोः सदाऽभेदस्य सत्त्वात् कूटस्थस्य ब्रह्मणा सह **मुख्यसामानाधिकरण्यं** भवति। तस्मादहमितिशब्दबोध्यस्य कूटस्थस्य ब्रह्मणा सह सदाऽभेद एवास्ते।

'अहम्' इति शब्देन प्रतिभासमानचिदाभासस्य तु ब्रह्मणा सह स्वस्वरूपबाधपूर्वकमेवाभेदः सिद्ध्यति। तस्मात् वेदान्तशास्त्रेष्वाभासस्य ब्रह्मणा सह **बाधायां सामानाधिकरण्यमेवोच्यते**। यस्य हि वस्तुनः स्वरूपनाशपूर्वकं येन वस्तुना सहाभेदो जायते, तस्य वस्तुनस्तेन वस्तुना सह **बाधायां सामानाधिकरण्यमुच्यते**। यथा मुखप्रतिबिम्बस्य स्वरूपबाधपूर्वकं मुखरूपबिम्बेनाभेदस्य दृष्टत्वात्प्रतिबिम्बो मुखमेव नान्यत्, अतः प्रतिबिंबस्य बिंबेण सह **बाधायामेव सामानाधिकरण्यं** भवति; **यथा वा** स्थाणौ पुरुषभ्रमानन्तरं विचारात् स्थाणुत्वेन ज्ञाने सति 'पुरुषः स्थाणुरेव' इति पुरुषस्य स्थाणुना सह **बाधायामेव सामानाधिकरण्यं** जायते; तथाऽऽभासस्यापि बाधानन्तरमेव ब्रह्मणा सहाभेदः संभवति।

---

१. समानविभक्तिकत्वे सति एकार्थबोधकत्वं ययोः पदयोरस्ति ते पदे परस्परं समानाधिकरणे इति, तयोः पदयोः परस्परसंबन्धः सामानाधिकरण्यसंबन्ध इति चोच्यते। इदं च सामानाधिकरण्यं जीवब्रह्मैक्यबोधकसमानविभक्तिमत्पदघटितचतुर्वेदान्तर्गतचतुर्विधमहावाक्येषूपलभ्यते। तथाऽन्यत्रापि लौकिकवैदिकवाक्येषु बोध्यम्।

इदं च सामानाधिकरण्यं द्विधोच्यते—मुख्यसामानाधिकरण्यं, बाधायां सामानाधिकरण्यमिति च। तत्र समानसत्ताकत्वेन समानस्वरूपकत्वेन च वास्तवभेदशून्ययोर्द्वयोः पदार्थयोर्बोधकवाक्यगतपदद्वयस्य **मुख्यसामानाधिकरण्य**मुच्यते। तच्च घटाकाशमहाकाशपदयोः, कूटस्थब्रह्मशब्दयोश्चास्ति।

भिन्नसत्ताकयोरुभयोः पदार्थयोः समानविभक्तिकत्वबलेनैक्यप्रतिपादकवाक्यस्थपदद्वयस्य **बाधायां सामानाधिकरण्यं** बोध्यम्। तच्च स्थाणुपुरुषपदयोः जगद्ब्रह्मपदयोः, बिम्बप्रतिबिम्बपदयोश्च वर्तते।

तस्मात् 'अहम्' इति शब्दबोध्याभासो ब्रह्मैव, न ततोऽन्यः। आभासस्य ब्रह्मणा सहेदृशो **बाधायां सामानाधिकरण्यं संभवति**। हे सोम्य! इत्थमेव 'अहम्' इति शब्दगम्यस्य कूटस्थस्य ब्रह्मणा सह **मुख्याभेदः**, आभासस्य तु **बाधायामभेदः** इति जानीहि।

**(आ. १९९-२१८) कूटस्थाभासयोः 'अहंवृत्तौ' भानं किं क्रमेणोत क्रमं विनेति विचारः—**

(१९९) **प्रश्नः**—हे स्वामिन्! अहंवृत्तौ साक्षिचिदाभासयोः प्रतिभानं भवतीति भवतोक्तम्। तत्र किं तयोर्युगपत्प्रतीतिर्जायते, उत कालभेदेनेति मे संशयः। तन्मे भवान् विस्पष्टं बोधयतु।

**(आ. २००-२१८) पूर्वप्रश्नस्योत्तरम्—**

(२००) **अहंवृत्तौ साक्षिचिदाभासयोर्युगपद्भानम्**—हे सोम्य! विस्पष्टं सारतरमुत्तरमुच्यते, शृणु सावधानमनाः। एतच्छ्रवणजन्यज्ञानसूर्यप्रकाशोदयमात्रेण गाढाज्ञानरूपतमो निश्शेषं विनङ्क्ष्यति। हे शिष्य! साक्ष्याभासावुभावप्यहंवृत्तौ युगपदेव प्रतीयेते। वेदान्तप्रकरणेषु सर्वत्र 'आभासः' इति शब्देनान्तःकरणसहितचिदाभास एव ग्राह्यः। अन्तःकरणसहितचिदाभासः साक्षिणो **विषयतया** भाति। साक्षी तु **स्वयंप्रकाशतया** भाति। चिदाभाससहितान्तःकरणवृत्त्या न साक्षी विषयीक्रियते।

**घटादिबाह्यपदार्थज्ञानोत्पत्तिक्रमस्त्वेवम्**—इन्द्रियाणां घटादिविषयैः सह संयोगदशायामिन्द्रियद्वारा बहिर्निर्गतान्तःकरणं घटादिविषयसमानाकारतां प्राप्नोति। यथाऽयसा मृदा वा निर्मितमूषायां निषिक्तद्रुतताम्रादिर्मूषासमानाकारतां भजते; एवमन्तःकरणवृत्तिरपि घटादिसमानाकारतां भजते। इयञ्च वृत्तिश्चैतन्याभाससहितैव जायते, नाभासं विनोदेति। वृत्तिरन्तःकरणस्य परिणामः। अन्तःकरणपरिणामस्य **वृत्तिरिति** संज्ञा। अन्तःकरणं हि सत्त्वगुणकार्यत्वात् स्वच्छम्। अतस्तत्र चैतन्याभासो जायते। तथैव वृत्तेरपि स्वच्छान्तःकरणकार्यत्वात् तत्रापि चैतन्याभासो जायते। उत्पद्यमाना सा वृत्तिः साभासान्तःकरणादेवोत्पद्यते। अतोपि कारणात् वृत्तिराभासविशिष्टैवोदेति।

(२०१) **चैतन्यमेवाज्ञानस्याश्रयो विषयश्च**—घटादिर्विषयस्तमोगुणकार्यत्वात्स्वरूपतो जडः। तस्मादज्ञानं तत्कार्यमावरणं च जडे घटादि-

विषयेऽस्तीत्याहुः केचन। तदिदमापातरमणीयम्। विचारदृष्ट्या तु चैतन्ये एवाज्ञानतत्प्रयुक्तावरणे स्तः, न तु घटादौ विषये। अज्ञानं चैतन्यमेवाश्रित्य तदेव विषयीकरोतीति **वेदान्तसिद्धान्तः**।

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला।

पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः॥"

इति वृद्धोक्तेः। (सं. शा. 1-319.)

प्राक् सप्तावस्थानिरूपणप्रसङ्गे अज्ञानाश्रयोऽन्तःकरणविशिष्टचिदाभास इत्युक्तम्। स चाज्ञानस्याभिमानी आश्रयः। 'अहमज्ञः' इत्यभिमानोऽन्तःकरणसहिताभासस्य जायते इति यावत्। तस्मादाभासोऽज्ञानाश्रय इत्युच्यते। मुख्याश्रयस्तु चैतन्यमेव, नाभाससहितान्तःकरणं; आभाससहितान्तःकरणस्याज्ञानकार्यत्वात्। यद्यस्य कार्यं न तत्तस्याश्रयो भवेत्। तस्मादज्ञानस्य केवलचैतन्यमेवाधिष्ठानरूपाश्रयः।

**विषयश्च तस्य चैतन्यमेव**। स्वरूपतिरस्कार एवाज्ञानविषयत्वमित्युच्यते। एतदज्ञानकृत्यमावरणं जडवस्तुनि न युज्यते। जडवस्तुनः स्वरूपत एवावृतत्वात्तत्राज्ञानकृत्यावरणस्य प्रयोजनाभावात्। तथाचाज्ञानं स्वाश्रयचैतन्यमेव विषयीकरोति। यथा गृहान्तस्स्थं तमः स्वाश्रयभूतं गृहमेवावृणोति तद्वत्। तस्माद्घटादौ जडेऽज्ञानावरणे न संभवतः।

(२०२) **बाह्यार्थप्रकाशे वृत्तिचिदाभासयोरुपयोगः**—अत्रेदं बोध्यम्—चैतन्याद्भिन्नं सदसद्विलक्षणमज्ञानं चैतन्यमाश्रित्य वर्तते; तेन च चैतन्यमावृतं भवति। तदेव घटादिस्वरूपाद्भिन्नमज्ञानं घटाद्यनाश्रितमपि स्वसदृशं प्रकाशशून्यं जडस्वभावं घटादिरूपं कार्यं जनयति। तस्माद्घटादिवस्तु अन्धवत्सदा आवृतमेव भवति। अयं च घटादीनामावृतत्वस्वभावोऽज्ञानहेतुकः। तथाहि, तमोगुणप्रधानादज्ञानात् पञ्चभूतोत्पत्तिद्वारा घटादयो जायन्ते। तमोगुणश्चावरणस्वभावकः। तस्मात् घटादयः प्रकाशशून्याः अन्धीभूता एव वर्तन्ते। एवमन्धतारूपमावरणं घटादावज्ञानकार्यत्वात् स्वभावतस्सिद्धम्। घटाद्यधिष्ठानचैतन्यमाश्रित्य वर्तमानमज्ञानं चैतन्यमावृत्य, स्वभावत एवावृतं घटादिकमप्यावृणोति।

---

१. यथा धनादिकोशस्य मुख्याश्रयः पेटिका, 'अहं धनी' इत्यादौ धनस्याभिमानिरूपाश्रयः पुरुषः; तथाऽज्ञानस्य मुख्याश्रयश्चैतन्यम्, अभिमानिरूपाश्रयस्तु चिदाभासविशिष्टान्तःकरणम्।

स्वभावत एव संवृतपदार्थस्य पुनः संवरणे प्रयोजनाभावेऽपि, आवारकः पदार्थः स्वप्रयोजनापेक्षां विनैवानावृतपदार्थवदेवावृतमपि पदार्थं पुनरावृणोत्येव । एतच्च सर्वलोकप्रसिद्धम् । तादृशाज्ञानावृतघटादिसंयुक्तान्तःकरणपरिणामरूपायां चिदाभाससहितघटाद्याकारवृत्तौ यो **वृत्तिभागः** स घटादीनामावरणं निवर्तयति । **चिदाभासभागस्तु** घटादिविषयं प्रकाशयति । इत्थं बाह्यपदार्थप्रकाशविषये वृत्तितत्स्थचिदाभासयोरुभयोरपि विनियोगो भवति ।

(२०३) **अत्र दृष्टान्तः**—तमसि मृद्भाण्डेन केनचित् मृण्मयं लोहमयं वा किञ्चिद्वस्तु संवृतमास्ते । तत्र दण्डादिना मृद्भाण्डे आवरणे भग्नेऽपि विना तु दीपादिप्रकाशं तदन्तःस्थं वस्तु न प्रकाशते, अपि तु दीपादिनैव प्रकाशते । तथाऽज्ञानावृतघटादेर्विषयस्यावरणे वृत्त्या विनाशितेऽपि न घटादिरूपविषयः प्रकाशेत । यतो घटादिर्विषयो जडः, वृत्तिरपि जडा ; तस्याः विषयावरणनिवृत्तिमात्रं प्रयोजनं, न त्वनया विषयप्रकाशो जायेत । तस्मात् घटादिविषयावभासको वृत्तिस्थचिदाभास एव ।

चक्षुरिन्द्रियगोचरवस्तुप्रत्यक्षज्ञानं पूर्वोक्तक्रमेण जायते । श्रोत्रादीन्द्रियगोचरपदार्थप्रत्यक्षज्ञानमपीत्थमेव जायत इति विज्ञेयम् । वृत्तिविषययो-

---

१. १. **श्रोत्रेन्द्रियेण शब्दसाक्षात्कारसमये** श्रोत्रेन्द्रियद्वारा बहिर्निर्गतान्तःकरणस्य साभासा वृत्तिर्दूरस्थं वाऽन्तिकस्थं वा शब्दरूपं विषयं प्राप्य शब्दसमानाकारतां भजते । तदाऽन्तःकरणवृत्त्या **शब्दनिष्ठावरणं निवर्त्यते** । तन्निष्ठाभासेन **शब्दः प्रकाश्यते** ।

२. **त्वगिन्द्रियेण स्पर्शगुणस्य तदाश्रयघटादिद्रव्यस्य च साक्षात्कारसमये** अन्तःकरणवृत्तिः शरीरात्मकगोलकं विहाय न बहिर्गच्छति । किन्तु शरीराश्रयया अन्याश्रयया वा क्रियया शरीरात्मकगोलकेन सह संबद्धं घटादिविषयं तदाश्रितमृदुकठिनादिस्पर्शांश्च शरीररूपगोलके एव स्थित्वा साभासा वृत्तिर्विषयीकरोति । तदा वृत्त्या घटाद्याश्रयस्य तदाश्रितस्पर्शादिगुणस्य **चावरणभङ्गो** जायते । तन्निष्ठचिदाभासेन घटादिविषयतद्गतस्पर्शौ **प्रकाश्येते** ।

३. **रसनेन्द्रियेण मधुराम्लादिरससाक्षात्कारसमये** अन्तःकरणवृत्तिर्जिह्वारूपगोलकं विहाय न बहिर्गच्छति । किन्तु जिह्वया रसात्मकविषयसंयोगसमये जिह्वाप्रवर्तिरसनेन्द्रियनिष्ठसाभासान्तःकरणवृत्तिः रसं विषयीकरोति । तदा वृत्त्या **रसस्यावरणभङ्गो** भवति । तत्स्थचिदाभासेन मधुरादिरसविशेषः **प्रकाश्यते** ।

४. **घ्राणेन्द्रियेण गन्धसाक्षात्कारसमये** नासारूपगोलकेन सह गन्धाश्रयपुष्पादेः तत्सूक्ष्मावयवस्य वा संयोगे नासाप्रवर्तिघ्राणेन्द्रियनिष्ठसाभासान्तःकारणवृत्तिः पुष्पादिद्रव्याश्रितगन्धमात्रं विषयीकरोति । तदा वृत्त्या **गन्धस्यावरणं भज्यते** । चिदाभासेन **गन्धः प्रकाश्यते** ।

इत्थं श्रोत्रादीन्द्रियविषयाणां प्रत्यक्षक्रमो विज्ञेयः ।

रेकदेशस्थत्वात् घटज्ञानं **प्रत्यक्षमित्युच्यते** ।

अन्तःकरणवृत्तिर्यदा घटादिविषयैः सह संबन्धालाभात् बहिर्निर्गमनाभावेनान्तरेव घटाकारा भवति, तदा जायमानं घटादिज्ञानं **परोक्षज्ञान**मित्युच्यते । 'अयं घटः' **इत्यपरोक्षज्ञानस्याकारः** । 'घटोऽस्ति' इति 'स घटः' इति वा **परोक्षज्ञानस्याकारः** । स्मृतिरपि परोक्षज्ञानमेव । तथापि स्मृतिः अनुभवाहितसंस्कारजन्या, अनुमित्यादिपरोक्षज्ञानं तु प्रमाणजन्यमितीयान् भेदः ।

(आ. २०४-२०९) **प्रमाणप्रसङ्गात्प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्धिप्रमाणानि निरूप्यन्ते**—

(२०४) **प्रत्यक्षप्रमाणम्**—चार्वाकमतस्थाः[1] **प्रत्यक्षमेकमेव प्रमाण**मित्यङ्गीकुर्वन्ति ।

(२०५) **अनुमानप्रमाणम्**—कणाद[2]सुगत[3]मतानुसारिणो द्वितीय**मनुमानमपि प्रमाणत्वेनाङ्गीकुर्वन्ति** । प्रत्यक्षस्यैवैकस्य प्रमाणत्वाङ्गीकारे तृप्तिमिच्छतो भोजने प्रवृत्तिर्न स्यात्; भाविभोजने तृप्तिनिरूपितहेतुत्वस्य प्रत्यक्षप्रमाणजन्यप्रत्यक्षज्ञानाभावात् । अतः 'आगामिभोजनं तृप्तिकारणं, भोजनत्वात्, पूर्वानुभूतभोजनवत्'; इत्यनुमानेन पूर्वभोजनेऽनुभूतं यत्तृप्तिहेतुत्वं तद्भाविभोजनेऽपि ज्ञात्वा तृप्तिकामो भोजने प्रवर्तत इति वाच्यम् । तस्मादनुमानमपि प्रमाणम् । इत्थं कणादसुगतमतानुसारिणः प्रत्यक्षमनुमानं चेति द्वयमपि प्रमाणत्वेनाङ्गीकुर्वन्ति ।

(२०६) **शब्दप्रमाणम्**—साङ्ख्यशास्त्रप्रणेतृकपिलमतानुसारिणस्तु तृतीयं **शब्दमपि प्रमाणत्वेनाङ्गीकुर्वन्ति** । तथाहि, देशान्तरे कस्यचित् पिता मृतः । आप्तः कश्चित्तं वृत्तान्तं तत्पुत्रायाचख्यौ । आप्तवाक्यात् पुत्रः पितृमरणं निश्चिनोति । तच्च न स्यात् प्रत्यक्षानुमानात्मकप्रमाणद्वयमात्राङ्गीकारे; देशान्तरोत्पन्नपितृमरणज्ञानस्य प्रत्यक्षानुमानाभ्यामसंभवात् । तस्मात् कपिलमतानुसारिणः प्रत्यक्षानुमानशब्दात्मकं त्रयमपि प्रमाणत्वेनाङ्गीकुर्वन्ति ।

(२०७) **उपमानप्रमाणम्** — न्यायशास्त्रप्रणेतृगौतममतानुसारिणश्चतुर्थमुपमानमपि **प्रमाणत्वेनाभ्युपगच्छन्ति** । तथाहि, कश्चित् गवयमृग-

---

१. भूतपञ्चकमङ्गीकृत्य तत्कार्यभूतो देह एवात्मेति वदन्ति **लोकायतिकाः** । आकाशं विना भूतचतुष्टयमात्रमङ्गीकृत्य तत्कार्यभूतो देह एवात्मेति वदन्ति **चार्वाकाः** ।

२. अयमेव **वैशेषिकशास्त्रकर्ता** । अयं कणभुगिति चोच्यते ।

३. सुगतः = बुद्धः ।

मजानानः कुतश्चिदारण्यकपुरुषात् 'गवयो गोसदृशः' इति श्रुत्वा कदाचिद्रण्यं गत्वा यदा गवयमृगं पश्यति, तदा आरण्यकपुरुषोक्तं 'गोसदृशो गवय' इति वाक्यं तदर्थं च स्मरति। तादृशस्मरणानन्तरं 'अयं गवयः' इति ज्ञानं तस्य जायते। तच्च ज्ञानं न स्यात् प्रत्यक्षादिप्रमाणत्रयमात्रमभ्युपगम्योपमानप्रमाणस्यानभ्युपगमे। तस्मादेतादृशविलक्षणज्ञानहेतुभूत**मुपमानप्रमाण**मङ्गीकुर्वन्ति गौतममतानुसारिणः।

(२०८) **अर्थापत्तिप्रमाणम्**—पूर्वमीमांसकैकदेशी भट्टशिष्यः प्रभाकरः पञ्चमी**मर्थापत्तिमपि प्रमाणत्वेना**भ्युपगच्छति। दिवा अभुञ्जानस्य पुरुषस्य पीनत्वं दृष्ट्वा 'अयं रात्रौ भुङ्क्ते' इति निश्चयो जायते; रात्रिभोजनमन्तरा दिवा अभुञ्जानस्य पीनत्वानुपपत्तेः। भोजनं पीनत्वहेतुरित्यतः पीनत्वं रात्रिभोजनस्य कार्यम्। रात्रिभोजनं पीनत्वस्य कारणम्। तत्र पीनत्वमुपपाद्यम्, रात्रिभोजनमुपपादकम्। तथा चोपपादकरात्रिभोजनस्य ज्ञानं प्रति कारणभूतपीनत्वरूपोपपाद्यज्ञानं **अर्थापत्तिप्रमाण**मित्युच्यते।

(२०९) **अनुपलब्धिप्रमाणम्**—पूर्वमीमांसको भट्टः षष्ठी**मनुपलब्धिमपि प्रमाणत्वेनाङ्गीकरोति**। वेदान्तिभिरपि षट् प्रमाणान्येवाङ्गीक्रियन्ते। 'व्यवहारे भट्टनयः' इति न्यायात्। गृहाद्यधिकरणेषु घटादेरभावज्ञानमनुपलब्धेः प्रमाणत्वाभ्युपगमे प्रयोजनम्। यस्य पदार्थस्य प्रतीतिर्न भवति तत्पदार्थविषयकाभावज्ञानं जायते।' अस्या अप्रतीतेरनुपलब्धिरिति संज्ञा। घटादेरप्रतीत्या घटादेरभावनिश्चयो जायते। इत्थं पदार्थप्रतियोगिकाभावनिश्चयं प्रति कारणीभूतपदार्थप्रतीतिरेवा**नुपलब्धिप्रमाण**मित्युच्यते।

(२१०) **प्रमाणप्रमयोर्लक्षणम्**—प्रमारूपज्ञानकरणं **प्रमाणम्**। स्मृतिभिन्नत्वे सत्यबाधितार्थविषयकं ज्ञानं **प्रमा**। स्मृतिरूपं ज्ञानं न प्रमा। प्रमाज्ञानं हि प्रमातारमाश्रयति, स्मृतिस्तु न प्रमातारमाश्रिता; किन्तु साक्षिणमाश्रितेत्यभ्युपगम्यते। तथैव भ्रान्तिज्ञानसंशयज्ञाने च साक्ष्याश्रिते इत्यङ्गीकृतम्। अत एव स्मृतिर्भ्रान्तिः संशयश्चेत्येतत्त्रयमपि चिदाभाससहिताविद्याया वृत्तिरूपम्, नान्तःकरणस्य वृत्तिरूपम्। ततश्च तत्त्रयमपि न प्रमात्राश्रयं, किन्तु साक्ष्याश्रयम्। यदेवान्तःकरणस्य वृत्तिरूपं ज्ञानं, तदेव प्रमातारमाश्रयति। अन्तःकरणवृत्तिरूपं ज्ञानमेव **प्रमे**त्युच्यते। अन्तःकरणवृत्तिरूपत्वाभावादेव न स्मृतिः प्रमातारमाश्रयति; प्रमापि न सा भवति। अत एव

स्मृतिभिन्नत्वं प्रमालक्षणे देयम्। स्मृतेरबाधितार्थविषयकज्ञानत्वेऽपि न स्मृतिभिन्नत्वम्। तस्मादबाधितार्थविषयकं स्मृतिभिन्नमेव ज्ञानं प्रमेत्युच्यते। नास्मिन् लक्षणे दोषगन्धोप्यस्ति।

(२११) **स्मृतिरपि प्रमेति वादिनां पक्षः**—अन्ये तु स्मृतिरूपज्ञानमपि प्रमेत्यभ्युपगच्छन्ति। तन्मतरीत्या प्रमालक्षणे न 'स्मृतिभिन्नत्वं' देयम्। तन्मतेनाबाधितार्थविषयकज्ञानमेव **प्रमेति** वर्ण्यते। **भ्रान्तिज्ञानं** तु नाबाधितार्थविषयकं, अपि तु बाधितार्थविषयकमेव। तस्मात्प्रमालक्षणस्य न भ्रान्तिज्ञानेऽतिव्याप्तिः। स्मृतिज्ञानमपि प्रमेत्यङ्गीकर्तृमते स्मृतिज्ञानमन्तःकरणस्य वृत्तिरूपं न त्वविद्याया वृत्तिरूपम्। नापि साक्ष्याश्रयं, अन्तःकरणवृत्तेः प्रमात्राश्रयत्वेन साक्ष्याश्रयत्वाभावात्।

इत्थं केषांचिन्मते स्मृतिज्ञानमन्तःकरणवृत्तिरूपत्वात् **प्रमा** भवति। केषाञ्चिन्मते तु **अविद्यावृत्तिरूपत्वान्न प्रमा**। भ्रान्तिज्ञानं संशयज्ञानं च सर्वमतस्थैरप्यविद्यावृत्तित्वेन साक्ष्याश्रितत्वेन चाभ्युपगम्यते। न विवादोऽस्त्यत्र। विचार्यमाणे तु स्मृतिज्ञानमप्यविद्यावृत्तिरूपं साक्ष्याश्रयं च; न प्रमा[1]। वेदान्तसंप्रदायज्ञा अपि प्रमाज्ञानं षोढा विभजन्ति। स्मृतेस्तत्रानन्तर्भूतत्वात् न स्मृतिज्ञानं प्रमा। मधुसूदनस्वामिनोऽपि स्मृतिज्ञानं साक्ष्याश्रयमित्येवावोचन्[2]।

(२१२) **षड्विधाः प्रमाः**—इदानीं षड्विधप्रमाः निर्दिश्यन्ते—(१) प्रत्यक्षप्रमा, (२) अनुमितिप्रमा, (३) उपमितिप्रमा, (४) शाब्दी प्रमा, (५) अर्थापत्तिप्रमा, (६) अभावप्रमा चेति। पूर्वोक्तानि प्रत्यक्षादिप्रमाणानि क्रमेणैतासां षण्णां प्रमाणां करणानि भवन्ति।

---

१. यथार्थानुभवः प्रमेति स्मृतिव्यावृत्तं प्रमालक्षणम्। यथार्थज्ञानं प्रमेति प्रमालक्षणं तु स्मृतिसाधारणमिति विवेकः।

२. भ्रमरूपानुभवजसंस्कारजनित**स्मृतिः** बाधितार्थविषयकत्वाद**यथार्थज्ञानम्**। अत एव सा अविद्यावृत्तिः, नान्तःकरणवृत्तिरूपा; किञ्च साक्षिणमाश्रिता, न प्रमातारम्। यथार्थानुभवजसंस्कारजनित**स्मृति**रबाधितार्थविषयकत्वाद्य**थार्थज्ञानं** भवति। अत एव तादृशस्मृतिज्ञानमन्तःकरणवृत्तिरूपम्, नाविद्यावृत्तिरूपम्; प्रमातारमाश्रितं, न साक्षिणम्। तथापि प्राचीना न स्मृतिज्ञानं प्रमेति व्यवहरन्ति। तस्मात् द्विविधस्मृतिरप्यप्रमैव। तयोरयथार्थस्मृतिः **अयथार्थरूपा अप्रमा** यथार्थस्मृतिः **यथार्थरूपा अप्रमा** इतीयानेव भेदः।

**करणलक्षणम्**—तत्र प्रत्यक्षप्रमायाः करणं **प्रत्यक्षप्रमाणमित्युच्यते**। असाधारणकारणमेव **करणम्**[1]। यत् सकलकार्याणां तुल्यतया कारणं भवति, तत् **साधारणकारणम्**। कार्यत्वावच्छिन्ननिष्ठकार्यतानिरूपितकारणताशालि यत् तत् साधारणकारणम्। धर्माधर्मादिकं सकलकार्याणां कारणत्वात् साधारणकारणम्। सकलकार्याणां कारणभावमनासाद्य कतिपयकार्याणामेव विशिष्य कारणभावं यद्व्रजते **तदसाधारणकारणम्**। कार्यत्वातिरिक्तधर्मावच्छिन्ननिष्ठकार्यतानिरूपितकारणताशालि यत् तदसाधारणकारणम्। दण्डो हि न सकलकार्याणां कारणं भवति, किन्तु घटादिरूपकार्यविशेषाणामेव कारणं भवति। तस्माद्दण्डो घटादीनामसाधारणकारणमिति **करणमिति** चोच्यते। **एवमेव** प्रत्यक्षप्रमायाः ईश्वरस्तदिच्छादयश्च[2] साधारणकारणानि। यस्मादीश्वरादयः सकलकार्याणि प्रति कारणानि भवन्ति, यस्माच्च न किञ्चिदपि कार्यमीश्वरादिकं विनोत्पद्यते तस्मादीश्वरादयः **साधारणकारणानि**। चक्षुरादीनीन्द्रियाणि प्रत्यक्षप्रमां प्रत्यसाधारणकारणानि। अतस्तानि प्रत्यक्षप्रमां प्रति करणानि च भवन्ति। एवञ्च चक्षुरादीनीन्द्रियाणि **प्रत्यक्षप्रमाणानीत्युच्यन्ते**।

(२१३) **प्रमातृप्रमाणप्रमाप्रमेयचैतन्यानि**—ननु वेदान्तसिद्धान्ते चक्षरादीन्द्रियाणां प्रत्यक्षप्रमाकारणत्वं न युज्यते। तथाहि, वेदान्तसिद्धान्ते चत्वारश्चैतन्यभेदाः सन्ति (१) प्रमातृचैतन्यं, (२) प्रमाणचैतन्यं, (३) प्रमिति-

---

१. केवलासाधारणकारणं करणमित्युक्ते यत्रासाधारणकारणद्वयं प्राप्तं तत्रेदमेव करणमिति विनिगमकाभावादेकस्य द्वाररूपकारणत्वमन्यस्य व्यापारवदसाधारणकारणत्वरूप**करणत्वं** चाभ्युपेयम्। यत्तु द्वाररूपकारणं पुरस्कृत्य कार्यं जनयति, तदेवासाधारणकारणरूपं **करणं** भवति। तद्यथा कपालद्वयं, संयोगद्वारा घटस्योत्पादकत्वात्, घटं प्रति व्यापारवदसाधारणकारणरूपं **करणम्**। यत्तु व्यापारशून्यं सत् द्वारकारणमनपेक्ष्य साक्षादेव कार्यं जनयति, तत् **केवलकारणम्**, न तु करणम्। यथा कपालद्वयसंयोगः साक्षादेव घटोत्पादकत्वात् केवलकारणं, न तु करणम्।

व्यापारवदसाधरणकारणं करणमित्यस्य लक्षणस्य प्रत्यक्षानुमानशब्दाख्यप्रमाणेषु संभवेऽपि उपमानार्थापत्त्यनुपलब्ध्याख्यप्रमाणेष्वसंभवादव्याप्तिः। उपमित्यादीनां जनने विनैव व्यापारमुपमानादीनां कारणत्वसंभवात्पूर्वोक्तकरणलक्षणस्य तत्राव्याप्तिः स्यात्। अतो व्यापारभिन्नमसाधारणकारणं करणमित्यस्य लक्षणस्य निर्दुष्टत्वात्तदेव सर्वप्रमाणानुगतकरणलक्षणम्।

२. आदिशब्देन ईश्वरस्य ज्ञानं, ईश्वरस्य प्रयत्नः, कालः, दिक्, अदृष्टं, प्रागभावः, प्रतिबन्धकाभावश्चेति सप्त गृह्यन्ते। अमी ईश्वरादयो नव सर्वकार्याणां **साधारणकारणानि**।

चैतन्यमथवा प्रमाचैतन्यम्, (४) प्रमेयचैतन्यमथवा विषयचैतन्यमिति। वेदान्तमते प्रमा नाम चैतन्यमेव। तच्च चैतन्यं नित्यम्, नेन्द्रियजन्यम्; तस्मान्नेन्द्रियं तत्कारणमिति चेत्। तन्न चैतन्यस्य प्रमात्वापादिका वृत्तिरपि प्रमेत्युच्यते। तस्या वृत्तेरिन्द्रियं करणम्।

(१) **प्रमातृचैतन्यम्**—देहमध्यवृत्त्यन्तःकरणेनावच्छिन्नं चैतन्यं **प्रमातृचैतन्य**मित्युच्यते।

(२) **प्रमाणचैतन्यम्**—इदमेवान्तःकरणं चक्षुरादीन्द्रियद्वारा बहिर्निर्गत्य घटादिविषयदेशपर्यन्तं दीर्घीभावरूपपरिणामं प्राप्नोति। ततो घटादिविषयैः संसृज्य घटादितत्तद्विषयाकारेण च परिणमते। यथा तडाकोदकं प्रणालीद्वारा बहिर्निर्गत्य कुल्यात्मना परिणामं प्राप्य केदारान् प्रविश्य तत्तच्चतुष्कोणादिरूपकेदाराकारं भवति, तथैवान्तःकरणमपि चक्षुरादीन्द्रियच्छिद्रद्वारा बहिर्निर्गत्य विषयरूपकेदारं प्राप्य विषयाकारं भवति। तत्र देहदेशमारभ्य घटादिविषयदेशपर्यन्तं योऽन्तःकरणस्य दीर्घीभावरूपः परिणामः, स एव **वृत्तिज्ञान**मित्युच्यते। वृत्तिज्ञानरूपो योऽन्तःकरणपरिणामः स **प्रमाण**मिति कथ्यते। तेनावच्छिन्नं चैतन्यं **प्रमाणचैतन्य**मित्यभिधीयते।

(३) **प्रमितिचैतन्यमथवा प्रमाचैतन्यम्**—केदारं प्रविश्य यथा जलं केदारसमाकारं भवति, तथा घटादिविषयं प्राप्यान्तःकरणवृत्तिरपि घटादिविषयसमानाकारतां भजते। तादृशविषयसमानाकारतयाऽवच्छिन्नचैतन्यं **प्रमाचैतन्य**मित्युच्यते।

(४) **प्रमेयचैतन्यमथवा विषयचैतन्यम्**—ज्ञानविषयीभूतघटाद्यवच्छिन्नचैतन्यं **विषयचैतन्यं, प्रमेयचैतन्य**मिति चोच्यते। एताः सर्वाः वेदार्थसंप्रदायविदाचार्यकृतपरिभाषाः।

(आ. २१४-२१७) प्रमातृलक्षणम्—

(२१४) **अवच्छेदवादरीत्या प्रमातृसाक्षिणोः स्वरूपं; विशेषणलक्षणमुपाधिलक्षणं च**— अवच्छेदवादरीत्या अन्तःकरणविशिष्टचैतन्यं **प्रमाता**। स एव **कर्ता भोक्ता** च। अन्तःकरणोपहितचैतन्यं **साक्षी**। एकमेवान्तःकरणं प्रमातुर्विशेषणत्वेन साक्षिण उपाधित्वेन च भवति।

**विशेषणलक्षणम्**—वस्तुस्वरूपे यस्य प्रवेशो[1]ऽस्ति, तादृशं व्यावर्तकं

---

१. प्रवेशः=कार्येण सह संबन्धः।

वस्तु **विशेषण**मित्युच्यते। कार्यान्वयित्वे सति व्यावर्तकत्वे सति विद्यमानत्वं विशेषणस्य लक्षणम्। पदार्थान्तरेभ्यो विविच्य वस्तुस्वरूपावेदकं यत् तत् **व्यावर्तक**मित्युच्यते। इतरेभ्यो भिन्नतया यद्बुद्ध्यते **तद्व्यावर्त्य**मित्युच्यते। 'नीलो घट' इत्यत्र घटस्य नीलवर्णं विशेषणम्। यतो नीलवर्णं नीलघटस्वरूपे प्रविष्टं सत् रक्तपीतश्वेतादिवर्णविशिष्टघटेभ्यो व्यावर्त्य पृथगिमं नीलघटं बोधयति, तस्मान्नीलवर्णं व्यावर्तकं विशेषणञ्च। घटस्तु परिच्छेद्यः, यतः पीतादिवर्णविशिष्टघटादिभ्यो विविच्यायं नीलघटो बुद्ध्यते। यस्तु विविच्य बुद्ध्यते पदार्थः, स हि **परिच्छेद्यः, व्यावर्त्यः, विशेष्यमिति** चोच्यते। 'दण्डी पुरुषः' इत्यादावपि दण्डादिकं पुरुषस्य विशेषणम्।

इत्थं प्रमातुरन्तःकरणं विशेषणं भवति, तस्य प्रमातृस्वरूपे प्रवेशात्। तथा प्रमेयचैतन्याद्व्यावर्त्य प्रमातृस्वरूपस्य बोधकत्वादन्तःकरणं व्यावर्तकं च भवति।

**उपाधिलक्षणम्**—यस्तु वस्तुस्वरूपे अन्तरेणैव प्रवेशं व्यावर्तको भवति स **उपाधि**रित्युच्यते। कार्यानन्वयित्वे सति व्यावर्तकत्वे सति विद्यमानत्वमुपाधिलक्षणम्। नैयायिकमते 'कर्णशष्कुल्यवच्छिन्नं नभः **श्रोत्रम्**' इत्युच्यते। तत्र कर्णगोलकं श्रोत्रस्योपाधिर्भवति। कर्णगोलकं श्रोत्रेन्द्रियस्वरूपे प्रवेशमन्तरेणैव बाह्यभूताकाशाद्विविच्य श्रोत्रेन्द्रियं बोधयति। तस्मात् कर्णगोलकं **व्यावर्तकं** भवति। 'घटाकाशः प्रस्थपरिमितान्नस्यावकाशं ददाति' इत्यत्र **घटः आकाशस्योपाधिरेव**। प्रस्थपरिमितान्नावकाशदात्राकाशस्वरूपे प्रवेशं विनैव घटो महाकाशाद्विभज्य घटाकाशं बोधयति। घटस्य पृथिवीकार्यत्वेनावकाशप्रदत्वासंभवादाकाशस्वरूपे प्रवेशो न युज्यते। तस्माद्घटः आकाशस्योपाधिरेव।

एवमेवान्तः**करणोपहितचैतन्यं साक्षी**त्यत्र **साक्षिणोऽन्तःकरणमुपाधिः**। न ह्यन्तःकरणस्य साक्षिस्वरूपे प्रवेशो भवति। किन्त्वन्तःकरणं प्रमेयचैतन्याद्विविच्य साक्षिणं बोधयति। तस्मादेकमेवान्तःकरणं साक्षिण उपाधित्वेन प्रमातुर्विशेषणत्वेन च भवति। अन्तःकरणोपहितचैतन्यं **साक्षी**। अन्तःकरणविशिष्टचैतन्यं **प्रमाता**। उपाधिना युक्त**मुपहित**मिति विशेषणेन युक्तं **विशिष्ट**मिति चोच्यते। तत्रान्तःकरणविशिष्टः प्रमातैव कर्ता, भोक्ता,

सुखी, दुःखी, संसारी, जीवो भवति। इत्थमवच्छेदवादरीत्या प्रमात्रा-दिलक्षणं निरूपितम्।

(२१५) **आभासवादरीत्या जीवसाक्षिणोः स्वरूपम्**—आभासवादे आभाससहितान्तःकरणं **जीवस्य विशेषणं, साक्षिण उपाधिश्च** भवति। अत एवाभाससहितान्तःकरणविशिष्टचैतन्यं **जीवः**। आभाससहितान्तःकरणोपहितचैतन्यं **साक्षी**। **यद्यपि** पक्षद्वयेऽपि विशेषणसहितचैतन्यं जीवः, स एव संसारी च; **तथापि** विशेष्यभागे चैतन्ये जननमरणादिसंसारो न संभवति। तस्माद्विशेषणमात्रे संसारः पर्यवस्यति; स एव विशिष्टचैतन्ये प्रतीयते। (१) **क्वचिद्विशेषणगतधर्माणां** व्यवहारो विशिष्टे भवति। (२) **क्वचिद्विशेष्यगतधर्माणां** व्यवहारो विशिष्टे भवति। (३) **क्वचिद्विशेषणविशेष्योभयगतधर्माणां** व्यवहारो विशिष्टे भवति। तद्यथा—(१) 'दण्डेन घटाकाशो नश्यति' इत्यत्र विशेषणीभूतघट एव दण्डेन नश्यति, न तु विशेष्यभूताकाशः। तथापि विशिष्टे घटाकाशे नाशः प्रतीतो भवति। (२) 'कुण्डली पुरुषः स्वपिति' इत्यत्र विशेषणे कुण्डले स्वापो नान्वेति; विशेष्ये पुरुषे तु स्वापः संभवति। तथापि 'कुण्डलविशिष्टः स्वपिति' इति विशिष्टे स्वापव्यवहारो भवति। (३) 'आयुधपाणिः पुरुषो योद्धुं याति' इत्यत्र विशेषणस्यायुधस्य विशेष्यस्य पुरुषस्य च युद्धाय गमनादुभयोरपि धर्मः विशिष्टे व्यवह्रियते।

प्रकृते त्ववच्छेदवादेऽन्तः**करणं** विशेषणं, आभासवादे **आभाससहितान्तःकरणं** विशेषणम्; **द्वयोरपि** पक्षयोश्चैतन्यं विशेष्यम्। तस्मिंश्चैतन्ये जन्मादिसंसारो न संभवति। किन्तु विशेषणस्यान्तःकरणस्य वा आभाससहितान्तःकरणस्य वा धर्मभूतो यो जन्मादिरूपः संसारः सोऽविवेकिभिर्भ्रान्त्या विशिष्टचैतन्ये व्यवह्रियते। व्यवहारो नाम प्रतीतिः कथनञ्च। अनया रीत्या आभासवादावच्छेदवादयोर्भेदोऽवगन्तव्यः।

(२१६) **आभासवादस्य ज्यायस्त्वम्**—आभासवादेऽन्तःकरणमाभाससहितं, अवच्छेदवादे तद्रहितं च भवति। द्वयोर्मध्ये आभासवादो ज्यायान्। **भाष्यकारैराभासवाद** एव स्वीकृतः। अवच्छेदवादे **विद्यारण्यमुनयो** दोषमप्याहुः। तथाहि, आभासरहितान्तःकरणावच्छिन्नचैतन्यस्य प्रमातृत्वाभ्युपगमे घटावच्छिन्नचैतन्यस्यापि प्रमातृत्वं प्रसज्येत। यतोऽन्तःकरणवद् घटोऽपि भूतकार्यम्, अन्तःकरणं यथा चैतन्यस्यावच्छेदकं अथवा व्यावर्तकं

तथा घटोऽपि चैतन्यस्यावच्छेदको व्यावर्तकश्च ; तस्मादन्तःकरणविशि चैतन्यमिव घटावच्छिन्नचैतन्यमपि प्रमाता भवेदित्यापत्तिरपरिहार्या। अन्त करणे आभासस्याङ्गीकारे तु नास्य दोषस्यावकाशः। तथाहि, अन्तःकर पञ्चतन्मात्रसमष्टिसत्वगुणकार्यत्वात् स्वच्छम्। घटादयः पञ्चीकृतपञ्चभूततम गुणकार्यत्वादस्वच्छाः। यत् स्वच्छं तत्राभासः अथवा प्रतिबिम्बो जायते मलिने पदार्थे नाभासो जायते। दर्पणस्य तत्पिधायककोशस्य च मृत्कार्यत्व विशेषेऽपि स्वच्छे दर्पणे मुखस्याभासः प्रतीयते। अस्वच्छे दर्पणपिधायकको न मुखस्याभासः प्रतीयते। एवमेव सत्वगुणकार्यत्वात्स्वच्छेऽन्तःकरणे चैतन्य भासः प्रतीयते। तमोगुणकार्यत्वादस्वच्छे शरीरादौ घटादौ च चैतन्याभा न प्रतीयते।

(२१७) **अन्तःकरणगतद्विविधप्रकाश एव प्रमाता; नान्यः**— इत्थमन्तःकरणे द्विविधः प्रकाशोऽस्ति; एको व्यापकचैतन्यस्य प्रकाश अपरः आभासरूपचैतन्यस्य प्रकाशः। शरीरे घटादिषु च व्यापकचैतन्य प्रकाश एक एवास्ति, द्वितीयः आभासस्य प्रकाशो नास्ति। तस्मात् द्विवि प्रकाशसहितान्तःकरणविशिष्टचैतन्यमेव **प्रमाता** इत्युच्यते, न त्वेकप्रका मात्रसहितघटादिविशिष्टचैतन्यं प्रमाता।

येषां मतेऽन्तःकरणे आभासो नास्ति तेषां मते घटादाविवान्तःकर ऽपि द्वितीयः आभासस्य प्रकाशो नास्ति। अपि च य एकः व्यापकचैतन्य प्रकाशोऽन्तःकरणेऽस्ति स एव घटादावप्यस्ति। तस्मादन्तःकरणविशि चैतन्यस्य प्रमातृत्वाङ्गीकारे, घटविशिष्टस्य शरीरविशिष्टस्य कुड्यविशिष्टस्य चैतन्यस्य प्रमातृत्वं स्वीकर्तव्यं भवेत्। इत्थं घटशरीराद्यपेक्षयाऽन्तःकरणे इह वैलक्षण्यमस्ति। अत्र चायं हेतुः—सत्वगुणकार्यत्वादन्तःकरणं स्वच्छम्; अ एव तच्चैतन्याभासग्रहणयोग्यं च। इतरपदार्थास्तु तमोगुणकार्यत्वादस्वच्छ अत एव ते चैतन्याभासग्रहणायोग्याश्च। आभासग्रहणयोग्यान्तःकरणविशि चैतन्यमेव **प्रमाते**त्यभिधीयते; न त्वाभासग्रहणायोग्यघटादिविशिष्टचैतन्यं प्रमा भवति। अत एवाभासवादः श्रेयान्[1], न त्ववच्छेदवादः।

---

१. आभासवादे आभासस्य स्वरूपमधिकतया कल्पनीयं भवति। अवच्छेदवादे न इत्थं यद्यप्याभासवादे **गौरवम**वच्छेदवादे **लाघवं** च, तथापि मन्दजिज्ञासोर्बुद्धावाभा वादः स्फुटमारूढो भवेदित्यनेनाभिप्रायेणाभासवादः स्तूयते। भाष्यकारादीनामप्ये सेवाशयः।

(२१८) **प्रमात्रादिचतुर्विधचैतन्यस्वरूपम्**—यथाऽन्तःकरणमाभास-सहितमेवास्ते तथा तद्वृत्तिरप्याभाससहितैव जायते। आभाससहितवृत्ति-विशिष्टचैतन्यं **प्रमाणचैतन्य**मित्युच्यते।

घटादिविषयाकारान्तःकरणवृत्त्यारूढं चैतन्यं **प्रमेति, यथार्थज्ञान**-मिति वोच्यते। प्रमायाः साधनमिन्द्रियं **प्रमाणमिति** कथ्यते। **अत्रेदं ज्ञेयम्**—विषयाकारवृत्त्यारूढचैतन्यं **प्रमेति** कीर्त्यते। तत्र चैतन्यस्य स्वरूपतो नित्यत्वान्नेन्द्रियजन्यत्वसंभवः। अतश्च प्रमाचैतन्यं प्रतीन्द्रियस्य यद्यपि साधन-त्वं न युज्यत एव। तथाप्युपचारेणेन्द्रियस्य प्रमासाधनत्वव्यवहारः। तथाहि, उपाधिशून्यचैतन्ये प्रमाव्यवहाराभावात् विषयाकारवृत्त्युपहितचैतन्ये एव तद्व्यवहाराच्च, चैतन्ये प्रमाशब्दप्रवृत्तौ विषयाकारवृत्तेरुपाधित्वात्तस्या वृत्तेरि-न्द्रियजन्यत्वात्तादृशवृत्त्योपहितप्रमां प्रत्यपीन्द्रियस्य साधनत्वव्यवहारः। इत्थ-**मेवेन्द्रियं प्रमासाधनमिति** व्यवह्रियते। न ह्यन्तःकरणपरिणामाः सर्वेऽपि प्रमात्वेन व्यवह्रियन्ते। किन्तु शरीरान्तःस्थमन्तःकरणं विषयरूपघटादिदेशपर्यन्तं दीर्घीभावापत्तिरूपं परिणामं प्राप्नोति, स परिणाम एव **प्रमाण**मित्युच्यते।

विषयैः सह मिलितस्यान्तःकरणस्य विषयसमानाकारो यः परिणामस्तस्य **प्रमेति** व्यपदेशः। शरीरान्तःस्थितान्तःकरणदेशमारभ्य घटादिविषयदेशपर्यन्तं दीर्घीभूतस्यान्तःकरणस्य परिणामः प्रमारूपतां धत्ते। तस्मात्प्रमायाः प्रमाण-रूपान्तःकरणवृत्तेश्च नाधिको भेदोऽस्ति।

अनेन क्रमेण बाह्यपदार्थानां प्रत्यक्षज्ञानोत्पत्तिदशायामन्तःकरणवृत्ति-र्बहिर्निर्गत्य विषयीभूतघटादिसमानाकारतां धत्ते। शरीरान्तःस्थात्मनः प्रत्यक्ष-काले त्वन्तःकरणवृत्तिर्बहिर्निर्गमनं विना शरीरस्यान्तरेवात्माकारतां धत्ते। तया आत्माकारया वृत्त्या आत्माश्रितमावरणं निवर्त्यते। आत्मा स्वस्य प्रकाशेन वृत्तौ प्रकाशते। अनेनैव निमित्तेनात्मा वृत्तेर्विषय इत्युच्यते। वृत्तिस्थचिदा-भासरूपफलस्य त्वात्मा न विषयो भवति। वर्णितेन प्रकारेण साक्षिरूप आत्मा स्वयंप्रकाशरूपो भातीति सिद्ध्यति।

**(आ. २१९-२२३) इन्द्रियसंबन्धं विना 'अहं ब्रह्म' इति ज्ञानस्य कथं प्रत्यक्षतेति तत्त्वदृष्टिप्रश्नः—**

(२१९) **तत्त्वदृष्टेः शङ्का**—'ब्रह्मापरोक्षज्ञानेन सकलाविद्यासमूहो नश्यति, न तु परोक्षज्ञानेन' इति प्रागभिहितम्। अत्रैषा शङ्का भवति—

'इन्द्रियजन्यमेव ज्ञानं प्रत्यक्षमित्युच्यते, ब्रह्मज्ञानं तु नेन्द्रियजन्यमविषयत्वाद् ब्रह्मणः। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तै ब्र. 4-9) इत्यादिश्रुतेः।

(आ. २२०-२२२) **ब्रह्म न ज्ञानेन्द्रियाणां विषयः**—

(२२०) **ब्रह्म न चक्षुषो विषयः**—रूपवतः पदार्थस्य अथवा नीलादिवर्णस्यैव ज्ञानं चक्षुषा जन्यते। ब्रह्म तु न तादृशं; अतो न ब्रह्म नेत्रेन्द्रियजन्यज्ञानविषयः। मनुष्याकारेणावतीर्णानां रामकृष्णादीनां मूर्तयो यद्यपि रूपादिमत्यस्तथापि ता मूर्तयो मायिकत्वान्मिथ्या। अतो न ता मूर्तयो ब्रह्मरूपाः। यद्यपि पुराणादिषु रामकृष्णादीनां ब्रह्मरूपेण वर्णनमस्ति तथापि तद्वचनं न तदीयशरीरस्य ब्रह्मत्वबुद्ध्या प्रवृत्तं; किन्तु तदीयशरीराधिष्ठानचैतन्यस्य ब्रह्मत्वबुद्ध्येति ज्ञेयम्।

**ननु** मनुष्यपशुपक्ष्यादिसर्वशरीराणामप्यधिष्ठानं ब्रह्मचैतन्यमेव। अधिष्ठानचैतन्याभिप्रायेण रामकृष्णादीनां ब्रह्मत्वे सर्वशरीराणामपि ब्रह्मचैतन्यस्यैवाधिष्ठानत्वान्मनुष्यपशुपक्ष्यादयोऽपि ब्रह्मरूपा भवेयुः। तथा च पश्वादिसमा एव रामकृष्णादयोऽपि भवेयुः। तस्माद्रामकृष्णादीनां जीवान्तरापेक्षया वैशिष्ट्यसिद्धये तदीयशरीरे एव ब्रह्मबुद्धिरुचिता, न तु तदीयशरीराधिष्ठानचैतन्यदृष्ट्या तेषु ब्रह्मबुद्धिरिति चेत्।

**तन्न**। शरीरं **बाधित्वा** रामकृष्णादिशरीराणां ब्रह्मत्वविवक्षणे पश्वादिशरीराणामपि **बाधपूर्वं** ब्रह्मत्वं सिद्ध्येत। **बाधाभावे** तु जीवान्तराणां शरीरवत् करचरणाद्यवयवसहितस्य रूपक्रियादियुक्तस्य रामकृष्णादेः शरीरस्य निरवयवेन रूपक्रियादिशून्येन ब्रह्मणा सहाभेदो न घटेत। तस्मात्सावयवं रूपक्रियादियुक्तं रामकृष्णादेः शरीरं न ब्रह्म।

परं **त्वियान् भेदोऽस्ति**—जीवानां शरीरं पुण्यपापाधीनं, भूतकार्यं **च**। किञ्च जीवानां देहाद्यनात्मपदार्थेष्वविद्याबलात् 'अहं, मम' इत्यध्यासो भवति, स चाध्यास आचार्योपदेशान्निवर्तते।

रामकृष्णादीनां शरीरं तु न **तदीयपुण्यपापजन्यं नापि भौतिकम्**। परं तु सृष्टेः प्राक् यदा प्राणिनां कर्म फलदानोन्मुखं भवति तदा आप्तकामस्यापीश्वरस्य प्राणिनां कर्मानुसारेण 'अहं जगत्सृजेयम्' इति सङ्कल्पो जायते। तेन सङ्कल्पेन **जगदुत्पत्तिरूपा सृष्टिर्भवति**। तथैव सृष्टेः परमपि 'अहं

जगत्पालयेयम्' इतीश्वरस्य सङ्कल्पो जायते। तेन सङ्कल्पेन **जगद्रक्ष्यते।** कर्मानुसारेण सुखदुःखादिसंबन्ध एव **पालन**मित्युच्यते। पालनसङ्कल्पमध्ये उपासकानामुपासनफलत्वेन 'रामकृष्णादिनामसहिता मूर्तयः सर्वेषां प्रतीयन्ताम्' इति चेश्वरस्य सङ्कल्पो भवति। अनेनेश्वरसङ्कल्पेन नामरूपादिरहिते ईश्वरे रामकृष्णादिनामानि पीताम्बरादिसहितसुन्दरविग्रहाश्चोत्पद्यन्ते। न ते रामकृष्णादीनां विग्रहास्तदीयकर्माधीनाः।

तैश्च रामकृष्णादिविग्रहैः साधूनां सुखं दुष्टानां दुःखं चोत्पद्यते। यच्छरीरं यस्य सुखदुःखादेर्हेतुर्भवति तच्छरीरं तदीयपुण्यपापजन्यमिति न्यायः। अनेन न्यायेन रामकृष्णादीनां शरीरं साधूनां सुखहेतुत्वात्साधूनां **पुण्यपुञ्जफलं,** असुरादीनां दुष्टानां दुःखहेतुत्वात्तेषां पापफलं च भवति। एवमवतारपुरुषशरीरस्यापि पुण्यपापाधीनत्वात्तदनधीनत्वोक्तिरसङ्गतेति चेत्।

**अत्रेदं तत्त्वम्**—जीवेन पूर्वशरीरे कृतपुण्यपापयोः फलमुत्तरशरीरे तस्यैव जीवस्य सुखदुःखादिरूपं भवति। तस्माच्छरीराभिमानवतो जीवस्य पूर्वजन्मनि स्वेनैव कृतपुण्यपापयोरधीनमुत्तरशरीरमित्युच्यते। रामकृष्णाद्यवतारपुरुषशरीरं तु साध्वसाधुजनसुखदुःखहेतुत्वात्साध्वसाधुजनकृतपुण्यपापाधीनमेव, न तु रामकृष्णादिपुण्यपापाधीनम्। अत एव न तेन शरीरेण रामकृष्णादीनां सुखदुःखभोगः। तस्माद्रामकृष्णाद्यवतारपुरुषशरीरं तदीयपुण्यपापाद्यधीनं नेति सिद्धम्।

किञ्च रामकृष्णादिशरीरं **न पञ्चभूतपरिणामः,** किन्तु चैतन्याश्रितमायापरिणामः। पञ्चीकृतभूतपरिणामत्वे कृष्णशरीरस्य रज्जुकृतबन्धनाविषयत्वं भागवतादिषु वर्णितमसङ्गतं भवेत्। यद्यपि पञ्चभूतकार्ययोगिशरीरस्यापि बन्धनाविषयत्वं दृश्यते, तथापि योगिशरीरं प्रथमं बन्धनविषयतामापद्यैव पश्चाद्योगमहिम्ना बन्धाद्विमुक्तं भवति। कृष्णादिशरीरं तु न योगिशरीरवद्योगमहिम्ना बन्धाविषयतां याति; किं तु स्वभावत एव बन्धाद्यवशम्। तस्मान्नावतारपुरुषशरीरं पञ्चभूतपरिणामः। भगवत्पादकृतमाण्डूक्योपनिषद्भाष्यस्य टीकायामानन्दगिरिस्वामिभिः रामादिशरीरस्य भूतपरिणामत्वं यदुक्तं तदपि स्थूलदृष्टीनामितरशरीरतुल्यतयैवावतारपुरुषशरीरमपि प्रतीयते इत्यभिप्रायेणेति मन्तव्यम्। अत एव भगवत्पादैर्गीताभाष्योपक्रमे "स च भगवान् स्वां मायां वशीकृत्याजोऽव्ययोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं

कुर्वन्निव लक्ष्यते" इति "जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता विष्णुर्देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव" इति च कृष्णशरीरं मायाकार्यत्वेन वर्णितम्। तस्मान्न भूतेभ्योऽवतारपुरुषशरीरमुत्पद्यते। किन्तु तदुपादनकारणं साक्षान्मायैव।

इतरेषां जीवानां देहे 'अहं' इत्यात्मभ्रान्तिरस्ति। रामकृष्णादीनां तु न सा भ्रान्तिरस्ति। जीवस्योपाधिभूता 'अविद्या' मलिनसत्वयुक्ता; रामकृष्णादीनामुपाधिभूता 'माया' तु शुद्धसत्वयुता। तस्माज्जीवस्याविद्याकार्यभूता भ्रान्तिः, रामकृष्णादेर्मायाकार्यभूतसर्वज्ञत्वं चास्ति। जीवस्याज्ञानप्रयुक्तावरणभ्रान्त्योर्निवृत्तये आचार्यमुखान्महावाक्योपदेशजन्यज्ञानमपेक्षितम्। रामकृष्णादेरावरणभ्रान्त्योरभावेनोपदेशजन्यज्ञानं नापेक्षितम्। तथापि जीवस्यान्तःकरणवृत्तिरूपज्ञानमिवेश्वरस्य मायावृत्तिरूपात्मज्ञानमुपदेशं विनैव जायते। किन्तु न तेन ज्ञानेन किञ्चिदपि प्रयोजनमीश्वराणां सिद्ध्यति।

तथाहि, जीवस्य घटादिज्ञानेनावरणभङ्गो घटादिरूपविषयस्य प्रकाशश्चेति फलं सिद्ध्यति। जीवस्य 'अहं ब्रह्म' इति ब्रह्माकारात्मज्ञानोदये तु तादृशज्ञानविषयीभूतस्यात्मन आवरणभङ्गमात्रं ज्ञानेन जन्यते। आत्मरूपो विषयस्तु स्वयमेव प्रकाशते। तस्मादात्मज्ञानेन विषयो न प्रकाशते।

एवमीश्वरस्य 'अहं ब्रह्मास्मि' इति मायावृत्तिरूपज्ञानस्य विषयभूतः ईश्वरस्यात्मा आवरणरहितस्वयंप्रकाशस्वरूपोऽस्ति। तस्मादावरणभङ्गो वा विषयप्रकाशो वा नेश्वरज्ञानस्य प्रयोजनम्। यथा जीवन्मुक्तस्य विदुषः आवरणरहितमात्मानं विषयीकुर्वन्ती 'अहं ब्रह्मास्मि' इत्यन्तःकरणवृत्तिरावरणभङ्गादिप्रयोजनशून्या भवति; तथैवेश्वरस्यापि आवरणभङ्गादिप्रयोजनशून्यं मायावृत्तिरूपं 'अहं ब्रह्मास्मि' इति ज्ञानं विनैवोपदेशादिसाधनमुत्पद्यते।

इत्थं रामकृष्णादीनां जीवाद्वैशिष्ट्यसत्वेनेश्वरत्वं सिद्ध्यति। तथापि तेषां शरीरं मायाकार्यम्। अत एव न तत् ब्रह्मरूपं, किन्तु मिथ्या। मायाकार्यभूतमवतारपुरुषाणां शरीरं करचरणाद्यवयवोपेतं रूपसहितं चोत्पादितम्। तस्मात्तेषां शरीरं नेत्रेन्द्रियविषयतामापद्यते। तथापि नेत्रेन्द्रियं न ब्रह्म विषयीकरोति।

**(२२१) ब्रह्म त्वगिन्द्रियस्य न विषयः**—त्वगिन्द्रियं तु स्पर्शं तदाश्रयद्रव्यं च विषयीकरोति। ब्रह्म तु न स्पर्शरूपं नापि स्पर्शस्याश्रयः। अतो न ब्रह्मणस्त्वगिन्द्रियविषयत्वम्।

(२२२) **ब्रह्म न रसनाघ्राणश्रोत्राणां विषयः**—रसनेन्द्रियेण रसज्ञानं, घ्राणेन्द्रियेण गन्धज्ञानं, श्रोत्रेण शब्दज्ञानं च जायते। रसगन्धशब्देभ्यो विलक्षणं ब्रह्म। तस्मान्न रसनाघ्राणश्रोत्रैर्ब्रह्मणो ज्ञानं जायते। "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्।" (क. 1-3-15) "पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्" । (क. 2-1-1) इत्यादिना ब्रह्मण इन्द्रियाविषयत्वं बोध्यते।

(२२३) **ब्रह्म कर्मेन्द्रियाणामप्यविषयः**— कर्मेन्द्रियं न ज्ञानसाधनं, किन्तु वचनादिक्रियासाधनम् । तस्मात्कर्मेन्द्रियैर्न कस्यचिदपि ज्ञानं जायते। इत्थं न केनापीन्द्रियेण ब्रह्मणो ज्ञानं जायते। **इन्द्रियजन्यमेव ज्ञानं प्रत्यक्ष**मित्युच्यते। **तदेवापरोक्षमिति** च कीर्त्यते। तस्माद्ब्रह्मणोऽ**परोक्षज्ञानं** नैव संभवति। शब्देन तु यद्यपि ब्रह्मज्ञानमुत्पद्यते तथापि शाब्दज्ञानस्य परोक्षत्वाच्छब्दजन्यब्रह्मज्ञानं **परोक्षमेव** भवेत्।

(आ. २२४-२२५) **पूर्वोक्तप्रश्नस्योत्तरम्**—

(२२४) **सुखदुःखादेः साक्षिभास्यत्वादिन्द्रियसंबन्धं विना प्रत्यक्षज्ञानं न जायते इति नियमो नास्ति**—इन्द्रियसंबन्धं विना प्रत्यक्षज्ञानं नोदेतीति नियमो नास्ति। सुखदुःखादेर्ज्ञानं न केनापीन्द्रियेण जन्यते, तथापि सुखदुःखादेर्ज्ञानं प्रत्यक्षमेव। तस्मादिन्द्रियसंबन्धजन्यं ज्ञानमेव प्रत्यक्षज्ञानमिति न नियमः। किन्तु यदा विषयेण वृत्तिः संबद्धा विषयाकारा भवति तदा **प्रत्यक्ष[1]ज्ञानं** जायत इत्युच्यते। विषयेण सह वृत्तेः संबन्धः

---

१. विषयावच्छिन्नचैतन्यस्य वृत्त्यवच्छिन्नचैतन्येनाभेद एव **प्रत्यक्षज्ञानलक्षणम्**। स चाभेदः क्वचि**दिन्द्रियद्वारा** भवति। क्वचि**च्छब्देन** भवति। क्वचिदिन्द्रियादिरूपबाह्यनिमित्तं विनैव **शरीरान्तर्जायमानवृत्तिद्वारा** भवति। तत्रापि **प्रत्यक्षज्ञान**मिति व्यपदेशो भवति।

चैतन्यस्य स्वरूपतो न कोपि भेदोऽस्ति। किन्तु विषयवृत्तिरूपोभयोपाधिप्रयुक्तभेदोऽस्ति। तयोरुपाध्योर्भिन्नदेशस्थत्वे तादृशोपाधिविशिष्टचैतन्ययोर्भेदव्यवहारो भवति। वृत्तेर्विषयाकारताकाले द्वयोरुपाध्योरेकदेशस्थत्वं भवति। तदैकदेशस्थोपाधिसहितविषयचैतन्यवृत्तिचैतन्ययोरभेदो व्यवह्रियते। एवं विषयचैतन्येन सह वृत्तिचैतन्यस्य जायमानाभेद एव **प्रत्यक्षज्ञानमिति, अपरोक्षज्ञानमिति, साक्षात्कार** इति चोच्यते।

तदिदं **प्रत्यक्षज्ञानलक्षणं** (1) इन्द्रियजन्यबाह्य**घटादिप्रत्यक्षज्ञाने** (2) महावाक्यजन्य**ब्रह्मप्रत्यक्षज्ञाने**, (3) बाह्यनिमित्तं विनाऽन्तरेवोत्पद्यमान**सुखदुःखादिप्रत्यक्षज्ञाने** (4) मायावृत्तिरूपे**श्वरज्ञाने** (5) अविद्यावृत्तिरूप**रज्जुसर्पादिज्ञाने** चानुगतम्।

**क्वचिदिन्द्रियद्वारा** भवति, क्वचिच्च **शब्देन** भवति। 'दशमस्त्वमसि' इत्यत्र शब्दाज्जायमानान्तःकरणवृत्तिर्दशमेन स्वात्मना संबद्धा दशमाकारा भवति। **तस्माच्छब्दजन्यदशमज्ञानमपि प्रत्यक्षमेव।**

तथैव प्रमातरि सुखदुःखाद्युत्पत्तिकालेऽन्तःकरणस्यवृत्तिः सुखाकारा दुःखाकारा च भवति। तया वृत्त्या सह सुखदुःखादेः संबन्धो जायते। तस्मात्सुखदुःखादेर्ज्ञानं **प्रत्यक्षज्ञान**मित्युच्यते। पूर्वोत्पन्नसुखदुःखादेर्नाशानन्तरं यदा पुरुषस्य तादृशसुखदुःखादिज्ञानं जायते तदा सुखदुःखाद्याकारा अन्तःकरणवृत्तिरुदेति। किन्तु तस्या वृत्तेर्नष्टसुखदुःखादिना संबन्धो नास्ति। अतस्तज्ज्ञानं **स्मृतिरूपं, न प्रत्यक्षरूपम्।**

यद्यप्यन्तःकरणधर्माः सुखदुःखादयः साक्षिभास्यास्तथापि सुखाकारदुःखाकारा**न्तःकरणवृत्तिद्वारैव** साक्षी सुखदुःखादीन् प्रकाशयति। साक्षिभास्यपदार्थमपि साक्षी वृत्तिमपेक्ष्यैव प्रकाशयति। तथाहि, शुक्तिरजतं साक्षिभास्यमेव। तत्रापि साक्षी **अविद्यावृत्ति**मपेक्ष्यैव रजतं प्रकाशयति। परंतु सुखदुःखादिप्रकाशने **अन्तःकरणवृत्तिः** साक्षिणः सहायभूता। मिथ्यारजतादिप्रकाशने **अविद्यावृत्तिः** साक्षिणः सहायभूता। इत्थं साक्षिभास्यपदार्थज्ञानेऽपि वृत्तिरावश्यिकी। सा वृत्तिर्यत्रेन्द्रियादिबाह्यसाधनजन्या तत्र तस्या वृत्तेर्विषयः **साक्षिभास्य** इत्युच्यते। सुखदुःखादिविषयकवृत्तौ बाह्येन्द्रियादिकं न कारणम्। अपि तु सुखाद्युत्पत्तिसमये साधनान्तरापेक्षां विनैव सुखाकारा दुःखाकारा

---

१. 'अहं दशमः' इति दशमस्य स्वस्वरूपापरोक्षज्ञानं 'दशमस्त्वमसि' इति शब्दप्रमाणजन्यम्। नेन्द्रियैर्मनसा वा दशमप्रत्यक्षज्ञानं जायते। तथाहि, यदि शरीररूपो दशम इन्द्रियवेद्य इत्युच्यते तर्हि नेत्रेन्द्रियमात्रेण वेद्येत। तथा सति निमीलितनयस्यापि 'दशमस्त्वमसि' इति वाक्याद्दशमज्ञानं जायमानमसङ्गतं भवेत्। तस्माद्दशमज्ञानं नेत्रेण न जायते। मनस्तु न साक्षाद्बाह्यार्थग्रहणसमर्थम्। आन्तरमेव पदार्थं मनः साक्षात् गृह्णीयात्। देवदत्तयज्ञदत्तादिसंज्ञाः अपि सूक्ष्मदेहसहितस्थूलदेहे दृश्यन्ते। 'त्वं' 'अहं' इत्यादिव्यवहारोऽपि स्थूलदेहे दृश्यते। स्थूलदेहस्य ज्ञानं मनसा साक्षान्न संभवति। तस्माद्दशमज्ञानं शब्दप्रमाणेनैव जायते। तत्र नेत्रं मनश्च सहायतां प्रतिपद्येते।

२. सुखदुःखादयो बुद्धेरेव धर्माः, नात्मनः। अत एव ते बुद्धेः सत्वे जाग्रत्स्वप्नयोरेव प्रतीयन्ते। सुषुप्ते बुद्धेरभावात्सुखदुःखादिप्रतीतिर्नास्ति। तथा चोक्तम्—

"रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः॥" इति

चान्तःकरणवृत्तिर्जायते । तस्यां वृत्तावारूढः साक्षी सुखदुःखादीन् प्रकाशयति। अतः सुखदुःखादिकं **साक्षिभास्य**मित्युच्यते ।

(२२५) **ब्रह्मज्ञानस्य प्रत्यक्षत्वोपपत्तिः तत्त्वदृष्टेर्भेदभ्रमनिवृत्तिश्च**—बाह्यघटादिभिः सहान्तःकरणवृत्तेः संबन्धो नेत्रादीन्द्रियद्वारा जायत इति घटादयो **न साक्षिभास्याः** । अन्तःकरणवृत्तिर्यदा ब्रह्माकारा भवति तदा सा वृत्तिर्न बहिर्गच्छति, किन्तु शरीरस्यान्तरेव वर्तते । तया वृत्त्या सह ब्रह्मणः संबन्धोऽस्ति । तस्माद् ब्रह्मज्ञानमपि सुखदुःखादिज्ञानमिव प्रत्यक्षरूपं भवति । परं तु सुखाकारदुःखाकारवृत्तिषु बाह्यसाधनापेक्षा नास्ति । तस्मात्सुखदुःखादयः **साक्षिभास्याः** । ब्रह्माकारान्तःकरणवृत्तौ तु गुरुमुखाच्छ्रुतवेदान्तवाक्यस्य श्रोत्रेन्द्रियसंबन्धरूपबाह्यसाधनमपेक्ष्यते । तस्माद् ब्रह्म न **साक्षिभास्यम्** । इत्थं यत्र विषयेण सह वृत्तिः संबद्धा भवति तत्र **प्रत्यक्षज्ञानं** भवति । 'अहं ब्रह्मास्मि' इति वृत्तेः विषयेण ब्रह्मणा सह संबन्धसत्त्वात् ब्रह्मज्ञानं प्रत्यक्षं भवितुमर्हति ।

यत्र धूमदर्शनेन वह्निज्ञानं जायते तत्र धूमज्ञानं प्रत्यक्षं, वह्निज्ञानं तु न प्रत्यक्षम् । चक्षुर्द्वारा निर्गतान्तःकरणवृत्तेर्धूमेन सह संबन्धोऽस्ति ; अतो धूम-

---

१. "चक्षोः सूर्योऽजायत ।" "आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत् ।" (ऐ. 1-2) इत्यादिप्रमाणेन चक्षुषि सूर्याभेदोऽस्ति । अङ्गुल्यादिरूपाल्पावरणेन सूर्यतिरोधाने ब्रह्माण्डान्तर्वर्तिसूर्यस्य प्रकाशो **न दृश्यते** । आवरणनिवृत्तौ तु चक्षुर्गतान्तःकरणवृत्त्या ब्रह्माण्डान्तर्वर्तिसूर्यस्य प्रकाशो **दृश्यते** । एवमेव साक्षिरूपे आत्मनि ब्रह्मणोऽभेदोऽस्ति । तस्यान्तःकरणगताज्ञानांशरूपस्वल्पावरणेनाच्छादने सर्वत्र परिपूर्णं ब्रह्म **न प्रत्यक्षतया भासते** । यदा शरीरान्तर्जायमानब्रह्मात्माभेदाकारवृत्त्या पूर्वोक्तावरणस्य भङ्गो जायते, तदा गृहान्तर्गतस्याकाशस्यासङ्गत्वादिज्ञानेन महाकाशस्यासङ्गत्वादिज्ञानोदयवत् सर्वत्र परिपूर्णब्रह्मणः स्वप्रकाशत्वरूपेण **भानं** भवति ।

२. यथा ब्रह्म न साक्षिभास्यं तथा चिदाभाससहितान्तःकरणवृत्तिरूपप्रमातुरप्यगोचरं भवति । दीपान्तरापेक्षां विना केवलनेत्रस्य यथा दीपो विषयो भवति, तथा ब्रह्म केवलायाः 'अहं ब्रह्मास्मि' इति ब्रह्माकारान्तःकरणवृत्तेर्विषयतां प्रतिपद्यते । तस्माद्ब्रह्म न प्रमातृभास्यमपि । किन्तु स्वप्रकाशं प्रत्यन्यप्रकाशापेक्षारहितसर्वावभासक**स्वयंप्रकाशस्वरूपं ब्रह्म** । 'मलेन मलं हन्यात्' इति न्यायेन वृत्तिर्ब्रह्मणः आवरणभङ्गं करोति । सोऽयं वृत्तिप्रयुक्तावरणभङ्ग एव वृत्त्या ब्रह्मणो विषयीकरणमित्युच्यते । न प्रकारान्तरेण वृत्त्या ब्रह्मणो विषयीकरणं संभवति । साक्षी बाह्यसाधनापेक्षां विनैव 'अहं ब्रह्मास्मि' इति वृत्तिरूपं तत्त्वज्ञानं प्रकाशयति । अत एव **तत्त्वज्ञानं साक्षिभास्य**मित्यभिधीयते ।

ज्ञानं **प्रत्यक्ष**मित्युच्यते । लिङ्गज्ञानरूपानुमानप्रमाणजन्यान्तःकरणवृत्तिः शरीरस्यान्तरेव वह्न्याकारं भजते। न हि वृत्तेर्वह्निना सह संबन्धोऽस्ति ; **तस्माद्वह्निज्ञानं न प्रत्यक्षम् ।**

इत्थं यत्र वृत्त्या सह विषयस्य संबन्धो भवति तत्र **प्रत्यक्षज्ञानं** भवति। यत्र वृत्त्या सह विषयस्य संबन्धो न भवति तत्र **परोक्षज्ञानं** भवति। यत्र विषयो देशान्तरस्थो नष्टो भावी वा, तत्रानुमानेन शब्देन वा विषयाकारा वृत्तिः शरीरस्यान्तरेव भवति ; तदोत्पद्यमानं ज्ञानं **परोक्षमित्युच्यते ।**

इन्द्रियजन्यज्ञानमेव प्रत्यक्षमिति न नियमः। सुखदुःखादिज्ञान-मिन्द्रियाजन्यमपि प्रत्यक्षमेव भवति। दशमपुरुषज्ञानं शब्दजन्यमपि प्रत्यक्षमेव भवति। अनेन न्यायेन श्रीसद्गुरुमुखाच्छ्रुतमहावाक्यरूपवेदशब्दजन्यब्रह्मज्ञान-मपि प्रत्यक्षमेव भवति।

श्रीसद्गुरोरेवंविधमुपदेशं श्रुत्वा बुद्धिमानुत्तमाधिकारी[1] तत्त्वदृष्टिः स्वात्मानं ब्रह्मरूपेण विदित्वा भेदभ्रमं विजहौ। 'अहं ब्रह्मास्मि' इति वृत्तौ निरावरणं ब्रह्म भाति। तत्त्वदृष्टिरेवमुवाच—

निरावरणनिर्भासमहं ब्रह्मेति बुद्धवान् ।
श्रीसद्गुरोः प्रसादेन ह्यखण्डाकारवृत्तितः ॥

**इति श्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचिते विचारसागरे**
**उत्तमाधिकारिण उपदेशनिरूपणं नाम**
**चतुर्थस्तरङ्गः ॥**

---

१. यस्यान्तःकरणं पूर्वपुण्यपरिपाकवशादत्यन्तं शुद्धमस्ति, यस्य गुरूपदिष्ट-महावाक्यरूपशब्दप्रमाणेन सुदृढो बोधो जातः, यस्य च तादृशसुदृढबोधोदयानन्तरं संशयादिनिवृत्तये श्रवणादिसाधनान्तरं नापेक्षितं स **एवोत्तमाधिकारी**। यस्य त्वन्तः-करणं नात्यन्तं शुद्धं किन्त्वीषन्मलविक्षेपादिदोषयुक्तं, स **मध्यमाधिकारी**; अथवा **कनिष्ठाधिकारी**। महावाक्यरूपशब्दादपरोक्षज्ञानोदयानन्तरमपि संशयादिनिवृत्तये तेन श्रवणादिकमनुष्ठेयम् ।

अथ मध्यमाधिकारिण उपदेशनिरूपणं नाम

## पञ्चमस्तरङ्गः

**(आ. २२६-२५१) गुरुवेदप्रभृतीनां व्यावहारिकसत्ताप्रतिपादनम्—**

**(२२६) वेदेन गुरुणा चाद्वैतज्ञानोदयासंभव इत्यदृष्टेः प्रश्नः—** श्रीसद्गुरुमुखादुपदिष्टवेदान्तवाक्यप्रमाणादद्वैतब्रह्मात्मसाक्षात्कारो जायत इति पूर्वतरङ्गे उक्तम्। तच्छ्रुत्वा अदृष्टिनामकद्वितीयशिष्य एवं शङ्कते—**किं गुरुर्वेदान्ताश्च सत्या उतासत्याः। आद्यपक्षे** अद्वैतहानिर्द्वैतसिद्धिश्च। **द्वितीये** मिथ्याभूतमरीचिकोदकेन पिपासानपगमवदसत्यभूतगुरुवेदान्तैः संसारदुःखानिवृत्तिः पुरुषार्थासिद्धिश्च। एवं पक्षद्वयेऽप्यद्वैतज्ञानोदयासंभव एवेति शङ्कराचार्यस्थापितमद्वैतमतमप्रामाणिकमेवेति मम शङ्कां कृपयाऽपनेतुमर्हसीति शिष्यः पृच्छति।

**(आ. २२७-२४९) श्रीसद्गुरोरुत्तरम्—**

**(आ. २२७-२२९) शाङ्करमतस्याद्वैतस्य प्रमाणिकत्ववर्णनम्—**

**(२२७) शाङ्करमतस्य प्रामाणिकत्वे व्यासवचनम्—**श्रीव्यासेन वायवीयकूर्मादिपुराणेषु शाङ्करमतमधिकृत्यैवमुच्यते—

"कलौ युगे तु वेदार्थो वर्ण्यते ह्यन्यथाऽन्यथा।
शङ्कराचार्यरूपेण शिवः साक्षात्तदा किल॥
अवतीर्यान्यथाभूतं जैनबौद्धादिकं मतम्।
निर्मूलयिष्यत्यखिलं वेदवाक्यैः सयुक्तिभिः॥
उद्धृत्य मूर्तिं (लिङ्गं) गङ्गायाः स्थापयिष्यति वै प्रभोः।
सूर्यालोकेन जगतो ह्यन्धकारविनाशने॥
यथावस्थितभानं तु पदार्थानां यथा भवेत्।
नाशश्च विपरीताख्यभावनाया यथा भवेत्॥
सर्वसंशयनाशश्च भगवत्पूज्यपादभृत्।
शङ्करोऽपि तथैवेह लोकानुग्रहकाङ्क्षया॥

वेदार्थविषयाज्ञानं भ्रान्तिसंशयकारणम् ।
निश्शेषं नाशयित्वाऽसौ साधयित्वाऽद्वयं परम् ॥

अद्वयब्रह्मविद्यां च स्थापयेदवनीतले ।
अन्यथा वर्णयेद् यस्तु वेदार्थं स तु मूढधीः ॥" इति ।

महेतिहासे शिवरहस्ये नवमांशे च शाङ्करमतस्यौपनिषदत्वमुच्यते—

"शिवे मदंशसंभूतः शङ्करः शङ्करोत्तमः ।
चतुर्भिः सह शिष्यैश्च कलाववतरिष्यति ॥

तस्मै चोपनिषद्विद्या मया दत्ता महेश्वरि ।
भूमौ पाषण्डषण्डानां खण्डनं स करिष्यति" ॥ इत्यादिना ।

इतिहासपुराणानां च वेदार्थोपबृंहण एव उपयोग इत्यभियुक्तवचनमपि—

"बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" ॥ इति ।

**(२२८) अद्वैतमेव प्रामाणिकमिति वाल्मीकेरप्यभिप्रायः—** श्रीवाल्मीकिरादिकविराडखिलार्थदर्शी महर्षिरुत्तररामायणे वासिष्ठाख्यग्रन्थे सर्वोपनिषत्सूत्रभूतमाण्डूक्यार्थाविष्करणप्रधाने श्रीरामवसिष्ठसंवादरूपेणाभिव्यक्तवार्तिकात्मके उपक्रमादिषड्विधतात्पर्यलिङ्गैर्दृष्टान्तसहस्रैरितिहासशतैश्चाद्वैतमेव प्रमाणमिति निरूपयति । तत्राप्यद्वैतमतसारभूतदृष्टिसृष्टिवादैकजीववादैक-

---

१. "यत्संकोचविकासाभ्यां जगत्प्रलयसृष्टयः ।
निष्ठा वेदान्तवाक्यानामथ वाचामगोचरः ॥
प्रातीतिकत्वं वेदान्तसिद्धान्ते जगतः स्फुटम् ।
अतः सुप्तौ जगल्लीनं प्रबोधे जायते पुनः ॥
दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहुमन्यते ।
बद्धो मुक्तो महाविद्वान् अज्ञ इत्यादिभेदतः ॥
एक एव सदा भाति नानेव स्वप्नवत्स्वयम् ।
अतः स्वयुक्तये वान्येषामाभासानामपि ध्रुवम् ॥
मुक्तिं जानाति हे देवा आत्मना ह्यात्मविद्वरः ।
स्वसंसारदशायां तु स्वभ्रान्त्या सर्वदेहिनाम् ॥
आभासानां च संसारं वेद मुक्तिं तथैव च ।
तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ॥
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः । इति ॥

सत्तावादानेव पुनः पुनरत्यादरेणानेकेतिहासैः सम्यक् प्रतिपादयति च। इत्थं व्यासवाल्मीक्याद्यभिप्रायेणोपनिषद्भगवद्गीताब्रह्मसूत्रात्मकप्रस्थानत्रयस्य श्रीमच्छङ्करभगवत्पादप्रणीतभाष्यमेव यथार्थव्याख्यानमिति सिद्ध्यति। इत्थं सर्वज्ञव्यासवाल्मीक्यादिवचनविरोधाद्भेदवादोऽप्रामाणिकः। भेदवादो युक्ति-विरुद्ध इति च श्रीहर्षमिश्रैः खण्डनग्रन्थे निरूपितम्। भेदधिक्काराादिग्रन्थेष्वपि भेदवादस्यायुक्तत्वं प्रदर्शितम्।

इत्थमनादिसिद्धश्रुतितात्पर्यविषयीभूतत्वात्स्मृतिपुराणेतिहासैरुपबृंहित-त्वान्नारायणादिसद्गुरुसंप्रदायागतत्वाच्च शाङ्करमद्वैतमतमेव साधु। सर्वैः श्रेयोर्थिभिरादरणीयञ्च।

(२२९) **भेदवादतिरस्कारः**—जैनादिमतवद्वेदबाह्यतया प्राचीन-महर्षिवचनविरोधाच्च भेदवादो न प्रमाणम्। आस्तिकविषये भेदवादखण्डन-युक्तीनां प्रदर्शनं नापेक्षितमिति कृत्वा, स भेदवादः श्रुतिवचनविरुद्ध इत्येव प्रदर्श्यते—**कठोपनिषदि** भेदवासना भयहेतुः, सर्वदुःखनिदानं, ततः सा वासना दूरीकर्तव्येति मृत्युना नचिकेताः उपदिष्टः। तस्माद्भेदवासना सर्वात्मना मनसो निर्मूलमुन्मथनीया। सततमद्वैतनिष्ठाऽभ्यसनीया श्रेयोऽर्थिना। तथा हि श्रुतयः—"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति," (क. 2-1-11 & बृ. 4-4-19) "द्वितीयाद्वै भयं भवति" (बृ. 1-4-2) "अन्योऽसावन्यो-ऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्" (बृ. 1-4-10), "उदर-मन्तरं कुरुते, अथ तस्य भयं भवति" (तै. ब्र. 7) इति। तासां चायमर्थः—य इह परमात्मनि प्रत्यगभिन्ने त्रिविधपरिच्छेदत्रिविधभेदशून्ये नानेव ('इव' शब्दादविद्यमानमेव भेदं) पश्यति स मृत्वा मृत्वा पुनः पुनर्जायते। द्वैताभिनि-विष्टस्य सदा भयमेव चिन्मात्रस्वस्वरूपात्पृथक् ज्ञेयत्वेन ध्येयत्वेन वा वस्त्वन्त-रमस्तीति मन्वानः पशुप्रायः। अणुमात्रमपि भेदं पश्यतो महद्भयं भवति। दुःखनिदानभूतो भेदवादः श्रेयोऽर्थिना सर्वथा विस्मर्तव्यः। द्वैतवचनं यावदनु-स्मर्यते तावदद्वैतसाक्षात्कारो नोदियात् इत्यदृष्टिनामकं शिष्यं गुरुरुपदिदेश।

(आ. २३०-२४०) **दृष्टान्तत्वेन राजामात्यभच्छुकथाप्रस्तावः**—

(२३०) **भच्छोः स्वाधिकाराद् भ्रंशः**—हे सोम्य! द्वैतवचनानु-स्मरणं दृढतरप्राचीनाद्वैतानुभवसंस्कारजन्यामतिदृढामप्यद्वैतस्मृतिं प्रतिबध्नाति,

तत्वसाक्षात्कारं दूरीकरोति चेत्युपपादयितुं काञ्चन कथां प्रस्तौमीति भर्च्छुकथां गुरुः शिष्यं प्रति कथयति :—

आसीत्कस्यचिद्राज्ञो भर्च्छुर्नाम प्रधानामात्यः। स च स्वायत्तीकृत-सकलराज्यकार्योऽभवत्। तस्य प्रभावं दृष्ट्वेतरे राजोपजीविनस्तस्मिन्नीर्ष्यालवः संजाताः। तथापि राज्ञो निरतिशयप्रेमास्पदीभूताय भर्च्छवे नापकर्तुमशक्नन्। तदा ते सङ्घीभूय भर्च्छुनिरसनोपायमालोच्य रहसि तद्राष्ट्रस्थान् दस्यून् लुण्ठ-नाय प्रेरयामासुः। दस्युभिर्लुण्ठिते राष्ट्रे राजा राष्ट्रस्य सहसोपनतमुपप्लवं श्रुत्वा सभां सम्मेल्य तत्रस्थान् मुख्याधिकारिणो दस्युविद्रावणाय नियोजयामास। ते सर्वे सङ्घीभूय राजानमेवमवोचन्—'स्वामिन्। सदा भर्च्छुं भवान् श्लाघते, आपत्काले चास्मान् नियोजयति। किमित्यसौ भर्च्छुरिदानीं न नियुज्यते' इति। श्रुत्वैतद्भर्च्छुः साञ्जली राजानमाह—'स्वामिन्! यद्याज्ञाप्यते तर्ह्य-स्मिन्नेव क्षणे गत्वा रिपून् जित्वाऽऽगमिष्यामि' इति। तर्हि तथैव क्रियतामिति राजा भर्च्छुमाज्ञापयांचकार। भर्च्छुरपि तत्क्षणमेव शत्रून् विद्राव्य राज्ये सस्यादिकं संरक्ष्य सर्वेषां क्षेममातनोत्। भर्च्छोर्जयं श्रुत्वेतरे राजपुरुषाः युद्धे भर्च्छुर्मृतः, इति राजानमावेदयामासुः। विवेकविकलो राजा तेषां व्यलीकवचनं विश्वस्य भर्च्छुस्थाने तेष्वन्यतमं नियुज्य तस्मै शिबिकछत्रचामरादिबिरुदं च कल्पयामास। नूतनो मन्त्री यथा भर्च्छुर्न राष्ट्रमागच्छेत्, यथा च राज्ञः स्वप्नेऽपि भर्च्छुज्ञानं न स्यात्तथोपायशतैः संविधानमकरोत्।

(२३१) भर्च्छोः संन्यासः—भर्च्छुरखिलमिमं ज्ञात्वैवमचिन्तयत्। 'नेदानीं मम राजनिकटं गन्तुमुचितम्। योऽहमरोगेण दृढेन गात्रेणाविकलै-रिन्द्रियैश्च संपन्नः सर्वभोगोपकरणभरितेषु रम्येषु हर्म्येषु निवसन् स्वलावण्या-वधीरिताप्सरोभिः कामिनीभिरनवरतं रममाणो दिव्यान् भोगान् भुञ्जान एव कालमेतावन्तमनयम्। तस्य मे मरणान्ता विपदिदानीमापतिता। धिङ् मां मूर्खमियन्तं कालं भङ्गुरेषु भोगेषु निमग्नम्। मत्समः कोऽन्योऽस्ति मूढः' इत्येकान्ते स्थित्वा याभिर्मोहित एतावन्तं कालं श्रेयोमार्गाद्दूरीकृतोऽभूत्तासा-मङ्गनानां प्रत्येकमङ्गानामत्यन्तमशोभनतामतिजुगुप्सावहतां, दारापत्यधनादी-नामनधिकदुःखनिदानतां च भूयो भूयोऽनुचिन्तयन् भोगाद्विरतस्तपस्वी संबभूव।

(आ. २३२-२३९) भर्च्छोर्वैराग्यवर्णनम्—

(२३२) **पराधीना सेवा दुःखहेतुः । एकान्ते सुखम्**—नाना-विचित्ररसैः सूपाज्यशाल्यन्नशाकदधिघृतपायसापूपाद्यनेकप्रकारैरन्नपानादिभिरपि तृप्तिमनापन्नामिमां जिह्वामेतावन्तं कालं वृथा पोषितवानस्मि । इतः परं न तथेमां जिह्वां पुष्णीयाम् । क्षुधां शमयितुं किं न सन्ति वने विविधानि कन्द-मूलशाकफलादीनि । पिपासोपशमनाय किं न सन्ति विमलजलाः सरितस्त-डाकानि च । निवासाय हर्म्यतलादप्यतिशयिताः वातातपवर्षाद्यनुपद्रुता गुहाः किं न सन्ति । प्रादेशमात्रोदरपूरणाय किमनया श्ववृत्त्या राजसेवया । ममे-दानीमत्र वने पृथिवी शय्या, बाहू उपबर्हौ, कन्दमूलादीन्याहारः, निर्मलोदक-पानपात्रं चाञ्जलिरेव । तथा चोक्तं भागवते—

"सत्यां क्षितौ किं कशिपोः प्रयासै-
र्बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ।
सत्यञ्जलौ किं पुरुधान्नपात्र्या
दिग्वल्कलादौ सति किं दुकूलैः" (2-2-4.)
"चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन् ।
रुद्धा गुहाः किमजितोऽवति नोपसन्नान्
कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥" (2-2-5.) इति ।

इत्थं भर्च्छुर्विचारयन् विषयभोगेषु नानादोषान् दृष्ट्वा एकान्तस्थितेरेव परमानन्दप्रदीपकत्वं निरचिनोत् । स्त्रीपुत्रधनादीनां दुःखनिदानत्वमेकान्त-स्थितेः सुखहेतुत्वं च भर्च्छुर्यथा निश्चिकाय तथेदानीं वर्ण्यते—

(२३३) **एकान्तसेविनः सर्वभौमादिब्रह्मपर्यन्तानन्दलाभः**—तथाहि-उदधिमेखलाया वसुधाया अधिपस्याप्रतिहतपराक्रमस्य नताखिलसाम-न्तस्य नवयौवनस्य सर्वविद्याविशारदस्यानुकूलसकलपरिवारस्य सार्वभौमस्या-नन्दो **मानुषानन्द** इत्युच्यते । सोऽप्यानन्दः सातिशय एव । ततः शतगुणि-तानन्दो **मनुष्यगन्धर्वस्य**[1] । ततोऽपि शतगुणानन्दो **देवगन्धर्वस्य**[2] । ततो-

---

१. अस्मिन्नेव कल्पे मनुष्यो भूत्वा पुण्यविशेषाद्गन्धर्वत्वं यः प्राप्तः स **मनुष्य-गन्धर्वः** ।

२. पूर्वकल्पानुष्ठितधर्माधिक्याद्स्मिन् कल्पादावेव गन्धर्वत्वं यः प्राप्तः स **देवगन्धर्वः** ।

ऽपि शतगुणानन्दः **पितॄणाम्**[1] । ततः शतगुणानन्दः **आजानदेवस्य**[2] । ततः शतगुणानन्दः **कर्मदेवस्य**[3] । ततः शतगुणानन्दो **मुख्यदेवस्य**[4] । ततः शतगुणानन्द **इन्द्रस्य** । ततः शतगुणानन्दो **बृहस्पतेः** । ततः शतगुणानन्दः **प्रजापतेः** । ततः शतगुणानन्दो **हिरण्यगर्भस्य ब्रह्मणः** । त्रिविधपरिच्छेदरहितस्य ब्रह्मणस्त्वानन्दो निरतिशयः तारतम्यरहितः। न तत्र दुःखलेशोऽप्यस्ति। इत्थं प्राप्तव्यस्यानन्दस्य क्रमस्तै**त्तिरीयोपनिषदि** ब्रह्मवल्ल्यामष्टमानुवाके वर्णितः। सार्वभौमादिब्रह्मान्तमानन्दमेकान्तवासी अकामहतः श्रोत्रियोऽनवरतमनुभवति। अतः एकान्ते सुखमस्ति । दारापत्यधनासङ्गस्तु सदा दुःखप्रद एवेति भर्च्छेर्निधारयामास ।

(आ. २३४-२३७) **स्त्रीसङ्गजदुःखवर्णनम्**—

(२३४) **स्त्रीसङ्गो दुःखहेतुः**—यस्य पूर्वपापवशात्कुरूपिणी दुर्भाषिणी च स्त्री प्राप्ता तस्य हृदयं सदा दुःखाक्रान्तमेवास्ते । निर्विण्णहृदयः स एवं मन्यते—स्त्रीरूपमिदं पिण्डं मूत्रपुरीषाद्यनेकाशुचिपदार्थपरिपूर्णं भाण्डम् । भगवन् ! कस्य वा मम पापस्य शिक्षणायेयं भवता मे दत्ता । महिषस्य महिष्यामिव, पिशाचस्य पिशाच्यामिव, उष्ट्रस्योष्ट्र्यामिव, गर्दभस्य गर्दभ्यामिव मनुष्यस्यापि तिर्यगादेरिव सर्वाशुचिनिधानायां स्त्रियां मोहो जायते । वैराग्यमन्तरा व्यभिचारादिदोषरहितायाः स्त्रियाः परित्यागे महान् दोषः अस्या मम स्त्रियाः कुत्सितमिदं रूपं दुर्भाषणं च मम पूर्वकर्मानुसारेण प्राप्तम्। इत्येवमहर्निशं क्लेशमनुभवति कुरूपिणीपतिः ।

यदि पुनर्भार्या रूपवती मधुरभाषिणी च दैववशाद्भवति तदा सा कुरूपिणीमपेक्ष्याप्यधिकदुःखहेतुर्भवति । काञ्चनप्रतिमावत्कान्ता भार्या तु प्रेम्णा पुरुषं निर्जित्य, तं कामैकपरायणं, धर्माद्यनुष्ठानपराङ्मुखं च कृत्वा परमपुरुषार्थाभागिनमेव विदधाति ।

---

१. पितृलोकेषु चिरकालं ये वसन्ति, अग्निष्वात्तादयस्ते **पितरः** ।

२. कल्पारम्भ एव ये देवत्वं प्राप्तास्ते **आजानदेवाः** ।

३. अस्मिन् कल्पे अश्वमेधादिक्रत्वनुष्ठानेन प्राप्तानन्तैश्वर्याः आजानदेवैरुपास्यमाना ये ते **कर्मदेवाः** ।

४. यमाग्निवायुसूर्यचन्द्रादिप्रधानदेवाः **मुख्यदेवाः** । केचित्तु यमादिहिरण्यगर्भान्तदेवान्, अष्टौ वसून्, द्वादशादित्यान्, एकादश रुद्रानित्येवमेकत्रिंशद्देवांश्च मुख्यदेवानाहुः ।

(२३५) **स्त्रीसङ्गाद्धननाशः**—स्त्रियां कामपराधीनः पुरुषः तस्याः विषसंसृष्टमधुवदापातमधुरमालापं श्रुत्वा व्यामुग्धचित्तः कामान्धः स्वप्नेऽपि तामेव स्मरन्निरुद्यमो न धनाद्यर्जनाय यतते। गृहे वा बहिर्वा यत् धनाभरणवस्त्रादिकं लभ्यते तत्सर्वं स्वेष्टदेवतायै भार्यायै समर्पयति भक्तिपूर्वकम्। सन्मार्गप्रदर्शकमातापितृगुर्वादीन् न मनसाऽपि स्मरति। स्त्रीरूपः कर्षकः पुरुषरूपं लुलायं मोहमय्या नासारज्ज्वा सुदृढं बध्वाऽऽकृष्येतस्ततश्चालयति।

(२३६) **स्त्रीसङ्गाद्धर्मनाशः**—पञ्जरबद्धः शुको यथा विना विवेकं शुभाशुभानि वचनान्यनुवदति, तथैव कामी पुरुषो धर्माधर्मावजानन् कान्तोपदेशमनु मातापित्रादीन् गुरूनधिक्षिपति। यथा च बर्हीं बर्हिण्याः पुरतो बहुधा केकालापपूर्वकं ताण्डवं कुर्वंस्तां तोषयति, तथैव कामातुरः कामिनीवचनमलङ्घयन् नानावेषधारणेन नटंस्तामाह्लादयति। कामी विवेकाद्धीयते। धर्माद् भ्रष्टो भवति च। मद्यपो यथा मद्यदुर्गन्धमविगणयन् भ्रान्तो वीथ्यां नष्टसंज्ञो भ्रमति, तथा कामान्धौ स्त्रीपुमांसौ विवसनौ अत्यन्तामङ्गलमशुचि मलिनं च देहमन्योन्यं गाढमालिङ्ग्य निर्लज्जौ लुठतः। काममदः संस्कृतमतीनामपि विवेकिनामपि बुद्धिं क्षणेन मलिनयति। अत एवाधीतिशास्त्रा अपि कामपरवशाः स्त्रीपुरुषाः स्वकीयपरकीयत्वगम्यागम्यत्वादिव्यवस्थामन्तरा धर्माधर्मविवेकविकलाः परस्परं रमन्ते। एवं कामपरवशता पुरुषं वा स्त्रियं वा धर्माधर्मविवेकात् प्रच्याव्यानेकानर्थप्रदान्यशुभानि कर्माणि कारयति। एवं स्त्रीव्यक्तिः कामाभिवर्धनेन पुरुषबुद्धिमोहनद्वारा नानाविधदुष्कृताचरणद्वारा च नानादुःखनिदानमिति विचार्य विवेकिनो मुनयः स्त्र्यादिविषयेभ्यो विरक्ता एकान्ते रमन्ते।

(२३७) **स्त्रीसङ्गाद्बिन्दुनाशः**—प्राणिभिः प्रतिदिनं भुज्यमानान्नपानादिरसपरिणामो बिन्दुः। स एव रेतः इति चरमधातुरिति चोच्यते। सर्वप्राणिनां स एव जीवनाधारः। विवेकी पुरुषो वृथा बिन्दुक्षयमकुर्वन् महते श्रेयसे कल्पते। सम्यक् संरक्षितो बिन्दुः प्राणिनामोजस्तेजो वीर्यं बलं चाधत्ते। येन बिन्दुः संरक्षितस्तस्य देहो रोगजराद्यनभिभूतः पुष्ट्या कान्त्या च विराजते। तस्येन्द्रियाणि पटुतराणि वशीकृतानि च भवन्ति। मनश्च शोकमोहाद्यनभिभूतं सदा प्रसन्नमेकाग्रमन्तर्मुखं च भवति। दीपस्तैलेनेव पुरुषो बिन्दुना ओजस्वी तेजस्वी बलिष्ठश्च विराजते। यो जितेन्द्रियः स्वप्नेऽप्यस्खलितबिन्दुः स

बलारोग्यादिमान् प्रसन्नेन्द्रियमनाः शुभकर्माण्याचरन् क्रमेण लब्धात्मतत्त्वज्ञानः संसारभयाद्विमुच्यते। योगिनः सिद्धाश्च बिन्दुसंरक्षणबलेनैव खेचरीमुद्राभ्यासादिनाऽणिमादिसिद्धिमूर्ध्वरेतस्त्वं श्रैष्ठ्यं चाभजन्त।

बिन्दुक्षय एव सर्वानर्थनिदानम्। योषित एव बिन्दुक्षयकारणम्। यथा गुडकाङ्क्षिणो मानवाः इक्षुदण्डं यन्त्रे निष्पीड्य तद्रसं गृहीत्वा निस्सारमिक्षुदण्डं दूरे क्षिपन्ति, तथैव रतिकाङ्क्षिण्यो महिलाः कामातुरं पुरुषं स्वभुजाभ्यां भृशमापीड्य तदङ्गनिस्सृतं वीर्यं गृहीत्वा क्षीणवीर्यं तं दूरतः परित्यजन्ति। सर्वोत्तममिमं बिन्दुं कामपरवशा मूढाः क्षणमात्रसुखलवलिप्सया मत्ताङ्गनासु विनियोज्य क्रमेण क्षीणबिन्दवः कतिपयैरेव दिवसैर्लुप्तदेहेन्द्रियमनोवीर्या दुर्बला नानारोगाभिभूता निस्तेजसो भवन्ति। निर्वीर्यः पुरुषो भृशं परिभूयते च स्त्रीभिः। तथापि कामान्धोऽयं पुनरपि रिरंसया तामेवानुधावति। सा तु तं तृणायापि न मन्यते। मदिरेक्षणाः कामिन्यः पण्डितमपि विवेकिनमपि धीरमपि पुरुषं क्षणेन स्वकटाक्षविशिखैः स्ववशतां नयन्ति। काममोहितः पुरुषः प्रज्ञया विहीनः कार्याकार्यविवेकविकलः श्रेयोमार्गाच्च्यवते। सर्वथा स्त्रीषु सङ्गो धर्मादिसकलपुरुषार्थनाशनिदानमेव। यस्य तु जन्मान्तरीयसुकृतपरिपाकवशाद्विवेक उदेति स सामयक्षणिकसुखलवकारणीभूतस्त्र्यादिविषयविमुखः कान्ताकटाक्षविशिखानलदग्धमात्मानं गुरुकृपाकटाक्षामृतरसेनाप्याययति। गुर्वनुग्रहबलात्क्रमेणोत्पन्नात्मतत्त्वसाक्षात्कारो नित्यनिरतिशयाखण्डात्मानन्दमनुभवति, दुरन्तात्संसारदुःखान्निर्मुक्तश्च भवति।

(२३८) **पुत्रसङ्गजदुःखवर्णनम्**—यथा भार्या तथा पुत्रोऽपि दुःखहेतुः। अनुत्पन्नपुत्रस्य तदभावप्रयुक्तदुःखमेकमेव। उत्पन्नपुत्रस्य दुःखं तु नानाप्रकारम्। तथाहि—स्त्रियो गर्भधारणाभावे दंपत्योरहोरात्रं तदेक-

---

१. "कपालकुहरे जिह्वा प्रविष्टा विपरीतगा।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी॥
न पीड्यते स रोगेण न च लिप्येत कर्मणा।
बाध्यते न च कालेन यो मुद्रां वेत्ति खेचरीम्॥
चित्तं चरति खे यस्माज्जिह्वा चरति खे गता।
तेनैषा खेचरी नाम मुद्रा सिद्धैर्निषेविता॥
यावद्बिन्दुः स्थिरो देहे तावन्मृत्युभयं कुतः।
यावद्बद्धा च सा मुद्रा तावद्बिन्दुर्न गच्छति॥" (काशीखण्डे ४० अध्याये)

चिन्तया दुःखम्। दैववशाद्गर्भधारणे सति विना दुरितं प्रसवविषयिणी चिन्ता। जायमानस्यापत्यस्य स्त्रीत्वपुत्रत्वविषयिणी चिन्ता। गर्भविच्छेदहेतोरानन्त्यादसंपूर्णेषु मासेषु स्रावादिदोषं विना दशमे मासि सुखप्रसूतिविषयिणी चिन्ता। प्रसूतिसमये मातुर्जीवितविषयिणी चिन्ता। जातस्य शिशोर्विना बालारिष्टादिकं जीवनविषयिणी चिन्ता। जातशिशोर्नवानामपि ग्रहाणामानुकूल्यस्य लोके दुर्लभतरत्वात् द्वित्राणां ग्रहाणां विषमगतिं श्रुत्वा दम्पत्योरहोरात्रं चिन्ता। जातश्च शिशुः स्तन्यं चेन्न पिबति तदाऽश्रुवृष्टिरेव दंपत्योर्भवति। ईदृक्चिन्तया सहैव कतिपयमासेषु गतेषु दन्तोत्पत्तिदशायां केषाञ्चिच्छिशूनां बालारिष्टवशान्मरणं श्रुत्वा मातापितृभ्यां व्यसनमनुभूयते। व्याध्यादिना कृशीभूते शिशौ चतुष्पथेषु पीडानिवृत्त्यर्थं बलिहरणं कुर्वन्ति। तत्सौख्यार्थं चण्डालो वा पुल्कसो वाऽन्त्यजो वा म्लेच्छो वा अत्यन्तापशदो वा भवतु यः कश्चन मान्त्रिको, भिषग्वा तेन मन्त्रयन्ति भिषज्यन्ति च। तदर्थमधीरा भूत्वा म्लेच्छाद्याराधितदेवता अपि प्रणमन्ति। असंभाष्येण सह पुत्रवात्सल्येन स्नेहं कुर्वन्ति। भैरवाद्यनेकदेवतोद्देशेन स्वप्रार्थनासिद्ध्यर्थं श्मशानभूमौ बलिं निक्षिपन्ति। स्वस्य गृहे देवता अपि देवलकेन ढक्कां नादयित्वा साञ्जलिपुटं पूजयन्ति। क्षुद्ररक्षाबन्धनयन्त्रघुटिकादीन् शिशोः कण्ठे धारयन्ति। परमेश्वरात् नारायणाद्वा परं दैवं स्वप्नेऽप्यस्मरन्तोऽपि पुत्राद्यर्थं कुलटा स्त्रीव तत्र तत्र नानादेवता भजन्ते। मसूरिकादिदर्शने मातापित्रादयः सर्वे वृथा मनः क्लेशयन्तो मङ्गलस्नानादिकं वर्जयन्ति। मसूरिकाशान्त्यर्थं तद्देवतावाहनभूतं गर्दभमाराधयन्ति देवताबुद्ध्या।

इत्थं महता प्रयासेन शिशुसंरक्षणं कुर्वन्तौ मातापितरौ शिशोर्यौवनपर्यन्तं दुरन्तां चिन्तां वहतः। शैशवेऽत्यन्तं क्रीडासक्तान् बालांस्ततः प्रतिनिवर्त्य विद्यायां प्रवर्तने प्रतिदिनं महद् दुःखं जायते पित्रोः। पाठशालायां बालान्तरैः कलहायमानाः स्वयमन्यांस्ताडयन्तोऽन्यैस्ताड्यमानाश्च पुत्राः पित्रोर्दुःखहेतवो भवन्ति। प्राचीनसंस्कारवशाद्विद्याग्रहणापाटवे, ग्रहणपाटवे सत्यपि प्रवचनपटुताभावे, प्रवचनपटुतायामपि पुत्राणां द्यूतादिदुर्व्यापारासक्तावसह्यं दुःखं पित्रोः। ततो यौवनातिक्रमादर्वागेव पुत्राणां विवाहसंपत्तिविषये चिन्ता। कुलशीलादिसंपन्नवधूप्राप्तिविषयिणी महती चिन्ता। पुत्रादिविवाहार्थं धनाद्यर्जने महान् क्लेशः। इत्थं यौवनावधि मातापित्रोः पुत्र-

विषयिण्यनवधिका चिन्ता । दैवज्ञमुखात्पुत्रस्याल्पायुष्ट्वं श्रुत्वाऽपमृत्युपरिहारायानेकोपायानाचरन्ति । भाग्यमान्द्याद्यदि सुतो म्रियते तदा मातापितरावुरसि शिरसि च ताडयन्तौ यावज्जीवं रुदितः । बालारिष्टादिभ्य उत्तीर्णः पुत्रो यदा कृतदारो भवति तदा दुःशिक्षितः पुत्रः स्वदारापत्यादीनेवात्यादरेण, पोषयति, न तु महता क्लेशेन संरक्षितवन्तौ पितरौ । भार्यातद्बन्धुजनाधीनः पितरावधिक्षिपति च मर्मभेदिभिर्निन्दावचनैः । दुष्कृतफलभूतोऽसत्पुत्रः पित्रोपार्जितं प्रभूतं धनं सर्वोपकरणानि च बलादादाय, पितरौ शरीरमात्रावशेषितौ गृहेऽवस्थाप्य स्वदारापत्यादिभिः सहान्यत्र गत्वा सुखं वसति । महता क्लेशेन संवर्धितवतोः पित्रोरन्नपाने अपि न कल्पयति । प्रत्युत पित्रोरुपकुर्वन्तं दयालुं शपत्यपि । इत्थं पापिनं पुत्रं प्राप्य पितरौ दीर्घं निश्श्वसितः । इत्थं पुत्रवताऽनुभूयमानं महद् दुःखं नापुत्रस्यास्ति । एवं सर्वदुःखनिदानं जायापुत्रादिकं ज्ञात्वा विवेकिनो दारेषणायाः पुत्रेषणायाश्च व्युत्तिष्ठन्ति । महतः सुकृतस्य फलभूतः, पितरौ देवताबुद्ध्या समाराधयन् सत्पुत्रस्तु दुर्लभतरः ।

(२३९) **धनसङ्गजदुःखम्**—दारापत्यादिकं परित्यज्य धनमेव काङ्क्षतो महत्तरं दुःखम् । धनं ह्यर्जने, व्यये, रक्षणे, हानौ च दुःखमेव

---

१. "अर्थस्य साधने सिद्धे उत्कर्षे रक्षणे व्यये ।
नाशोपभोग आयासस्त्रासश्चिन्ता भ्रमो नृणाम् ॥ (भा. 11-23-17)
स्तेयं हिंसाऽनृतं दम्भः कामः क्रोधः स्मयो मदः ।
भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च ॥ (भा. 11-23-18)
एते पञ्चदशानर्था ह्यर्थमूला मता नृणाम् ।
तस्मादर्थमनर्थाख्यं श्रेयोऽर्थी दूरतस्त्यजेत् ॥ (भा. 11-23-19)
भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा ।
एकाऽऽस्निग्धाः काकणिना सद्यः सर्वेऽरयः कृताः ॥ (11-23-20)
अर्थेनाल्पीयसाप्येते संरब्धा दीप्तमन्यवः ।
त्यजन्त्यसून् मिथो घ्नन्ति सहसोत्सृज्य सौहृदम् ॥ (भा. 11-23-21)
लब्ध्वा जन्मामरप्रार्थ्यं मानुष्यं तद्द्विजाग्र्यताम् ।
तदनादृत्य ये स्वार्थं घ्नन्ति यान्त्यशुभां गतिम् ॥ (भा. 11-23-22)
स्वर्गापवर्गयोर्द्वारं प्राप्य लोकमिमं पुमान् ।
द्रविणे कोऽनुषज्येत मर्त्योऽनर्थस्य धामनि ॥ (भा. 11-23-23)
कस्मात् संक्लिश्यते विद्वान् व्यर्थयाऽर्थेहयाऽसकृत् ।
कस्यचिन्मायया नूनं लोकोऽयं सुविमोहितः (भा. 11-23-26)

इति श्रीमद्भागवते एकादशस्कन्धे त्रयोविंशाध्याये भिक्षुगीतायामुक्तम् ।

विधत्ते। अनवधिकधनार्जनासक्तः पुरुषो निरवधिकान् पापानाचरति। नानानर्थभाजनं च भवति। धनसंपादनप्रवृत्तो जातिकुलधर्मांस्त्यजति। नानाघोरकर्मणा धनार्जने प्रवृत्तोऽपि स्वपूर्वादृष्टायत्तमेव धनं लभते, नाधिकम्। व्यये सति धनं क्षीयेतेति भीत्या न स्वभोगायापीषदपि धनव्ययं करोति। किन्तु महान्तं क्लेशमनुभवन्नानाकुमार्गैस्तद्धनं वर्धयन्नेव म्रियते। स्वभोगाय वा परोपकाराय वा विनियोगेऽसति यदि दैववशाद्धनं नश्यति तदाऽपारे शोकसागरे निमज्जति। इत्थं धनमनन्तदुःखकारणं भवति।

इत्थं सुनिपुणं विचार्य भर्च्छुः दारापत्यधनाद्यभिमानं दूरीकृत्य वने एकाकी सन् शमदमादिसाधनाभ्यासनिरतो बभूव।

**(२४०) मृगयार्थं वनं गतो राजा भर्च्छुं दृष्ट्वा भीतः पलायते**— भर्च्छुस्थानापन्नो मन्त्री भर्च्छुवृत्तान्तं सर्वं श्रुत्वा स्वानुयायिभिः सहैवं समालोचयत्—यदि राजा 'भर्च्छुर्जीवति' इति लोकवार्तां शृणोति, अथवा मृगयार्थं वनं गत्वा स्वयमेव भर्च्छुं पश्यति तदा मिथ्यावादिनोऽस्मान् स राजा सुतीक्ष्णं दण्डयेत् इति। एवमालोच्य सपरिवारो राजानमासाद्य दस्युभिर्युद्धे मृतो भर्च्छुः पिशाचो भूत्वा भस्मोद्धूलितसर्वाङ्गो वने सञ्चरति। स्वदृष्टिगोचरापन्नं सर्वं जनं मारयति। यस्तं दृष्ट्वा सुदूरं पलायते स जीवेत्' इति विज्ञापयामास। मन्त्रिवाक्यश्रवणमात्रेण राजा तत्त्वमविचारयन्, मृतो भर्च्छुः पिशाचः समभवत्' इति निश्चिकाय। ततः कदाचिदाखेटार्थं गतो भर्च्छुवनं प्रविवेश। तत्र तरुमूले तपश्चरन्तं भर्च्छुं दृष्ट्वा प्रतारकमन्त्रिवाक्यं स्मरन् 'नूनमयं भर्च्छुः पिशाचः' इति भयेन पलायितः।

---

**अयमर्थः**—अर्थस्य संपादने वर्धने चातिदुःखम्। रक्षणे महद् दुःखम्। व्यये भोगे च महती चिन्ता। नाशे चित्तभ्रान्तिः। अर्थप्राप्तये स्तेयादयः षडनर्थाः। प्राप्तेऽर्थे स्मयादयः षडनर्थास्त्रिविधव्यसनैः सह नवानर्थाः। तस्मादेकोऽप्यर्थः पञ्चदशानर्थानां निदानं भवति। व्यसनानि=स्त्रीद्यूतमद्यविषयाणि त्रीणि।

एकास्निग्धाः=एके=एकप्राणाः, ते च ते आस्निग्धाश्चातिप्रिया इत्यर्थः। काकणिरित्यार्षं पुंस्त्वम्। (काकिणी) काकणिः=विंशतिवराटिकाः। "वराटकानां दशकद्वयं यत् सा काकिणी" इति लीलावत्याम् संरब्धाः=क्षुभिताः। मिथः=परस्परम्। स्पृधः इति पाठे स्पर्धमाना इत्यर्थः। न केवलमिहैवानर्थहेतुरर्थः परलोकेऽपीत्याह=लब्ध्वेत्यादिना। तत् मानुष्यं जन्मेति संबन्धः। द्विजाग्र्यतां=ब्राह्मण्यम्। स्वार्थं घ्नन्ति=स्वहितं नाचरन्ति। लोकम्=देहम्।

(२४१) **भच्छुदृष्टान्तस्य प्रकृतेन योजनम्**—प्रतारकमन्त्रिवाक्यं सत्यत्वेन गृह्णन् राजा वने जीवन्तं भच्छुं स्वचक्षुषा पश्यन्नपि प्रतारकस्य मिथ्यावाक्ये विश्वासेन भच्छुं पिशाचमेव मन्यमानो यथा सुदूरं प्राद्रवत्, तथा द्वैतिनां भेदवादे विश्वसन्नपरिपक्वमतिरज्ञानी "तत्त्वमसि" इति गुरूपदिष्टमहावाक्यजन्यसाक्षात्काररूपब्रह्मात्मैक्याकारान्तःकरणवृत्त्युदयेऽपि भेदवादिनो मिथ्यावाक्यविश्वासेन महत्तरं दुःखमेवानुभवेत्। न तस्य कदापि ब्रह्मात्मैक्यसाक्षात्कारो भवेत्। भेदवादमसत्यतया गृह्णतो जिज्ञासोरेव महावाक्याद्ब्रह्मात्मैकत्वसाक्षात्कारो भवेत्। तस्मादवैदिकत्वाद्भेदवादो मिथ्या, न परमपुरुषार्थसाधकः इति निश्चित्य तत्र विश्वासो दूरीकर्तव्यः।

(२४२) **मिथ्यासंसारदुःखं मिथ्योपायेन निवर्तेतेत्येतदुपपादनाय काचन कथा**—यदुक्तं गुरुवेदान्तादयो मिथ्या। कथं ते संसारदुःखनिवर्तनक्षमा इति, तत्रोच्यते—संसारदुःखं मिथ्या। तस्मान्मिथ्योपायेन तन्निवर्तेत; समसत्ताकयोर्निवर्त्यनिवर्तकभावदर्शनात्। गुरुवेदान्तादयो यदि सत्यास्तर्हि तैर्मिथ्यासंसारदुःखं न निवर्तेत। अत्र कश्चन दृष्टान्तो वर्ण्यते—देवेन्द्रवत्पराक्रमशाली सार्वभौमः कश्चनासीत्। स कदाचित् निशितकृपाणपाणिभिरहर्निशमनिद्रैर्जागरूकैः रक्षिभिर्गुप्ते हर्म्यतले पुष्पास्तीर्णे मञ्चे रात्रौ शयानः स्वप्नमेवमपश्यत्—जम्बुकः कश्चन तस्य पादमेकं मुखेनाग्रहीत्। पादविधूनेन जम्बुकमपसारयितुं न राजा शशाक। क्रोशमानस्यापि राज्ञः साहाय्यार्थं न कश्चिदपि सौविदल्ल आजगाम। ततः स स्वयमेवोत्थाय लगुडेन जम्बुकं मस्तकेऽताडयत्। स सृगालः पलायितः। परन्तु स्वप्ने जम्बुकदष्टे पादे महती व्यथाऽभवत्। व्यथामसहमानो राजा दण्डावलंबनो मन्दं मन्दं भिषजः कस्यचिद्गृहं गत्वा तं क्षतविरोपणक्षममौषधमयाचत। स च भिषक् हस्तगतमौषधमिदानीं नास्ति। यदि दीयते धनं तद्यौषधं संपाद्य दद्यामित्यवोचत्। वैद्यस्य वचनं श्रुत्वा राजा स्वहस्ते तदानीं वराटिकाया अप्यभावाद्दीनदीनः प्रतिनिवर्तमानो मनस्येवमचिन्तयत्—'यद्यहं धनी स्यां तदायं भिषक् मम गृहं पुनः पुनरागच्छेत्। दरिद्रोऽयं, न मेऽस्त्यनेन प्रयोजनमिति मत्वा हि नायं मे औषधमदात्। नास्त्यपराधोऽस्मिन्, प्रति प्रयोजनमन्तरा न कोऽपि कस्मैचिदप्युपकरोति। मातापितृदारापत्यादयः सर्वेऽपि स्वात्मनः कामायैवान्यत्र प्रीतिमावहन्ति। प्रयोजनाभावे न ते चक्षुषाऽपि वीक्षेरन्। यस्य वियोगं

क्षणार्धमपि सोढुं ये न शेकुः, यस्य क्षणमात्रवियोगेनाप्यतिदुःखमन्वभवन्, विप्रोष्यागतं यं दर्शमात्रेण समालिलिङ्गुः, स एव यदि दुर्दैववशात् कुष्ठी भवति, तदा तं, त एव भार्यापुत्रादयः, नानेनेतः परं प्रयोजनमिति निश्चिन्वन्तः रूक्षवचनैर्विनिन्दन्ति । 'अरे पाप किमद्यापि जीवसि, न म्रियसे, परित्यज प्राणान्' इति कटु भाषन्ते । चक्षुषापि तं द्रष्टुं नेच्छन्ति, दृष्ट्वा जुगुप्सन्ते च । पतिव्रतापि भार्या दूरतः स्थित्वा तदङ्गगतमक्षिकादीन् निस्सारयति । यमुत्सङ्गे निवेश्य लालनपूर्वकं पुपुषतुर्मातापितरौ तावपि तदपेक्षितं दत्वा दूरं निस्सरतः । अन्ये बान्धवाः पराङ्मुखा भवन्ति । एवं सर्वो लोकः स्वात्मप्रयोजनायैवान्यमाश्रयन्ति । अयमपि भिषक् निर्धनोऽहमिति निश्चित्य न मे औषधमदात्' इति । चिन्तयन्नेव राजा वैद्यगृहात्प्रतिनिवृत्तः । तत्र मध्ये मार्गं कञ्चन परिव्राजकमपश्यत् । स च राज्ञे किमप्यौषधमदात् । तदुपयोगेन राज्ञो निश्शेषतया व्रणविरोपणमभवत् । एवं स्वप्नं पश्यत एव राज्ञो निद्राक्षयोऽभूत् । राजा प्रबोधमवाप । जाग्रता तेन न सृगालः, न तेन कृतं पादक्षतं, न दुःखं, न परिव्राजकः, नौषधं वा किञ्चिदपि दृष्टम् । एवं दृष्टान्तभूतां कथामुक्त्वा गुरुराह—'हे शिष्य! अनेन दृष्टान्तेनैवं विजानीहि—अनृतेनैवानृतं निवर्तेत । राज्ञो मिथ्यादुःखे सञ्जाते न सत्यं (व्यावहारिकं) किञ्चिदपि वस्तु तद्दुःखनिवृत्तये प्रबभूव । एवमनृतेनैव गुरुवेदान्तादिरूपसाधनेनानृतं संसारदुःखं निश्शेषं निवर्तेत' ।

**(२४३) दृष्टान्तसमन्वयपूर्वकं मिथ्यासंसारदुःखस्य मिथ्यागुरुवेदान्तादिसाधनेन निवृत्त्युपपादनम्—**

पूर्वोक्तदृष्टान्तस्यायमभिप्रायः—संसारदुःखं मिथ्या । तस्मात्तन्निवर्तकगुरुवेदान्तादिसाधनेनापि मिथ्याभूतेन भाव्यम् । मिथ्यावस्तुनिरसने सत्यसाधनापेक्षा नास्ति । सत्यसाधनेन न मिथ्यावस्तु नश्यति । पूर्वोक्तदृष्टान्ते राज्ञः शयनगृहं प्रविष्टो मिथ्यासृगालो न सत्यदौवारिकेन निवारितः । राजसकाशे सत्स्वप्यनेकेषु सत्यायुधेषु तैरनिवारितः मिथ्यासृगालो मिथ्यालगुडेनैव ताडितः पलायितः । राज्ञो मिथ्याव्रणमभूत् । तद्व्रणं न सत्यवैद्येन चिकित्सितः, किन्तु मिथ्यापरिव्राजकेन । राज्ञो मिथ्यादुःखं, तत्कारणं मिथ्यासृगालं च दूरीकर्तुं न किञ्चिदपि सत्यसाधनमुपयुक्तमभवत् । ईदृशः स्वप्नः सर्वसाधारण एव । जाग्रत्कालीनोपकरणानि कदाचिदपि कस्यचिदपि न स्वप्ने

उपयुज्यन्ते। एवं मिथ्याभूतं संसारदुःखं मिथ्यागुरुवेदान्तादिसाधनेन नश्येत्। न मिथ्यासंसारः स्वनिवर्तनाय सत्यगुरुवेदान्तादि साधनमपेक्षते।

**(२४४) मरीचिकोदकेन पिपासानिवृत्तिर्भवत्विति शङ्का। सत्तावैषम्यात्तत्परिहारश्च—**

ननु मिथ्यामरीच्युदकेन न पिपासोपशमो भवति। तथा मिथ्यागुरुवेदान्तादिनापि न संसारदुःखनाशोऽपि स्यात्। यदि स्यात्तर्हि मरीचिकोदकेनापि पिपासोशमोऽपि भवेत्। न तु तथाऽनुभूयते इति चेन्न। दृष्टान्तस्य वैषम्यात्। प्रातिभासिकमरीच्युदकेन व्यावहारिकपिपासोपशमाभावेऽपि व्यावहारिकगुरुवेदान्तादिसाधनेन व्यावहारिकसंसारदुःखनिवृत्तिः संभवेदेव। मरीचिकोदकापिपासयोः सत्तावैषम्यात्, गुरुवेदान्तादिसाधनस्य संसारदुःखस्य च समानसत्ताकत्वाच्च दृष्टान्तवैषम्यं बोध्यम्।

**(२४५) समसत्ताकयोः परस्परं साधकता बाधकता च—**

संसारदुःखस्य गुरुवेदान्तादीनां च समाना सत्ताऽस्ति। तस्माद्गुरूपदेशेन वेदान्तवाक्यैश्च संसारदुःखक्षयो युज्यते। ययोः परस्परं सत्ता समाना तयोरेव परस्परं साधकता वा बाधकता वा भवति। तद्यथा—मृदो घटस्य च सत्ता समाना। तस्मान्मृद् घटस्य साधिका। वह्नेः काष्ठस्य च सत्ता समाना। अतो वह्निः काष्ठस्य बाधको भवति। साधकं=कारणम्। बाधकं=नाशकम्। मरीचिकोदकस्य पिपासायाश्च सत्ता न समाना। अतो मरीचिकोदकं न पिपासाया बाधकम्। मरीचिकोदकं पिपासां न निवर्तयतीति यावत्। अत्रेदमाकूतम्—चैतन्ये पारमार्थिकी सत्ताऽस्ति। चैतन्यभिन्नेषु मिथ्यापदार्थेषु व्यावहारिकी वा प्रातिभासिकी वा सत्ताऽस्ति।

---

(१३) **अत्रैवं शङ्का** भवेत्—समसत्ताकयोरेव परस्परं साधकबाधकभाव इति नियमो नास्ति; यतो विषमसत्ताकयोरपि क्वचित्साधकबाधकभावो दृश्यते। तथाहि—सर्वत्राधिष्ठानस्य सत्तापेक्षया आरोप्यस्य **सत्ता विषमैव**। अथाप्यारोप्यस्याधिष्ठानं **साधकं** भवति। कल्पितरजतस्याधिष्ठानं शुक्तिः। शुक्तेः सत्ता व्यावहारिकी। कल्पितरजतस्य सत्ता प्रातिभासिकी। तादृशरजतस्य साधकत्वं (कारणत्वं) शुक्तावस्ति। **किञ्च** जगतोऽधिष्ठानं ब्रह्म। ब्रह्मणि पारमार्थिकी सत्ताऽस्ति। जगति तु व्यावहारिकी सत्ता। व्यावहारिकसत्ताकजगतः साधकत्वं ब्रह्मण्यस्ति। तस्माद्विषमसत्ताकमपि साधकं भवति।

**अपि** चान्तःकरणवृत्तिरूपशुक्तियाथार्थ्यज्ञानेन रजततज्ज्ञानयोर्बाधो भवति। तत्र रजततज्ज्ञानयोः सत्ता प्रातिभासिकी। शुक्तियाथार्थ्यज्ञानस्य तु सत्ता व्यावहारिकी। अतश्च

(आ. २४६-२४८) व्यावहारिकप्रातिभासिकपारमार्थिकसत्तानां वर्णनम्—

(२४६) व्यावहारिकसत्ता—

यस्य पदार्थस्य ब्रह्मज्ञानमन्तरा न बाधः, किन्तु ब्रह्मज्ञानेनैव बाधो भवति तस्य व्यावहारिकसत्तावत्वेन व्यपदेशः। ब्रह्मज्ञानेतराबध्यत्वे सति ब्रह्मज्ञानमात्रबाध्यत्वं व्यावहारिकसत्वमिति यावत्। सा च सतेश्वरसृष्टपदार्थेष्वस्ति। यतो देहेन्द्रियादिप्रपञ्चरूपेश्वरसृष्टेर्ब्रह्मज्ञानमन्तरा न बाधो भवति, किन्तु ब्रह्मज्ञानेनैव भवति। तस्मादीश्वरसृष्टपदार्था व्यावहारिसत्ताका इति ज्ञेयम्। **बाधो** नामापरोक्षमिथ्यात्वनिश्चयः। तथा चोक्तं पञ्चदश्याम्—

"नाप्रतीतिस्तयोर्बाधः किन्तु मिथ्यात्वनिश्चयः।
नो चेत्सुषुप्तिमूर्च्छादौ मुच्येतायत्नतो जनः॥ (चि. 13.)
परमात्मावशेषो हि तत्सत्यत्वविनिश्चयः।
न जगद्विस्मृतिर्नो चेज्जीवन्मुक्तिर्न संभवेत्॥ (चि. 14.)

अयं चापरोक्षमिथ्यात्वनिश्चय ईश्वरसृष्टपदार्थेषु ब्रह्मज्ञानात्प्राङ् न कस्यचिदपि भवति। किन्तु ब्रह्मज्ञानादनन्तरमेव तादृशनिश्चयो भवति। अतो मूला-

---

विषमसत्ताकमपि **बाधकं** भवति। तथा च विषमसत्ताकयोः परस्परं साधकबाधकभावो नास्तीति नियमोऽसङ्गत एव। इति।

**अत्रैवं समाधानं** भवति—केवला शुक्तिर्न रजतस्याधिष्ठानं, न वा केवलं ब्रह्म जगतोऽधिष्ठानम् (विवर्तोपादानकारणम्)। किन्तु तूलाविद्यासहिता शुक्तिः रजतकल्पनाधिष्ठानं, मूलाविद्यासहितं ब्रह्म जगत्कल्पनाधिष्ठानम्। क्वचिद्विशेषणगतधर्मा विशिष्टेऽपि व्यवह्रियन्ते। अनेन नियमेन प्रातिभासिकतूलाविद्यासहिता शुक्तिः, अथवा शुक्त्यवच्छिन्नचैतन्यं प्रातिभासिकमिति वर्ण्यते। व्यावहारिकमूलाऽविद्यावच्छिन्नं ब्रह्मचैतन्यं व्यावहारिकमित्यप्यभिधीयते। यद्यप्यविद्या उपाधिरेव। न विशेषणं, **अथापि** अविवेकिदृष्टौ विशेषणवदुपलभ्यमानत्वाद्विशेषणमिति व्यवह्रियते। अत एवाविद्याधर्मभूतप्रातिभासिक सत्ता व्यावहारिकसत्ता वा तद्विशेष्य (आश्रय) भूतशुक्तौ ब्रह्मणि वा व्यवह्रियते। तस्मान्नेह विषमसत्ताकं साधकं, किन्तु **समसत्ताकमेव साधकम्**।

किञ्च पञ्चपादिकाकाररीत्या मूलाऽविद्यातोऽन्या तूलाविद्या नास्ति। तस्मात्तन्निवृत्तिः शुक्तिज्ञानान्न भवति। किन्तु ब्रह्मज्ञानेनैव। परं तु व्यावहारिकान्तःकरणवृत्तिरूपशुक्तिगोचरयथार्थज्ञानेन शुक्तिनिष्ठाविद्यायास्तिरस्कारो भवति। ततस्तत्कार्यरजततज्ज्ञानयोरपि तिरस्कारो भवति। अतो **नात्र विषमसत्ताकं बाधकम्**। एतच्च प्रासङ्गानुसारि समाधानम्।

ऽविद्याकार्यजाग्रत्पदार्थात्मकेश्वरसृष्टौ **व्यावहारिकसत्ता** विद्यते। जन्ममरण बन्धमोक्षाद्यखिलव्यवहारसिद्धिप्रयोजिका सत्ता **व्यावहारिकसत्तेति** वर्ण्यते।

**(२४७) प्रातिभासिकसत्ता—**

ब्रह्मज्ञानेतरबाध्यत्व प्रातिभासिकत्वम्। तादृशं सत्वं यत्रास्ते **स प्रातिभासिकपदार्थ** इत्युच्यते। ब्रह्मज्ञानं विनैव रज्जुशुक्तिकोषरादिज्ञानेन यथाक्रमं सर्परजतोदकानां बाधदर्शनात्तेषां **प्रातिभासिकं सत्वमस्ति।** प्रातिभासिकः=प्रतीतिकालमात्रसत्ताकः। सत्ता=स्वरूपं=स्थितिः। प्रतीतिकालमात्रभाविनः पदार्थस्य **प्रातिभासिकसत्तोच्यते।** तूलाविद्याकार्यशुक्तिरजतादेः प्रतीतिकालमात्रभावित्वात् तेषां **प्रातिभासिकसत्ता** युज्यते।

**(२४८) पारमार्थिकसत्ता—**

कालत्रयाबाध्यत्वं=**पारमार्थिकसत्वम्।** चैतन्यमेकमेव न कदापि बाध्यत इति पारमार्थिकसत्ता चैतन्यस्यैव।

**(२४९) गुरुवेदान्तादेः संसारदुःखस्य चोभयोरपि व्यावहारिकसत्ताकत्वाद्गुरुवेदान्तादिना संसारदुःखनिवृत्तिर्युक्ता—**इत्थं गुरुवेदान्तादेः संसारदुःखस्य चैकैव व्यावहारिकी सत्ता। ततः समसत्ताकत्वात्तयोः मिथ्यागुरुवेदान्तादिना मिथ्यासंसारदुःखं निवर्त्यतैव। क्षुत्पिपासादिकं तु प्राणधर्मः। प्राणाः तद्धर्माश्च ब्रह्मज्ञानमन्तरा न निवर्तन्ते। अतः पिपासा व्यावहारिकसत्ताका। मरीचिकोदकं तु ब्रह्मज्ञानं विनैव मरुभूमिज्ञानेन बाध्यते। अतो मरीचिकोदकं प्रातिभासिकसत्ताकम्। मरीचिकोदकपिपासयोः समसत्ताकत्वाभावान्न मरीचिकोदकेन न पिपासोपशमो भवति। दार्ष्टान्तिके तु बाधकगुरुवेदान्तादेर्बाध्यसंसारदुःखस्य च **समाना सत्ता।** दृष्टान्ते तु

---

१. तत्वदृष्ट्या विचार्यमाणे तु अधिष्ठानरूपसाधके अधिष्ठानज्ञानरूपबाधके च समसत्ताकत्वनियमो नास्ति। तथाहि—अधिष्ठानरूपं साधकं विषमसत्ताकमेव, न क्वचिदपि समसत्ताकम्। अधिष्ठानज्ञानरूपं बाधकं तु क्वचिद्विषमसत्ताकं; यथा शुक्तिरजतस्य बाधकं शुक्तिज्ञानं, स्वाप्नजगतो बाधकं जाग्रज्ज्ञानं च बाध्यापेक्षयाऽधिकसत्ताकत्वाद्विषमसत्ताकम्। क्वचित्तु समसत्ताकमपि भवति; यथा व्यावहारिकजगतो बाधकं ब्रह्मज्ञानम्।

परं तु **मिथ्याज्ञानमेव मिथ्यावस्तुनो बाधकमिति नियमो** भवत्येव। तस्मादिहोक्तो यो नियमः स अधिष्ठानरूपसाधकमधिष्ठानज्ञानरूपबाधकं च विनाऽवशिष्टपदार्थविषयक इति ज्ञेयम्।

मरीचिकोदकपिपासयोः **विषमा सत्ता**। तस्माद्दृष्टान्तो विषमः दार्ष्टान्तिकाननुरूपः। विषमत्वं=भिन्नविषयत्वम्।

**(२५०) शुक्तिरजतादेर्ब्रह्मज्ञानमन्तरा बाध्यत्वे, संसारदुःखस्य ब्रह्मज्ञानेनैव बाध्यत्वे च विनिगमकप्रश्नः**—

ननु ब्रह्मभिन्नं निखिलं मिथ्येति पूर्वमुपदिष्टम्। तादृशमिथ्यापदार्थेषु शुक्तिरजतरज्जुसर्पमृगतृष्णिकोदकादयो ब्रह्मज्ञानमन्तरैव बाध्यन्ते, संसारदुःखं तु ब्रह्मज्ञानेनैव बाध्यते इति भेदे को हेतुः? सोऽयं संशयश्छेत्तव्य इति शिष्यो गुरुं पृच्छति।

**(२५१) यदज्ञानाद्यस्योत्पत्तिस्तज्ज्ञानात्तस्य बाध इत्युत्तरम्**—

ब्रह्मणोऽन्यस्य सर्वस्याविद्याकार्यत्वान्मिथ्यात्वं सममेव। नैवात्र द्वैते सत्यत्वगन्धोऽप्यस्ति। परं तु यदज्ञानाद्यदुत्पद्यते तज्ज्ञानेन तद्बाध्यते इति नियमः। रज्जुशुक्तिकोषराद्यज्ञानात् सर्परजतोदकादिकमुत्पन्नम्। रज्ज्वादिज्ञानेन सर्पादयो बाध्यन्ते। तथैवाद्वितीयप्रत्यगभिन्नब्रह्मणोऽज्ञानाद्विजृंभितमिदं जननमरणादिदुस्सहसंसारदुःखमप्यद्वितीयप्रत्यगभिन्नब्रह्मसाक्षात्कारेण बाध्यते।

**(आ. २५२-२८३) संसारविषयकविचारः**—

**(२५२) संसारोत्पत्तिक्रमप्रश्नः**—

---

१. घटादिनिखिलानात्मजडपदार्थोपहितचैतन्यावारिकाऽविद्या **तूलाविद्येत्युच्यते**। इयमेव **अवस्थाज्ञानमिति, सादिमलिनाविद्येति** च कथ्यते। सा च तूलाविद्या अंशभेदेन नाना भूत्वा भिन्नभिन्नपदार्थावारिका भवति। यदा यत्पदार्थाकाराऽन्तःकरणवृत्तिरुदेति तदा तत्पदार्थावारकतूलाविद्यांशो नश्यति। यदा त्वन्तःकरणवृत्तिः पदार्थान्तरमनुधावति तदा पुनरपि पूर्वपदार्थावारकः तूलाविद्याया अन्योंऽश उत्पद्यते। एतादृशतूलाविद्यांशनाशाय न ब्रह्मज्ञानापेक्षा। तस्य तूलाविद्यांशस्य प्रातिभासिकसत्ताकत्वात् घटादितत्तत्पदार्थज्ञानेनैव नाशः संभवति।

पञ्चपादिकाकृतस्त्वेवमाहुः—मूलाविद्यैव तूलाविद्या, न ततोऽतिरिक्तेति। तन्मते यथा जनसमुदायमध्येऽशनिपाते सति तदा तत्रस्था जनास्ततोऽपसरन्ति, पश्चात्तत्र पुनरपि जनाः संमिलन्ति, तथा यदा यत्पदार्थाकारा अन्तःकरणवृत्तिरुदेति तदा तत्पदार्थाकारा अविद्या ततस्तिरोभवति। यदा त्वन्तःकरणवृत्तिः पदार्थान्तराकारा भवति, तदा पुनरपि साऽविद्या पूर्वपदार्थे प्रसृता तमावृणोति। परं तु ब्रह्मज्ञानं विना न तस्या अविद्याया नाशो भवति। एवमेव स्वाप्नपदार्थानां प्रातिभासिकरज्जुसर्पादेश्चाविद्यानाशमन्तरेणैव विरोधिपदार्थान्तरज्ञानेन वा अविद्यायास्तिरोधानेन वा अविद्यायां लयरूपो नाशो वा तिरोधानं वा भवति। अत्र प्रसङ्गात्तूलाविद्यावर्णनं कृतम्।

ब्रह्माज्ञानादुत्पद्यमानः संसारः केन क्रमेणोत्पद्यते इति सुनिश्चितं वर्णनीयमिति शिष्यो गुरुं पृच्छति ।

(आ. २५३-२८३) पूर्वप्रश्नस्य गुरोरुत्तरम्—

(२५३) स्वप्नवद्विना क्रमं जगतः प्रतीतिः—

स्वाप्नपदार्थाः यथा क्रममन्तरेणाप्युत्पद्यन्ते तद्वदेव मिथ्याजगत्प्रतिभासते । मिथ्याजगतः क्रमजिज्ञासुः मरीचिकोदकावगाहनमपीच्छेत् । उपनिषत्सु जगदुत्पत्तिरनेकधा वर्णिता । जाग्रत्स्वप्नयोः सर्वथा साम्यमेव श्रूयते—"तस्य त्रय आवसथास्त्रयः स्वप्नाः" । (ऐ. 1-3.) इति । अत एव तत्र युगपत्सृष्टिरप्युक्ता । "स इमान् लोकानसृजत" (ऐ. 1-1) इति । "स इदँ सर्वमसृजत यदिदं किञ्च" (तै. ब्र. 6.) इति च । तथैव पञ्चदश्यामप्युक्तम्—

"स्वप्नेन्द्रजालसदृशमचिन्त्यरचनात्मकम् ।
दृष्टनष्टं जगत्पश्यन् कथं तत्रानुरज्यति ॥ (तृ. 171.)
स्वस्वप्नमापरोक्ष्येण दृष्ट्वा पश्यन् स्वजागरम् ।
चिन्तयेदप्रमत्तः सन्नुभावनुदिनं मुहुः ॥ (तृ. 172.)
चिरं तयोः सर्वसाम्यमनुसन्धाय जायते ।
सत्यत्वबुद्धिं संत्यज्य नानुरज्यति पूर्ववत् ॥" (तृ. 173.)
"निद्राकल्पितदेशकालविषयज्ञात्रादि सर्वं यथा
मिथ्या तद्वदिहापि जाग्रति जगत्स्वाज्ञानकार्यत्वतः ।
यस्मादेवमिदं शरीरकरणप्राणाहमाद्यप्यसत्
तस्मात्तत्वमसि प्रशान्तममलं ब्रह्माद्वयं यत्परम् ॥"
"स्वप्नेऽर्थशून्ये सृजति स्वशक्त्या
भोक्त्रादि विश्वं मन एव सर्वम्
तथैव जाग्रत्यपि नो विशेषः
तत्सर्वमेतन्मनसो विजृम्भणम् ॥"

इत्यादिना चोक्तम् ।

ननु यदि जगदुत्पत्तिरक्रमेण तर्हि किमिति तैत्तिरीयादिषु क्रम उक्त इति चेदत्रोच्यते । यदि श्रुतेः जगदुत्पत्तिविषये क्रमविवक्षा स्यात्तर्हि श्रुतिषु सृष्टिकथने वैषम्यं न स्यात् । दृश्यते तु वैषम्यम् । तथाहि छान्दोग्ये ब्रह्मणः सकाशादग्निजलपृथिवीनां क्रमेणोत्पत्तिः श्रूयते—"तदैक्षत । बहुस्यां प्रजाये-

येति । तत्तेजोऽसृजत" । (छा. 6-2-3.) इत्यादिना । तैत्तिरीये आकाशवाय्वग्निजलपृथिवीनां पञ्चभूतानां **क्रमेणो**त्पत्तिः श्रूयते—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" (तै. ब्र. 1.) इत्यादिना । क्वचिच्च परमेश्वरः सर्वमसृजदिति **क्रममन्तरै**वोत्पत्तिः श्रूयते । "इदं सर्वमसृजत" (तै. ब्र. 6.) इत्यादिना । इत्थं वेदेषु जगदुत्पत्तेर्नानाप्रकारेण **वर्णनस्यायमाशयः**—जगन्मिथ्यैव। वस्तुभूतं चेज्जगत्स्यात् तदुत्पत्तिक्रमो वेदेष्वनेकप्रकारेण नोच्येत । वस्तुनि विकल्पासंभवात् । अतश्चोपनिषदां जगदुत्पत्तिक्रमे न तात्पर्यम् । ब्रह्मणोऽद्वितीयत्ववर्णने परमतात्पर्यात्तदङ्गत्वेन जगन्निषेधस्य विवक्षितत्वान्निषेध्यत्वेनाक्षिप्तस्य जगतो यथाकथञ्चिदारोपः कर्तव्य इत्येव तात्पर्यम् । **तत्रायं दृष्टान्तः**—लीलार्थं कश्चन कृत्रिमं गजं निर्माय यन्त्रेण तमाकाशे उत्थापयति। आकाशगमनसमये तस्य गजस्य कर्णवालाद्यवयवेषु वक्रतासंपत्तौ तत्समीकरणाय स पुरुषो न प्रयतते । एवमेव ब्रह्मणोऽद्वितीयत्वज्ञानसिद्धये द्वैतरूपो दृश्यप्रपञ्चो निषेधार्थं कल्पितः । तथा च भाष्ये प्रकृतैतावत्त्वाधिकरणे (3-2-6.) वर्णितम्—"लोकप्रसिद्धं त्विदं रूपद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय चेति निरवद्यम्" इति । तस्माच्छ्रुतीनां प्रपञ्चविषयेऽनादरादेव तदुत्पत्तिक्रमस्यैकविधत्वेन वर्णने न यत्नः। तदुत्पत्तिविषये श्रुतीनां विगानदर्शनादेव प्रपञ्चनिषेध एव श्रुतीनां नैर्भर्यं न तदुत्पत्ताविति ज्ञेयम् ।

### (२५४) श्रुत्युक्तक्रमेण जगदुत्पत्तिकथने सूत्रकारभाष्यकृतोरभिप्रायः—

यदपि सूत्रभाष्यकृतौ[1] द्वितीयाध्याये जगदुत्पत्तिप्रतिपादकश्रुतिवाक्यानां परस्परविरोधं परिहरन्तौ तैत्तिरीयोक्तसृष्टिक्रम एव सर्वोपनिषदामर्थ इति वर्णितवन्तौ, तन्मदाधिकारिसमाधानार्थमिति ज्ञेयम् । पूर्वं वर्णितमुत्पत्तिवाक्यानां वस्तुभूतमभिप्रायमवगन्तुमसमर्था मन्दजिज्ञासवः परस्परविरुद्धानि वाक्यानि दृष्ट्वा भ्रान्ता मा भूवन्निति, सूत्रभाष्यकृतौ सर्वोपनिषदामाकाशादिक्रमेणैव जगदुत्पत्तौ तात्पर्यमिति प्रदर्शयामासतुः ।

किञ्च वेदान्तविचारेण यथार्थज्ञानमलभमानस्य लयचिन्तनार्थमपि श्रुतीनां वैमत्यपरिहारेण विवक्षितो जगदुत्पत्तिक्रमः सूत्रभाष्यकृद्भ्यां प्रदर्शितः।

१. सूत्रशब्देन व्यासकृतब्रह्मसूत्रं, भाष्यशब्देन श्रीशङ्करभगवत्पादभाष्यं च ग्राह्यम्

येन क्रमेणोत्पत्तिस्तद्विपरीतक्रमेण जगतो लयश्चिन्तनीयः। तथा लयचिन्तनेनाऽद्वितीये ब्रह्मणि बुद्धिः स्थिरा भवेत्। सोऽयं लयचिन्तनप्रकारः वार्तिककारैः सुरेश्वराचार्यैः पञ्चीकरणाख्यग्रन्थे वर्णितः। अस्य ग्रन्थस्योत्तमाधिकारिविषयत्वाद्यपि जगदुत्पत्तिलयक्रमवर्णनस्य नात्रावसरस्तथापि सागररूपत्वादस्य ग्रन्थस्य मन्दानुग्रहाय संक्षेपतः स उच्यते। असङ्गत्वादक्रियत्वाच्च शुद्धब्रह्मणः सकाशाज्जगदुत्पत्त्यादिकं न सङ्गच्छते। किंतु मायाविशिष्टशबलब्रह्मणः सकाशाज्जगदुत्पद्यते। तस्मान्मायेश्वरयोः स्वरूपं प्रतिपाद्यते।

**(आ. २५५-२७२) श्रुत्युक्तोत्पत्तिक्रमनिरूपणम्—**

**(आ. २५५-२६०) प्रसङ्गान्मायास्वरूपप्रतिपादनम्—**

(२५५) **मायास्वरूपम्**—जीवेश्वरादिविभागशून्यशुद्धचैतन्याश्रिता माया। इयमुत्पत्तिरहितत्वादनादिः। तस्या उत्पत्त्यङ्गीकारे पुत्रात्पितुरुत्पत्तिकथनस्येव मायाकार्यात्प्रपञ्चान्मायोत्पत्तिकथनमसङ्गतं भवेत्। तस्माच्चैतन्यान्मायोत्पत्तिर्वक्तव्या। तथा सति जीवत्वेश्वरत्वयोर्मायाकार्यत्वात् न जीवचेतनान्न वेश्वरचेतनान्मायोत्पत्तिर्भवेत्। जीवेश्वरसिद्धौ तत्सकाशान्मायोत्पत्तिर्मायासिद्धौ जीवेश्वरसिद्धिरित्यन्योन्याश्रयप्रसङ्गात्। शुद्धचैतन्यं त्वसङ्गमक्रियमविकारि च। तस्मान्मायोत्पत्त्यङ्गीकारे शुद्धचैतन्यं विकारि भवेत्। किञ्च यदि शुद्धचैतन्यान्मायोत्पत्तिरुच्यते तर्हि मोक्षदशायां शुद्धचैतन्यस्य सत्वात्पुनर्मायोत्पत्तिप्रसङ्गः स्याद। मोक्षसाधनवैयर्थ्यं च स्यात्। तस्मान्मायोत्पत्तिरहिता; अत एव **चानादिः**। सा चैकैव। ज्ञाननाश्यत्वात्**सान्ता** च।

सेयं माया **सदसद्विलक्षणा**। त्रिकालाबाध्यं यत् तत् **सदि**त्युच्यते। त्रिकालाबाध्यत्वाच्चैतन्यमेव सत्। माया तु ज्ञानबाध्यत्वात्**सद्विलक्षणा**। कालत्रयेऽप्यप्रतीयमानं शशशृङ्गवन्ध्यासुताकाशपद्मादिकमसदित्युच्यते। ज्ञानात्पूर्वं माया तत्कार्यं च प्रतीयते। तथाहि, जाग्रत्काले 'अहमज्ञो ब्रह्म न

---

१ दृष्टिसृष्टिवादैकसत्तावादैकजीववादेषु दृढतरसंस्कारवा**नुत्तमाधिकारी**।

२. जगद्विवर्तोपादानभूतमधिष्ठानं मायोपहितचैतन्यमेव, न तु मायाविशिष्टम्। तथापि मायाविशिष्टस्योपादानत्वं ततो जगदुत्पत्तिश्चाविवेकिदृष्ट्योच्यते। विवेकिदृष्ट्या तु जगतः परिणाम्युपादानं वा विवर्तोपादानं वा न मायाविशिष्टचैतन्यम्। किन्तु जगतः **परिणाम्युपादानं** केवला माया। **विवर्तोपादानं** मायोपहितचैतन्यम्। **अविवेकिनस्तू**भयविधमुपादानत्वं मायाविशिष्टचैतन्ये भ्रान्त्या प्रतीयते। तस्माच्छास्त्रकारैरविवेकिनां दृष्टिरनूद्यते केवलं, न तु तात्पर्येणोच्यते इति ज्ञेयम्।

जानामि' इत्यनुभूयते माया। स्वप्नकाले प्रतीयमानसर्वपदार्थानामुपादान-कारणतया मायैव विभाति। सुप्तोत्थितस्य 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति परामर्शो (स्मृतिः) भवति। सा च स्मृतिरननुभूतेऽर्थे न संभवेत्। तस्मात्सुषुप्तावज्ञानानुभवोऽस्ति। अज्ञानं मायेति चैकमेव वस्तूच्यते। इत्थमवस्थात्रयेऽपि माया प्रतीयते। अतः सा **असद्विलक्षणा**। सदसद्विलक्षण-मायाकार्यं जगदपि सदसद्विलक्षणमेव। अद्वैतमते सदसद्विलक्षणमेव वस्तु मिथ्येति, अनिर्वचनीयमिति च कथ्यते। तस्मान्मायातत्कार्याभ्यां न द्वैतं सिद्ध्येत्। मायातत्कार्ययोः सदसद्विलक्षणत्वान्मिथ्यात्वमेव। न हि मिथ्यापदार्थेन द्वैतसिद्धिर्भवति, स्वप्ने दृष्टपदार्थेन यथा न द्वैतसिद्धिस्तथा मिथ्यामायातत्कार्याभ्यां न ब्रह्मणः सद्वितीयत्वसिद्धिः।

(२५६) **अज्ञानस्य स्वाश्रयविषयकत्वम्**—जीवेश्वरविभागशून्य-शुद्धब्रह्माश्रिता माया शुद्धं ब्रह्मैवावृणोति, गृहाश्रितं तमो यथा गृहमेवावृणोति, तद्वत्। अयमेव स्वाश्रयस्वविषयकत्वपक्ष इत्युच्यते। स्वशब्देन शुद्धं ब्रह्मोच्यते। तदेव ब्रह्माज्ञानस्याश्रयो भवति, तदेव ब्रह्माज्ञानेनाव्रियते च। तस्मादज्ञानं **स्वाश्रयस्वविषयक**मित्युच्यते। विषयत्वं=आवृतत्वम्। **संक्षेपशारीरक-विवरणवेदान्तमुक्तावल्यद्वैतसिद्ध्यद्वैतदीपिकादिग्रन्थेषु अज्ञानं स्वाश्रय-**विषयकमिति वर्णितम्।

(२५७) **उक्तार्थे वाचस्पतिमतम्**—अज्ञानं जीवमाश्रित्य स्थित्वा ब्रह्म विषयीकरोति। 'अहमज्ञो ब्रह्म न जानामि' इत्यनुभवे 'अहम्' इति शब्दार्थो जीवः 'अज्ञ' इत्यज्ञानाश्रयत्वेन प्रतीयते। तस्माज्जीवस्याज्ञानाश्रयत्वं व्यक्तीभवति। 'ब्रह्म न जानामि' इति शब्दैरज्ञानस्य विषयो ब्रह्मेति सिद्ध्यति। तथा चाज्ञानं जीवाश्रितं सद् ब्रह्म विषयीकरोति=आवृणोतीति सिद्धम्।

तच्चाज्ञानं नैकं, किन्तु नाना। अज्ञानस्यैकत्वे एकस्य ज्ञानोदयेनाज्ञाने नष्टे इतरेषामप्यज्ञानं तत्कार्यसंसारो वा न प्रतीयेत; प्रतीयते तु। अद्यावधि न कस्यचिदपि ज्ञानं नोदितमित्यभ्युपगमे इतः परमपि न कस्यचिदपि ज्ञानं जायेत। श्रवणादिसाधनानामानर्थक्यप्रसङ्गश्च स्यात्। तस्मादनन्तजीवाश्रिता-न्यज्ञानान्यनन्तानि। अनन्तजीवानामनन्ताज्ञानैः कल्पिता ईश्वरा अपि अनन्ताः।

तथा ब्रह्माण्डान्यप्यनन्तानि। यस्य जीवस्य ज्ञानमुदेति तस्याज्ञानं तदज्ञानकल्पितेश्वरब्रह्माण्डानि च नश्यन्ति। यस्य ज्ञानं नोदितं तस्य बन्धोऽनुवर्तेत एव।

**(२५८) वाचस्पतिमतासाङ्गत्यम्; अज्ञानैकत्वं च—**

ईश्वरो जीवाज्ञानकल्पित इत्युक्तिः श्रुतिस्मृतिपुराणविरुद्धा। 'ईश्वरा अनन्ताः, प्रतिजीवं सृष्टिर्भिन्ना' इत्यपि प्रमाणविरुद्धम्। तस्मादज्ञानस्य नानात्वमाश्रित्य ईश्वरस्य सृष्टेश्चैकत्वाभ्युपगमोऽपि न सङ्गच्छते। तथाहि—जीवेश्वरप्रपञ्चाः अज्ञानकल्पिताः। अज्ञानस्य नानात्वे एकैकाज्ञानकल्पितजीववदीश्वरप्रपञ्चानामप्यानन्त्यं प्रसज्येतैव। अत एव वाचस्पतिमिश्रैरनन्तेश्वरानन्तसृष्टय उक्ताः। तस्मादज्ञानमेकमिति मतमेव ज्यायः।

**(२५९) अज्ञानस्य स्वाश्रयस्वविषयकत्वपक्षाङ्गीकारः—**

तदिदमेकमज्ञानं न जीवाश्रितं, किन्तु शुद्धब्रह्माश्रितमेव। जीवभावश्चाज्ञानकार्यम्। तच्चाज्ञानं न कदाचिदपि स्वतन्त्रं तिष्ठति। तस्मान्निराश्रयाज्ञानेन न जीवभावः सिद्ध्येत्। यद्यज्ञानं प्रथमं यत्किञ्चिदाश्रयमाश्रित्य तिष्ठेत् तदा तत्कार्यजीवभावः सिद्ध्येत्। जीवभाव इवेश्वरभावोऽप्यज्ञानकार्यमेव। तस्मादज्ञानं नेश्वराश्रितमपि। परिशेषादिदमनाद्यज्ञानं शुद्धब्रह्माश्रितं भवति। अनादिचैतन्याज्ञानयोः संबन्धो (कालः)ऽप्यनादिरेव। चैतन्याज्ञानयोरनादिसंबन्धाधीनजीवेश्वरभावोऽप्यनादिरेव। परन्तु जीवेश्वरभावयोरज्ञानाधीनत्वात् जीवेश्वरयोरज्ञानकार्यत्वव्यपदेशः।

'अहमज्ञः' इति जीवाश्रितत्वेन यद्यप्यज्ञानमापाततः प्रतीयते, तथापि शुद्धब्रह्माश्रितेऽज्ञाने जीवस्य योऽभिमानः स एवार्थोऽनेन वाक्येनाभिलप्यते इति परमार्थः। अज्ञानकार्यत्वाज्जीवस्य न तस्याज्ञानधिष्ठानत्वरूपमाश्रयत्वं युज्यते। किंतु शुद्धब्रह्मैवाज्ञानस्याधिष्ठानरूपाश्रयः। 'अहमज्ञः' इति तु प्रतीतिर्जीवस्याज्ञानाभिमानित्वरूपमाश्रयत्वं विषयीकरोति।

शुद्धब्रह्मरूपाधिष्ठानाश्रितमज्ञानं स्वाश्रयं ब्रह्मैवावृणोति। तदनन्तरं जीवः 'अहमज्ञोऽस्मि' इत्येवमज्ञानस्याभिमानिरूपाश्रयो[1] भवति। अनेन प्रकारेणाज्ञानं स्वाश्रयविषयकमिति सिद्धम्।

---

१. 'अहमज्ञः' इत्यनुभवबलादज्ञानस्याश्रयो जीव इति वाचस्पतिमिश्रा आहुः। अयं पक्षो मुमुक्षुबुद्धौ सुखं प्रविशेदिति तैस्तथा वर्णितम्। वस्तुतः तेषामेवमाशयः—अहंशब्दस्य वाच्यार्थोऽन्तःकरणविशिष्टचैतन्यरूपो जीवः। तत्र विशेष्यांशभूतसाक्षिचैतन्यमेव ब्रह्म। तच्च ब्रह्माज्ञानस्याश्रयः। विशेष्यधर्मस्य विशिष्टे व्यवहार इति न्यायेन जीवस्याज्ञानाश्रयत्वव्यपदेशः कृतः।

**(१६०) एकाज्ञानपक्षे बन्धमोक्षव्यवस्था ; एकाज्ञानपक्षस्य ज्यायस्त्वं ; नामभेदेन मायास्वरूपं च—**

तच्चाज्ञानमेकमेव। ज्ञानेन तादृज्ञानं निवर्त्यते। परं तु यस्मिन् अन्तःकरणे ज्ञानमुदेति तादृशान्तःकरणावच्छिन्नचैतन्यनिष्ठाज्ञानांशः तेन ज्ञानेन निवर्त्यते। स एव मुक्तो भवति। यस्मिन् अन्तःकरणे ज्ञानं नोदेति तत्राज्ञानांशो बन्धश्च तथैवावतिष्ठते। अनेन प्रकारेणाज्ञानस्यैकत्वपक्षे बन्धमोक्षव्यवहारसिद्धिः।

यदि वाचस्पतिमिश्रमतानुसारेण केषाञ्चिन्नानाज्ञानपक्षो मनसि प्रविशति तदा सोऽपि पक्षोऽद्वैतज्ञानोपाय एव। न तन्मतखण्डने आग्रहः कार्यः। यया प्रक्रियया जिज्ञासोरद्वैतबोधो भवति तस्यां प्रक्रियायां तस्य बुद्धिः स्थिरीकर्तव्या।

शुद्धब्रह्माश्रितां मायां **अविद्येति अज्ञानमिति** चाहुः। अचिन्त्यानन्तशक्तिमत्त्वाद्युक्तीनामविषयत्वाच्च **मायेति** व्यपदेशः। विद्यानाश्यत्वाद् **विद्येति** वर्ण्यते। स्वरूपावारकत्वदज्ञानमिति च भण्यते। मायाया आश्रयभूतं चैतन्यं सामान्यचैतन्यम्। न तन्मायाया विरोधि, किन्तु साधकम्। मायायाः सत्ताप्रदं स्फुरणप्रदं च। वृत्त्यारूढं चैतन्यमथवा चैतन्यसहितां वृत्तिं मायाया विरोधितया जानीयात्। अत्र सूर्यकान्तशिलारूढसूर्यप्रभा दृष्टान्तत्वेनावगन्तव्या। इत्थमेका अनादिः सान्ता सदसद्विलक्षणाऽनिर्वचनीया अविद्याज्ञानादिशब्दव्यपदेश्या सामान्यचैतन्यमाश्रिता वृत्त्यारूढचैतन्यविनाश्या च माया वर्णिता।

---

१. **अत्रायमभिप्रायः**—अंशिरूपान्धकारस्यैकत्वेऽपि अंशभूता नानान्धकाराः प्रतिगृहं वर्तन्ते। यस्मिन् गेहे दीपोऽस्ति तत्रस्थोंऽशभूतोऽन्धकारो विनश्यति। न गेहान्तरस्थान्धकारांशस्य नाशः। एवमेवांशिभूतमज्ञानमेकमेव। तस्यांशभूतानानाज्ञानानि नानान्तःकरणप्रदेशस्थसाक्षिचैतन्यमाश्रित्य तिष्ठन्ति। यस्मिन्नन्तःकरणप्रदेशे वृत्तिज्ञानमुदेति तादृशान्तःकरणप्रदेशस्थाज्ञानांशो विनश्यति। स एव मुक्तो भवति, नेतरे। तस्मादेकस्य ज्ञानोदये सति सर्वेषामप्यज्ञानतत्कार्यनाशद्वारा मुक्त्यापत्तिर्न कार्या। इत्थमेकाज्ञानाङ्गीकारपक्षे बन्धमोक्षव्यवस्थासिद्धिः।

**किञ्च** 'जीवाज्ञानकल्पित ईश्वरोऽनन्तः, जीवभेदेन सृष्टिरपि नाना' इति श्रुतिस्मृतिपुराणादिविरुद्धपक्षो न युक्तः। अतः एकाज्ञानपक्षो ज्यायान्।

२. "यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता॥

**इति** नैष्कर्म्यसिद्धिकारा आहुः।

(आ. २६१-२६२) प्रसङ्गादीश्वरस्वरूपवर्णनम्—

(२६१) **ईश्वरस्वरूपम्; द्विविधकारणलक्षणं च**—शुद्धसत्वगुणसहिता **माया**, मायाधिष्ठानं **चैतन्यं**, मायाप्रतिफलित—**चैतन्याभासः** इति त्रयं मिलित्वा **ईश्वर** इत्यभिधीयते। सोऽयमीश्वरः सर्वज्ञः। स एव जगतः कारणम्।

कारणं द्विविधम्—उपादानकारणं, निमित्तकारणं चेति। यत्[1] कार्यस्वरूपे प्रविशति, यद्विना कार्यस्य स्थितिर्नास्ति, **तदुपादानकारणमुच्यते**। यथा **मृद्घटस्योपादानकारणम्**। घटस्वरूपे मृदः प्रवेशोऽस्ति, मृदं विना घटो न स्थितिं लभते च। यत्[2] कार्यस्वरूपे न प्रविशति, किन्तु कार्यात्पृथक् स्थितं सत्कार्यमुत्पादयति, यस्य नाशेन कार्यं न नश्यति **तन्निमित्तकारणमित्यभिधीयते**। यथा घटस्य कुलालो दण्डचक्रादयश्च **निमित्तकारणानि**। न कुलालादयो घटस्वरूपे प्रविशन्ति; घटात्पृथग्भूता घटमुत्पादयन्ति; घटो-

---

१. कार्योत्पत्तिस्थितिलयकारणत्वमुपादानकारणस्य लक्षणम्।

जगदुत्पत्तिविषये आरम्भपरिणामविवर्तवादानां मध्ये विवर्तवाद एव श्रेयानिति विचारतः सिद्ध्यति। तथा हि—

(१) सावयवैरनेकैः कारणद्रव्यैः संयोगसचिवैरेकमवयवि कार्यमुत्पद्यत इत्यारम्भवादः। यथा अनेकैस्तन्तुभिः संयोगसचिवैरेकं पटरूपकार्यमुत्पद्यत इत्ययमारम्भवादः। अत्र मते कार्यकारणयोरत्यन्तभेदोऽभ्युपगम्यते। जगदुत्पत्तिविषये आरम्भवादो न संभवति। अद्वितीयब्रह्मणोऽपरिच्छिन्नत्वेन निरवयवत्वाच्च ततः सावयवं जगत्पृथग्जायेत।

(२) परिणामवादोऽपि न प्रपञ्चोत्पत्तिविषये युज्यते। कारणवस्तुनः प्राक्सिद्धकारणावस्थापरित्यागपूर्वकावस्थान्तरप्राप्तिः परिणामः। यथा मृत्परिणामो घटः इतिप्रधानपरिणामो जगदिति च साङ्ख्याः वदन्ति। ब्रह्मपरिणामो जगदिति केचनोपासका मन्यन्ते। तदुभयं सूत्रभाष्यकारादिभिः खण्डितम्। चैतन्यस्याकाशादपि सूक्ष्मत्वेन निरवयवत्वादेवोपासकमतमत्यन्तमसङ्गतमेव। इत्थं परिणामवादोऽपि न युज्यतेऽत्र।

(३) विवर्तवादे तु पूर्वोक्तदोषलेशोऽपि न संभवति। कारणवस्तुनो नित्यसिद्धस्वस्वरूपापरित्यागेनैवान्यथा भानमात्रं विवर्त इति श्रुतियुक्त्यनुभवसिद्धम्। यथा शुक्त्यादौ रजतावभासः। अयमेव पक्षो वेदान्ताभिमतः। अत्र जगद्विवर्तोपादानरूपाधिष्ठानं मायोपहितचैतन्यमेव। न मायाविशिष्टम्। अविवेकिनस्तथा कथयन्ति। परिणाम्युपादानं माया, विवर्तोपादानमुपहितचैतन्यमिति विविक्ते सिद्धेऽपि तदुभयं मायाविशिष्टचैतन्यमिति वदन्ति विवेचनाकुशलाः।

२. कार्योत्पत्तिमात्रकारणत्वं निमित्तकारणस्य लक्षणम्। तच्च निमित्तकारणमनेकविधम्।

त्पत्त्यनन्तरं कुलालादीनां नाशेऽपि घटो न नश्यति। इत्थमुपादानं निमित्त-मिति च कारणं द्विविधम्।

(२६२) **ईश्वर एव प्रपञ्चस्योपादानकारणं निमित्तकारणं च**— ईश्वर एव जगत उपादानकारणं निमित्तकारणं च भवति। यथैक एव लूताकीटस्तन्तुरूपकार्यं प्रत्युपादानकारणं निमित्तकारणं च भवति। तद्वदेवेश्वरः प्रपञ्चं प्रत्युपादानं निमित्तं च। तत्र लूताकीटस्य जडं शरीरं तन्तोरुपादानकारणं, तच्छरीरस्थमन्तःकरणसहितचैतन्यं निमित्तकारणम्। एवमेवेश्वरशरीरभूतजडमाया जगत उपादानं, चेतनभागो निमित्तकारणम्। इत्थमेकस्यैवेश्वरस्य प्रपञ्चं प्रत्युपादाननिमित्तोभयकारणत्वे लूताकीटो दृष्टान्तः। मुख्यदृष्टान्तस्तु स्वप्न एव।

यदा पुनरीश्वरो जीवानां कर्मफलदानाय न संमुखो भवति तदा जगतः **प्रलयः**, यदा च स ईश्वरो जीवानां कर्मफलदानायाभिमुखो भवति तदा जगतः **सृष्टिश्च** भवति। इत्थं जगत्सृष्टेर्जीवकर्माधीनत्वाज्जीवस्वरूपमिदानीं निरूप्यते।

---

१. न्यायमते घटेनेश्वरस्य संयोगे ईश्वरस्याभिन्ननिमित्तोपादानत्वमुक्तम्। तथा जीवाश्रितज्ञानसुखादिगुणानां जीवस्याभिन्ननिमित्तोपादनत्वमभिमतम्।

किञ्च यथाऽस्मन्मते जीवस्य स्वप्नप्रपञ्चं प्रत्यभिन्ननिमित्तोपादनत्वमिष्टं तथेश्वरस्य जाग्रत्प्रपञ्चं प्रत्यभिन्ननिमित्तोपादनत्वं भवति।

२. ननु दुःखतत्साधनपरिहारे वा सुखतत्साधनसंपादने वेच्छा दृष्टा। ईश्वरस्य तु दुःखतत्साधनयोरभावान्न तन्निवृत्तीच्छासंभवः। पर्याप्तकामत्वादीश्वरस्य नापि सुख-तत्साधनसंपादनेच्छा। अत ईश्वरस्येच्छा न कुत्रचिदपि युज्यते। बालानामकस्मादेव क्रीडायामिच्छावदीश्वरस्यापि जगत्सृष्टिरूपविनोदेच्छा निमित्तं विनैव भवतीत्यपि न।

यथा बालानां चित्ते आह्लादरूपसुखप्राप्तिनिमित्तकेच्छा भवति तथा पूर्णकामस्ये-श्वरस्याह्लादरूपसुखप्राप्तीच्छा न संभवतीति चेन्न। यथा कल्पवृक्षादिः स्वाश्रितपुरुषसंकल्प-रूपनिमित्तेन स्वस्वभावादेवाश्रितपुरुषमनोरथं पूरयति, तथेश्वरोऽपि प्राणिनां फल-दानोन्मुखो यदा भवति तदा जीवादृष्टरूपनिमित्तेनैव स्वस्वभावादेव जगत्सृष्ट्यादिविषयक-ज्ञानेच्छाप्रयत्नादिकं करोति। ईश्वरीयेच्छाज्ञानप्रयत्नमध्ये एकैकापि व्यक्तिः सृष्ट्यारम्भ-काले उत्पन्ना प्रलयपर्यन्तं तिष्ठति। तस्मादीश्वरेच्छाप्रयत्ना **नित्या** उच्यन्ते। किञ्चे-श्वरीयेच्छादयः भूतभविष्यद्वर्तमानकालगतसकलपदार्थान् विषयीकरोति। अत एव सदा सृष्टिः प्रलयो वा, सदा शैत्यमौष्ण्यं वा, सदा वृष्टिरवग्रहो वा न संभवति। किन्तु समयानुसारेणैव भवन्ति।

(२६३) जीवस्वरूपवर्णनम्—

रजस्तमसी अभिभूयोद्भूतो यः सत्वगुणः स **शुद्धसत्वगुण** इत्यभिधीयते। रजस्तमोभ्यामभिभूतो यः सत्वगुणः स **मलिनसत्वगुण** इति कीर्त्यते। ईदृशमलिनसत्वगुणसहिताज्ञानांशप्रतिफलित**चिदाभासः, अज्ञानं,** अज्ञानाधिष्ठान**कूटस्थचैतन्यं** चेति त्रयं मिलितं **जीव** इति वर्ण्यते। सोऽयं जीवः कर्म करोति। तत्फलं चेच्छति।

(आ. २६४-२७२) जगत्सृष्टिवर्णनम्—

(२६४) ईश्वरस्य वैषम्यनैर्घृण्याभावः—

जीवस्य स्वकर्मानुसारेणोच्चावचभोगानुभवायेश्वरः प्राणिनां पुण्यपापानुरूपां सृष्टिं करोति। तस्मादीश्वरस्य न वैषम्यनैर्घृण्ये स्तः। नन्वाद्यसर्गात्पूर्वं न कर्मास्ति। प्रथमसर्गे चेश्वरः प्राणिनामुच्चनीचशरीराणि उच्चावचभोगांश्च सृजति। तस्मीदीश्वरो विषमदृष्टिरेवाकस्माद्विषमसृष्टिकरणादिति चेन्न। संसारोऽनादिः। तस्मादुत्तरोत्तरसृष्टेः पूर्वपूर्वसृष्टौ तत्तत्प्राणिकृतं कर्मैव कारणम्। सृष्टेरिदंप्रथमत्वासंभवान्नेश्वरे दोषः।

(२६५) जीवभोगार्थमीश्वरस्य जगत्सिसृक्षा—जीवकर्मफलप्रदानाद्यदेश्वरो विमुखो भवति तदा **जगत्प्रलयो** भवति। प्रलये सर्वपदार्थसंस्कारा मायायां लीना भवन्ति। तस्माज्जीवानां कर्मशेषोऽपि सूक्ष्मरूपेण मायायां निलीनो भवति। यदा प्राणिनां कर्मफलदानाभिमुखो भवतीश्वरः तदा 'जीवानां भोगार्थमहं जगत् सृजे' इतीश्वरस्येच्छा जायते।

(आ. २६६-२७०) सूक्ष्मसृष्टिनिरूपणम्—

(२६६) सूक्ष्मपञ्चभूतानां तद्गुणानां चोत्पत्तिः—एतादृशेश्वरेच्छावशात् माया तमोगुणप्रधाना भवति। तादृशतमोगुणप्रधानमायासकाशात् आकाशवायुतेजोजलपृथिव्यात्मकपञ्चभूतान्युत्पद्यन्ते। तेषु भूतेषु क्रमेण

---

२. यथा पुत्रार्थिनी जाया पत्या सङ्गता शुक्ररूपं बीजं, ततः क्रमेण पुत्ररूपेण परिणतं गर्भं च वहन्ती प्रसवात्पूर्वं सन्ततिलाभनिमित्तेन सदा प्रसन्ना सत्वगुणप्रधानेव भवति। पश्चात्प्रसवकाले वेदनानिमित्तेन प्रसन्नताया तिरोधाने सति शून्यचित्ता **तमोगुणप्रधानेव** भवति; यथा वा पूर्वं श्वेतवर्णो मेघो वर्षाकाले **श्यामो** भवति; तथा सृष्टेः पूर्वं ब्रह्मप्रतिबिम्बरूपजगद्बीजधारिणी अविद्योपाधिकानन्तजीवसहितप्रपञ्चरूपगर्भधारिणी च शुद्धसत्वप्रधाना माया (ईश्वरस्योपाधिः) भवति। पश्चात्सृष्ट्यारम्भकाले सा माया शुद्धसत्वस्वरूपतिरोधानेन **सृष्टियोग्यतमोगुणप्रधानप्रकृतिरूपा** भवति।

शब्दस्पर्शरूपरसगन्धाख्यपञ्चगुणा वर्तन्ते। **मायायाः** सकाशाच्छब्दसहित आकाश उत्पन्नः। **आकाशाद्वायुः**। वायोः आकाशकार्यत्वात् कारणगुणेन शब्देन स्वासाधारणगुणस्पर्शेन च द्विगुणो वायुः। **वायोरग्निः** संभूतः। कारणाकाशवायुगुणाभ्यां शब्दस्पर्शाभ्यां स्वासाधारणरूपगुणेन च त्रिगुणोऽग्निः। **अग्नेरापः** संभूताः। कारणाकाशवाय्वग्निगुणैः शब्दस्पर्शरूपैः स्वासाधारणरसगुणेन च चतुर्गुणा आपः। **अद्भ्यः** पृथिवी संभूता। कारणाकाशवाय्वग्न्यब्गुणैः शब्दस्पर्शरूपरसैः स्वासाधारणगन्धगुणेन च पञ्चगुणा पृथिवी। **आकाशे** प्रतिध्वनिरूपशब्दो वर्तते। **वायौ** बीसीतिशब्दः, शीतोष्णकठिनानां विलक्षणस्पर्शश्च वर्तते। **अग्नौ** भुगुभुगशब्दः उष्णस्पर्शः, प्रकाशाख्यरूपं च वर्तते। जले चिलिचिलिशब्दः शीतस्पर्शः, शुक्लरूपं, मधुररसश्च वर्तते। लवणतिक्तादिरसास्तु पृथिवीसंबन्धादेव जले विभान्ति। माधुर्यमेव स्वाभाविकरसो जलस्य। स च हरीतक्यामलकादिभक्षणसंस्कृतरसनया जलपानेऽभिव्यज्यते। **पृथिव्यां** कडकडाशब्दः, अनुष्णाशीतस्पर्शः, शुक्लकृष्णपीतरक्तहरितादिरूपं, मधुराम्ललवणकटुकषायतिक्ताख्यषड्रसाः, सुगन्धदुर्गन्धरूपद्विविधगन्धश्च वर्तते। इत्थमाकाशे एको गुणः। वायौ द्वौ। अग्नौ त्रयः। जले चत्वारः। पृथिव्यां पञ्चगुणाः। तत्रापि प्रतिभूतं प्रातिस्विकगुणस्त्वेक एव। तदितरगुणाः कारणादनुगताः। सर्वस्य मूलकारणमीश्वरः। ईश्वरे चांशद्वयमस्ति। चैतन्यांशो मायांशश्चेति। सर्वेषु भूतेषु विद्यमानो नामरूपात्मकमिथ्यांशो मायायाः, सत्तास्फूर्तिरूपांशस्तु चैतन्यस्येति ज्ञेयम्।

### (२६७) चतुर्विधभेदसहितान्तःकरणोत्पत्तिः—

अपञ्चीकृतपञ्चभूतानां सत्वगुणांशसमष्टिः **सत्वमित्यभिधीयमानमन्तः**-करणमुत्पादयति। अन्तःकरणं ज्ञानोत्पत्तिहेतुः। ज्ञानोत्पत्तिः सत्वगुणादित्यङ्गीकृतम्। "सत्वात्संजायते ज्ञानम्"। (भ. गी. 14-17) इति। तस्मादन्तःकरणं भूतानां सत्वगुणकार्यम्। तच्चान्तःकरणं पञ्चीकृतपञ्चभूतव्यष्टिसत्वगुणकार्यपञ्चज्ञानेन्द्रियाणां स्वस्वविषयग्रहणे सहकारि। तस्मादपि पञ्चभूतसमष्टिसत्वगुणकार्यमेवान्तःकरणम्। न वैशेषिकादीनामिवान्तःकरणं नित्यम्। अन्तः=देहस्यान्तःस्थित्वा, करणं=ज्ञानसाधन**मित्यन्तःकरणमुच्यते**। पञ्चभूतसमष्टिसत्वगुणकार्यत्वेनान्तःकरणं **सत्वमित्यपि** कीर्त्यते। अन्तःकरणपरिणामस्य **वृत्तिरिति संज्ञा**। अन्तःकरणस्य वृत्तयश्चतस्रः। तत्र पदार्थस्य स्वरूपनिश्चा-

मिका वृत्तिर्बुद्धिः। सङ्कल्पात्मिका **वृत्तिर्मनः**। चिन्तनात्मिका **वृत्तिश्चित्तम्**। 'अहं' इत्यभिमानात्मिका **वृत्तिरहङ्कारः**।

**(२६८) पञ्चभेदसहितप्राणोत्पत्तिः—**

अपञ्चीकृतपञ्चभूतसमष्टिरजोगुणांशात् पञ्चवृत्तिप्राणः संभूतः। स प्राणः क्रियाभेदात् स्थानभेदाच्च पञ्चविधः। यस्य हृदयं स्थानं, क्षुत्पिपासे क्रिया स **प्राणः**। यस्य गुदः स्थानं, मूत्रपुरीषयोरधोनयनं क्रिया स **अपानः**। यस्य नाभिः स्थानं, भुक्तपीतयोरन्नपानयोः पाचनयोग्यसमीकरणं क्रिया स **समानः**। यस्य कण्ठः स्थानं, श्वासः क्रिया स **उदानः**। यस्य सर्वशरीरं स्थानं, अन्नपानादिरसस्य सर्वनाडीषु प्रवेशनं क्रिया स **व्यानः**।

क्वचित् नागकूर्मकृकरदेवदत्तधनञ्जयाख्याः पञ्च वायवोऽधिकतया पठ्यन्ते। तत्रोद्वमनकृन्**नागः**। उन्मीलनहिक्कादिकृत्**कूर्मः**। क्षुतहेतुः **कृकरः**। जृम्भणकरो **देवदत्तः**। श्वयथुकरो **धनञ्जयः**। एत उपवायवः। तेषां च पृथिवीजलतेजोवाय्वाकाशानां रजोगुणांशेभ्यः क्रमेणोत्पत्तिः। तथैवापानसमानप्राणोदानव्यानानामपि क्रमेण पृथिव्यादीनामेकैकस्य रजोगुणांशादुत्पत्तिः। सर्वेषां समष्टिरजोगुणांशान्नोत्पत्तिः' इति चोक्तं क्वचिद्ग्रन्थेषु।

परन्त्वद्वैतसिद्धान्ते एषा प्रक्रिया नास्ति। विद्यारण्यस्वामिभिः, पञ्चीकरणग्रन्थे वार्तिककारैश्च सूक्ष्मशरीरे पञ्चकोशे च नागकूर्मादीनां ग्रहणं न कृतम्। अपि च तैरपानादिपञ्चप्राणानां पञ्चभूतसमष्टिरजोगुणांशादुत्पत्तिर्वर्णिता। तस्मादेकैकभूतव्यष्टिरजोगुणांशादपानादीनामुत्पत्तिकथनमयुक्तमेव। तस्मात्सूक्ष्मशरीरे नागकूर्मादीनां ग्रहणमसङ्गतम्। पञ्चप्राणानामेव सूक्ष्मशरीरे ग्रहणं युक्तम्। किञ्च प्राणो विक्षेपरूपः। रजोगुणस्य विक्षेपः स्वभावः। तस्मात्पञ्चभूतरजोगुणांशात्प्राणोत्पत्तिकथनं युक्तमेव।

**(२६९) ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां चोत्पत्तिः—**

अपञ्चीकृतैकैकभूतसत्वगुणांशात् पञ्चज्ञानेन्द्रियाणि रचितानि। एकैकभूतरजोगुणांशादेकैकं कर्मेन्द्रियं रचितम्। आकाशस्य सत्वगुणाच्छ्रोत्रं, वायोः सत्वगुणांशात् त्वक्, तेजसः सत्वगुणांशान्नेत्रं, जलस्य सत्वगुणांशाद्रसना, पृथिव्याः सत्वगुणांशाद्घ्राणं चाजायत। एतानि पञ्चेन्द्रियाणि ज्ञानस्य साधनानि, अतो **ज्ञानेन्द्रियाणी**त्युच्यन्ते। ज्ञानं सत्वगुणाज्जायते। अतश्चैतानि पञ्चेन्द्रियाणि भूतानां सत्वगुणादुत्पन्नत्वेनोच्यन्ते। श्रोत्रेन्द्रियमाकाशस्य

गुणं शब्दं गृह्णातीति तदाकाशस्य सत्वगुणकार्यम्। एवमेव यदिन्द्रियं यस्य भूतस्य गुणं गृह्णाति तत् तस्य भूतस्य सत्वगुणकार्यमिति ज्ञेयम्।

आकाशस्य रजोगुणांशाद्वाक्, वायोः रजोगुणांशात्**पाणिः**, अग्नेः रजोगुणांशात्**पादः**, जलस्य रजोगुणांशा**दुपस्थः**, पृथिव्या रजोगुणांशा**द्गुदं** चोत्पद्यते। स्त्रीयोनौ पुरुषलिङ्गे च वर्तमानं विषयानन्दलवसाधनमिन्द्रिय**मुपस्थ** इत्युच्यते। कर्मेति क्रियोच्यते। एतानि पञ्चेन्द्रियाणि क्रियासाधनत्वात्**कर्मेन्द्रियाणी**त्यभिधीयन्ते। क्रियाया रजोगुणकार्यत्वाद्भूतानां रजोगुणांशात्कर्मेन्द्रियोत्पत्तिर्वर्णिता। इत्थं सूक्ष्मसृष्टिर्निरूपिता।

(२७०) **सूक्ष्मसृष्टेरुपसंहारः**—

अपञ्चीकृतभूतानि तत्कार्यभूतान्तःकरणप्राणकर्मेन्द्रियाणि **सूक्ष्मसृष्टि**रिति कीर्त्यते। सूक्ष्मसृष्टिविषयकं ज्ञानं नेन्द्रियैरुत्पद्यते। नेत्रनासिकादिगोलकानि तु यद्यपीन्द्रियविषयाणि। तथापि तत्तद्गोलकान्तःस्थेन्द्रियाणि न कस्यचिदपीन्द्रिस्य विषयीभवन्ति। सूक्ष्मसृष्ट्युत्पत्त्यनन्तरमीश्वरेच्छया स्थूलसृष्टिनिमित्तं भूतानां पञ्चीकरणं निष्पद्यते।

(आ. २७१-२७१) **स्थूलसृष्टिः**—

(२७१) **पञ्चीकरणप्रकारः**—

पञ्चीकरणे द्वौ प्रकारावुक्तौ। प्रथमप्रकारस्त्वेवम्—एकैकसूक्ष्मभूतस्य तमोगुणांशं साम्येन द्विधा विभजेत्। तत्रैकमर्धं पृथगवस्थापयेत्। ततोऽपरमर्धं साम्येन चतुर्धा विभजेत्। एवं पुनर्विभागेन निष्पन्नमेकैकभूतस्याष्टममंशं पृथगवस्थापितेन स्वस्वेतरभूतचतुष्टयस्यार्धभागेन योजयेत्। एवं **पञ्चीकरण** निष्पद्यते। तत्रैकैकस्मिन्नपि स्थूलभूते एकमर्धं स्वांशः। अपरमर्धं तु स्वेतरैकैकभूताष्टमांशमेलनेन निष्पन्नम्। एवमेकैकस्मिन्नपि स्थूलभूते पञ्चानामपि भूतानामंशसत्वात् स्थूलभूतानि पञ्चीकृतानीति वर्ण्यन्ते।

द्वितीयप्रकारस्त्वेवम्—एकैकसूक्ष्मभूतस्य तमोगुणांशं वैषम्येण द्विधा विभजेत्। तत्रैको भागश्चतुर्भिरंशैर्निष्पन्नः। अपरस्तु भागः पञ्चमांशेन। तत्र

१. प्रथमप्रकारे प्रतिभूतमर्धभागस्य स्वकीयत्वेऽपीतरार्धभागस्य स्वेतरभूतचतुष्टयांशनिष्पन्नत्वात् तेन भागेन स्वभागस्य तिरोधानं संभाव्येत। ततश्चाकाशादीनां भूतानां प्रत्येकं पृथक् पृथग्भानं दुर्घटं स्यादिति मत्वा यथा प्रतिभूतं स्वांशाधिक्यं स्यात्तथ द्वितीयः प्रकार आश्रीयते।

चतुरंशनिष्पन्नमधिकपरिमाणकं भागं पृथगवस्थापयेत्। पञ्चमांशनिष्पन्नं न्यूनपरिमाणकं भागं पुनः पञ्चधा विभजेत्। तत्रैकमेकमंशं पृथगवस्थापिताधिकपरिमाणकपञ्चभागेषु पृथक् पृथग्योजयेत्। अनेनापि प्रकारेण **पञ्चीकरणं** सिद्ध्यति।

तत्र प्रथमप्रकारे प्रतिभूतं एकमर्धं स्वांशः। अपरमर्धं तु स्वेतरभूतचतुष्टयस्यांशः। यथा आकाशे एकमर्धं स्वस्यैवांशः। द्वितीयमर्धं तु वायोरष्टमांशेन, तेजसोऽष्टमांशेन, जलस्याष्टमांशेन, पृथिव्या अष्टमांशेन च निष्पन्नम्। एवं भूतान्तरेष्वप्यूह्यम्। द्वितीयप्रकारे तु प्रतिभूतमेको भागः स्वकीयैरेकविंशत्यंशैर्निष्पन्नः। द्वितीयो भागस्तु स्वेतरभूतानां चतुर्भिरंशै निष्पन्नः। यथा आकाशे एको भागः स्वकीयैकविंशत्यंशात्मकः। अपरो भागस्तु वायोः पञ्चविंशांशेन, तेजसः पञ्चविंशांशेन, जलस्य पञ्चविंशांशेन, पृथिव्याः पञ्चविंशांशेन च निष्पन्नः। एवं भूतान्तरेष्वप्यूहनीयम्। प्रथमप्रकारापेक्षया द्वितीयप्रकारे प्रतिभूतं स्वांशाधिक्याद्विविच्य पृथक् पृथगाकाशादीनां भानं सुघटं भवति।

### (२७२) स्थूलब्रह्माण्डाद्युत्पत्तिः—

एवं पञ्चीकृतभूतेभ्य इन्द्रियगोचरं **स्थूलब्रह्माण्डमुत्पद्यते**। तस्मिन् ब्रह्माण्डे भूर्भुवस्वर्महर्जनस्तपस्सत्य इत्युपरि सप्त लोकाः, अतलसुतलपातालवितलरसातलतलातलमहातला इत्यधः सप्त लोका वर्तन्ते। एषु चतुर्दशसु लोकेषु वसतां जीवानां पृथक्पृथगुपभोगयोग्या**न्नपानादिकं, देवमनुष्यपश्वादिरूपाणि भोगायतनानि स्थूलशरीराणि** चोत्पद्यन्ते। इत्थं संक्षेपेण सृष्टिरुक्ता। मायावैभवस्य विस्तरेण निरूपणं तु कोटिब्रह्मायुषापि न शक्यते। मायासृष्टपदार्थानां नान्तोऽस्तीति वाल्मीकिर्वासिष्ठे नानेतिहासैर्निरूपितवान्।

### (आ. २७३. २८३.) आत्मविवेकः, अथवा पञ्चकोशविवेकः।

### २७३. पञ्च कोशास्तैरात्मन आवरणं च—

---

१. **स्थूलशरीरम्**–स्थूलसूक्ष्मकारणात्मकानि त्रीणि शरीराणि सन्ति। प्रतिक्षणं शीर्यमाणत्वात् **शरीरमि**ति व्यपदेशः। दह्यमानत्वाद्देह इति तस्यैव व्यपदेशः। लोमत्वक्सिरामांसास्थिमज्जानां षण्णां समुदायः स्तम्भादिवत्प्रत्यक्षेणोपलभ्यमानत्वात्**स्थूलदेह** इत्युच्यते। स च देहः पञ्चविंशतितत्त्वात्मकः। तानि च तत्त्वानि निम्नदेशे प्रदर्शितपताकया सुखं ज्ञातुं शक्यानि।

मायायां तत्कार्येषु च त्रीणि शरीराणि पञ्च कोशाश्चान्तर्भवन्ति। शुद्धसत्वगुणप्रधाना मायेश्वरस्य कारणशरीरम्। मलिनसत्वप्रधनाविद्यांशो जीवस्य कारणशरीरम्।

## तदंशा एते

| मुख्यतत्वानि | पृथिवी | आपः | तेजः | वायुः | आकाशः |
|---|---|---|---|---|---|
| पृथिवी | अस्थि | मांसम् | नाड्यः | त्वक् | लोम |
| आपः | रक्तम् | शुक्रम् | मूत्रम् | स्वेदः | लाला |
| तेजः | आलस्यम् | कान्तिः | क्षुत् | पिपासा | निद्रा |
| वायुः | आकुञ्चनम् | गमनम् | स्थितिः | धावनम् | प्रसारणम् |
| आकाशः | भयं, अथवा कटिः | मोहः अथवा उदरम् | क्रोधः, अथवा हृदयम् | कामः अथवा कण्ठः | शोकः अथवा शिरः |

अस्याः पताकाया विवरणम्—पृथिव्यंशेन पृथिव्यंशसंबन्धेऽस्थि, अबंशसंबन्धे मांसं, तेजोंऽशसंबन्धे नाड्यः, वाय्वंशसंबन्धे त्वक्, आकाशांशसंबन्धे लोमानि चोत्पद्यन्ते। इत्थमेव तत्तद्भूतांशसंबन्धे तत्वान्तराणि संभवन्तीति विज्ञेयम्। (१) पञ्चविंशतितत्वानां पञ्चभूतलक्षणमुच्यते—(क) आकाशे (१) भयकाले पृथिवीवच्छरीरस्य जाड्यसंभवाद्भयं पृथिव्यंशः। (२) पुत्रदारादिषु जलवत् प्रसरणान्मोहो जलांशः। (३) अग्निवद्दाहकत्वात् क्रोधोऽग्न्यंशः। (४) वायुवच्चञ्चलात्मकत्वात् कामो वाय्वंशः। (५) शोकसमये आकाशवद्देहस्य शून्यतापत्तेः शोक आकाशांशः। (ख) वायौ (६) पृथिवीवत् संकुच्यमानत्वात् आकुञ्चनं पृथिव्यंशः। (७) जलवच्चलनात्मकत्वाद्गमनं जलांशः। (८) तेजोवच्छोषणात् प्रकाशनाद्वा स्थितिरग्न्यंशः। (९) वायुवद्धावनाद्धावनं वाय्वंशः। (१०) आकाशवत्प्रसरणात् प्रसरणमाकाशांशः। (ग) तेजसि (११) जडस्वाभाव्यादालस्यं पृथिव्यंशः। (१२) जलवद्धूमविशिष्टत्वात् कान्तिर्जलांशः। (१३) भुक्तस्य भस्मीकरणात् क्षुत् तेजोंऽशः। (१४) शीकरशोषकवायुवत् कण्ठशोषणात् पिपासा वाय्वंशः। (१५) निद्रागमे आकाशवच्छरीरस्य शून्यत्वापादनान्निद्रा आकाशांशः। (घ) अप्सु (१६) जपाकुसुमादिवद्रक्तवर्णत्वाद्रक्तं पृथिव्यंशः। (१७) जलवद्द्रवीभूतत्वात् गर्भहेतुभूतशुक्रं जलांशः। (१८) तेजोवदुष्णरूपत्वान्मूत्रं तेजोंशः। (१९) वाय्वधीनवृष्टिवत् स्वेदस्य श्रमोत्पन्नत्वात् स्वेदो वाय्वंशः। (२०) आकाशवदधरोत्तरगामित्वात् लाला आकाशांशः। (ङ) पृथिव्याम् (२१) काठिन्यादास्थि पृथिव्यंशः। (२२) आर्द्रत्वात् मांसं जलांशः। (२३) नाडीभ्यस्तापसंभवान्नाड्यस्तेजोऽशाः। (२४) शीतोष्णवत्वात् त्वग्वाय्वंशः। (२५) आकाशवत् कृन्तनेऽप्यपीड्यमानतया स्थितत्वाल्लोमाकाशांशः।

एते भयमोहादयो यद्यपि सूक्ष्मशरीरस्यैवासाधारणा धर्मास्तथापि, जलाश्रयघटे जलनिष्ठशैत्योपलब्धिवत्, स्थूलदेहमाश्रित्योपलभ्यमानत्वात् स्थूलदेहस्य धर्मा इत्युपचारत उच्यन्ते। अत एवैते स्थूलदेहतत्वेषु परिगणिताः। एतत्पञ्चविंशतितत्त्वसमुदायस्य स्थूल-

उत्तरशरीरारम्भकपञ्चसूक्ष्मभूतानि मनोबुद्धिचित्ताहंकाराश्चत्वारः, पञ्च प्राणाः, पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि च मिलित्वा **जीवस्य सूक्ष्मशरीरं** भवति। सकलजीवानां सूक्ष्मशरीराणि मिलित्वा **ईश्वरस्य सूक्ष्मशरीरं** भवति। सकलमपि स्थूलं ब्रह्माण्डमीश्वरस्य **स्थूलशरीरं** भवति। **जीवस्य व्यष्टि-स्थूलशरीरं** तु प्रसिद्धमेव। शरीरत्रयेऽस्मिन्नेव **पञ्चकोशा** अन्तर्भवन्ति। कारणशरीरे **आनन्दमयकोशस्यान्तर्भावः**। सूक्ष्मशरीरे विज्ञानमयमनोमय-प्राणमयानां त्रयाणां कोशानामन्तर्भावः। पञ्च ज्ञानेन्द्रियाणि निश्चयात्म-कान्तःकरणवृत्तिरूपा बुद्धिश्च मिलित्वा **विज्ञानमयकोश** इत्युच्यते। पञ्च ज्ञानेन्द्रियाणि सङ्कल्पविकल्पात्मकान्तःकरणवृत्तिरूपमनश्च मिलित्वा **मनोमय-कोशः**। पञ्च प्राणाः पञ्च कर्मेन्द्रियाणि च मिलित्वा **प्राणमयकोशः**। स्थूलशरीरम**न्नमयकोश** इत्युच्यते इति शरीरत्रये पञ्चापि कोशा अन्तर्भवन्ति। ईश्वरशरीरे ईश्वरकोशाः, जीवशरीरे जीवकोशाश्च वर्तन्ते। **कोशो** नामा-च्छादनं पिधानं वोच्यते। असिपिधानं यथा असिस्वरूपमाच्छादयति तथैते पञ्च कोशाः आत्मनः स्वरूपमाच्छादयन्तीत्य**न्नमयादयः कोशा** इति कीर्त्यन्ते। अनेके मन्दमतयः गुरुशास्त्रसंप्रदायविहीना पञ्चकोशान्तर्गतमनात्म-

---

देह इति व्यवहारः। नामरूपवर्णाश्रमजातिजन्ममरणादयो धर्माः स्थूलदेहस्यैव। भुक्त-स्यान्नस्य स्थविष्ठो भागः पुरीषं भवति। मध्यमो भागः मांसं भवति। सूक्ष्मो भागः मनः उपचिनोति। पीतस्य जलस्य स्थूलांशो मूत्रं भवति। मध्यमोऽशः रक्तं भवति। सूक्ष्मोऽशः प्राणोपचयं करोति। भक्षितस्य तैलघृतादिस्नेहद्रव्यस्य स्थूलांशोऽस्थि भवति। मध्यमोंऽशो मेदो भवति। सूक्ष्मोंऽशो वाचमुपचिनोति। मातुः शोणितात् शिशोः रक्तमांसचर्माणि जायन्ते। पितुः शुक्रादस्थिनाडीमज्जा जायन्ते। एतत् स्थूलशरीरं चतुर्विधं भवति, अण्डजं जरायुजं, स्वेदजं, उद्भिज्जमिति। अण्डाज्जायमानपक्षिसर्पादयोऽण्डजाः। उल्बा-ज्जायमानमनुष्यमृगादयो जरायुजाः। स्वेदाज्जायमानयूकामशकादयः स्वेदजाः। बीजं भूमिं वोद्भिद्य जायमाना वृक्षौषधिवीरुधादयः उद्भिज्जाः।

**सूक्ष्मशरीरम्**—अपञ्चीकृतपञ्चभूतकार्यात्मकसप्तदशतत्वोपेतं **सूक्ष्मशरीर**मि-त्युक्तमात्मबोधे—

"पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्।" (आ.) १३ इति।

तत्र प्राणाः पञ्च, कर्मेन्द्रियाणि पञ्च, ज्ञानेन्द्रियाणि पञ्च, मनः एकं, बुद्धिश्चैकेति सप्तदशतत्वानि मिलित्वा **लिङ्गमित्युच्यते**। शुभाशुभकर्मकर्तृत्वं, सुखदुःखादिफल-भोक्तृत्वं इहलोकपरलोकादिगमनागमने रागद्वेषादि शमदमादि, आन्ध्यमान्द्यपटुत्वादि च सर्वं **लिङ्गशरीरधर्माः**। स्थूलशरीरवत्प्रत्यक्षप्रमाणागोचरत्वात्सूक्ष्मशरीरमित्युच्यते। शब्दादिविषयोपलब्धिहेतुत्वात्, लक्षणया आत्मावबोधकत्वाच्च —**लिङ्गदेह** इति कीर्त्यते।

भूतं यं कमपि पदार्थमात्मत्वेन मन्यमानाः कोशानां साक्षिभूतान्मुख्यात्मस्वरूपाद्विमुखा भवन्ति। अत एवान्नमयादयः कोशा आत्मस्वरूपाच्छादका इति वर्ण्यन्ते।

(२७४) विरोचनसिद्धान्तः (अन्नमयकोशात्मवादः)—

केचन पामराः विरोचनसिद्धान्तमनुसरन्तोऽन्नमयकोशमेवात्मेति वदन्ति। तत्रैवं युक्तीः कथयन्ति (१) यत्राहमिति धीरुत्पद्यते, स आत्मा। सा चाहंधीः स्थूलशरीरे भवति। 'अहं मनुष्यः' 'अहं ब्राह्मणः' इत्यनुभवः सार्वजनीनः। मनुष्यत्वब्राह्मणत्वादिधर्माः स्थूलशरीरस्यैव। तस्मादहंधीविषय-

---

**कारणशरीरम्**—अज्ञानमेव कारणशरीरमित्युच्यते। स्थूलसूक्ष्मशरीरयोः कारणत्वादज्ञानं **कारणशरीरमि**युच्यते। अस्य च स्वरूपं प्रागभिहितम्। तत्वज्ञानदाह्यत्वात् **कारणदेह** इति चोच्यतेऽज्ञानमेव।

**ईश्वरस्य शरीराणि कोशाश्च**—समष्टयज्ञानरूपमायेश्वरस्य कारण **शरीरम्**। सैवेश्वरस्य **आनन्दमयकोशः**। जीवानां सूक्ष्मशरीरसमष्टिरूपहिरण्यगर्भः **ईश्वरस्य सूक्ष्मशरीरम्**। अत्रेश्वरस्य विज्ञानमयमनोमयप्राणमयकोशा अन्तर्भवन्ति। श्रोत्रादिपञ्चज्ञानेन्द्रियाधिष्ठातृदेवतारूपदिक्पालवायुसूर्यवरुणाश्विनी कुमारात्मकानि यानीश्वरस्य पञ्चज्ञानेन्द्रियाणि तानि, समष्टिबुद्धिमयमहत्तत्वरूपो, अथवा सर्वबुद्धयभिमानिब्रह्मरूपा येश्वरस्य बुद्धिः सा च मिलित्वा **ईश्वरस्य विज्ञानमयकोशः**। पूर्वोक्तश्रोत्राद्यधिष्ठातृदेवतारूपाणि यानीश्वरस्य पञ्च ज्ञानेन्द्रियाणि तानि, समष्टिमनोमयाहङ्काररूपं वा सर्वमनोऽभिमानिचन्द्ररूपं वा यदीश्वरस्य मनस्तच्च मिलित्वा **ईश्वरस्य मनोमयकोशः**। अग्नीन्द्रोपेन्द्रप्रजापतियमात्मकानि यानीश्वरस्य पञ्च कर्मेन्द्रियाणि तानि, समष्टिप्राणो वा वाय्वभिमानिदेवतारूपो वा य ईश्वरस्य प्राणः स च मिलित्वा **ईश्वरस्य प्राणमयकोशः**। समष्टिस्थूलसृष्टिरूपो विराडीश्वरस्य **स्थूलशरीरम्**। स एवेश्वरस्या**न्नमयकोशः**।

**पञ्चकोशः**—मातापितृभ्यामुपभुक्तान्नरसपरिणामरूपशुक्रशोणितसंबन्धान्मातुरुदरे उत्पन्नः जननान्तरमपि क्षीरशाकादिरूपान्नेन वर्धितः मरणानन्तरमप्यन्नरूपपृथिव्यामेव लीयमानो देहोऽ**न्नमयकोश** उच्यते। प्राणमयकोशस्तु केवलरजोगुणस्यावस्थाविशेषः। प्राणादयो वायवः आपादमस्तकं स्थूलदेहं व्याप्य, तस्य बलमाधायेन्द्रियाणि स्वस्वव्यापारेषु प्रवर्तयंति। कर्मेन्द्रियैर्व्यवहारनिर्वर्तनादिच्छादिरूपरजोगुणवृत्तिसहितत्वाच्च **मनोमयकोशः** सत्वरजोगुणयोरवस्थाविशेषः। **विज्ञानमयकोशस्तु** केवलसत्वगुणस्यावस्थाविशेषः। एवमवस्थाभेदेनैकस्मिन्नेव सूक्ष्मशरीरे त्रयः कोशाः वर्णयन्ते।

आनन्द एवात्मनः स्वरूपम्। आत्मस्वरूपानन्दप्रतिबिम्बसहिता प्रियमोदप्रमोदरूपवृत्तिलयावधिभूता या अविद्या सैव **कारणदेहः**। सैवानन्द**मयकोशश्च**। इष्टवस्तुदर्शनजन्या वृत्तिः **प्रिय** इति, तल्लाभजन्या वृत्तिः **प्रमोद** इति च कीर्त्यते। एता वृत्तयः जाग्रत्स्वप्नयोरवस्थयोः पुण्यकर्मफलभूतसुखानुभवकाले उद्भवन्ति। सुषुप्तौ ता वृत्तयः स्वकारणेऽज्ञाने लीयन्ते। एतादृशमज्ञान**मानन्दमयकोश** इत्युच्यते। तत्रान्नमयकोशो **भोगस्थानम्**।

स्थूलदेह एवात्मा। अथ वा यत्र मुख्या प्रीतिर्भवति स आत्मा। दारापत्यधनपश्वादयः यतोऽस्य स्थूलदेहस्योपकुर्वन्ति ततस्तेषु प्रीतिर्भवति। यदि तेऽस्य स्थूलदेहस्य नोपकुर्वन्ति तदा तेषु प्रीतिर्नास्ति यस्य निमित्तेनान्यत्र प्रीतिरुपजायते तस्मिन्नेव स्थूले देहे मुख्या प्रीतिः सर्वेषाम्। तस्मात् स्थूलदेह एवात्मा। तस्माद्वस्त्राभरणान्नपानाद्युपकरणैः स्थूलशरीरस्य समलङ्कृत्य पोषणमेव परमपुरुषार्थ इत्यसुरराजविरोचनस्य[१] सिद्धान्तः।

---

सूक्ष्मशरीरं **भोगसाधनम्**। तत्रापि प्राणमयकोशः क्रियाशक्तिमत्वात् **कार्यरूपो** भवति। मनोमयकोशस्तु इच्छाशक्तिमत्वात्**करणरूपो** भवति। विज्ञानमयकोशस्तु ज्ञानशक्तिमत्वात् **कर्तृरूपो** भवति। आनन्दमयकोशस्तु **भोक्तृरूपः**।

१. **चार्वाकमतानुसारिणो** वाय्वादिभूतचतुष्टयसङ्घातरूपं देहमात्मत्वेन प्रतिपन्नास्तत्रैता युक्तीराहुः—(१) अहं धीविषयो यः स आत्मा। 'अहं मनुष्यः' 'अहं स्थूलः', 'अहं कृशः' 'अहं ब्राह्मणः' इत्याद्यनुभवेषु मनुष्यत्वादिधर्मविशिष्टः स्थूलदेह एव विषयो भवतीति स देह एवात्मा। (२) अथवा परमप्रेमविषयो यः स आत्मा। एतत्स्थूलदेहोपकारकत्वनिमित्तं पुरस्कृत्यैव पुत्रमित्रकलत्रादयः प्रिया भवन्ति। अतो देह एव परमप्रीतेर्विषयः। एवं परमप्रेमास्पदत्वरूपात्मलक्षणयोगात्स्थूलदेह एवात्मा। (३) तस्य देहस्यालङ्करणपोषणादिजन्यभोग एव परमपुरुषार्थः। (४) मरणमेव मोक्षः। (५) प्रत्यक्षमेकमेव प्रमाणं नान्यत्प्रमाणमस्ति इति।

**तदेतच्चार्वाकमतमसङ्गतम्**—(१) 'अहं पश्यामि', 'अहं वदामि' इत्यादिव्यवहारेष्विन्द्रियस्याप्यहं धीविषयत्वं दृश्यते। (२) 'मम देहः कृशः' इत्यादिव्यवहारेषु देहस्य ममताविषयत्वमपि भवति। यो ममताविषयः स अहंताविषयो न भवितुमर्हति। इत्थं स्थूलदेहे अहं धीविषयत्वस्य व्यभिचारदर्शनात्स्थूलदेहो नात्मा। (३) पुत्रदाराद्यपेक्षया स्थूलदेहेऽधिकप्रीतिदर्शनेऽपि देहादप्यतिशयिता प्रीतिरिन्द्रियेषु दृश्यते। तथा च परप्रेमास्पदत्वास्याप्यभावात् स्थूलदेहो नात्मा। (४) किञ्च चेतन एवात्मा भवितुमर्हति। जडानां भूतानां सङ्घातरूपे देहे चैतन्याभावाद्देहो नात्मा। (५) पूगचूर्णादिसंयुक्तताम्बूलपत्रे रागजननशक्तिवत् भूतसमुदायात्मकदेहे ज्ञानशक्तिरस्तीत्येतन्न युज्यते। जडभूतसमुदायरूपदेहे ज्ञानशक्तिरस्ति चेत्तर्हि भूतसमुदायरूपघटादावपि चैतन्यं प्रसज्येत। न तु घटादौ चैतन्यमस्ति। (६) सुषुप्तिमूर्च्छामरणाद्यवस्थासु घटादिवद्देहोऽपि जडो भवति। तस्मान्न जडो देह आत्मा भवति। (७) यदि देहः आत्मा भवेत्तदा बालदेहाद्भिन्ने यौवनदेहे 'सोऽहम्' इति प्रत्यभिज्ञा न भवितुमर्हति। जायते तु तथा प्रत्यभिज्ञा। अतोऽपि देहो नात्मा। (८) जन्ममरणादियुक्तस्य देहस्य जन्मनः पूर्वं मरणादूर्ध्वं च सत्ता नास्ति। आत्मा त्वस्ति। अन्यथा कृतनाशाकृताभ्यागमप्रसङ्गः स्यात्। अतश्च देहो नात्मा। (९) देहालङ्करणपोषणादिजन्यभोग एव **परमपुरुषार्थ** इत्यपि न। तथाहि—यः इच्छाविषयः स **पुरुषार्थ** इत्युच्यते। सा चेच्छा सर्वेषां सुखप्राप्तौ दुःखनिवृत्तौ च भवति। अतस्तयोरेव पुरुषार्थत्वमुचितम्। तत्रापि सर्वसुखापेक्षया अधिकं यत्सुखं, आत्यन्तिकी च या दुःखनिवृत्तिस्तयोरेव **परमपुरुषार्थत्वं** भवति। तादृशं निरतिशयं सुखं,

(२७५) **इन्द्रियात्मवादः—**

अपरे केचनैवमाहुः—स्थूलशरीरं नात्मा। किन्तु स्थूलशरीरे यत्सद्भावे जीवनव्यवहारो भवति, यदभावे मरणव्यवहारो भवति स आत्मा। स च स्थूलशरीराद्व्यतिरिक्तः। जीवनमरणव्यवहाराविन्द्रियाधीनौ भवतः। शरीरे यावत्कालपर्यन्तमिन्द्रियाणि स्वस्वव्यापारक्षमाणि भवन्ति तावत्कालपर्यन्तं 'अयं जीवति' इति व्यवहारो भवति। यस्य कस्यापीन्द्रियस्य नाशे 'अयं मृतः' इति च व्यवह्रियते। किञ्च अहं पश्यामि 'अहं वदामि' इत्यादिव्यवहारे 'अहं' इति बुद्धिरिन्द्रिये एव भवति। तस्मात् 'अहं' इति बुद्धिविषयेन्द्रियमेवात्मा।

(२७६) **हिरण्यगर्भोपासकानां प्राणात्मवादः**—हिरण्यगर्भोपासकाः प्राण एवात्मेति वदन्ति।

---

आत्यन्तिकी दुःखनिवृत्तिश्च मोक्षे एव स्तः। वैषयिकभोगे दोषसत्त्वान्न **स परमपुरुषार्थः**। (१०) देहस्यात्मत्वे मरणानन्तरं देहस्य दाहे मोक्षान्वयिनो देहरूपस्यात्मन एवाभावात् 'मरणमेव मोक्ष' इति शब्दो निरर्थकः। (११) भाविभोजनादौ तृप्त्यादिहेतुत्वज्ञानमनुमानप्रमाणेन सिद्ध्यति। देशान्तरे मृतपित्रादिमरणज्ञानमाप्तवाक्यरूपशब्दप्रमाणात् सिद्ध्यति। तस्मात्प्रत्यक्षमात्रस्य प्रमाणत्ववादो हठ एव। इत्थं देहात्मवादिचार्वाकमतमसङ्गतमेव।

(१) चार्वाकैकदेशिनो लोकायतिकाः इन्द्रियात्मवादिनः। तन्मतमप्यसङ्गतम् (१) यदभावे शरीरं न तिष्ठेत्स आत्मा। श्रोत्रनेत्रवाक्पादाद्यभावेऽपि बधिरान्धमूकपङ्गुरूपं शरीरं जीवत्येव। तस्मान्नेन्द्रियमात्मा। (२) अहं पश्यामि' 'अहं वदामि' इत्यादिव्यवहारे इन्द्रियस्याहंधीविषयत्वादिन्द्रियमेवात्मेति यदुक्तं तत्राप्युच्यते—'चक्षुष्मानहं पश्यामि' इत्येव तत्र वक्तुरभिसन्धिः। न तु चक्षूरूपोऽहं पश्यामि' इति। तस्मात् तत्राहमनुभवस्य विषयश्चक्षुरादीन्द्रियव्यतिरिक्त एव भवति। किञ्च मम चक्षुस्तीक्ष्णं। मम चक्षुर्मन्दम्'। इति चक्षुरादीन्द्रियेषु ममताविषयत्वदर्शनात्तेषु अहंताविषयत्वं व्यभिचरितम्। तस्मादिन्द्रियं नात्मा' (३) यो यत् वेत्ति स वेत्ता वेद्याद्विलक्षणः। यथा घटस्य द्रष्टा घटाद्विलक्षणस्तथेन्द्रियाणां पटुत्वमन्दत्वादिवेत्ता आत्मेन्द्रियाद्विलक्षणः। (४) मनसोऽन्यत्र व्याकुलत्वे श्रोत्रादीनि शब्दादीन् न गृह्णन्तीति जडानीन्द्रियाणि। अतश्च नेन्द्रियमात्मा। (५) एवं सति हठादिन्द्रियमेव चेतनमिति यो वदति स एवं प्रष्टव्यः—'किमेकमेवेन्द्रियं चेतनं, उत सर्वेन्द्रियाणां समुदायः, आहोस्वित् प्रत्येकं सर्वाणीन्द्रियाणि' इति। **नाद्यः**—यदिन्द्रियं चेतनत्वेनाभिमतं तस्याभावेऽपि ज्ञानं जीवनं च दृश्यते। तस्मादेकमेवेन्द्रियं चेतनमिति पक्षोऽसङ्गतः। **न द्वितीयः**—इन्द्रियसमुदायमध्ये एकस्येन्द्रियस्य नाशेऽपि समुदायनाशो भवति। ततश्च समुदायान्तर्गतस्यैकस्येन्द्रियस्य नाशे समुदायनाशात् ज्ञानजीवनयोर्विलयः प्रसज्यते। न तु तथा भवति। तस्मादिन्द्रियसमुदायोऽपि न चेतनः। **न तृतीयः**—प्रत्येकमिन्द्रियाणामात्मत्वे एकस्मिन् देहे दश चेतना आत्मानोऽङ्गीकार्याः। दशानां विरुद्धेच्छत्वसंभवात् विरुद्धेच्छनानाचेतनाधिष्ठितं शरीरं दशानां मत्तगजानामलनस्तम्भवदुन्मथ्येत। इत्थमिन्द्रियाणामचेतनत्वान्न तेषामात्मत्वं युक्तम्। (६) श्रुतिषु प्रसिद्धः इन्द्रियसंवादः इन्द्रियाभिमानिदेवताविषयो वेदितव्यः। न ताः श्रुतयः इन्द्रियाणां चेतनत्वे प्रमाणम्। तस्मादिन्द्रियात्मवादोऽसङ्गतः।

तत्रेमां युक्तिमाचक्षते—मरणसमये मूर्च्छितस्य पार्श्वस्थाः सति प्राणे अयं जीवतीति, तदभावेऽयं मृत इति च निश्चिन्वन्ति। किञ्च चक्षुः-श्रोत्रवागादीन्द्रियाभावे तत्तदिन्द्रियव्यापारोपरमेऽपि अन्धबधिरमूकानां शरीरं यथावदवस्थितमेव भवति। प्राणोत्क्रमणे तु शरीरं तत्क्षणमेव पतित्वा भयङ्करं श्मशानवदमङ्गलं च भवति।

किञ्च 'चक्षुष्मानहं पश्यामि, श्रोत्रवानहं शृणोमि' इति व्यवहारादि-न्द्रियविलक्षण आत्मा सिद्धः। स चात्मा क इति जिज्ञासायां सुषुप्तौ सर्वेन्द्रियोपरमेऽपि प्राणो जागर्ति। प्राणसत्वादेव तदा 'अयं जीवति' इति व्यवहारो भवति। स्थूलशरीरात्प्राणवियोगे तु 'अयं मृतः' इति व्यवहारो जायते। तस्माज्जीवनमरणव्यवहारयोः शरीरे प्राणसद्भावासद्भावाधीनत्वात् प्राण[1] एवात्मेति निश्चेयः।

(२७७) **मनआत्मवादः**—अन्ये आहुः—प्राणो जडः। तस्मात्स नात्मा, घटादिवत्। बन्धमोक्षौ मनोमात्राधीनौ। विषयासक्तं मनो बन्ध-हेतुः। विषयवासनाशून्यं मनो मोक्षहेतुः। किञ्च, मनस्संबन्धादेवेन्द्रियाणां स्वस्वविषयावबोधनसामर्थ्यम्। नान्यथा। तस्मान्मन एव सर्वव्यवहारकारणम्।

---

१. **प्राणात्मवादखण्डनम्**—समष्टिप्राणहिरण्यगर्भोपासकमतमसङ्गतम्। (१) बाह्यवायुवत्प्राणस्यापि वायुविशेषत्वान्न स आत्मा। (२) प्राणस्यादर्शनं न नियमेन मरणकारणम्। वृक्षादिषु प्राणादर्शनेऽपि तेषां जीवनात्। मनुष्यस्य मूर्च्छावस्थायामपि क्वचित् प्राणसत्वोपलब्धिर्नास्ति। अथापि मनुष्यो न मृतो भवति। परं तु जीवत्येव। तस्मादपि प्राणो नात्मा। (३) अपि च सुषुप्तौ सन्नपि प्राणः धनाद्यपहारिणं चोरं न निवारयति। न वा बन्धुजनमागतं पुरस्करोति। तस्मात्प्राणो जडः। अतश्च स नात्मा। (४) देहाद्बहिः प्राणोत्क्रमणे देहस्य मृतत्वप्रसिद्धेः प्राण आत्मेति वचनमप्यसङ्गतम्। देहाद्बहिर्जाठराग्नेर्निर्ग-मादपि लोके मरणप्रसिद्धेः सत्वात्। अतः प्राणोत्क्रमणे मरणप्रसिद्धिर्व्यभिचरिता। श्रुतौ प्राणश्रैष्ठ्यकीर्तनं प्राणोपासनाविधिस्तुतयेऽर्थवादः। (५) श्रुतौ प्राणमयादिकोशानामात्म-त्वप्रतिपादनं स्थूलारुन्धतीन्यायेन सर्वान्तरप्रत्यगभिन्नाधिष्ठानब्रह्मप्रदर्शनार्थम्। (६) श्रुतौ प्राणस्येन्द्रियैः सह संवादस्य देहे तत्प्रवेशस्य च वर्णनं प्राणाभिमानिदेवताभिप्रायेणेति ज्ञेयम्। (७) क्षुधया मम प्राणो याति। भोजनेन मम प्राणस्तृप्यति इत्यादिव्यवहारा-त्प्राणो ममताविषय एव भवति। न त्वहंताविषयः। अतो न स आत्मा। (८) स्वप्राणस्य बहिर्गमनस्यान्तरागमनस्य च वेदनात् तद्वेदनकर्ता साक्षी आत्मा प्राणादन्य एवेति सिद्धम्।

अतो मन एवात्मा ।

## (२७८) विज्ञानवादिबौद्धमतम् (बुद्धिरेवात्मा)—

क्षणिकविज्ञानवादी बौद्ध एवमाह—मनसो व्यापारो बुद्ध्यधीनो भवति। यतो बुद्धेराकार एव मनस्तस्मात् क्षणिकविज्ञानरूपा बुद्धिरेवात्मा भवितुमर्हति । मनो नात्मा इति। **तेषामयमाशयः**—सर्वे पदार्था विज्ञानस्यैवाकारा भवन्ति। तच्च विज्ञानं प्रकाशरूपम्। प्रतिक्षणं विज्ञानमुत्पद्य विनश्यति। पूर्वविज्ञानस्य सममन्यद्विज्ञानमुत्पद्यते । ततः पूर्वविज्ञानं विनश्यति । तथैव तृतीयविज्ञानोत्पत्तौ द्वितीयविज्ञानस्य विनाशो भवति । तुरीयविज्ञानस्योत्पत्तौ तृतीयविज्ञाननाशो भवति । एवं नदीप्रवाहवद्विज्ञानस्य धाराऽविच्छिन्नाऽनुवर्तते । सा च विज्ञानधारा द्विविधा—एका आलयविज्ञानधारा । अन्या तु प्रवृत्तिविज्ञानधारा । 'अहं' 'अहं' इति विज्ञानधारा **आलयविज्ञानधारेति** कीर्त्यते । सैव **बुद्धिरिति** कथ्यते । 'अयं घटः' 'अयं देहः' इति विज्ञानधारा **प्रवृत्तिविज्ञानधारेति** भण्यते । आलयविज्ञानधारायाः सकाशात्प्रवृत्तिविज्ञानधारोत्पद्यते । मनसः स्वरूपमपि प्रवृत्तिविज्ञानधारान्तर्भूतमेव । अतो मनः आलयविज्ञानधारारूपबुद्धेः कार्यम्। **सा बुद्धिरेवात्मा ।** आलयविज्ञानधारया प्रवृत्तिविज्ञानधाराया बाधचिन्तनेन निर्विशेषक्षणिकविज्ञानधारायाः

---

१. **मनआत्मवादखण्डनम्**—नारदपाञ्चरात्रतन्त्रानुसारिणो मन एवात्मेति वदन्ति। तदपि न संभवति। (२) टङ्कवास्यादिवन्मनसः करणत्वान्न मन आत्मा। सुषुप्त्यादौ मनसोऽभावेऽपि सामान्यचैतन्यस्य सत्वात्, सति मनसि चैतन्यं तदभावे तदभाव इत्यन्वयव्यतिरेकस्य भङ्गात् न मनश्चेतनम्, किन्तु जडमेव। तस्मान्मनो नात्मा। (३) 'मम मनोऽन्यत्र गतं, इदानीं प्रत्यागतम्' इति व्यवहारान्मनो ममताया विषयो नाहंतायाः। (४) तस्मान्मनसः स्थैर्यचाञ्चल्यादिवेत्ता साक्षिभूत आत्मा मनोविलक्षणः सिद्धः। (५) चैतन्याभाससहितमेव मनो भोक्तृ भवति, न स्वतन्त्रं मनः। अतोऽभोक्तृत्वादपि मनो नात्मा।

(६) "मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
बन्धाय विषयासक्तं मुक्तयै निर्विषयं स्मृतम्" ॥

इति वचनस्यायमाशयः—विषयवासनावासितं मनः मोक्षसाधनं प्रतिबद्ध्य जगदध्यासास्पदं भूत्वा बन्धकारणं भवति। तदेव च मनः विषयवासनारहितं ज्ञानप्राप्तिद्वारा मनसः स्वरूपं बाधित्वा मोक्षकारणं भवतीति। न तद्वाक्यं मनस एवात्मतां बोधयति। किन्तु बन्धसाधनान्निवृत्तिं मोक्षसाधने प्रवृत्तिं च तद्वाक्यं बोधयति। (७) "मनो ब्रह्मेति व्यजानात्" (तै. भृ. 4) इत्यादिना मनोमयकोशस्यात्मत्वबोधकश्रुतेस्तात्पर्यं तु स्थूलारुन्धतीन्यायेनेति प्राक् प्रदर्शितम्।

स्थितिः सिद्ध्यति। तादृशी स्थितिरेव तन्मते **मोक्षः**। इत्थं विज्ञानवादिनो बुद्धेः क्षणिकतां स्वयंप्रकाशरूपतां च कल्पयित्वा, सा बुद्धिरेवात्मेति वर्णयन्ति।

## (आ. २७९-२८२) आनन्दमयकोश एवात्मेति मतम्—

**(२७९) तत्र भट्टमतम्**—पूर्वमीमांसावर्तिककारो भट्ट एवमाह—न हि विद्युल्लेखेवात्मा क्षणिकः, किन्तु स्थिरः। स आत्मा जडरूपः प्रकाशरूपश्चास्ते। **अयमस्याभिप्रायः**—सुषुप्तेरुत्थित एवं वदति-'एतावन्तं कालमहं जडो निस्संज्ञोऽस्वाप्सम्' इति। तस्मादात्मा **जडरूप** इति सिद्ध्यति। किञ्च सुषुप्तादुत्थितस्य स्मृतिरपि भवति। अननुभूतेऽर्थे न स्मृतिर्भवेत्। सुषुप्तावात्मस्वरूपातिरिक्तं न किञ्चिदपि ज्ञानसाधनमस्ति। सुषुप्त्यनन्तरभाविस्मृतेः कारणं सौषुप्तज्ञानमेव वाच्यम्। तच्च सुषुप्तिकालीनं ज्ञानमात्मस्वरूपमेव। इत्थमात्मा खद्योतवत्प्रकाशरूपोऽप्रकाशरूपश्च। ज्ञानरूपत्वात्**प्रकाशरूपः**, जडरूपत्वाद**प्रकाशरूपश्च**। आनन्दमयकोश एव प्रकाशरूपोऽप्रकाशरूपश्चास्ति। सुषुप्तौ चैतन्याभाससहिताज्ञानमेवानन्दमयकोश इत्युच्यते। तत्र चिदाभासः प्रकाशरूपोऽज्ञानमप्रकाशरूपं च भवति। तस्माद्भट्टमते आनन्दमयकोश एवात्मेति सिद्धम्।

---

१. **विज्ञानवादिमतखण्डनम्**—बुद्धशिष्यं **योगाचारं** येऽनुसरन्ति ते क्षणिकविज्ञानरूपां बुद्धिमात्मेति वर्णयन्ति। **तदसङ्गतम्**—(१) रूपादीनां ज्ञानरूपं कार्यं प्रति नेत्रादीन्द्रियं साधनम्। तथा निश्चयरूपकार्यं प्रति साधनभूता बुद्धिर्नात्मा भवितुमर्हति। किन्तु सर्वपदार्थनिश्चायिकाया बुद्धेर्यः साक्षी स एवात्मा। (२) स आत्मा स्वयं स्वयंप्रकाशरूपत्वात्सदा भासते। अतो भास्यरूपादेर्भासकः सूर्यादिर्यथा भास्यविलक्षणस्तथा भास्यबुद्धेर्भासकः आत्मा बुद्धेर्विलक्षणः सिद्ध्यति। यथा दीपादेः प्रकाशो घटादिना संबद्धः घटादेराकारमापद्य संमिश्रतया भासमानोऽपि वस्तुतो घटादेर्विलक्षण स्वभाव एव तथा ज्ञानस्वरूप आत्मा बुद्धिवृत्त्या संबद्धः तदाकारमापद्याविविक्ततया भासमानोऽपि परमार्थतया बुद्धिवृत्तेर्विलक्षणो नित्यशुद्धासङ्गचिन्मात्ररूपः। (३) अपञ्चीकृतभूतसमष्टिसत्वगुणांशकार्यभूतस्यान्तःकरणस्य निश्चयरूपक्रियया **बुद्धिरिति**, सङ्कल्पविकल्परूपक्रियया **मन** इति च व्यपदेशः। तस्माद्बुद्धिरन्तकरणाद्व्यतिरिक्ता। ततश्च भौतिकान्तःकरणाव्यतिरिक्तबुद्धेरपि भौतिकत्वाद्देहेन्द्रियमनोवदनात्मत्वमेव सिद्धम्। (४) कठोपनिषत्तृतीयवल्ल्यां आत्मनो रथस्वामित्वेन, बुद्धेः सारथित्वेन च वर्णनं दृश्यते। यथा सारथिविलक्षणो रथस्वामी तथा बुद्धिविलक्षण आत्मा भवति। (५) 'मम बुद्धिरिदानीं मन्दा, इदानीं तीक्ष्णा' इति ममताविषयत्वाद्बुद्धेरहन्ताविषयत्वं न युज्यते। अतो न बुद्धिरात्मा। (६) आत्मनः क्षणिकत्वं विज्ञानवादिसंमतमत्यन्तमसङ्गतम्—तथात्वे उत्तमर्णः गतवत्सरे दत्तं धनमस्मिन् वत्सरेऽधमर्णाद्या-

## (२८०) माध्यमिकबौद्धमतम् (आनन्दमयकोश आत्मा)

शून्यवादिनो बौद्धास्त्वेवमाहुः—आत्मा निरंशः। तस्मादेकस्यैवात्मनः प्रकाशरूपत्वमप्रकाशरूपत्वं च न[१] घटेत। खद्योतस्य सांशत्वादेकोंऽशः प्रकाशरूपोऽपरोंशोऽप्रकाशरूपश्च भवति। न त्वात्मनो निरंशस्य विरुद्धोभयरूपवत्त्वकथनं युक्तम्। यद्युभयरूपतासिद्धये आत्मनः **सांशत्वमङ्गीक्रियते** तर्हि सांशानां घटादीनामुत्पत्तिनाशदर्शनादात्मनोऽपि **उत्पत्तिनाशवत्त्वं** प्रसज्येत। यदुत्पत्तिनाशवद्वस्तु तदुत्पत्तेः प्रागूर्ध्वं च नाशादसद्भवति। आद्यन्तयोर्यदसत्तन्मध्येऽप्यसदेव भवति। "आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा" (मा. का. वै 6.) इति स्मृतेः। तस्मादुत्पत्तिनाशवत्त्वे **आत्मा असद्रूपो भवेत्।** तथा आत्मभिन्नः **सर्वोऽपि पदार्थः** उत्पत्तिनाशवत्त्वाद**सद्रूप** एव। अनया रीत्या आत्मानात्मरूपसकलवस्तूनामसद्रूपत्वात् **शून्यमेव परमतत्त्वमिति शून्यवादिनो माध्यमिकबौद्धस्य** मतम्।

तेऽप्यज्ञानरूपानन्दमयकोशमेव प्रतिपादयन्ति। तथाहि दृष्टिभेदेनाज्ञानं त्रिभिः रूपैः प्रतीयते। (१) अद्वैतशास्त्रसंस्काररहितस्य जगदाकारेण परिणतमज्ञानं **सत्यत्वेन** प्रतीयते। (२) अद्वैतशास्त्रानुसारियुक्तिकुशलानां पण्डितानामज्ञानं तत्कार्यं जगच्च **सदसद्विलक्षणानिर्वचनीयत्वेन** भाति। (३) ज्ञाननिष्ठां प्राप्तस्य जीवन्मुक्तस्य विदुषोऽज्ञानं तत्कार्यं च **तुच्छत्वेन** प्रतीयते। **तुच्छं, असत्, शून्यमिति** त्रयः शब्दाः समानार्थाः। तथा चोक्तं पञ्चदश्यां चित्रदीपे—

---

दातुमिच्छेत्। प्रथमक्षणे भुक्तवान् पुरुषः उत्तरक्षणे तृप्तोऽहमस्मि' इति न ब्रूयात्। आत्मनः क्षणिकत्वे गतवत्सरे धनं दत्तवत उत्तमर्णस्य, पूर्वक्षणे भुक्तवतः पुरुषस्य चेदानीमभावात्। तस्मादात्मा न क्षणिकः। (७) आत्मनः क्षणिकत्वे मोक्षसाधनकलापो व्यर्थः स्यात्।

(१) आत्मा चिज्जडोभयात्मक इति भट्टपक्षोऽप्यसङ्गतः—

'अयमन्धकारः प्रकाशः' 'अयं पुरुषः स्थाणुः' इतिवच्चैकत्र वस्तुनि चिज्जडांशयोर्विरोधात्। उभयांशत्वमङ्गीकृत्य नोभावप्यंशावनुभवगोचरौ किन्तु जडांश एवानुभवगोचरो न चेतनांश इति कथनं तु न युक्तम्। यथा दण्डदर्शनमात्रेण 'अयं दण्डी' इति ज्ञानं न जायते; किन्तु दण्डपुरुषोभयदर्शनेनैव जायते तथा जडांशमात्रदर्शनेन न चिज्जडोभयात्मकात्मसिद्धिर्भवेत्। चेतनांशस्याप्यनुभवगोचरत्वाभ्युपगमे जाड्यं तत्र कल्पितमिति वक्तव्यम्। हठादुभयोरंशयोः सत्यत्वाभ्युपगमे आत्मनो जडचेतनांशयोः परस्परं कः संबन्धः? संयोगो वा तादात्म्यं वा विषयविषयिभावो वेति स प्रष्टव्यः।

"माया चेयं तमोरूपा तापनीये तदीरणात् ।
अनुभूतिस्तत्र मानं प्रतिजज्ञे श्रुतिः स्वयम् ॥ (125.)
जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः ।
आबालगोपं स्पष्टत्वादानन्त्यं तस्य साऽब्रवीत् ॥ (126.)
इत्थं लौकिकदृष्ट्यैतत् सर्वैरप्यनुभूयते ।
युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः ॥ (128.)
नासदासीद्विभातत्वात् नो सदासीच्च बाधनात् ।
विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः ॥ (129.)
तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥ (130) इति ।

इत्थं जीवन्मुक्तानां तुच्छत्वेन प्रतीयमानेऽज्ञाने मोहमापन्नाः शून्यवादिनो न परमपुरुषार्थं लभन्ते । किन्तु तुच्छरूप आनन्दमयकोश एवात्मेति वदन्ति ।

---

आद्ये पक्षे 'अनित्ययोः सावयवयोर्द्वयोर्वस्तुनोरेव संयोग' इति नियमादात्मनोऽनित्यत्वं प्रसज्येत । द्वितीयपक्षे चिज्जडांशयोरुभयोरप्येकस्यैवात्मनः स्वरूपत्वाच्चिदंशो जडो भवेत् । जडांशश्च चिद्भवेत् । तृतीयपक्षे घटतज्ज्ञानवदुभयोरंशयोरनात्मत्वं भवेत् । "विज्ञानमानन्दं ब्रह्म" (बृ. 3.1.27.), "प्रज्ञानं ब्रह्म" (ऐ. 3.1.) "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. ब्र. 1.) इत्यादिश्रुतिप्रसिद्धज्ञानमात्रस्वरूपस्यात्मनोऽर्धांशस्य जडत्वाभ्युपगमे प्रमाणं नोपलभ्यते । सुप्तोत्थितस्य 'जडो निस्संज्ञोऽहमस्वाप्सम्' इत्यात्मनो जडत्वसंपादिका या स्मृतिरुक्ता सा सौषुप्ताज्ञानमेव विषयीकरोति । तस्मादात्मनो जडचेतनोभयांशकत्वमसङ्गतमेव ।

'सर्वं शून्यं; शून्यमेव परमतत्त्वं, सुषुप्तिकालीनाज्ञानरूपानन्दमयकोश एवात्मा' इतीदं **माध्यमिक**मतमप्यसङ्गतमेव । तथाहि—किं शून्यं साक्षिसहितमुत साक्षिरहितमुत स्वप्रकाशमिति त्रिधा तत्र विकल्पो भवति । आद्यपक्षे "यः शून्यस्य साक्षी स शून्याद्विलक्षण आत्मा सिद्ध्यति । द्वितीयपक्षे साक्षिरहितत्वाच्छून्यमेव न सिद्ध्यति । तृतीयपक्षे स्वप्रकाशत्वादस्मदभिमतं ब्रह्मैव शून्यमिति नामान्तरेणोक्तं भवति । तथा च शून्यासिद्धिरेव ।

"असद्वा इदमग्र आसीत्" (तै. ब्र. 7) "असदेवेदमग्र आसीत्" (छा. 6-2-1) इत्यादिवाक्यानि पूर्वापरविरोधात् न शून्यं प्रतिपादयन्ति । किन्तु नैयायिकवैशेषिकबौद्धादयः प्रागभावादीन् जगतः कारणत्वेन वर्णयन्ति, तदनूद्य तादृशविपरीतग्रहनिवर्तने एव तादृशश्रुतीनां तात्पर्यम् । असत्=अनभिव्यक्तनामरूपात्मकं, इदं=जगत्, अग्रे=प्राक् सृष्टेः आसीदिति श्रुत्यर्थः । इत्थं शून्यवादोऽसङ्गत एव ।

बौद्धशिष्याश्चत्वारः । (१) माध्यमिकः शून्यवादी, (२) योगाचारः क्षणिकविज्ञानवादी, (३) सौत्रान्तिकः अनुमेयबाह्यपदार्थवादी, (४) वैभाषिकः प्रत्यक्षबाह्यार्थवादी ।

**(२८१) प्राभाकरनैयायिकयोर्मतम्; (आनन्दमयकोश आत्मा)**–

पूर्वमीमांसकैकदेशिनः प्राभाकरा नैयायिकाश्चैवं कथयन्ति—नात्मा शून्यरूपः। 'आत्मा शून्यरूपः, इति वदन्नेवं प्रष्टव्यः— शून्यरूपं तेनानुभूयते नवेति। यदि शून्यरूपमनुभूयते तदा येन तच्छून्यरूपमनुभूयते स एवात्मा। स च शून्यविलक्षण इति च सिद्ध्यति। यदि शून्यरूपं नानुभूयते तदा शून्यमेव नास्तीति सिद्ध्यति। अनया रीत्या शून्यविलक्षण आत्मा सिद्धः। तस्यात्मनो मनसा संयोगे ज्ञानमुत्पद्यते। तेन **ज्ञानरूपेण गुणेनात्मा चेतनो** भवति। स्वरूपतस्त्वात्मा जडः। सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मा **अप्यात्मनो गुणाः** इति।

तन्मतेऽप्यानन्दमयकोश एवात्मा। विज्ञानमयकोशस्था **या** बुद्धिः साऽऽत्मनो ज्ञानरूपो गुण इत्युच्यते। तथाहि—आनन्दमयकोशे चैतन्यं गूढमास्ते। विवेकहीनानां न तत्प्रतीयते। तस्मात्प्राभाकरा नैयायिकाश्च सुषुप्तमात्मानं ज्ञानहीनं मन्वानाः स्वरूपत एवात्मानं जडमाहुः। तस्माद्गूढचैतन्ये आनन्दमयकोशे एव तयोरात्मत्वभ्रान्तिरस्ति। **अपि च** तन्मते आत्मस्वरूपं नित्यज्ञानं न जीवेऽभिमतं, किन्त्वनित्यज्ञानमेव जीवेऽभिमतम्। तच्चानित्यं ज्ञानं सिद्धान्तेऽन्तःकरणवृत्त्यात्मकबुद्धिरूपं भवति। इत्थं प्राभाकरनैयायिकयोर्मते **आनन्दमयकोश आत्मा**। बुद्धिस्तस्यात्मनो गुणः।

इदमपि मतं न समीचीनम्। ज्ञानभिन्नं यद्यज्जडवस्तु घटादिकं तत्सर्वमनित्यमस्ति। यद्यात्मा ज्ञानस्वरूपो न भवेत्तदा घटादिवज्जडो**ऽनित्यश्च** भवेत्। आत्मनोऽनित्यत्वे मोक्षान्वयिनोऽभावात् **मोक्षसाधनानां निष्प्रयोजनता** स्यात्।

इत्थं वेदान्तवाक्येष्वश्रद्दधाना बहिर्मुखाः पुरुषा गुरुसंप्रदायशून्याः पञ्चकोशेष्वन्यतममेव स्वस्वबुद्ध्यनुसारेणात्मत्वेन मन्वाना मुख्यात्मानं साक्षिणं न जानन्ति। तस्मादन्नमयादयः आत्मन आच्छादकत्वात्**कोशा** इति वर्ण्यन्ते।

---

१. **प्राभाकरनैयायिकयोर्मतखण्डनम्**—'सुषुप्तौ ज्ञानाभावादात्मा जडः' इत्येतन्न युज्यते। 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति परामर्शबलात् सुषुप्तौ सुखाज्ञानयोरनुभवस्योपपादितत्वात् तेषां वचनं बाधितं भवति। आत्मा यदि स्वरूपतो जडः स्यात् तदा सुषुप्तावनुभूतस्यानन्दस्य स्मरणं न स्यात्। स्मर्यते तु। तस्मादात्मा न जडः।

## (२८२) ईश्वरीयपञ्चकोशैस्तत्स्वरूपाच्छादनम्—

यथा जीवस्य पञ्चकोशा जीवस्य यथार्थस्वरूपं साक्षिणमावृण्वन्ति तथेश्वरस्य समष्टिपञ्चकोशा ईश्वरस्य यथार्थस्वरूपमावृण्वन्ति । तथाहि— ईश्वरस्य यथार्थं स्वरूपं तत्पदलक्ष्यं यद्रूपं तदेव । तमेतं श्रौतमर्थं विहाय केचन मायारूपानन्दमयकोशविशिष्टमन्तर्यामिणं तत्पदवाच्यमेव परमतत्त्वमिति वदन्ति । तथैवान्ये हिरण्यगर्भवैश्वानरविष्णुब्रह्मशिवगणेशदेवीसूर्यादिषु खड्ग-कुद्दालाश्वत्थार्कवेण्वन्तेषु पदार्थेषु परमात्मत्वभ्रान्तिमापन्नाः । यद्यपि सकल-पदार्थेषु लक्ष्यभागः परमात्मनो न भिन्नस्तथापि तत्तदुपाधिविशिष्टानेव पर-मात्मत्वेन मन्यन्ते । तदेतन्मतं तेषां भ्रान्तिरेव । पञ्चकोशावृताज्जीवेश्वरयोः परमार्थस्वरूपाद्बहिर्मुखा देहादिष्वात्मत्वभ्रान्तिमापद्य **पुण्यपापान्याचरन्ति ।** अन्तर्याम्यादिवंशपर्यन्तानां पदार्थानामीश्वरबुद्ध्या आराधनं कृत्वा सुखं प्राप्तु-मिच्छन्ति । यादृशमुपाधिमाराधयन्ति तदनुसारेण फलं च सिद्ध्यति । यस्मात्कारणसूक्ष्मस्थूलरूपः सर्वोऽपि प्रपञ्चः ईश्वरशरीरेऽन्तर्भूतस्तस्मात् तत्तदुपासनानुसारि फलं भवति । तथाचोक्तं पञ्चदश्यां चित्रदीपे—

" एवमन्ये स्वस्वपक्षाभिमानेनान्यथाऽन्यथा ।
मन्त्रार्थवादकल्पादीनाश्रित्य प्रतिपेदिरे ॥ (120)
अन्तर्यामिणमारभ्य स्थावरान्तेशवादिनः ।
सन्त्यश्वत्थार्कवंशादेः कुलदेवत्वदर्शनात् ॥ (121)

इत्यादिना । परं तु मोक्षो न ब्रह्मज्ञानं विना सिद्ध्यति । यो मोक्ष-

---

१. यथा जीवस्य पञ्चकोशा जीवस्य निजस्वरूपं प्रत्यगात्मानं जीवदृष्टिं प्रत्याच्छा-दयन्ति, न तथेश्वरस्य पञ्चकोशाः ईश्वरस्य निजं स्वरूपं ईश्वरदृष्टिं प्रत्याच्छादयन्ति। ईश्वरस्यावरणरहितत्वेन नित्यमुक्तत्वात् न तस्य किञ्चिदपि कर्तव्यमस्ति । तस्मात् यथा व्यष्टिपञ्चकोशेभ्यः प्रत्यगात्मनो विवेचनं जीवेन कर्तव्यं तथा समष्टिपञ्चकोशेभ्यो ब्रह्मणो विवेचनमपि जीवेनैव कर्तव्यम् । सद्रूपः, चिद्रूपः आनन्दरूपः, अद्वयः इत्यात्मनश्चत्वारि विशेषणानि । देहादिस्तु अनृतः, जडः, दुःखरूपः सद्वयः इति चत्वारि विशेषणानि । तत्रात्मनः सद्रूपचिद्रूपाभ्यां देहादेरनृतजडरूपयोस्तिरोधानं भवति । तस्माद्देहादिः सत्वेन चेतनत्वेन च भाति । देहादेः दुःखरूपेण सद्वयत्वेन चात्मन आनन्दरूपत्वाद्वयत्वयोरभिभवो भवति। अतश्चात्मा दुःखित्वेन सद्वितीयत्वेन च भाति। इत्थमात्मनः पञ्चकोशानां चान्योन्याध्यासोऽस्ति । तस्मान्मुमुक्षुरवश्यं पञ्चकोशविवेचनं कुर्यात् ।

मिच्छति सः विवेकेन जीवेश्वरयोः स्वरूपं पञ्चकोशेभ्यः पृथक्कृत्य जानीयात्। तत्र **दृष्टान्तः**। यथा मिलितयोर्मुञ्जेषीकयोः पृथक्करणं क्रियते, तथा विवेकेन जीवेश्वरयोः स्वरूपं पञ्चकोशेभ्यः पृथक्कृत्य जानीयात्।

(२८३) **पञ्चकोशविवेकप्रकारः**—स्वप्नावस्थायां **स्थूलदेहो न भाति**। परन्त्वात्मा भासते। तथा सुषुप्तौ **सूक्ष्मशरीरस्य ज्ञानं न भवति**। सुखस्वरूपः आत्मा स्वयंप्रकाशस्वरूपेण प्रतीयते। सुषुप्तौ सुखज्ञानाभावे 'सुखमहमस्वाप्सम्' इति स्मृतिः सुप्तोत्थितस्य न स्यात्। तथा स्मृतेर्जायमानत्वादेव सुषुप्तौ सुखानुभवोऽभ्युपेयः। तच्च सुखं सुषुप्तौ न विषयजन्यम्। तदा सर्वकार्यप्रपञ्चप्रविलयात्। किन्तु तदात्मस्वरूपसुखमेव। स चात्मा स्वयंप्रकाशस्वरूपः। तस्मात्सुखस्वरूप आत्मा स्वयंप्रकाशरूपेण सुषुप्तौ भासते। निदिध्यासनफलभूतनिर्विकल्पकसमाधौ त्वात्मा अज्ञानकृतावरणरहितः प्रकाशते। **कारणशरीररूपाज्ञानमपि तदा न भासते**। इत्थं देहत्रयं [3]**व्यभिचरति** एकामवस्थां विहायावस्थान्तरे अभानात्। तस्माद्देहत्रयमव्यापकम-

---

(१) मुञ्जा नाम कोशविशिष्टदीर्घतृणविशेषः। इषीका नाम तत्तृणमध्यस्थकाण्डविशेषः।

(२) "प्रातीतिकत्वं वेदान्तसिद्धान्ते जगतः स्फुटम्।
सुषुप्तौ तु जगल्लीनं प्रबोधे जायते पुनः॥
दृष्टिसृष्टिमिमां ब्रह्मानुभवी बहुमन्यते।" इति॥

(३) (१) **स्थूलदेहविवेचनम्**—यथा घटस्योत्पत्तिविनाशयोः प्रागूर्ध्वं च विद्यमानत्वादेकत्वाच्चाकाशो घटाद्भिन्नोऽव्यभिचारी च, तथा स्थूलदेहस्य जननमरणयोः प्रागूर्ध्वं च विद्यमानत्वादेकत्वाच्चात्मा स्थूलदेहाद्भिन्नोऽव्यभिचारी च। घट इव स्थूलदेहः जननमरणयोः प्रागूर्ध्वं चावर्तमानत्वादनेकत्वाच्चात्मनो भिन्नो व्यभिचारी च। यदधिकदेशकालवर्ति **तदव्यभिचारी**त्युच्यते। सर्वशरीरवर्ती आत्मा एक एव। तस्मादाकाशवदात्मा व्यापकः। अतः सर्वदेशवर्ती भवत्यात्मा। देहानामुत्पत्तिमरणयोः प्रागूर्ध्वं चात्माऽस्ति। तस्मादात्मा कालत्रयाबाध्यः सर्वकालवर्ती च भवति। एवं सर्वदेशकालवर्तित्वादात्मा **अव्यभिचारी**। यद्धि वस्तु स्वल्पदेशे स्वल्पकाले च वर्तते तद्व्यभिचारि। घट इव देहोऽपि परिच्छिन्नः स्वल्पदेशे वर्तते। उत्पत्तिनाशवांश्च देहः सर्वकालवर्ती न भवति, किन्तु स्वल्पकाले एव वर्तते। अतः स्वल्पदेशकालवर्तित्वात् स्थूलदेहो व्यभिचारी। एवं देहात्मनोर्व्यभिचारित्वाव्यभिचारित्वरूपविलक्षणधर्मवत्वादेव तयोः परस्परं भेदः सिद्ध्यति। तस्मान्नाहं स्थूलदेहः। नापि मदीयोऽसौ देहः। किन्तु देहः पञ्चभूतकार्यत्वाद्भौतिकः। मम स्थूलदेहव्यतिरिक्तत्वादेव च तदाश्रितनामरूपजात्याश्रमकर्मादयो धर्मा न मां स्पृशन्ति। नापि ते धर्माः मत्संबन्धिनः। इति स्थूलशरीरविवेकः।

नित्यं च। आत्मा तु सर्वावस्थास्वनुगततया भाति। तस्माद्व्यापको नित्यश्च। इत्थं देहत्रयविलक्षणतया विविच्यात्मानं जानीयात्। तत्र स्थूलशरीरमन्नमयकोशः, कारणशरीरमानन्दमयकोशः। सूक्ष्मशरीरे प्राणमयमनोमयविज्ञानमयाख्यास्त्रयः कोशा अन्तर्भूताः। तस्माच्छरीरत्रयविवेकेन पञ्चकोशविवेको जायते। यथा पञ्चकोशविलक्षणं जीवस्वरूपं तथैवेश्वरस्वरूपमपि

---

(२) **सूक्ष्मदेहविवेचनम्**—सुषुप्तिः मूर्च्छा मरणं प्रलयः ज्ञानं इति पञ्चस्ववस्थासु लिङ्गदेहः स्वकारणेऽज्ञाने लीयते। तस्मात्सूक्ष्मदेहो व्यभिचारी असंश्च। आत्मा तु सर्वकालेष्वपि प्रकाशमानत्वादव्यभिचारी। अतः सद्रूपश्च। सद्रूपत्वादात्मा न लिङ्गदेहः। लिङ्गदेहोऽपि नात्मसंबन्धी। स त्वपञ्चीकृतपञ्चमहाभूतकार्यम्। तस्मान्नाहं लिङ्गदेहः। कर्तृत्वभोक्तृत्वसुखदुःखादिलिङ्गदेहधर्मा अपि नाहम्। नापि ते धर्मा मदीयाः। तेषां साक्षी अहं तेभ्यो भिन्नः। इति सूक्ष्मदेहविवेचनम्।

(३) **कारणदेहविवेचनम्**—अज्ञानमेव कारणदेहः। नाहं कारणदेहः। सोऽपि न मदीयः। कारणशरीरधर्मावावरणविक्षेपावपि नाहम्। न तौ धर्मौ मदीयौ। तयोः साक्ष्यहं ताभ्यां भिन्नः। इति कारणशरीरविवेचनम्।

(४) **जाग्रदवस्थाविवेकः**—अवस्था नाम दशा भोगकालविशेषरूपाः। स्वप्नसुषुप्त्यवस्थाविलक्षणत्वे सति इन्द्रियजन्यज्ञानतत्संस्काराधारभूतः कालविशेषो जाग्रदवस्था। तस्यामवस्थायां चतुर्दशत्रिपुटीभिर्जीवो व्यवहरति। अस्यामवस्थायां षड्विशेषाः—(१) अवस्थावतो जीवस्य स्थानं चक्षुः। सकलशरीरवर्तिनोऽपि जीवस्य चक्षुषो मुख्यस्थानत्वात् तदेव स्थानमित्युक्तम्। (२) शक्तिः क्रिया (३) वाणी वैखरी (४) भोगः स्थूलः। (५) गुणः सत्वम्। संज्ञा विश्वः। इयं जाग्रदवस्था स्वप्नसुषुप्त्यवस्थयोर्व्यभिचरतीति असन्मयी। तत्साक्षिभूतस्त्वात्मा सर्वास्वप्यवस्थास्वनुवर्तमानत्वात्सत्यस्वरूपः। तस्माज्जाग्रदवस्थातोऽयं विलक्षणो जीवः। इति जाग्रदवस्थाविवेकः।

(५) **स्वप्नावस्थाविवेकः**—यस्यामवस्थायामिन्द्रियाणामुपरमात् तत्साहाय्यमन्तरेणैव मनः हिताख्यनाड्यन्तः जाग्रत्संस्कारवशात् विषयाकारेण परिणतं सत् स्वयंज्योतिःस्वरूपेण साक्षिणाऽनुभूयते साऽवस्था स्वप्नावस्था। अत्र जीवस्य (१) स्थानं कण्ठः। (२) शक्तिर्ज्ञानम्। (३) वाणी मध्यमा। (४) भोगः सूक्ष्मः। (५) गुणो रजः। (६) संज्ञा, तैजसः। इति स्वप्नावस्थासामग्र्यः। जाग्रत्सुषुप्त्यवस्थयोरियं स्वप्नावस्था न भवति। आत्मा त्ववस्थात्रयसाक्षित्वात् स्वप्नावस्थातोऽपि विलक्षणः॥ इति स्वप्नावस्थाविवेकः।

(६) **सुषुप्त्यवस्थाविवेकः**—यस्यां केवलं सुखमज्ञानं चानुभूयते सा सुषुप्तिः। अस्याः सामग्र्यः—(१) स्थानं हृदयम्, (२) शक्तिः द्रव्यस्वरूपिणी। ज्ञानक्रियात्मव्यवहाराभावात् केवलज्ञानस्वरूपेणैव द्रव्येण सत्वात् द्रव्यशक्तिरित्युच्यते (३) वाणी पश्यन्ती। (४) भोग आनन्दः। (५) गुणः तमः। (६) संज्ञा प्राज्ञः। न जाग्रत्स्वप्नावस्थयोः सुषुप्त्यवस्थाऽस्ति। आत्मा त्ववस्थात्रयसाक्षित्वात् सुषुप्त्यवस्थातो विलक्षणः। इति सुषुप्त्यवस्थाविवेकः।

समष्टिपञ्चकोशविलक्षणमस्ति। चतुर्थतरङ्गे चतुर्विधाकाशदृष्टान्तेन जीवेश्वरयोर्लक्ष्यस्वरूपविवेचनं विस्तरेणोक्तम्। उपरि षष्ठतरङ्गेऽपि अस्ति-भाति-प्रियरूपनिरूपणप्रसङ्गे महावाक्यार्थनिरूपणप्रसङ्गे चात्मनः परमार्थस्वरूपं निरूपयिष्यते। सङ्ग्रहेणात्रात्मविवेचनं कृतम्।

(आ. २८४-३१६) महावाक्यार्थोपदेशनिरूपणम्—

(२८४) महावाक्यार्थोपदेशः—

इत्थं पञ्चकोशेभ्यो विविच्यात्मज्ञानेऽपि न कृतकृत्यतासिद्धिः। अतो जीवब्रह्माभेदनिश्चयाय पुनरपि विचारः, कर्तव्य एव। तस्माच्छिष्यस्य कृतकृत्यतासिद्धये गुरुस्तस्मै महावाक्यार्थमेवमुपदिदेश—'पञ्चकोशविलक्षणतया ज्ञातमात्मानं ब्रह्माभिन्नं विजानीहि' इति।

(२८५) कर्तुर्भोक्तुश्चात्मनो ब्रह्माभेदासंभव इति प्रश्नः—

नन्वात्मा पुण्यपापे कृत्वा स्वर्गनरकपृथिव्यादिलोकेषु नानाविधानि सुखदुःखान्यनुभवति। तस्य ब्रह्मणैक्यं नोपपद्येत इति चेत्—अत्रोच्यते—

(आ. २८६-३१६) पूर्वोक्तप्रश्नस्योत्तरम्—

(२८६) अकर्तुरभोक्तुर्नित्यमुक्तस्यात्मनः सदा ब्रह्माभेदः सिद्ध एव।

ब्रह्मस्वरूपादात्मनो भिन्नतया दृश्यमानं शास्त्रेषु श्रुतं च पुण्यपापस्वर्गनरकादिकं सर्वं मिथ्येति विजानीहि। न हि मिथ्यावस्त्वधिष्ठानं दूषयति। स्वप्ने भिक्षामटन् राजा न दरिद्रो भवति। न मरीचिकोदकेन भूमिरार्द्रीभवति। न मिथ्यासर्पेण रज्जुः सविषा भवति। अतस्त्वं मिथ्याभूतसकलशुभाशुभकर्मणां कर्ताऽपि वस्तुतो न कर्ता, अकर्तृत्वाभोक्तृत्वादिबोधकश्रुतिप्रमाणात्। इत्थं तव स्वरूपमत्याश्चर्यं निरुपमं च भवति। अस्यायमभिप्रायः। तव ब्रह्माभिन्ने स्वरूपे स्थूलसूक्ष्मशरीरे तत्फलजन्ममरणस्वर्गनरकसुखदुःखादिकं सर्वमविद्यया कल्पितम्। तव ब्रह्मस्वभावस्ताभिः कल्पितसामग्रीभिर्नान्यथा भवति। तस्माज्ज्ञानात्पूर्वमप्यात्मा ब्रह्मस्वरूप एवास्ते। कालत्रयेऽप्यात्मनि शरीरस्य तद्धर्माणां च संबन्धो नास्ति। आत्मा सदा नित्यमुक्त एवास्ते। आत्मनो ब्रह्मणश्च न कदापि भेदोऽस्ति।

### (२८७) जीवन्मुक्तस्य निश्चयः, वेदान्तश्रवणफलं च—

आत्मा यदि सदा नित्यमुक्तब्रह्मस्वरूप एव तदा ज्ञाननिवर्त्याज्ञान-तत्कार्याद्यभावात् ज्ञानसाधनश्रवणादिवैयर्थ्यमिति चेन्न। जीवन्मुक्तस्य विदुषो दृष्ट्या अज्ञानं तत्कार्यं च सर्वं तुच्छमेव। तस्य जीवन्मुक्तस्य निश्चय इदानीं प्रदर्श्यते—अयं प्रपञ्चो गगनारविन्दवन्नास्त्येव। तस्मात् **जगतः कर्तेश्वरोऽपि नास्ति।** साक्षिणो विषयभूतमज्ञानादिकं **साक्ष्यमित्युच्यते।** तादृशसाक्ष्या-भावात्**साक्षी च नास्ति।** दृश्यावभासकं **दृगित्युच्यते।** देहादिरूपदृश्या-भावात् **दृगपि नास्ति।** न च केवलकूटस्थचैतन्यस्यैव **साक्षीति दृगिति** च व्यपदिश्यमानत्वात् साक्षिदृशोर्निषेधो न युज्यते इति वाच्यम्। साक्ष्यापेक्षया हि **साक्षीति,** दृश्यापेक्षया हि **दृगिति** च व्यपदेशः। साक्ष्यदृश्ययोरभावे साक्षीति दृगिति च व्यपदेशमात्रं निषिध्यते। न तु स्वरूपं निषिध्यते। यदि बन्धः स्यात्तदा बन्धनिवृत्तिरूपमोक्षोऽपि स्यात्। बन्धोऽपि नास्ति, **मोक्षोऽपि नास्ति।** यद्यज्ञानं स्यात्तत् ज्ञानेन नश्येत्। अज्ञानाभावात्तन्ना-**शकज्ञानमपि नास्ति** इति ज्ञात्वा कर्तव्यं परित्यजेत्। मयेदं कर्तव्यमिति बुद्धिं परित्यजेदिति यावत्। यतोऽयं लोकः परश्च लोकस्तुच्छः, तस्मात्तल्ला-भार्थमनुष्ठेयं किञ्चिदपि नास्ति। आत्मनि बन्धो नास्ति। तस्मान्मोक्षार्थमपि कर्तव्यं किञ्चिदपि नास्ति।

इत्थमात्मानं नित्यमुक्तब्रह्मस्वरूपेण ज्ञात्वा निश्चलो यदा कर्तव्यमखिलं सन्यस्यति तदा अक्रियब्रह्मस्वरूपविदेहमोक्षं लभते। **अस्यायमभिप्रायः**— आत्मा ज्ञानात्पूर्वमपि नित्यमुक्तब्रह्मस्वरूप एवास्ते। तथापि ज्ञानात्पूर्वं 'आत्मा कर्ता भोक्ता च' इति मिथ्याग्रहणेन सुखप्राप्तये दुःखहत्यै च पुरुषो-ऽनेकसाधनान्यनुतिष्ठन् वृथा क्लेशमनुभवति। पुरुषस्य बहुजन्मार्जितपुण्यपुञ्ज-परिपाकाद्यदोत्तमाचार्यलाभो भवति तदा स गुरुर्वेदान्तवाक्यमुपदिशति। तादृश-वेदान्तवाक्यश्रवणेन 'नाहं कर्ता भोक्ता वा, किन्त्वहं ब्रह्मस्वरूपः। अतश्च न मे किञ्चिदपि कर्तव्यमस्ति' इति पुरुषस्य ज्ञानमुदेति। एतादृशं ज्ञानमेव **वेदान्तश्रवणादिफलम्।** ब्रह्मप्राप्तिस्तु न वेदान्तश्रवणफलं, ब्रह्मणः स्वस्व-रूपतया नित्यप्राप्तत्वात्।

### (२८८) ज्ञान्यज्ञानिनोश्चिह्नम्—

अकर्तव्यताबुद्धिर्ज्ञानिनश्चिह्नम्। अज्ञानिनस्तु कर्तव्यताबुद्धिश्चिह्नम्।

यः स्वातिरिक्तं किञ्चिद्वस्तु स्वेन प्राप्तव्यमस्तीति मत्वा तत्प्राप्तये मया प्रयत्नः कर्तव्य इति मन्यते सोऽज्ञानी। यः पुनः स्वेन प्राप्तव्यमन्यन्नास्तीति दृढनिश्चयेन रूपान्तरप्राप्तिं नेच्छति, किन्तु शान्तसङ्कल्पो न कञ्चन कामं कामयते स ज्ञानी[1]।

(२८९) **गोप्यतत्त्वोपदेशः**—चैतन्यस्वरूपं ब्रह्मैकमखण्डमसङ्गं जन्मादिभावविकारशून्यमदृश्यं नामरूपरहितमद्वितीयं स्वप्रकाशानन्दरूपं चास्ते। न तत्र मूलाज्ञानमस्ति। न स्थूलसूक्ष्मशरीराणि सन्ति। न समष्टिव्यष्टि-प्रपञ्चोऽस्ति। नेशोऽस्ति। न सूत्रात्मा, न वा विराडस्ति। न विश्वतैजस-प्राज्ञाः सन्ति। न च भोगो वा योगो वा बन्धो वा मोक्षो वास्ति। न किञ्चिदपि द्वैतं तत्र विद्यते। अथापि तस्मिन् ब्रह्मणि सर्वमप्यस्ति। तथाहि जाग्रत्काले सकलमिदं दृश्यं जगत्तस्मिन् ब्रह्मणि बुद्धिपरिकल्पितं विलसति। स्वप्नकाले च भोगभोग्यादीनामभावेऽपि विचित्रो नानाविधः प्रपञ्चो बुद्धिपरि-कल्पितः प्रतीयते। सुषुप्तिकाले तु सा बुद्धिः प्रविलीना भवति। तदा सकलदृश्यद्वैतप्रपञ्चरहितमद्वैतं चिन्मात्रं ब्रह्म प्रकाशते। बुद्धिपरिकल्पितं सर्वं मनोरथमात्रं मिथ्यैव। निश्चलं कूटस्थं ब्रह्मैव तां बुद्धिं प्रकाशयति[2]। यस्य

---

१. ज्ञानी स्वव्यतिरिक्तद्वितीयवस्तुदर्शनश्रवणादिकं न करोतीति भगवद्गीतायां पञ्चमाध्याये सप्तमाष्टमनवमेषु श्लोकेषूक्तोऽर्थो मुमुक्षूणां बुद्धिवैशद्याय विस्पष्टं व्याख्यायतेऽत्र—

"योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते॥ (भ. गी. 5.7.)

**अस्यायमर्थः**—योगयुक्तः=**निष्कामकर्मयोगेन** वा **ब्रह्मनिष्ठारूपसन्न्यासयोगेन** वा **युक्तः**; अत एव विशुद्धात्मा=**विशुद्धः**=रागद्वेषादिरहितः **आत्मा**=मनो यस्य सः। अत एव विजितात्मा=**विजितः** विषयेषु तुच्छत्वबुद्ध्या अभावरूपता-मापादितः, **आत्मा**=बाह्यवासनारूपस्वभावो यस्य सः। अत एव जितेन्द्रियः=**जितानि**=विषयग्रहणाद्विमुखीकृतानि, **इन्द्रियाणि**=द्विविधानीन्द्रियाणि येन सः। अत एव सर्वभूतात्मभूतात्मा=**सर्वभूतानां**=ब्रह्मादिस्तम्बान्तनिखिलप्राणिनां, **आत्मभूतः**=स्वरूपभूतः, **आत्मा**=प्रत्यग्रूप आत्मा यस्य सः। एवं सर्वात्मभावं प्राप्तो यो ब्रह्मवित् सः, **कुर्वन्नपि**=प्रारब्धाक्षिप्तशरीरयात्रानिर्वाहककर्माणि पुण्यपापमिश्रात्मकानि विधिपूर्वकमविधिपूर्वकं वाऽनुतिष्ठन्नपि, **न लिप्यते**='अकर्ताहमभोक्ताहमसङ्गः परमेश्वरः' इति दृढतरनिश्चयवान् कर्मणां फलेन न संबध्यते।

२. निश्चलं कूटस्थं ब्रह्म बुद्धिं प्रकाशयतीति वेदान्तसिद्धान्तः। अतो न क्षणिकविज्ञानवादिमतेऽतिव्याप्तिः। तेषां मते बुद्ध्यतिरिक्तस्य प्रकाशकपदार्थस्याभावात्।

हृदये दृढतरं ज्ञानमेवमुदेति तस्य हृदयादज्ञानान्धकारो निश्शेषं ध्रुवं विनश्यति। स सदा असङ्गैकरसस्वयंप्रकाशब्रह्मस्वरूपतयैवात्मानमनुभवति। तस्य दृष्ट्या न किञ्चिदपि दृश्यं द्वैतमभूत् भवति भविष्यति वा। तस्य दृष्ट्या सकलमिदं जगन्मनोरथमात्रविलसितम्। न हि ज्ञानी तादृशस्य जगतः प्राप्तिं निवृत्तिं वेच्छति। न हि ज्ञानिनः काचिदप्याशाऽस्ति। ज्ञानी हि चक्षुषा पश्यन्नपि न पश्यति। शृण्वन्नपि न शृणोति, रसयन्नपि न रसयति, स्पृशन्नपि न स्पृशति, जिघ्रन्नपि न जिघ्रति। वदन्नपि न वदति। गृह्णन्नपि न गृह्णाति। विसृजन्नपि न विसृजति। गच्छन्नपि न गच्छति। युवतिमनुभवन्नपि नित्यसन्यासी भवति। हे सोम्य! महदिदमाश्चर्यं विजानीहीत्याह गुरुः।

---

१. इदानीं योगयुक्तत्वविशुद्धात्मत्वविजितेन्द्रियत्वसर्वभूतात्मभूतत्वरूपपञ्चलक्षणविशिष्टस्य आहारादिविषये प्रवृत्तस्य ब्रह्मविदः दर्शनश्रवणादिरूपेन्द्रियव्यापारेषु 'नाहं कर्ता' इति या सुदृढा बुद्धिः सोचितैवेति द्वाभ्यां श्लोकाभ्यामुच्यते—

"नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन्॥ भ. गी. (5-8.)
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्॥ (भ. गी. (5-9)

**अनयोरर्थः—तत्त्ववित्**=आत्मनः स्वभावं जानन् ब्रह्मवित्। **युक्तः**=आत्मनः कूटस्थत्वासङ्गत्वान्तर्बहिःपूर्णत्वादिदर्शनरूपप्रज्ञया युक्तः सन्, **पश्यन्** रूपं, **शृण्वन्** शब्दं, **स्पृशन्** स्पर्शं, **जिघ्रन्** गन्धं, **अश्नन्**न्नादिकं, **गच्छन्** देशान्तरं, **स्वपन्**=निद्रामनुभवन्, **श्वसन्**=प्राणव्यापारं कुर्वन्, प्रलपन्=शब्दमुच्चारयन्, **विसृजन्**=मलमूत्रादित्यागं कुर्वन्, **गृह्णन्**=दानादानादिकं कुर्वन्, **उन्मिषन्**=नेत्रोन्मीलनं कुर्वन्, **निमिषन्**=नेत्रनिमीलनं कुर्वन्। अपिशब्दात् यदप्यन्यत्कर्म कर्तव्यतया प्राप्तं तत्सर्वं बहिर्दृष्ट्यानुतिष्ठन्नपि। **इन्द्रियाणि**=दशेन्द्रियाणि, **इन्द्रियार्थेषु**=शब्दादिस्वस्वविषयेषु **वर्तन्ते**=श्रवणादिरूपस्वस्वव्यापारं कुर्वन्ति इति= 'नाहं श्रोता, स्प्रष्टा, द्रष्टा, रसयिता, घ्राता, भोक्ता, गन्ता वेत्यादिलक्षणां वृत्तिं, **धारयन्**= सदा वहन्, **नैव किञ्चित्करोमीति** इन्द्रियाण्येव स्वस्वकर्माणि कुर्वन्ति। अहं त्वक्रियत्वान्न किञ्चिदपि कर्म करोमि। परं तु तत्तदिन्द्रियकर्मणां साक्षी भूत्वा निष्क्रियस्वस्वरूपेण तूष्णीमस्मीति **मन्येत**= जानीयात्। देहेन्द्रियादीनां व्यापारेषु 'अहं मम' इति भावनां हित्वा विद्वान् तूष्णीं स्थातुमर्हतीति श्लोकद्वयस्य संपिण्डितोऽर्थः।

**अत्रेदमाकूतम्**—ज्ञानिनः सदा असङ्गनिर्विकारचिन्मात्रस्वरूपब्रह्मैवाहम् इति दृढनिश्चयसत्त्वात्स परमार्थतो न कामपि क्रियां करोति। प्रारब्धवशात्तु तस्य देहेन्द्रियद्वारा दर्शनादिकाः क्रियाः संभवन्ति। ताश्च क्रियास्तस्य प्रारब्धफलोपभोगरूपाः। परं तु प्रारब्धबलायातांस्तान् भोगान् भुञ्जानस्यापि ज्ञानिनो न भोगेषु रागो जायते। **तथाहि**—

रागश्च **नेन्द्रियकृतः**। इन्द्रियाणां दर्शनादिव्यापारजननेनैव चरितार्थत्वात्। **नाप्यात्मकृतः**। आत्मनः सर्वदृश्यावभासकसाधारणनिर्विकारप्रकाशस्वरूपत्वात्। **परिशेष्यात्** विषयनिष्ठगुणदोषविवेचनसमर्थमनस एवानुकूले विषये रागो भवति। स च रागो ज्ञानिनो मनसि नैवोन्मिषति। ज्ञानिनो मनस अन्तर्मुखतयाऽतीवोपशान्तत्वात्। "रागो लिङ्गमबोधस्य" इति हि शास्त्रप्रसिद्धिः।

ज्ञानिनः सर्वथा रागानुदये तस्य शरीरस्थितिनिमित्तभोजनादावप्यप्रवृत्त्यापत्त्या ज्ञानिनः प्रारब्धानुभवो नास्तीत्यापद्येत। न चेयमापत्तिरिष्टैवेति वक्तुं शक्यते। कर्मानुसारेण प्राणिनां फलदातुरीश्वरस्येच्छया ज्ञानिनोऽपि प्रारब्धानुभवस्यावश्यकत्वात्। तस्माज्ज्ञानिनोऽपि प्रारब्धफलानुभवान्यथानुपपत्त्या भोजनादाविच्छोदेतीति वाच्यमिति चेत्—

तन्न। प्रारब्धजनितो रोगादिर्यथा ज्ञानिन इच्छाविरहेऽपि भवति तथैव तस्य मिथ्यज्ञानाभवात् प्रारब्धफलभोगे, अदृढः आभासरूपो रागाभासरूपो रागो जायते। **अदृढत्वादेव** स रागः स्वनिवृत्तये न वेदान्तविचारादिकमपेक्षते।

सोऽयमदृढो रागः **स्वायत्तत्वेन** भर्जितबीजवद्**दुर्बलत्वेन** च शरीरस्थितिमात्रनिमित्तशास्त्रीयभोगमात्रे हेतुर्भवति न तु व्यसनकारणीभूतशास्त्रनिषिद्धभोगहेतुः। अपि च ज्ञानिनो विषयसत्यताभ्रान्त्यभावात्, प्रत्युत दृढतरविषयमिथ्यात्वनिश्चयजनितती**व्रतरवैराग्यबलाच्च** दृढरागो नैव भवति। अयमर्थः स्पष्टं षष्ठतरङ्गे वक्ष्यते।

**अथवा** शाखाग्रे वा रज्जुं वाऽरुह्य नृत्यतोऽपि मल्लस्य चित्तं यथा स्वावलम्बे एव जागरूकं भवति, यथा वा क्षीरपूर्णं कुम्भं धृत्वा गच्छन्त्याः योषितः पथि स्वसखीभिः सह वार्ता-सल्लापादिकं कुर्वाणाया अपि चित्तं क्षीरे एवैकाग्रं भवति, तथा ज्ञानिनोऽपि चित्तं प्रारब्धवशादापाततः **विषयेषु प्रवृत्तमपि विशेषतः लक्ष्ये स्वात्मस्वरूप एव निश्चितं** भवति। किञ्च ज्ञानिनो देहेन्द्रियादिवर्गः विनैव रागं प्रारब्धफलत्वेनोपगतदर्शनादिक्रिययैव कृतार्थतां याति। अतश्च स्वात्मस्वरूपेऽवस्थितस्य ज्ञानिनः प्रारब्धफलायातभोगाभासेषु न दृढतररागसंभवः। कदाचित्, विषयप्रवृत्तिहेतुभूतप्रारब्धवतो ज्ञानिनो मनः मत्तगजेन्द्रवत्प्रमत्तं सत् विषयेषु विक्षिप्तमपि, विषयेषु दोषदृष्ट्यात्मक**विवेकमृगेन्द्रोन्मेषात्**। झटित्येव विक्षेपाद्विमुक्तं प्रशान्तं भवति।

स्वान्तःकरणे तीव्ररागाभावात् भोगहेतुप्रारब्धसत्वाच्च ज्ञानी गङ्गानिमग्नार्धगात्रः पुरुष इव ज्ञानी मुख्यतया स्वरूपसुखे रमते। **अमुख्यतया** वेतनग्राही भृतक इव क्लेशं सहमानः तीव्रप्रारब्धफलं चानुभवति। शिथिलप्रारब्धफलभूतनिषिद्धविषयान् प्रयत्नेन परिहरति च। तथापि ज्ञाननिर्भिन्नहृदयग्रन्थेर्ज्ञानिनोऽन्तःकरणस्य क्षीणवासनत्वात्तीव्रतररागभावाच्च निषिद्धविषयपरित्यागेनादृढरागेण विहितविषयभोगेऽपि विकलपुरुषचित्तस्येव ज्ञानिनोऽन्तःकरणस्य नं मुह्यतेत्ययमभिप्रायः, इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते इति जडेन्द्रियाणामेव स्वस्वविषयेषु प्रवृत्तिं वर्णयता गीताश्लोकेन बोध्यते।

'ज्ञानी युवतिमनुभवन्नपि सन्यासी' इत्युक्तेरयमाशयः—विरक्तस्य दारैषणातो व्युत्थितस्य सन्यासिनो ज्ञानिनो न स्त्रीभोगप्रसक्तिः। तस्य स्त्रीप्रसक्तौ व्युत्थानशास्त्रं निरर्थक भवेत्। वान्ताशी स सन्यास्येव न भवेत्। किन्तु वेषधारी डांभिको गृहस्थादप्यधमोऽपूज्यश्च। परिशेषात् गृहस्थे ज्ञानिनि स्त्रीभोगः प्रसज्यते। स ज्ञानी गृहस्थः घृता

(आ. २९०-२९२) लयचिन्तनक्रमः—

(२९०) सकलमपि प्रपञ्चमीश्वरस्वरूपतया चिन्तयेत्—

इत्थं परमार्थतत्त्वे उपदिष्टेऽपि शिष्यमुखेऽप्रसन्नतामालक्ष्य 'नूनमयमकृतार्थो। यतोऽस्य मुखमप्रसन्नमास्ते' इति गुरुर्निरचिनोत। अतः पुनरपि तं स्थूलदृष्ट्योपदिशन्प्रपञ्चलयचिन्तनप्रकारमाह—यथा मृत्कार्यभूतो घटोऽन्तर्बहिश्च मृदेव भवतीति मृत्कार्यं सर्वमपि मृदेव। यथा च जलकार्यभूतफेनबुद्बुदादिकं सर्वमपि जलमेव भवति। तथा यत् यस्य कार्यं तत् तादृशकारणस्वरूपमेव भवति। न कार्यं कारणस्वरूपादतिरिच्यते।

सकलस्य प्रपञ्चस्य मूलकारणमीश्वर एव। तस्मात्सकलोऽपि कार्यप्रपञ्चः ईश्वरस्वरूपान्नातिरिच्यते। सकलप्रपञ्चस्यापि स्वरूपमीश्वर एव। 'स चेश्वरोऽहमेव' इति ज्ञात्वा सकलप्रपञ्चस्य लयं स्वस्मिन्ननुचिन्तयेत्।

(२९१) स्थूलप्रपञ्चस्य पञ्चीकृतभूतस्वरूपत्वं सूक्ष्मसृष्टेरपञ्चीकृतभूतस्वरूपत्वं च चिन्तयेत्—

---

शिनस्तैलपाने प्रवृत्तिवत् सन्तानार्थी सन् शास्त्रविधिमनतिक्रम्य विधिनोढां जायामृतुकालेगच्छन्नपि न लिप्यते, यतः स भोगासक्त्या न स्त्रियं गच्छति। विषयमिथ्यात्वदर्शनेन विवेकवैराग्यादिसंपन्नत्वात्। तादृशो गृहस्थो ज्ञानी उपचारात्सन्यासीत्युच्यते। सन्यासिन इव तस्यापि विवेकवैराग्यादिसंपन्नत्वात्। यस्तु विवेकवैराग्यादिविकलो भोगासक्त्यैव स्त्रियं गच्छति स वेदान्तप्रवचनपटुरपि न ज्ञानी। रागादेरनिवृत्त्या सोऽज्ञान्येव। अत्र स्त्रीरूपविषयमधिकृत्य कृतो विचारः सर्वविषयविचारोपलक्षणार्थः। रागरूपदोषप्रतिषेधश्च द्वेषादिसर्वदोषप्रतिषेधोपलक्षणार्थो वेदितव्यः।

**अयमभिप्रायः**—'इन्द्रियेषु स्वस्वव्यापारेषु व्यापृतेष्वपि न मे तत्रास्ति संपर्कः। नाहमिन्द्रियवर्गः। इन्द्रियवर्गश्च न मम। अहं तु साक्षी कूटस्थोऽसङ्गः। इन्द्रियाणि विषयेषु प्रवर्तन्तां वा ततो निवर्तन्तां वा। न मे तत्र संबन्धलेशोऽपि' इत्येवं ज्ञानिनो निश्चयसत्त्वादेव स कर्माणि कुर्वन्निव लक्ष्यमाणोऽपि न परमार्थतः किञ्चिदपि करोति।

१. अभिलषितार्थप्राप्तौ चित्तचाञ्चल्यहेतुभूतेच्छारूपवृत्तिनाशे तेनैव निमित्तेनोदितायामन्तर्मुखायामन्तःकरणस्य सात्त्विकवृत्तौ निश्चलदर्पणादाविव स्वरूपानन्दप्रतिबिम्बो भवति। तमानन्दमनुभवतो मुखविकासो भवति। प्रकृते च शिष्यस्याविद्यातत्कार्यनिवृत्तिपूर्वकपरमानन्दरूपमोक्षो ज्ञानद्वारा प्राप्तुमिष्टः। अभिलषितार्थसिद्ध्यभावाच्च शिष्यस्येच्छारूपचित्तवृत्तिविनाशो नाभवत्। इच्छारूपवृत्तिनिवृत्त्यात्मकनिमित्ताभावादन्तर्मुखवृत्त्युदयः, तस्मिन् स्वरूपानन्दप्रतिबिम्बोदयः। तदनुभवजन्यमुखविकासश्च न शिष्यस्याभवत्। तेन मुखविकासाभावेन शिष्यस्याकृतार्थताऽनुमिताऽभूत्।

२. कार्यस्य कारणस्वरूपतां ज्ञात्वा तदनतिरिक्तत्वचिन्तनमेव लयचिन्तनमुच्यते।

**स्थूलमिदं ब्रह्माण्डमखिलमपि** पञ्चीकृतभूतकार्यम्। तत्र पृथिवीकार्यं सर्वं पृथिवीस्वरूपम्। जलकार्यं सर्वं जलस्वरूपम्। इत्थमेव यत् यद्भूतकार्यं तत् तद्भूतस्वरूपमित्यखिलस्यापि ब्रह्माण्डस्य पञ्चीकृतपञ्चभूतस्वरूपत्वमनुचिन्तयेत्। तथैव **पञ्चीकृतं सर्वमपि भूतम**पञ्चीकृतभूतकार्यत्वादपञ्चीकृतभूतस्वरूपमिति चिन्तयेत्। अन्तःकरणादिसूक्ष्म**सृष्टिरप्य**पञ्चीकृतभूतकार्यत्वादपञ्चीकृतभूतस्वरूपमिति चिन्तयेत्। **अन्तःकरणं** सर्वभूतसमष्टिसत्वगुणकार्यत्वात्सत्वगुणस्वरूपमेव।

तथा **प्राणोऽपि** पूर्वोक्तपञ्चभूतसंमष्टिरजोगुणकार्यत्वात् रजोगुणस्वरूप एव। **पाय्विन्द्रियं** पृथिव्या रजोगुणकार्यत्वात्। पृथिव्या रजोगुणस्वरूपमेव। **घ्राणेन्द्रियं** पृथिव्याः सत्त्वगुणकार्यत्वात् पृथिव्याः सत्त्वगुणस्वरूपमेव। तथैव **रसनेन्द्रियमुपस्थेन्द्रियञ्च** जलस्य क्रमेण सत्त्वगुणरजोगुणकार्यत्वात् तत्तत्स्वरूपमेव। **चक्षुरिन्द्रियं पादेन्द्रियञ्च** तेजसः क्रमेण सत्त्वगुणरजोगुणस्वरूपे। **त्वगिन्द्रियं पाणीन्द्रियञ्च** वायोः क्रमेण सत्त्वगुणरजोगुणस्वरूपे। **श्रोत्रेन्द्रियं वागिन्द्रियं** चाकाशस्य क्रमेण सत्वगुणरजोगुणस्वरूपे। इत्थं सूक्ष्मसृष्टिः समग्राप्यपञ्चीकृतभूतस्वरूपैवेति चिन्तयेत्।

(२९२) **अपञ्चीकृतभूतानां प्रकृतौ प्रधाने प्रधानस्य ब्रह्मणि च लयं चिन्तयेत्**—प्रागुक्तचिन्तनानन्तरमपञ्चीकृतभूतानामपि लयश्चिन्तनीयः। **पृथिवी** जलकार्यत्वात् जलस्वरूपा। **जलं** तेजःकार्यत्वात्तेज-स्वरूपम्। **तेजो** वायुकार्यत्वाद्वायुस्वरूपम्। **वायुराकाश**कार्यत्वादाकाशस्वरूपः। **आकाशस्त**मोगुणप्रधानप्रकृतिकार्यत्वात्प्रकृतिस्वरूपः। **प्रकृति**र्मायाया अवस्थाविशेषत्वान्मायास्वरूपा। एकमेव वस्तु 'प्रधानं, प्रकृतिः, माया, अविद्या, अज्ञानं, शक्तिः इत्यनेकशब्दैर्व्यपदिश्यते। तदेव वस्तु सकलमपि कार्यजातं स्वस्मिन्नुपसंहृत्य प्रलयकाले उदासीनस्वरूपेण वर्तमानत्वात् **प्रधान**मित्युच्यते। तदेव वस्तु प्रपञ्चसृष्ट्युपादानतायोग्य**तमोगुणप्रधान**स्वरूपेण विद्यमानत्वात् प्रकृतिरित्याख्यायते[1]। देशकालादिसामग्रीं विनैवेन्द्रजालेन दुर्घटानेक-

---

१. सकलमिदं जगत् यस्मात् प्रकर्षेण क्रियते तादृशं सृष्ट्युपादानभूतं वस्तु 'प्रकृतिः' इत्युच्यते। **अथ वा** 'प्र' इति सत्वगुणः, 'कृ' इति रजोगुणः, 'ति' इति सत्वरजस्सहिततमोगुण उच्यते। तथा च **तमोगुणप्रधाना प्रकृति**रिति सिद्ध्यति।

पदार्थोत्पादनकाले इन्द्रजालं 'माया' इति व्यपदिश्यते। तद्वदेवासङ्गेऽद्वितीये ब्रह्मणि दुर्घटेच्छाद्युत्पादकत्वात्तदेव वस्तु मायेति भण्यते। तदेव वस्तु ब्रह्मस्वरूपावारकत्वादज्ञानमिति कीर्त्यते। तदेव वस्तु ब्रह्मविद्याविनाश्यत्वादविद्येति वर्ण्यते। तदेव वस्तु कदापि स्वातन्त्र्येणानवस्थितं सत् ब्रह्मचैतन्यमाश्रित्यैव वर्तमानत्वाच्छक्तिरिति च व्यपदिश्यते। इत्थं प्रकृत्यादयः प्रधानस्यावस्थाविशेषत्वात्प्रधानस्वरूपा एव भवन्ति। तच्च प्रधानं ब्रह्मचैतन्यस्य शक्तिः। यथा पुरुषगता सामर्थ्यरूपा शक्तिः पुरुषात्पृथक्तया नास्ति तथा ब्रह्मचैतन्यगता प्रधानरूपा शक्तिरपि ब्रह्मचैतन्याद्व्यतिरेकेण नास्ति। इत्थं ब्रह्मचैतन्ये सकलानात्मपदार्थानां लयश्चिन्तनीयः। ततः 'तादृशमद्वितीयं 'ब्रह्माहमेव' इति चिन्तयेत्। यस्य हि मन्दबुद्धेर्बुद्धिमान्द्यादिरूपप्रतिबन्धैर्वेदान्तविचारे न प्रवृत्तिरुपजायते। कृते वा विचारे साक्षात्कारो न संपद्यते तस्येदं लयचिन्तनरूपं ध्यानमुक्तम्।

### (२९३) ज्ञानध्यानयोर्भेदः, अहङ्ग्रहध्यानं च—

**ज्ञानं** हि प्रमाणप्रमेययोरधीनं, न तु विधेः पुरुषेच्छादेर्वाऽधीनम्। **ध्यानं** तु विधेः, पुरुषेच्छाश्रद्धयोः हठात्कारस्य चाधीनम्।

---

१. ननु यदि ब्रह्मणः शक्तिर्ब्रह्मणो भिन्ना तदा अद्वैतश्रुतिविरोधः। यद्यभिन्ना तदा तस्या ब्रह्मस्वरूपत्वादेव 'ब्रह्मणः शक्तिः' इति पृथक्तया व्यवहारानुपपत्तिः। तस्माद्ब्रह्मणः शक्तेश्च भेदाभेदौ वाच्यौ। तथात्वे च तमःप्रकाशयोरिव विरुद्धस्वभावयोर्भेदाभेदयोः सामानाधिकरण्यानुपपत्तिरिति चेन्न। रज्वा सह सर्पस्येव ब्रह्मणा सह शक्तेः कल्पितभेदो वास्तवाभेदश्चेत्यनिर्वचनीयतादात्म्यसंबन्धोऽभ्युपेयते। ततश्च शक्तेः स्वाश्रयेण सह वास्तवभेदाभावात् केनापि प्रमाणेन तस्याः स्वाश्रयाद्भिन्नतया प्रतीत्यभावाच्च प्रलयकाले मायायाः सत्वेऽपि न तया ब्रह्मणः सद्वितीयत्वम्। सृष्टिकालेऽपि मायाकार्यद्वैतप्रपञ्चे प्रतीयमानेऽपि न तेन प्रपञ्चेन ब्रह्मणः सद्वितीयत्वम्। रज्जौ कल्पितसर्पादिर्यथा परमार्थतो रज्जुस्वरूपत्वमेव तथा ब्रह्मणि कल्पितप्रपञ्चस्यापि परमार्थतो ब्रह्मस्वरूपत्वेन तदतिरेकेण प्रपञ्चस्याभावात्। तस्माद्ब्रह्म सदाऽद्वितीयमेव।

२. अत्रादिशब्देन वर्तमानो भूतो भावी चेति त्रिविधः प्रतिबन्धो ग्राह्यः। तत्रेष्टवस्तुष्वहं ममेति दृढतरवासनारूपा विषयासक्तिः, परोक्तार्थग्रहणसामर्थ्याभावरूपबुद्धिमान्द्यं, आचार्याद्याप्तोक्तार्थे विश्वासाभावादन्यथाकल्पनरूपः कुतर्कः, देहादिष्वात्मबुद्धिरूपो विपर्ययाख्यदुराग्रहः इत्येतच्चतुष्टयं **वर्तमानप्रतिबन्धः**। धनपुत्रकलत्रादीष्टवस्तुनाशानन्तरमपि तदनुचिन्तनं **भूतप्रतिबन्धः**। ब्रह्मलोकादिप्राप्तीच्छा भाविजन्महेतुभूतप्रारब्धकर्मशेषो वा **भाविप्रतिबन्धः**। एतेषां ज्ञानोत्पत्तिप्रतिबन्धकानां निरूपणं पञ्चदश्यां ध्यानदीपे ३८—५३ श्लोकेषु द्रष्टव्यम्।

तत्र प्रत्यक्षज्ञाने प्रमाणं चक्षुरादीन्द्रियं, प्रमेयो घटादिः। घटचक्षुषोः सन्निकर्षे सति विनापि पुरुषस्येच्छादिकं घटप्रत्यक्षं भवति। 'चतुर्थ्यां चन्द्रो न द्रष्टव्यः' इति निषेधोऽस्ति। तथा सत्यपि 'अस्मिन् दिने चन्द्रमहं न पश्येयम्' इति निश्चयवतोऽपि पुरुषस्यानिच्छत एव येन केनापि कारणेन चक्षुश्चन्द्रयोः प्रमाणप्रमेययोः सन्निकर्षे सति चन्द्रस्य प्रत्यक्षज्ञानं जायत एव। इत्थं ज्ञानं[1] प्रमाणप्रमेयमात्राधीनम्। न तु विधेः पुरुषेच्छादेर्वाऽधीनम्।

'सालग्रामशिला विष्णुरूपा' इति ध्यायत उत्तमं फलं भवति। तत्र पुरुषः शास्त्रेण विष्णुं चतुर्भुजत्वेन शङ्खचक्रगदापद्मलक्ष्मीसहितत्वेन च जानाति। चक्षुषा तु सालग्रामं शिलात्वेनैव जानाति। तथापि शास्त्रविधौ विश्वासेन ध्यानफले इच्छया च 'सालग्रामं विष्णुः इति ध्यायति पुरुषः।

---

१. ज्ञानं त्रिविधम्—भ्रमज्ञानं, स्मृतिज्ञानं, प्रमाज्ञानं चेति। तत्र **भ्रान्तिज्ञानं** केवलं कल्पितवस्त्वधीनम्। **स्मृतिज्ञानं** स्वविषयसदृशवस्तुदर्शनेन वा तत्संबन्धिवस्तुदर्शनेन वोदिता या पूर्वानुभूतवस्तुविषयकमनोवृत्तिस्तदधीनम्। प्रमाज्ञानन्त्वन्तर्गतसुखादिविषयकज्ञानं न्यायमते वाचस्पतिमते च मनोरूपप्रमाणस्य सुखादिरूपप्रमेयस्य चाधीनम्। सिद्धान्ते मनसः प्रमाणत्वानभ्युपगमेन सुखादिज्ञानं केवलप्रमेयाधीनम्। बाह्यप्रमाज्ञानं तु इन्द्रियानुमानादिरूपप्रमाणस्य प्रमेयरूपवस्तुनश्च संबन्धाधीनम्।

शब्दप्रमाणजन्य**ब्रह्मज्ञानरूपा शाब्दीप्रमा** तु महावाक्यरूपशब्दप्रमाणस्य प्रत्यगभिन्नब्रह्मरूपप्रमेयस्य च यो लक्षणावृत्तिरूपपरंपरासंबन्धस्तज्ज्ञानाधीना। **इतरलौकिकपदार्थविषयकशाब्दी प्रमा तु** क्वचित् शक्तिवृत्तिरूपसंबन्धज्ञानाधीना। क्वचिल्लक्षणावृत्तिरूपसंबन्धज्ञानाधीना।

इत्थं च किञ्चिज्ज्ञानं **ज्ञेयवस्तुमात्राधीनम्**। किञ्चिज्ज्ञानं **प्रमाणप्रमेयसंबन्धाधीनम्**। अथवा तत्संबन्धज्ञानाधीनम्। भ्रमप्रमासाधारण्येन ज्ञानस्य विषयो **प्रमेय** इत्युच्यते। तत्र ज्ञेयत्वमप्यस्ति। इत्थ सर्वमपि ज्ञानं वस्त्वधीनमेव। 'इदं वस्तु' [इह 'ज्ञानम्'] इति शब्देन ईश्वरसृष्टेन वा मनोमयेन वा (परोक्षज्ञानविषयेण वा) भ्रमसिद्धेन वा वस्तुना प्रमाणद्वारा साक्षाद्वा वृत्तेः संबन्धो गृह्यते। तस्माज्ज्ञानं न विध्याद्यधीनम्। **ध्यानरूपमुपासनं** तु न वस्त्वधीनम्। किन्तु कर्त्रधीनम्। यद्यपि ध्यानमपि मनोवृत्त्यात्मकमेव। तथापि पुरुषस्येच्छाद्यधीनं तद्भवति। न वस्त्वधीनम्। तस्माद्ध्यानं मानसत्वेऽपि न ज्ञानं। किन्तु क्रियैव।

ब्रह्मात्मसाक्षात्काररूपज्ञाने प्रत्यगभिन्नं ब्रह्म प्रमेयं वेदान्तमहावाक्यं प्रमाणम्। गुरुमुखाद्वेदान्तश्रवणं कुर्वतः वेदान्तमहावाक्याद्ब्रह्मात्मसाक्षात्कारो जायते। महावाक्यरूपप्रमाणमन्तरा केवलेच्छादिना नात्मसाक्षात्कारो भवति। उपासनं त्ववश्यं विधिमपेक्षते। शास्त्रविधिमनुसृत्य क्रियमाणमेवोपासनं फलाय कल्पते। विधिमन्तरा स्वेच्छया स्वसङ्कल्पानुसारेण यत्किंचिदर्थध्यानं नेष्टफलाय प्रभवति।

तदिदं ध्यानमनेकविधम्। सालग्रामशिलायां विष्णुबुद्धिकरणवदन्यस्मिन्नन्यबुद्धिकरणं **प्रतीकध्यानम्**। वैकुण्ठवासिनो विष्णोश्चतुर्भुजत्वादिरूपेण ध्यानं तु नान्यस्मिन्नन्यबुद्धिकरणरूपं प्रतीकध्यानम्। किन्तु तद्ध्यानं **ध्येयवस्तुस्वरूपानुसारि ध्यानमेव**। वैकुण्ठवासिनो विष्णोः स्वरूपं न प्रत्यक्षगोचरं, किन्तु शास्त्रैकसमधिगम्यम्। शास्त्रे च विष्णोः स्वरूपं चतुर्भुजत्वेन शङ्खचक्राद्युपेतत्वेन च वर्णितम्। अतस्तथा विष्णोर्ध्यानं ध्येयैवस्तुस्वरूपानुसार्येव। विधिशास्त्रे विश्वासस्य, इच्छादेश्चाभावे ध्यानं न सिद्ध्यति। 'इदमुपासीत' इत्येवंरूपं पुरुषस्य प्रवर्तकं वचनं **विधिः**। तद्वचने श्रद्धा **विश्वासः**। अन्तःकरणस्य रजोगुणपरिणामरूपा कामात्मिका **वृत्तिरिच्छा**। हठादपि ध्यानं सिद्ध्यति। ज्ञाने तु न तदपेक्षा। नैरन्तर्येण ध्येयाकारचित्तवृत्तिप्रवाहो हि **ध्यानम्**। तत्र चित्तवृत्तेर्विक्षेपे सति हठात्तां स्थिरीकुर्यात्। ज्ञानरूपान्तःकरणवृत्त्युदयकाल एव विषयावरणभङ्गस्य सिद्धत्वाद्वृत्तिस्थैर्यसंपादनस्य नास्त्युपयोगः। तस्मान्न ज्ञाने हठापेक्षा। **अहङ्ग्रहध्यानम्**—वैकुण्ठवासिचतुर्भुजविष्णुध्यानवत् 'अहं ब्रह्म' इति ध्यानमपि ध्येयस्वरूपानुसार्येव ध्यानं, न तु प्रतीकध्यानम्। **किंविदमहङ्ग्रहध्यानम्**। ध्येयस्वरूपस्य स्वाभिन्नतयाऽनुसन्धान**महङ्ग्रहध्यानमुच्यते**। यस्य वेदान्तविचारेऽप्यपरोक्षज्ञानं नोदेति, सः वेदस्याज्ञारूपोपासनाविधिवाक्ये विश्वासवान् नैरन्तर्येण हठात् 'अहं ब्रह्मास्मि' इत्यहङ्ग्रहध्यानमनुतिष्ठेत्। तस्य क्रमेण ज्ञानोत्पत्तिद्वारा [2]मोक्षः सिद्ध्यति।

## (आ. २९४- ३२६) प्रणवोपासननिरूपणम्—

**(२९४) प्रणवे अहङ्ग्रहध्यानम्**—प्रकारान्तरेणाहङ्ग्रहध्यानमि-

---

१. यस्य बुद्धिः शास्त्रोक्ते परोक्षे ध्येये न सहसा स्थिरीभवति, सः पुरुषप्रेरकेण शास्त्रविधिना बोधिते परोक्षध्येयप्रतिनिधिभूते प्रत्यक्षे सालग्रामादौ अन्यस्मिन् वा ध्येयविष्णुबुद्धिकरणरूपं अन्यबुद्धिकरणरूपं वा **प्रतीकध्यानं** कुर्यात्। 'अहं ब्रह्मास्मि' इति निर्गुणोपासनं त्वहङ्ग्रहध्यानम् **ध्येयस्वरूपानुसारित्वात्तस्य**।

२. यद्यप्यत्र ध्यानविषयीभूतं ब्रह्म न परमार्थरूपं, किन्तु मनःकल्पितमेव। तस्मात्तद्विषयकचित्तवृत्तिप्रवाहरूपध्यानमपि **भ्रान्तिज्ञानमेव**, न यथार्थज्ञानम्। तथापि मणिप्रभायां मणिबुद्धिरूपसंवादिभ्रान्त्या धावतः पुंसः मणिज्ञानद्वारा मणिलाभवत् प्रकृताहङ्ग्रहध्यानेन ब्रह्मज्ञानलाभेन मोक्षः सिद्ध्यत्येव।

दानीमुच्यते—प्रणवरूपे ओङ्कारे अहङ्ग्रहध्यानं माण्डूक्यादिश्रुत्यनुसारेण सुरेश्वराचार्यैः कथितम्। तदनुष्ठानमप्युचितं मोक्षकामस्य। तस्यैवं क्रमः—प्रणवरूपमक्षरं ब्रह्मस्वरूपमेव। तादृशप्रणवस्वरूप ब्रह्म अहमेव' इति नैरन्तर्येणानवरतं ध्यायेत्। नैतत्समं किञ्चिदपि ध्यानमस्ति। एतद्ध्यानस्य विशेषक्रमः सुरेश्वराचार्यैः पञ्चीकरणाख्ये ग्रन्थे प्रतिपादितः। एतदुपासकोऽपारं संसारं तरति। अत्राधिकारी सन्यास्येव।

(२९५) **निर्गुणप्रणवोपासनस्य सगुणप्रणवोपासनस्य च फलम्**—प्रणवोपासनमनेकोपनिषत्सु वर्णितम्। माण्डूक्योपनिषदि विशेषेण वर्णितम्। तदुपनिषद्व्याख्याने भाष्यकारैरानन्दगिर्याचार्यैश्च विस्पष्टं वर्णितञ्च। तत्र यः क्रमः स एव वार्तिककारैः पञ्चीकरणग्रन्थे प्रतिपादितः। तादृशप्रौढग्रन्थविचारासमर्थानामनायासेन बोधाय प्रणवोपासनक्रमोऽत्र निरूप्यते—

उपनिषत्सु प्रणवोपासनं द्विधा वर्णितम्—परब्रह्मरूपेण प्रणवस्योपासनं, अपरब्रह्मरूपेण प्रणवस्योपासनं चेति। निर्गुणं ब्रह्म '**परं ब्रह्म**' इत्युच्यते। सगुणं ब्रह्म '**अपरं ब्रह्म**' इति कीर्त्यते। **परब्रह्मरूपेण प्रणवोपासकः मोक्षमेव** लभते। **अपरब्रह्मरूपेण प्रणवोपासकस्तु** ब्रह्मलोकमाप्नोति। इत्थं निर्गुणसगुणभेदेन प्रणवोपासनं द्विविधम्।

(आ. २९६-३१५) **निर्गुणप्रणवोपासनक्रमः**—

(२९६) **सर्ववस्तूनामोङ्कारस्वरूपत्वम्**—निर्गुणप्रणवोपासनक्रम एवात्र निरूप्यते, न सगुणोपासनक्रमः। सगुणोपासनस्य फलमपि निर्गुणोपासनेऽन्तर्भवति। तथा हि निर्गुणोपासकस्यापि **ब्रह्मलोकेच्छावतः** इच्छारूपप्रतिबन्धसत्त्वान्न ज्ञानद्वारा मोक्षलाभः। किन्तु तस्य ब्रह्मलोकप्राप्तिर्भवति। स तत्र हिरण्यगर्भसमान् भोगाननुभूय तत्रैव ब्रह्मविचारेण ज्ञानोदयद्वारा मोक्षं लभते। **ब्रह्मलोकेच्छारहितस्य** निर्गुणोपासकस्य त्विहैव लोके ज्ञानलाभान्मोक्षः सिद्ध्यति। इत्थं सगुणोपासनफलस्य निर्गुणोपासनान्तर्भूतत्वादिह निर्गुणोपासनमेव निरूप्यते।

कारणकार्यरूपं सर्वं वस्त्वोङ्कारस्वरूपमेव। अतः सर्वोऽपि रूपप्रपञ्चः ओङ्कार एव। सर्वेष्वपि पदार्थेषु नाम रूपं चेत्यंशद्वयमस्ति। तत्र

(१) माण्डूक्यशब्देन गौडपादकारिकापि ग्राह्या। आदिशब्देन कठप्रश्नावुपनिषदो गृह्यन्ते।

रूपात्मकोंऽशः तत्तन्नामात्मकांशान्नातिरिच्यते । किन्तु नामस्वरूपमेव रूपांशोऽपि । तथाहि—पदार्थानां रूपात्मको यः आकारविशेषः तदभिधायकनामपदैरेव सर्वे पदार्था निरूपिताः सन्तो गृह्यन्ते त्यज्यन्ते वा । तत्तदभिधानज्ञानमन्तरा केवलाकारमात्रेण व्यवहारो न सिद्ध्यति । अतो नामैव सारभूतम् । आकारनाशेऽपि नामावशिष्यते । यथा नष्टेऽपि घटे मृदवशिष्यते इति मृद्व्यतिरेकेण घटो नास्ति । किन्तु मृत्स्वरूपमेव भवति । तथा आकारे नष्टेऽपि मृद्वदवशिष्यमाणनाम्नो न भिद्यते आकारः । किन्तु नामस्वरूपमेव भवत्याकारोऽपि ।

अथवा घटशरावोदञ्चनादिषु मृदनुगता भवति । घटशरावोदञ्चनादयः परस्परं व्यभिचरन्ति । तस्माद्घटशरावादयो मिथ्या । तेष्वनुगता मृत्सत्या । एवं घटस्याकाराः नाना । तेषामभिधायकं 'घट' इति नामैकमेव । एकस्य घटस्याकारो न घटान्तरेऽस्ति । तस्मादाकारा व्यभिचारिणः । सर्वेष्वपि घटाकारेषु एकमेव नामानुगतं वर्तते । तस्मान्मिथ्याभूत आकारः सत्यभूतान्नम्नो नातिरिच्यते । इत्थमेव सर्वपदार्थानामाकारोऽपि तत्तन्नाम्नो न व्यतिरिक्तः । तस्मान्नामस्वरूप एवाकारः ।

सर्वोऽयं नामप्रपञ्चः ओङ्कारव्यतिरेकेण नास्ति । किन्तु ओङ्कारस्वरूपमेव सर्वं नाम । तथाहि—वाचकशब्दः एव 'नाम' इति कथ्यते । लोके वेदे च प्रयुक्तः सर्वः शब्दः ओङ्कारादेवोत्पन्न इति श्रुतिषूच्यते । "तद्यथा शङ्कुना सर्वाणि पर्णानि संतृष्णानि एवमोङ्कारेण सर्वा वाक् संतृण्णा" । "ओङ्कार एवेदं सर्वम्" इति । कार्यं सर्वं कारणस्वरूपमेव भवति । तस्मादोङ्कारकार्यभूतानि वाचकशब्दात्मकानि नामानि ओङ्कारस्वरूपाणि । इत्थं रूपांशो यः पदार्थाकारः स नामस्वरूपः । नाम च सर्वमोङ्कारस्वरूपम् । तस्मात्सर्वस्वरूपः ओङ्कारः ।

(२९७) **ओङ्कारस्य ब्रह्माभेदेन चिन्तनम्—**

यथा सर्वस्वरूप ओङ्कारः । तथा सर्वस्वरूपं ब्रह्म । तस्मादोङ्कारो ब्रह्मरूपः । अथवा ओङ्कारो ब्रह्मणो वाचकः । ब्रह्म ओङ्कारस्य वाच्यम् ।

---

१. यथा पुण्याधिक्यान्मनुष्यापेक्षयाऽधिककालस्थायी देवः 'अमरः' इत्युपचारेणोच्यते तथैव घटादिपदार्थानामाकारापेक्षया घटादिनाम्नामधिककालस्थायित्वात् नाम्नां सत्यत्वमुपचारादुच्यते ।

वाच्यवाचकयोरभेदोऽस्ति । तस्मादप्योङ्कारो ब्रह्मरूपः । **किञ्च** विचार्यमाणे यदक्षरं ब्रह्मण्यध्यस्तं तस्य ब्रह्माधिष्ठानं भवति । अध्यस्तस्य स्वरूपमधिष्ठानान्नातिरिच्यते । तस्मादप्योङ्कारो ब्रह्मैव । तस्मादोङ्कारं ब्रह्मरूपेण चिन्तयेत् ।

### (आ. २९८-३०५) ब्रह्मस्वरूपस्योङ्कारस्यात्मनश्चाभेदः—

### (२९८) आत्मनो ब्रह्मणश्च पादचतुष्टयादिनिरूपणम्—

ब्रह्मरूपमोङ्कारमात्मनोऽभिन्नतया चिन्तयेत् । तथाहि—आत्मनः ब्रह्मणा सह मुख्याभेदोऽस्ति । ब्रह्मण इवात्मनश्चत्वारः पादाः सन्ति । पादो नाम भागः अंशो वा । [1]विराट् हिरण्यगर्भः, [2]ईश्वरः, तत्पदलक्ष्यार्थभूतेश्वरसाक्षी चेति **ब्रह्मणश्चत्वारः पादाः** । [3]विश्वः, [4]तैजसः, [5]प्राज्ञः त्वंपदलक्ष्यजीवसाक्षी चेति **चत्वारः आत्मनः पादाः** । जीवसाक्षिण एव **तुरीय** इति व्यपदेशः । समष्टिस्थूलप्रपञ्चसहितचेतनस्य **विराडिति** नाम । व्यष्टिस्थूलाभिमानिनो **विश्व** इति नाम । विराजो विश्वस्य च स्थूलोपाधिकत्वाद्विश्वो विराड्रूप एव, न ततोऽन्यः ।

विराड्रूपस्य विश्वस्य **सप्ताङ्गानि** सन्ति । द्यौः=स्वर्गलोकः **शिरः** । सूर्यश्चक्षुः । वायुः **प्राणः** । आकाश **उरः** । समुद्रादिरूपं जलं **मूत्रस्थानं** (बस्तिः) । पृथिवी पादौ । आहवनीयः=होमाधिकरणोऽग्निः **मुखम्** । इत्येतानि सप्त विश्वस्याङ्गानि । द्युलोकादीनि यद्यपि न विश्वस्याङ्गानि तथापि विराजोऽङ्गानि भवन्ति । तस्य विराजो विश्वेनाभेदोऽस्ति । तस्मान्माण्डूक्योपनिषदि **विश्वाङ्गत्वेन** तान्युक्तानि ।

एवमेव विराडात्मकविश्वस्यैकोनविंशतिमुखानि सन्ति । प्राणाः पञ्च, कर्मेन्द्रियाणि पञ्च, ज्ञानेन्द्रियाणि पञ्च, अन्तःकरणचतुष्टयमित्येतानि मुखानि।

---

१. सकलप्राणिशरीरेष्वहमित्यभिमानकरणात् ईश्वरो वैश्वानर इति कथ्यते। विविधं राजते=अनेकधा प्रकाशते इति स एव वैश्वानरः '**विराट्**' इत्यभिधीयते ।

२. सकलजीवानां कर्मानुसारेण फलदानात् '**ईश्वरः**' इति नाम ।

३. सूक्ष्मदेहाभिमानापरित्यागेनैव स्थूलदेहे 'अहम्' इत्यभिमानवान् जाग्रदभिमानी जीवः '**विश्वः**' इत्युच्यते ।

४. तेजश्शब्दवाच्यान्तःकरणसहितः प्राणेन्द्रियाध्यक्षः स्वप्नाभिमानी जीवः **तैजस** इत्यभिधीयते ।

५. प्राज्ञः=प्र+अज्ञः । सुषुप्तिकाले स्वप्रकाशात्मानन्देन सहाज्ञानवृत्तेः सत्वात् सुषुप्त्यभिमानी जीवः प्राज्ञ इति कीर्त्यते ।

भोगस्य साधनभूतत्वात् **मुखानी**त्युच्यन्ते। जाग्रदवस्थायामेतैरेकोनविंशतिमुखैः स्थूलशब्दादयः बाह्यवृत्त्याऽनुभूयन्ते। तस्माद्विराड्रूपो विश्वः **स्थूलभुगिति, बाह्यवृत्तिरिति, जाग्रदवस्थः** इति च कथ्यते।

(२९९) **चतुर्दशत्रिपुटयः**—भोगसाधनेषु प्राणादिष्वेकोनविंशतिमुखेषु श्रोत्रादिदशेन्द्रियाणि अन्तःकरणचतुष्टयं चेति चतुर्दशमुखानि स्वस्वविषयाणां साहाय्यं स्वस्वदेवतानां च साहाय्यमपेक्षन्ते। देवताविषययोः साहाय्यमन्तरा केवलैरेतैश्चतुर्दशमुखैर्भोगो न संभवति। तस्मात्पञ्च प्राणाः चतुर्दश त्रिपुटयश्च विराड्रूपविश्वस्य मुखानीत्युच्यन्ते। मुखं, देवता विषयश्चेति त्रयाणां समूहस्य '**त्रिपुटी**' इति नाम। सा च त्रिपुटी एवं वर्ण्यते—(१) श्रोत्रेन्द्रिय**मध्यात्मं**, तद्विषयः शब्दो ऽ**धिभूतं**, दिगभिमानिनी देवता **अधिदैवम्**। अत्र क्रियाशक्तिज्ञानशक्तिभ्यां युक्तानीन्द्रियाणि अन्तःकरणं **चाध्यात्म**मित्युच्यते। तेषां विषयः **अधिभूत**मिति कीर्त्यते। तेषां सहायभूता देवताः **अधिदैव**मित्यभिधीयते। (२) त्वगिन्द्रिय**मध्यात्मं**, तद्विषयः स्पर्शोऽ**धिभूतं**, वाय्वभिमानिनी देवता **अधिदैवम्**। (३) नेत्रेन्द्रियमध्यात्मं रूप**म**धिभूतं, सूर्योऽधिदैवम्। (४) रसनेन्द्रिय**मध्यात्मं**, रसोऽ**धिभूतं**, वरुणोऽधिदैवम्। (५) घ्राणेन्द्रिय**मध्यात्मं**, गन्धोऽ**धिभूतं**, अश्विनीकुमा**रावधिदैवम्**। अथवा पृथिव्यभिमानिनी देवता **अधिदैवम्**। (६) वागि**न्द्रियमध्यात्मं, वक्तव्यमधिभूतं**, अग्निदेवता **अधिदैवम्** (७) पाणीन्द्रिय**मध्यात्मं**, पदार्थग्रहण**मधिभूतं**, इन्द्रो अधिदैवम्। (८) पादेन्द्रिय**मध्यात्मं, गमनमधिभूतं**, विष्णुर**धिदैवम्**। (९) पायुरध्यात्मं, मलविसर्जन**मधिभूतं**, यमोऽ**धिदैवम्**। (१०) उपस्थेन्द्रिय**मध्यात्मं**, ग्राम्यसुखोत्पत्तिः (मैथुनसुखोत्पत्तिः) **अधिभूतं**, प्रजापतिर**धिदैवम्**। (११) मनः **अध्यात्मं**, मन्तव्यं (सङ्कल्पः) **अधिभूतं**, चन्द्रोऽधिदैवम्। (१२) **बुद्धिरध्यात्मं**, बोद्धव्यं (निश्चयः) **अधिभूतं**, बृहस्पतिर**धिदैवम्**। (१३) अहङ्कारोऽध्यात्मं, अहङ्कर्तव्य**मधिभूतं**, रुद्रोऽधिदैवम्। (१४) चित्त**मध्यात्मं**, चिन्तनीयम-

---

१. सूर्याश्वस्य घ्राणाभ्यामश्विनीकुमारयोरुत्पत्तिवर्णनात् घ्राणदेवते अश्विनीकुमाराविति केचनाहुः। पृथिव्या घ्राणस्योत्पन्नत्वात्पृथिव्यभिमानिनी देवता घ्राणदेवतेति वार्तिककारा आहुः।

२. वचनक्रियाया विषयभूतः पदार्थः **वक्तव्यमि**त्युच्यते। सः वचनक्रियाद्वारा वागिन्द्रिय**स्याधिभूतम्**। एवमेव सर्वेन्द्रियाणां स्वस्वक्रियाद्वारा विषयभूतः पदार्थः अधिभूतमिति ज्ञेयम्। क्वचित्तु स्थूलदृष्ट्या वचनादिक्रियैवाधिभूतमित्युच्यते॥

धिभूतं, क्षेत्रज्ञः साक्षी अधिदैवम् । एताश्चतुर्दश त्रिपुट्यः पञ्च प्राणाश्च मिलित्वैतानि विराड्रूपस्य विश्वस्यैकोनविंशतिमुखानि ।

(३००) **विश्वः, विराट्, अकारमात्रा, इत्येतेषामभेदचिन्तनम्**— विराजो विश्वस्य च यथाऽभेदस्तथा ओङ्कारप्रथममात्रायाः अकारस्य विराड्-रूपविश्वेन सहाभेदोऽस्ति । तथाहि— ब्रह्मणश्चतुर्षु पादेषु प्रथमः पादो **विराट्** । आत्मनश्चतुर्षु पादेषु प्रथमः पादो **विश्वः** । ओङ्कारस्य मात्रा-त्मकेषु चतुर्षु पादेषु प्रथमः पादोऽ**कारः** । त्रयाणामेषामादित्वरूपधर्मसामा-न्यसत्वात् विश्वविराडकाराणामभेदं चिन्तयेत् । इत्थं विश्वस्य सप्ताङ्गान्येको-नविंशतिमुखानि च व्याख्यातानि ।

(३०१) **विश्वतैजसयोर्भेदः**— विश्वस्योक्तानि सप्ताङ्गान्येकोन-विंशतिमुखानि च तैजसस्यापि सन्तीत्यवगन्तव्यम् । किन्तु इयानस्ति भेदः— विश्वस्याङ्गानि मुखानि **चेश्वरसृष्टानि** । तैजसस्य त्विन्द्रियदेवताविषयरूप-त्रिपुट्यः शिरआद्यङ्गानि च **मनोमयानि** । तैजसस्य **भोगः सूक्ष्मः** । **भोगो** नाम सुखदुःखाद्यनुभवः । यद्यप्यनुभवरूपे ज्ञाने स्थूलत्वसूक्ष्मत्वभेदो न संभवति । तथापि बाह्यशब्दादिविषयसंबन्धात्साक्षाज्जायमानसुखदुःखादिसाक्षात्कारः **स्थूलः** इत्युच्यते । मानसशब्दादिसंबन्धाज्जायामानसुखदुःखादिसाक्षात्कारः **सूक्ष्म** इत्युच्यते । तथा च श्रुतिः—"स्थूलभुग्वैश्वानरः" (मा. आ. ३.) "प्रवि-विक्तभुक्तैजसः" (म. आ. ४.) इति । विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रवि-विक्तभुक्" (आ. आ. ५.) इति च तैजसस्य भोगयोग्याः शब्दादयो मान-सत्वात्**सूक्ष्माः** । तदपेक्षया विश्वस्य भोगयोग्याः शब्दादयो बाह्यत्वात्**स्थूलाः** । किञ्च, विश्वो **बहिष्प्रज्ञः** । तैजसस्त्व**न्तःप्रज्ञः** । यतो विश्वस्यान्तःकरण-वृत्तिरूपा प्रज्ञा बहिर्गच्छति । तैजसस्य प्रज्ञा न बहिर्गच्छति । तस्मात्तौ क्रमेण बहिष्प्रज्ञत्वेनान्तःप्रज्ञत्वेन च व्यपदिश्येते ।

(३०२) **तैजसः, हिरण्यगर्भः, उकारः, इत्येतेषामभेद-चिन्तनम्**—

यथा विश्वविराजोरभेदस्तथा तैजसहिरण्यगर्भयोरभेदो ज्ञेयः । तैज-सस्योपाधिः सूक्ष्मः । हिरण्यगर्भस्योपाधिरपि सूक्ष्मः । तस्मात्तयोरैक्यं

१. साक्षिचैतन्यं चित्तस्याश्रयत्वात्तस्यानुग्रहं करोति । तस्मात्साक्षिचैतन्यं चित्त-स्याधिदैवमित्युच्यते । अत एव केचनाचार्याः चिन्तनरूपं स्मृतिज्ञानं साक्ष्याश्रितमाहुः । कश्चिच्चित्तस्याधिदैवं नारायणः (वासुदेवः) इत्युक्तम् ।

बोध्यम् । तैजसहिरण्यगर्भयोरेकत्वं निश्चित्य ओंकारस्य द्वितीयमात्रया उकारेण सह तयोरभेदं चिन्तयेत् । आत्मनश्चतुर्षु पादेषु द्वितीयः **पादस्तैजसः ।** ब्रह्मणो द्वितीयः पादो **हिरण्यगर्भः ।** ओङ्कारमात्रासु द्वितीया मात्रा **उकारः ।** द्वितीयत्वं त्रयाणामेषां समानधर्मः । तस्मात्त्रयाणामैक्यं चिन्तयेत् ।

**(३०३) प्राज्ञः, ईश्वरः, मकारः, इत्येतेषां अभेदचिन्तनम्—**

प्राज्ञमीश्वररूपं जानीयात् । **प्राज्ञस्य** कारणशरीरमुपाधिः । **ईश्वरस्यापि** कारणमेवोपाधिः । ईश्वरः प्राज्ञश्च पादेषु तृतीयौ । ओङ्कारस्य तृतीया मात्रा **मकारः ।** त्रिष्वेतेषु तृतीयत्वस्य समानधर्मत्वात्तेषामैक्यं चिन्तयेत् । सोऽयं प्राज्ञः 'प्रज्ञानघनो' भवति । यस्मात् जाग्रत्स्वप्नयोर्यावन्ति ज्ञानानि स्थितानि तानि सर्वाणि सुषुप्तौ घनीभवन्ति, अविद्यामात्ररूपतां भजन्तीति यावत् । तस्मात्प्राज्ञः '**प्रज्ञानघन**' इत्युच्यते । अयं प्राज्ञः '**आनन्दभुक्**' इति श्रूयते । "आनन्दभुक् प्राज्ञः" (मा. आ. 5) यतोऽयं प्राज्ञः अविद्यावृतमानन्दं भुङ्क्ते ततः '**आनन्दभुक्**' इति व्यपदिश्यते । विश्वतैजसयोरिव प्राज्ञस्यापि भोगे त्रिपुटी वर्ण्यते—चैतन्यप्रतिबिम्बसहिताविद्यावृत्ति**रध्यात्मं,** अज्ञानावृतस्वरूपानन्दो**ऽधिभूतं,** ईश्वरो**ऽधिदैवमिति ।** इत्थं **विश्वो** बहिष्प्रज्ञः । **तैजसो**ऽन्तःप्रज्ञः । **प्राज्ञः** प्रज्ञानघनश्च भवति । अनया रीत्या विश्वो **बहिष्प्रज्ञः ।** तैजसो**ऽन्तःप्रज्ञः ।** प्राज्ञः **प्रज्ञानघनश्च** भवति ।

**(३०४) विश्वादीनां त्रयाणामेकत्वं, तुरीयस्येश्वरसक्षिणाऽभेदं च चिन्तयेत्—**

इत्थं विश्वादीनां त्रयाणां मिथो भेदः उपाधिप्रयुक्त एव । विश्वस्य स्थूलं सूक्ष्ममज्ञानं चेति **त्रयमप्युपाधिः,** तैजसस्य सूक्ष्ममज्ञानं चेति **द्वयमुपाधिः,** प्राज्ञस्याज्ञानमेक**मेवोपाधिः ।** इत्थमुपाधीनामाधिक्यन्यूनत्वाभ्यां त्रयाणां भेदेऽपि वस्तुतः स्वरूपेण न भेदः । विश्वतैजसप्राज्ञेषु त्रिष्वनुगतं चैतन्यं परमार्थत उपाधित्रयासंबद्धमवतिष्ठते । त्रयाणामुपाधीनामधिष्ठानं **तुरीयम् ।** तद्धि न बहिष्प्रज्ञम् । नान्तःप्रज्ञम् । न प्रज्ञानघनम् ।

---

१. यथा तण्डुलकणा जलेन पिण्डीकृता एकीभवन्ति यथा वा वृष्ट्युदकबिन्दवो निम्नदेशं प्राप्य तडागादिरूपेणैकीभवन्ति । तथा जाग्रत्स्वप्नकालीननानाज्ञानानि सुषुप्ताविद्यायामेकीभवन्ति । तादृशाविद्याप्रतिबिम्बितचैतन्यरूपः प्राज्ञजीवः अधिष्ठानकूटस्थसहितः **प्रज्ञानघन** इत्युच्यते ।

न कर्मेन्द्रियाणां ज्ञानेन्द्रियाणां वा विषयः। न बुद्धेर्विषयः। न कस्यापि शब्दस्य विषयः। एतादृशं तुरीयं परमात्मनश्चतुर्थपादात्मकेश्वरसाक्षिरूपशुद्धब्रह्मस्वरूपं जानीयात्।

**(३०५) द्विस्वरूपस्यात्मनो द्विस्वरूपेणोङ्कारेणाभेदं आत्मपादानामोङ्कारमात्राणां चाभेदं चिन्तयेत्—**

इत्थं परमार्थरूपमपरमार्थरूपमित्यात्मनो द्विविधं स्वरूपमुक्तम्। तत्र त्रयः पादा **अपरमार्थस्वरूपम्।** तुरीयः पादः **परमार्थस्वरूपम्।** आत्मन इवोङ्कारस्यापि स्वरूपद्वयमस्ति। अकारोकारमकारात्मकमात्रात्रयरूपाण्यक्षराणि **अपरमार्थस्वरूपम्।** मात्रात्रयव्यापकं, अस्तिभातिप्रियरूपमधिष्ठानचैतन्यं **परमार्थस्वरूपम्।** ओङ्कारस्य परमार्थस्वरूपं श्रुतौ **'अमात्रः'** इति शब्देन व्यपदिश्यते। "अमात्रश्चतुर्थोऽव्यवहार्यः" (मा. का. 12) इति।

यतस्तस्मिन् परमार्थस्वरूपे मात्राणां विभागो नास्ति तस्मात्त**दमात्र**मित्युच्यते। इत्थं स्वरूपद्वयवत ओङ्कारस्य स्वरूपद्वयवता आत्मना सहाभेदं जानीयात्।

(१) व्यष्टिसमष्टिस्थूलप्रपञ्चसहितयोर्विश्वविराजोरकारेणाभेदं जानीयात्। आत्मनः पादेषु **विश्वः** प्रथमः। ओङ्कारस्य मात्रासु **अकारः** प्रथमा मात्रा। अतस्**तयोरैक्यं** विद्यात्। (२) सूक्ष्मप्रपञ्चसहितहिरण्यगर्भात्म**कतैजसं** उकाररूपेण जानीयात्। आत्मनः पादेषु **तैजसो** द्वितीयः। ओङ्कारस्य मात्रासु **उकारो** द्वितीया मात्रा। तस्मात्**तयोरैक्यं** विद्यात्। (३) कारणोपाधिसहितेश्वररूपं प्राज्ञं मकाररूपेण विद्यात्। आत्मनः पादेष्वीश्वरस्वरूपः **प्राज्ञ**स्तृतीयः। ओङ्कारमात्रासु **मकार**स्तृतीया मात्रा। ततस्तयोरभेदं जानीयात्। आत्मनस्त्रिष्वपि पादेष्वनुगतं परमार्थरूपं **तुरीयं** ओङ्कारस्य तिसृष्वपि मात्रास्वनुगतात् ओङ्कारस्य परमार्थस्वरूपा**दमात्रादभिन्नतया** जानीयात्। विश्वादिषु **तुरीयो**ऽनुगतः। तथा अकारादिषु तिसृषु मात्रासु **अमात्रो**ऽनुगतः। तस्मादोङ्कारस्य परमार्थस्वरूप**ममात्रं तुरीयं चाभिन्नं** जानीयात्। अनया रीत्या आत्मपादानां त्रयाणां ओङ्कारमात्राणां तिसृणां चैकताचिन्तनरूपं लयचिन्तनं कुर्यात्।

**(३०६) लयचिन्तनानुवादः—**

**एकैकमात्रारूपविश्वादीनामन्यमात्रारूपता :**—लयचिन्तनमिदानीं निरूप्यते—**विश्वात्मकोऽकारः** तैजसात्मकादुकारान्न भिन्नः। **किन्तूकार-**

रूप एव। एवं चिन्तनमेव लय इत्युच्यते। एवमेवेतरास्वपि मात्रासूह्यम्। यस्मिन्नुकारेऽकारस्य लयः कृतः तं **तैजसात्मकमुकारं प्राज्ञात्मकमकारे लीनं कुर्यात्। प्राज्ञरूपं मकारमपि तुरीयरूपे** ओङ्कारस्य परमार्थस्वरूपे **अमात्रे** लीनं कुर्यात्। यतः स्थूलस्योत्पत्तिः सूक्ष्माद्भवति स्थूलस्य लयश्च सूक्ष्मे भवति, **तस्माद्विश्वरूपोऽकारः तैजसरूपे उकारे लीयेत।** सूक्ष्मस्योत्पत्तिः कारणाद्भवति, सूक्ष्मस्य लयश्च कारणे भवति। **तस्मात्तैजसरूप उकारः तत्कारणे प्राज्ञरूपे मकारे लीयेत।** अत्र विश्वादिग्रहणेन स्वस्वत्रिपुट्या सह समष्टिविराडदयोऽपि गृहीता भवन्ति। यस्मिन् प्राज्ञरूपे मकारे उकारस्य लयः कृतः **तं मकारं तुरीयरूपे ओङ्कारस्य परमार्थरूपे अमात्रे लीनं कुर्यात्।** ओङ्कारपरमार्थस्वरूपस्य तुरीयस्य चाभेदोऽस्ति। तच्च तुरीयं ब्रह्मैव। तस्मिन् शुद्धे ब्रह्मणीश्वरः प्राज्ञश्च कल्पितौ। यत् यस्मिन् कल्पितं तत् तत्स्वरूपमिति न्यायः। तस्मादीश्वरसहितप्राज्ञरूपमकारस्यामात्रे लयः युज्यत एव। इत्थं यस्मिन् ओङ्कारस्य परमार्थस्वरूपे अमात्रे सर्वेषां प्रविलयः कृतः 'स एवाहमस्मि' इत्यैकाग्र्येणानवरतं चिन्तयेत्। निखिलचराचरप्रपञ्चात्मकासङ्गाद्वयासंसारिनित्यमुक्तनिर्भयब्रह्मरूपो य ओङ्कारस्तस्य यत् परमार्थस्वरूपं 'तदेवाहमस्मि' इत्यादरेण नैरन्तर्येण च दीर्घकालं यश्चिन्तयति तस्य ज्ञानमुदेति। ततो ज्ञानद्वारा मुक्तिरूपफलमपि सिद्ध्यति। तदेवमोङ्कारस्य निर्गुणोपासनं सर्वोपासनेभ्यः श्रेष्ठम्।

(३०७) **ओङ्कारोपासने परमहंसस्यैवाधिकारः**—पूर्वोक्तरीत्या ओङ्कारस्वरूपं यो जानाति **स मुनिः**। मननान्मुनिरित्युच्यते। एवमोङ्कारस्य चिन्तनं मननरूपं भवति। यस्यैवमोङ्कारचिन्तनरूपमननं नास्ति **न स मुनिः**। इत्थं माण्डूक्योपनिषदुक्तरीत्या संक्षेपेणोङ्कारचिन्तनं वर्णितम्। **नृसिंहतापिन्याद्युपनिषत्स्वप्योङ्कारोपासनक्रमो** वर्णितः। इदं चोङ्कारचिन्तनं परमहंसानामेव गोप्यं धनम्। बहिर्मुखस्य नास्त्यत्राधिकारः। अत्यन्तान्तर्मुखस्यैवात्राधिकारः। गृहस्थानां नास्त्यत्राधिकारः। दारापत्यवित्तादिपरिग्रहरहितः परमहंस एवात्राधिकारी।

**(आ. ३०८-३०९) ओङ्कारध्यानफलम्—**

**(३०८) ओङ्कारध्यानं ज्ञानद्वारा मोक्षफलकम्—**

उक्तरीत्या ब्रह्मरूपेणोङ्कारोपासकस्य ज्ञानद्वारा **मोक्षः सिद्ध्यति। परं तु** यस्य पुनरैहिकभोगे आमुष्मिकब्रह्मलोकभोगे वेच्छाऽस्ति। तीव्रवैराग्यं

च नास्ति, तथापि हठादिच्छां निरुध्य दारापत्यधनादिकं परित्यज्य परमहंस-गुरूपदेशेन यावज्जीवमोङ्काररूपं ब्रह्माभिध्यायेत्, तस्य भोगेच्छा ज्ञानप्रतिबन्धिका भवति। तस्मात्तस्येह न ज्ञानं जायते। किन्तु सः ध्यानानुष्ठानपूर्वकमेवैतच्छरीरं त्यक्त्वा शरीरान्तरमादत्ते। ऐहिकभोगेच्छानिरोधपूर्वकं ध्यानानुष्ठानकारणात्स मनुष्यलोके सतां शुचीनां श्रीमतां कुलेऽभिजायते। तत्र पूर्वजन्मेच्छाविषयभूतान् सकलान् भोगान् भुक्त्वा पूर्वजन्मानुष्ठितध्यानसंस्कारबलाद्भूयोऽपि ध्याने वा विचारे वा प्रवर्तते। ततो ज्ञानं, ज्ञानान्मोक्षं च लभते।

(३०९) ओङ्कारध्यानं ब्रह्मलोकप्राप्तिफलकम्—

यः पुनर्ब्राह्मलौकिकभोगेच्छां निरुध्योङ्काररूपब्रह्मध्यानमकरोत्स शरीरपातानन्तरं ब्रह्मलोकं गच्छति। तत्र मनुष्यपितृदेवानां दुर्लभं स्वातन्त्र्यं तत्प्रयुक्तमानन्दं चानुभवति। हिरण्यगर्भतुल्यभोगान् सत्यसङ्कल्पत्वाद्यैश्वर्यविशेषांश्च लभते।

(३१०) ब्रह्मलोकमार्गः—

ब्रह्मलोकगमनमार्गक्रमस्त्वेवम्—ब्रह्मोपासनतत्परः पुरुषो यदा म्रियते तदा तस्यान्तःकरणमिन्द्रियाणि च संमूर्च्छितानि भवन्ति। ततः स न किञ्चिदपि बोद्धुं कर्तुं वा शक्नोति। तथापि यमदूतास्तस्य लिङ्गशरीरं नेतुं न तदन्तिकमागच्छन्ति। किन्त्वग्न्यभिमानिनी देवता तस्य मरणसमये तमुपासकं शरीराद्वियोज्य स्वलोकं नयति। ततोऽग्निलोकात्तमुपासकमहरभिमानिनी देवता स्वलोकं नयति। ततः शुक्लपक्षाभिमानिनी देवता तमुपासकं स्वलोकं नयति। तत उत्तरायणाभिमानिनी देवता तमुपासकं स्वलोकं नयति। ततः संवत्सराभिमानिनी देवता तमुपासकं स्वलोकं नयति। ततो देवलोकाभिमानिनी देवता तमुपासकं स्वलोकं नयति। ततो वाय्वभिमानिनी देवता तमुपासकं स्वलोकं नयति। ततः सूर्याभिमानिनी देवता तमुपासकं स्वलोकं नयति। ततश्चन्द्राभिमानिनी देवता तमुपासकं स्वलोकं नयति। ततो विद्युदभिमानिनी देवता तमुपासकं स्वलोकं नयति।

---

१. मरणसमये जीवापेतस्थूलदेहाल्लिङ्गशरीरं वियुक्तं भवति। तदा चैतन्याभावात्संमूर्च्छितान्युपासकस्यान्तःकरणमिन्द्रियाणि च स्वतः न किञ्चिदपि ज्ञातुं शक्नुवन्ति। क्रियाशक्तियुक्तप्राणोऽपि स्वरूपत एवाचेतनत्वेनेच्छाभावान्न क्वचिदपि गन्तुं शक्नोति।

तत्र विद्युल्लोके हिरण्यगर्भाज्ञया हिरण्यगर्भलोकवासी हिरण्यगर्भसरूपश्च कश्चनामानवो दिव्यपुरुषस्तमुपासकं नेतुमागच्छति । स चामानवः पुरुषस्तमुपासकं विद्युल्लोकाद्वरुणलोकं नयति । विद्युदभिमानिनी देवता च वरुणलोकपर्यन्तं तमनुगच्छति । ततोऽप्ययमानव एव पुरुषस्तमुपासकं वरुणलोकादिन्द्रलोकं नयति । वरुणदेवता चेन्द्रलोकपर्यन्तं तमनुसरति । ततोऽपि स दिव्यः पुरुष एव तमुपासकमिन्द्रलोकात्प्रजापतिलोकं नयति । इन्द्रश्च प्रजापतिलोकपर्यन्तं तमनुसरति । प्रजापतेर्ब्रह्मलोकगमनसामर्थ्याभावादमानवः पुरुषोऽसहकृत एव तमुपासकं प्रजापतिलोकात् ब्रह्मलोकं नययि । ब्रह्मलोकस्याधिपतिर्हिरण्यगर्भः । समष्टिसूक्ष्माभिमानी चेतनः हिरण्यगर्भ इति कीर्त्यते । तमेव हिरण्यगर्भमपरब्रह्मेति कार्यब्रह्मेति च वदन्ति । कार्यब्रह्माधिष्ठित एव लोको ब्रह्मलोक इत्युच्यते ।

### (३११) सायुज्यमुक्तिवर्णनम्—

यद्यपि पूर्वोक्तरीत्या ओङ्कारोपासनं शुद्धब्रह्मरूपेणोक्तं, शुद्धब्रह्मोपासकस्य शुद्धब्रह्मप्राप्तिरेवोचिता । "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" (छा. 3-14-1.) इति श्रुतेः ।

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ (भ. गी. 8-6) इति स्मृते-

र्न्यायाच्च । तथापि शुद्धब्रह्मप्राप्तेर्वेदान्तप्रमाणजन्यद्वैतमिथ्यात्वपूर्वकाद्वैतज्ञानमात्रसाध्यत्वात् भोगेच्छारूपप्रतिबन्धसत्त्वाच्च यस्य ज्ञानं न संजातं तस्य कार्यब्रह्मप्राप्तिरूपसायुज्यमुक्तिरेव सिद्धयति । ब्रह्मलोकं गतस्योपासकस्य हिरण्यगर्भसमानविभूत्यैश्वर्यादिकं सिद्धयति । सत्यसङ्कल्पत्वं इच्छानुरूपं शरीरं सङ्कल्पमात्रेणाभीष्टभोगलाभश्च सिद्धयति । युगपदेव नानाशरीरैर्नानाभोगानुभवेच्छायां सत्यां सङ्कल्पमात्रादेव क्षणेनैव नानाविचित्रशरीराणि पृथक् पृथक् भोगोपकरणसिद्धिश्च भवति । किं बहुना । यद्यत्सङ्कल्पयति तत्सर्वमप्रत्यूहेन सद्यः संपद्यते । परं तु जगत्सृष्टिपालनसंहरणव्यतिरिक्ताः सर्वाः विभूतयो हिरण्यगर्भसमाः सिद्धयन्ति । अनेकेश्वरत्वे जगत उन्मथप्रसङ्गात् सृष्ट्यादित्रिका-

तिरिक्तसकलैश्वर्याण्युपासकस्य सिद्ध्यन्ति । इयमेव सायुज्यमुक्तिरिति कथ्यते। एवमुपासकः हिरण्यगर्भसमः सन् चिरकालं सङ्कल्पमात्रसिद्धान् नाना दिव्यभोगान् भुञ्जानः प्रलयकाले हिरण्यगर्भलोकस्यावसानकाले समुदिताद्वैतात्मज्ञानः विदेहमोक्षं लभते ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।

परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ इत्यादिवचनात् ।

**(३१२) अहङ्ग्रहध्यानादेव ब्रह्मलोकप्राप्तिरिति नियमः**—यथा ओङ्काररूपब्रह्मोपासकस्य ब्रह्मलोकप्राप्तिद्वारा मोक्षलाभः फलं तथोपनिषत्सूक्तानामितरेषामपि ब्रह्मोपासनानामिदमेव फलम् । किन्तु अहङ्ग्रहोपासनं विनेतरोपासनेन न ब्रह्मलोकोऽवाप्यत इति सूत्रकारैर्भाष्यकारैश्च ब्रह्मसूत्रेषु भाष्यादिषु च चतुर्थाध्याये वर्णितम् ।

नार्मदबाणानां शिवरूपेण, सालग्रामशिलानां विष्णुरूपेण च ध्यानं तु **प्रतीकध्यानमेव** । नाहङ्ग्रहध्यानम् । एवमेव "मनो ब्रह्मेत्युपासीत" (छा. 3-18-1.) "आदित्यो ब्रह्मेत्यादेशः" (छा. 3-19-1.) इत्यादिश्रुत्युक्तोपासनमपि **प्रतीकध्यानमेव** । नाहङ्ग्रहध्यानम् । तेषां तत्तत्प्रकरणे पृथक् फलश्रवणात्तैर्न ब्रह्मलोकोऽवाप्यते । सगुणस्याथवा निर्गुणस्य ब्रह्मणः स्वात्माभेदेन चिन्तनमहङ्ग्रहध्यानमित्युच्यते । तेनैव ध्यानेन ब्रह्मलोकोऽवाप्येत ।

**(३१३) उत्तरायणमार्गेण ब्रह्मलोकं गतानां पुनः संसाराप्राप्तिः ; ज्ञानद्वारा मोक्षप्राप्तिश्च**—

पूर्वोक्तो मार्गः **उत्तरायणमार्गः देवयानमार्गः अर्चिरादिमार्ग** इति चोच्यते । तेन देवमार्गेण ब्रह्मलोकं गत उपासकः पुनः संसारं न प्रतिपद्यते, किन्तु तत्रैव ज्ञानोत्पत्त्या स विदेहमुक्तिमाप्नोति । तत्र ज्ञानसाधनीभूतगुरूपदेशाद्यपेक्षा नास्ति । ब्रह्मलोके गुरूपदेशादिसाधनं विनैव ज्ञानोत्पत्तिर्भवति । तत्र च कारणं ब्रह्मलोके रजस्तमोगुणयोर्लेशतोऽप्यभावः । तस्य लोकस्य केवल-

१. राज्ञः प्रजानां राज्य इव ईश्वरलोके वासमात्रं **सालोक्यमुक्तिः** । ततोऽपि श्रेष्ठा राजसेवकवदीश्वरसमीपे वासरूपा **सामीप्यमुक्तिः** । ततोऽप्युत्कृष्टा राजानुजवदीश्वरसमानरूपप्राप्तिः **सारूप्यमुक्तिः** । ततोऽप्यतिशयिता राज्ञो ज्येष्ठपुत्रयुवराजवदीश्वरसमानसत्यसङ्कल्पाद्यैश्वर्यप्राप्तिः **सार्ष्टिमुक्तिः** इत्थमुत्तरोत्तरमुत्कृष्टा चतुर्विधा मुक्तिः शास्त्रेषु कथिता । तत्र चतुर्थी **सार्ष्टिमुक्तिः** श्रेष्ठा । सार्ष्टिमुक्तिरेव **सायुज्यमुक्तिरित्युच्यते** ।

सत्वगुणप्रधानता च । **तमोगुणाभावात्** जडत्वालस्यादिकं नास्ति । **रजोगुणाभावा**त्तत्कार्यभूतकामक्रोधादिरूपविक्षेपोऽपि नास्ति । एवं तमोरजसोरभावादावरणविक्षेपयोरभावे **केवलसत्वगुणप्रधाने** ब्रह्मलोके सत्वगुणकार्यज्ञानरूपप्रकाशस्तत्र लोके मुख्यः । "एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" (छा. 4-15-5.) "न च पुनरावर्तते" (छा. 8-15-1.) "तेषां न पुनरावृत्तिः" (बृ. 6-2-15.) "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः," "सत्वात् संजायते ज्ञानम्" (भ. गी. 14-17) इत्यादिश्रुतिस्मृतिभ्यः ।

**(३१४) हिरण्यगर्भलोकवासिनोऽसङ्गनिर्विकारब्रह्मरूपतया आत्मनो भाने कारणम्—**

पूर्वमोङ्कारस्य ब्रह्मरूपतयोपासनकाले ओङ्कारमात्राणामर्थो वक्ष्यमाणरीत्या चिन्तितः—स्थूलोपाधिविशिष्टविराडात्मकविश्वचैतन्य**मकाररूपप्रथममात्रायाः वाच्यार्थः** । सूक्ष्मोपाधिविशिष्टहिरण्यगर्भात्मकतैजसचैतन्य**मुकाररूपद्वितीयमात्राया वाच्यार्थः** । कारणोपाधिविशिष्टेश्वरात्मकप्राज्ञचैतन्य**मुकाररूपतृतीयमात्राया वाच्यार्थः** । एवं प्राक्चिन्तितार्थानुसरणमुपासकस्य ब्रह्मलोके जायते । सत्वगुणप्रभावाच्च वक्ष्यमाणप्रकारेण विवेकपूर्वकं विचारयति चोपासकः—(१) स्थूलोपाधिदृष्ट्या खलु शुद्धे चैतन्ये **विराट्त्वविश्वत्व**प्रतीतिरभूत् । तत्र समष्टिस्थूलदृष्ट्या **विराट्त्वं**, व्यष्टिस्थूलदृष्ट्या **विश्वत्वं** चाभात् । समष्टिव्यष्ट्यात्मकस्थूलदृष्टिविरहे विराट्त्वविश्वत्वे न प्रतीयेयातां । किन्तु शुद्धं चैतन्यमात्रं भासेत । तस्मात् स्थूलोपाधिसहितविराडात्मकविश्वोऽकारवाच्यार्थः । (२) तथैव सूक्ष्मोपाधिसहित**हिरण्यगर्भात्मकतैजसः उकारवाच्यार्थः** । समष्टिसूक्ष्मोपाधिदृष्ट्या शुद्धचैतन्ये **हिरण्यगर्भत्वं**, व्यष्टिसूक्ष्मोपाधिदृष्ट्या **तैजसत्वं** चाभात् । सूक्ष्मोपाधिदृष्टिविरहे तु हिरण्यगर्भत्वं तैजसत्वं वा न भायात् । किंतु शुद्धं चैतन्यमात्रं भासेत । (३) तथैव कारणोपाधिसहितेश्वरात्मा **प्राज्ञः मकारवाच्यार्थः** । समष्ट्यज्ञानोपाधिदृष्ट्या शुद्धचैतन्ये **ईश्वरत्वमभात्**, व्यष्ट्यज्ञानोपाधिदृष्ट्या **प्राज्ञत्वमभात्** । अज्ञानोपाधिदृष्टिविरहे तु ईश्वरत्वं प्राज्ञत्वं वा न भासेत । किन्तु केवलचैतन्यमात्रं प्रतीयेत ।

किञ्च यत्र यद्वस्त्वन्यदृष्ट्या प्रतीयते तत्र तद्वस्तु परमार्थतो नास्ति । यस्य वस्तुनो यद्रूपमन्यदृष्टिं विना स्वत एव प्रतीयते तदेव तस्य पारमार्थिकं

स्वरूपम् । यथा कस्मिंश्चित्पुरुषे पितृदृष्ट्या पुत्रत्वं, पितामहदृष्ट्या पौत्रत्वं च प्रतीयमानं न तस्य परमार्थधर्मः, किन्तु पुरुषत्वमेव तस्य परमार्थधर्मः । तथा स्थूलसूक्ष्मकारणोपाधिदृष्ट्या भासमानविश्वत्वतैजसत्वप्राज्ञत्वादयो न परमार्थधर्माः, परन्तु मिथ्यैव ते । चैतन्यमात्रं परमार्थसत्यम् ।

तच्च चैतन्यं समस्तभेदशून्यम् । **विराजो विश्वस्य च** भेद औपाधिक एव । तयोरुभयोः स्थूलोपाधिकत्वेऽपि समष्ट्युपाधिको विराट् । विश्वस्तु व्यष्ट्युपाधिकः । समष्टिव्यष्ट्युपाधिप्रयुक्तभेदवत्वेऽपि विराड्विश्वयोः स्वरूपतो नास्ति भेदः । तथैव **हिरण्यगर्भतैजसयोः** समष्टिव्यष्ट्युपाधिप्रयुक्तभेदवत्वेऽपि स्वरूपतो न भेदोऽस्ति । **एवमेवेश्वरप्राज्ञयोः** समष्टिव्यष्ट्युपाधिनिबन्धन एव भेदो न स्वरूपतः । इत्थं च **प्राज्ञेनेश्वरस्य, तैजसेन हिरण्यगर्भस्य, विश्वेन विराजश्चा**भेदः सिद्धः । एवमेव स्थूलोपाधिकस्य सूक्ष्मोपाधिकेन वा कारणोपाधिकेन वा न भेदगन्धोऽप्यस्ति । यतः स्थूलसूक्ष्मकारणरूपोपाधिदृष्टिपरित्यागे चैतन्यस्वरूपे न कोऽपि भेदोऽस्ति ।

किञ्चानात्मनः सकाशादपि चैतन्यस्य नास्ति भेदः । यतोऽनात्मभूतदेहादिप्रपञ्चोऽविद्यादशायामेव भाति । न परमार्थतः । तस्मादनात्मप्रपञ्चस्यापि चैतन्येन सह भेदोऽसङ्गत एव । इत्थं सर्वभेदशून्यासङ्गनिर्विकारनित्यमुक्तपरब्रह्मस्वरूपः प्रत्यगात्मा **ओङ्कारलक्ष्यार्थत्वेन** स्वयंप्रकाशतया ब्रह्मलोके उपासकस्य भासते । तस्माद्धिरण्यगर्भलोके वसत उपासकस्य न पुनः संसारगतिः । किन्तु स ज्ञानेन विदेहकैवल्यमेवाप्नोति कार्यब्रह्मणोऽवसानसमये ।

### (३१५) ओङ्कारस्य महावाक्यानां चार्थैकत्वम् :—

यद्यपि महावाक्यविवेकमन्तरा ज्ञानं न सिद्ध्यतीति सिद्धान्तस्तथापि **ओङ्कारविवेकस्य महावाक्यविवेकरूपत्वा**दोङ्कारविवेकेनापि ज्ञानमुदियादेव । तथाहि स्थूलोपाधिसहितचेतनोऽ**कारवाच्यार्थः** ; स्थूलोपाधिरहितकेवलचेतनोऽ**कारलक्ष्यार्थः** । सूक्ष्मोपाधिसहितचेतन **उकारवाच्यार्थः** । सूक्ष्मोपाधिरहितचेतन **उकारलक्ष्यार्थः** । कारणोपाधिसहितचेतनो **मकारवाच्यार्थः** । कारणोपाधिरहितचेतनो **मकारलक्ष्यार्थः** । इत्थमुपाधिसहिता विश्वादयो**ऽकारादिमात्राणां वाच्यार्थाः** । उपाधिरहितः केवलं चेतनः **सकलमात्राणां लक्ष्यार्थः** । तथैव नामरूपात्मकाखिलोपाधिसहितचेतन **ओङ्कारवाच्यार्थः** । नामरूपात्मकसकलोपाधिरहितकेवलचेतनः **ओङ्कारलक्ष्यार्थः** । इत्थमोङ्कारस्य

महावाक्यानां चार्थ एक एव भवति। तस्मोदोङ्कारविवेकेनैवाद्वैतात्मज्ञानं जायते। इत्थमदृष्टिराचार्यवाक्यं श्रुत्वा उपासनायां प्रवृत्तो ज्ञानद्वारा परम-पुरुषार्थमोक्षमलभत ॥

(३१६) **निर्गुणोपासनानधिकारिणा कर्तव्यम्:**—यो निर्गुणो-पासनेऽनधिकारी स सगुणमीश्वरं सदा मनसि धारयेत्। सगुणोपासनेऽशक्तः निष्कामतया नित्यनैमित्तिकानि कर्माण्यनुतिष्ठन्नीश्वरे समर्पयेत्। कर्मविराम-काले ईश्वरमपि भजेत। निष्कामकर्म कर्तुमप्यशक्तः सकामः शास्त्रोक्तशुभकर्मा-ण्यनुतिष्ठेत्। तत्राप्यशक्तो यः स शठः पुनःपुनर्जन्ममरणप्रवाहे पतति।

ओङ्कारार्थविचारेण कृतार्थोऽभूददृष्टिकः।
एतत्तरङ्गपठनात् सुदृष्टिं कुरुते गुरुः ॥

**॥ इति श्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचिते मध्यमाधिकारिणः साधनवर्णनं नाम पञ्चमस्तरङ्गः ॥**

---

१. वेदान्तश्रवणमननरूपविचारे प्रवृत्तो जिज्ञासुस्तं विहाय नान्यत् साधनमनु-तिष्ठेत्। वेदान्तविचारशीलः पुरुषो यदि विचारं परित्यज्यान्यत्र प्रसज्यते स **आरूढ पतितो** भवति। **अथवा 'करस्थं मधु संत्यज्य कूर्परं लेढि मूढधीः'** इति-न्यायस्य विषयो भवति। यः करस्थं मधु प्रमादात्परित्यज्य मधुना लिप्तं कूर्परं लेढि पश्चात्, तस्य तुल्यो भवति वेदान्तविचारं परित्यज्यान्यत्र प्रसक्तः पुरुषः। तस्माद्वेदान्त-विचारशीलः पुरुषः सुदृढबोधोदयपर्यन्तं विचारमेव कुर्यात्। यस्य विचारे न प्रवृत्तिर्भवति स **निर्गुणोपासनं** कुर्यात्। तत्राप्यशक्तेन 'उपवासात् वरा भिक्षा' इति न्यायेन **सगुणोपासनादिकं** कर्तव्यं भवेत्।

२. मायाविशिष्टचैतन्यरूपं कारणं ब्रह्म **सगुणेश्वर** इत्युच्यते। **अथवा** कारण-ब्रह्मोपलक्षणभूताः हिरण्यगर्भवैश्वानरहरिहरगौरीगणेशार्कादयः कार्यब्रह्मरूपा अपि **सगुणे-श्वरत्वेन** ध्येयाः। **अथवा** तेषां हरिहरादीनां प्रतीकभूतसालग्रामादयः, तेषां प्रतिमाविशे-षाश्च **सगुणेशत्वेनो**पास्याः। पूर्वोक्तेषूपास्येषूत्तरोत्तरापेक्षया पूर्वपूर्वस्योपासनं प्रशस्तं भवति।

उत्तरत्र सप्तमतरङ्गे वक्ष्यमाणक्रमेण मायाविशिष्टचैतन्यरूपं कारणं ब्रह्मैवे**श्वर-शब्दस्य मुख्यार्थः**। तदेवोपास्यम्। तथापि "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" (श्वे· 4-10) इति श्रुत्या मायाविशिष्टचैतन्यादन्यस्य वस्तुनोऽभावात् श्रीविद्यारण्यस्वामिनः सर्वमताविरोधेन चित्रदीपे ईश्वरस्वरूपमवर्णयन्। तदनुसारेण हिरण्यगर्भादिसर्वमुपास्यवस्तु **ईश्वर** एवेत्यभिप्रायः।

३. फलाभिसन्धिमन्तरा स्वस्ववर्णाश्रमोचितानि कर्माणि केवलमीश्वरार्पणबुद्ध्या कुर्यात्। कर्मोपरमकाले नामोच्चारणादिरूपमीश्वरभजनं च कुर्यात्। फलेच्छां विनानुष्ठित-मीश्वरे समर्पितं च विहितं कर्मेश्वरप्रसादहेतुर्भवति। अतो निष्कामकर्मानुष्ठानमीश्वर-भजनरूपमेव भवति।

अथ गुरुवेदान्तादिसाधनमिथ्यात्ववर्णनं नाम

## षष्ठस्तरङ्गः

(३१७)[1] **उपोद्घातः**—चतुर्थतरङ्गे **उत्तमाधिकारिण** उपदेशप्रकारो वर्णितः। पञ्चमतरङ्गे **मध्यमाधिकारिण** उपदेशप्रकारः कथितः। अस्मिंस्तु तरङ्गे **कनिष्ठाधिकारिण** उपदेशप्रकारो निरूप्यते। यस्य तु संशया बहवो जायन्ते स तीक्ष्णबुद्धिरपि **कनिष्ठाधिकार्येव** भवति। संशयो हि पापात्मा। "संशयात्मा विनश्यति" (भ. गी. 4-40.) इति स्मृतिः। अस्य तरङ्गस्य युक्तिप्रधानत्वात् यस्य गुरुमुखाच्छ्रुतेऽपि वेदार्थे कुतर्का उपजायन्ते तस्यायं तरङ्ग उपयुज्यते। कुतर्कदग्धबुद्धिः **कनिष्ठाधिकारी।** तस्योपदेशप्रकारोऽस्मिन् तरङ्गे वर्ण्यते। पञ्चमे तरङ्गे प्रणवोपासनजगदुत्पत्त्यादिनिरूपणात्पूर्वमिदमुक्तम्—'चैतन्याद्भिन्नमज्ञानं तत्कार्यं **चानात्मा।** अनात्मपदार्थः सर्वोऽपि स्वप्नवन्मिथ्या' इति। तमिमं गुरोरुपदेशं श्रुत्वा प्रश्नादुपरतौ ज्येष्ठौ भ्रातरौ दृष्ट्वा तर्कदृष्टिः पृच्छति—

### (आ. ३१८-३१९) कनिष्ठाधिकारिणस्तर्कदृष्टेः प्रश्नः—

(३१८) **स्वप्नदृष्टान्तेन जाग्रत्पदार्थस्य मिथ्यात्वं न भवति इति तर्कदृष्टिः पृच्छति**—पूर्वमत्यन्तमज्ञातो यः पदार्थस्तस्य ज्ञानं स्वप्ने न भवति। किन्तु जाग्रति यद्विषयकानुभवोऽभूत् तद्विषयकं स्मरणं स्वप्ने जायते। तथा च स्मृतिविषयजाग्रत्पदार्थानां सत्यत्वात् स्वप्ने जायमानं तद्विषयकस्मृतिज्ञानमपि सत्यमेव। तस्मात्स्वप्नदृष्टान्तेन जाग्रत्पदार्थानां मिथ्यात्वकथनं न युज्यत एव।

(३१९) **स्वप्नो न मिथ्या**[2]:—

**अथवा** स्वप्नज्ञानविषयभूताः पदार्थाः सत्या एव। न मिथ्या। तथाहि—स्वप्नावस्थायां स्थूलशरीरं त्यक्त्वा लिङ्गशरीरं[3] बहिर्निर्गत्य सर्वं सत्यं गिरिसुमुद्रादिकं पश्यति। अतः स्वप्नो न मिथ्या।

---

१. "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः।"

२. स्वप्नो जाग्रत्यनुभूतपदार्थविषयकस्मृतिरूप**मानसविपर्यासः** इति कथयतां नैयायिकादीनां मतरीत्यायं प्रश्नः—

३. "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्॥

**(आ. ३२०-३२१) पूर्वोक्तप्रश्नयोरुत्तरम्—**

**(३२०) स्वप्नज्ञानं प्रत्यक्षम्। न जाग्रत्पदार्थानां स्मृतिरूपम्ः—**

पूर्वकालसंबन्धवतः पदार्थस्य ज्ञानं **स्मृतिर्भवति**। यथा पूर्वं दृष्टस्य गजस्य 'स गजः' इति **स्मृतिरूपं** ज्ञानमुत्पद्यते। पुरतः स्थितं गजं दृष्ट्वा तु 'अयं गजः' इति जायमानं ज्ञानं तु **न स्मृतिः**। किन्तु **प्रत्यक्षमेव**। स्वप्ने 'अयं गजोऽग्रे तिष्ठति, 'इयं नदी प्राचीं दिशं प्रवहति', 'अयं पर्वतो रम्यो विराजते' इत्येवं ज्ञानं भवति। तस्माज्जाग्रति दृष्टानां पदार्थानां स्मरणं न स्वप्ने भवति। किन्तु गजादीनां प्रत्यक्षज्ञानमेव भवति। **किञ्च** यदुक्तं 'जाग्रत्यनुभूतपदार्थविषयकज्ञानमेव स्वप्ने भवति। नाननुभूतपदार्थविषयकज्ञानं जायते। तस्माज्जाग्रत्पदार्थज्ञानजन्यसंस्कारात्स्वप्नज्ञानमुदेति। संस्कारजन्यं ज्ञानं **स्मृतिरिति** कथ्यते' इति। **तन्न युज्यते**। तथाहि—प्रत्यक्षज्ञानं द्विविधम्, **एकमभिज्ञारूपप्रत्यक्षमपरं** च **प्रत्यभिज्ञारूपप्रत्यक्षमिति**। (१) केवलमिन्द्रियसन्निकर्षजन्यं **ज्ञानमभिज्ञाप्रत्यक्षमिति** वर्ण्यते। **यथा** 'अयं गजः' इति नेत्रेन्द्रियसन्निकर्षमात्रजन्यं गजज्ञानमभिज्ञाप्रत्यक्षम्। (२) पूर्वानुभवजन्यसंस्कारेणेन्द्रियसन्निकर्षेण चोत्पन्नं ज्ञानं **प्रत्यभिज्ञाप्रत्यक्षमिति**[1] वर्ण्यते। **यथा** पूर्वानुभूते गजे पुरतो दृष्टे सति 'सोऽयं गजः' इति ज्ञानं **प्रत्यभिज्ञाप्रत्यक्षम्**। अत्र च पूर्वदृष्टहस्तिज्ञानजन्यसंस्कारः गजेन सह नेत्रेन्द्रियसंबन्धश्चेत्युभयमपि प्रत्यभिज्ञाप्रत्यक्षकारणम्। अतश्च संस्कारजन्यं ज्ञानं स्मृतिरेवेति न नियमः। प्रत्यभिज्ञाप्रत्यक्षस्यापि संस्कारजन्यत्वात्। परंतु '**इन्द्रियसन्निकर्षमन्तरा** केवलसंस्कारजन्यं ज्ञानं **स्मृति**'ज्ञानमिति कीर्त्यते।

(१) स्वप्ने जायमानं गजादिज्ञानं न संस्कारमात्रजन्यम्। अपि तु निद्रारूपदोषजन्यमपि। गजादिरिव स्वप्ने कल्पितेन्द्रियादिकमपि वर्तते।

---

1. 'प्रत्यक्षज्ञानसामग्रीसहितसंस्कारजन्यं ज्ञानं **प्रत्यभिज्ञाप्रत्यक्षमिति**' कथ्यते। 'संस्कारसहितेन्द्रियजन्यं ज्ञानं प्रत्यभिज्ञाप्रत्यक्ष'मिति लक्षणस्य बाह्यप्रत्यभिज्ञाप्रत्यक्षे संभवेऽप्यान्तरप्रत्यभिज्ञाप्रत्यक्षेऽस्य लक्षणस्यासंभवादव्याप्तिः स्यात्। तस्मात्प्रथमोक्तमेवोभयविधप्रत्यभिज्ञाप्रत्यक्षसाधारणं निर्दुष्टं लक्षणम्। **अत्रायं विशेषः**—'संस्कारजन्यं ज्ञानं स्मृति'रित्युक्ते प्रत्यभिज्ञानस्यापि संस्कारजन्यत्वात्तत्रातिव्याप्तिः स्यात्। तद्वारणाय स्मृतिलक्षणे **मात्रपदं** निवेश्यम्। 'संस्कारमात्रजन्यं ज्ञानं स्मृति'रित्युक्ते संस्कारमात्ररूपसामग्र्याः अनुभवनाशानन्तरं सदा विद्यमानत्वात् सदा स्मृत्युत्पत्तिप्रसङ्गः। अतस्तद्वारणाय स्मृतिलक्षणे उद्भूतपदमपि निवेश्यम्। तथा च 'उद्भूतसंस्कारमात्रजन्यं ज्ञानं स्मृतिः' इति **निर्दुष्टं स्मृतिलक्षणम्**।

तस्मात्स्वप्ने गजादीनां ज्ञानमिन्द्रियजन्यम्। यद्यपि स्वाप्नपदार्थः साक्षिभास्यो नेन्द्रियजन्यज्ञानविषयः। तथाप्यविवेकिदृष्ट्या स्वाप्नज्ञानमिन्द्रियजन्यमिति कथ्यते। तथा च स्वाप्नपदार्थज्ञानं न जाग्रत्पदार्थगोचरा **स्मृतिः।**

(२) किञ्च निद्रातः प्रबुद्धः पुरुषो वदति 'स्वप्नेऽद्य गजमहमपश्यम्' इति। स्वाप्नगजज्ञानं यदि स्मृतिः स्यात् तदा प्रबुद्धः 'स्वप्नेऽद्य गजमहमस्मार्षम्' इति वदेत्। न तु कोऽपि तथा वदति। **तस्मान्न** स्वप्ने जाग्रत्पदार्थविषयिणी **स्मृतिः।** (३) अपि च 'जाग्रति दृष्टानामथवा श्रुतानां पदार्थानामेव ज्ञानं स्वप्ने जायते' इति नास्ति नियमः। अपि तु जाग्रत्यज्ञातपदार्थानामपि ज्ञानं स्वप्ने भवति। इह जन्मनि कदाप्यदृष्टस्याश्रुतस्य च विलक्षणस्य पदार्थस्य ज्ञानमपि कदाचित्स्वप्ने भवति। "अनुभूतश्चाननुभूतश्च।" इति श्रुतेः। तस्मात्स्वप्ने जायमानं ज्ञानं न स्मृतिः। (४) **यद्यपि** इह जन्मन्यनुभूतपदार्थज्ञानजन्यसंकार एव स्मृतिहेतुरिति नास्ति नियमः। जन्मान्तरीयानुभवजन्यसंस्कारस्यापि स्मृतिहेतुत्वदर्शनात्। तथाहि—प्रवृत्तिं प्रति अनुकूलता(इष्टसाधनता)ज्ञानं कारणं, तदभावे प्रवृत्त्यदर्शनात्। ततश्च जातमात्रस्य शिशोः स्तन्यपाने प्राथमिकप्रवृत्तेः कारणभूतं 'स्तन्यपानं ममेष्टसाधनं' इति ज्ञानं भवति। तत्र च जन्मान्तरे शिशोः स्तन्यपानस्यानुकूलताऽनुभूता। तादृशानुभवाहितसंस्कारवशादस्मिन् जन्मनि शिशोः प्राथमिकी स्तन्यपानस्यानुकूलतास्मृतिर्जातेति वक्तव्यम्। तस्माज्जन्मान्तरीयानुभवजन्यसंस्कारादपि स्मृतिर्भवति। एवमेवेह जन्मन्यननुभूतपदार्थविषयकस्मृतिरपि जन्मान्तरीयानुभवजन्यसंस्कारवशात् स्वप्ने संभवत्येव। **तथापि** जाग्रति यस्य पदार्थस्य ज्ञानं कस्मिन्नपि जन्मनि कदापि न संभवेत् तादृशपदार्थस्य प्रतीतिः स्वप्ने भवति। यथा कदाचित् कश्चन स्वप्ने स्वमस्तकं च्छिन्नमन्यत्र पतितं स्वचक्षुषा पश्यति तत्र न कोऽपि जाग्रति च्छिन्नं स्वशिरोऽन्यत्र पतित स्वचक्षुषा दृष्टवान्। तस्माज्जाग्रत्पदार्थानुभवजन्यसंस्कारवशात्स्वप्ने स्मृतिर्भवतीति कथनमत्यन्तमसङ्गतम्। (5) स्वप्नस्य स्मृतिरूपत्वखण्डनेऽनन्ता युक्तयो ग्रन्थकारैस्तत्र तत्रोक्ताः। तत्र च 'स्मृतिज्ञानस्य विषयो न क्वचिदपि संमुखे विद्यमानतया प्रतीयते। स्वाप्नगजादयस्तु स्वप्नकाले संमुखे वर्तमानतया प्रतीयन्ते। तस्मात्स्वप्ने गजादिज्ञानं न स्मृतिः।' इतीदं पूर्वोक्तं दूषणं प्रबलम्।

**(३२१) स्वप्ने लिङ्गशरीरं स्थूलशरीराद्बहिर्गत्वा सत्यगिरिसमुद्रादिकं न पश्यति**—स्वप्ने लिङ्गशरीरं स्थूलशरीराद्बहिर्गत्वा सत्यगिरि-

समुद्रादिकं पश्यतीति यदुक्तं तत्रोत्तरमुच्यते—यदि स्थूलशरीराद्बहिर्गत्वा लिङ्गशरीरं सत्यं गिरिसमुद्रादिकं पश्यति तदा लिङ्गशरीरस्य बहिर्गमनात् मरणावस्थायां यथा स्थूलशरीरं भयंकरं भवति तथा स्वप्नावस्थायामपि लिङ्ग-शरीराभावात्स्थूलशरीरममङ्गलं कुणपसदृशं च भवेत्। न तु तथा स्वप्ना-वस्थायां स्थूलशरीरं भवति। किन्तु स्वप्नावस्थायामपि स्थूलशरीरं प्राणसहितं जाग्रतीव सुन्दरं च भवति। तस्मात्स्थूलशरीरं विहाय स्वप्नावस्थायां लिङ्गशरीरं न बहिर्गच्छति।

**अथ यद्युच्यते**—स्वप्नवस्थायां प्राणा न बहिर्गच्छन्ति। किन्त्वन्तः-करणमिन्द्रियाणि च बहिर्गत्वा पर्वतादिकं पश्यति। प्राणानां बहिर्गमनाभावा-देव मरणावस्थायामिव स्थूलशरीरं न भयङ्करं भवति। **अपि च** स्वप्ने प्राणानां बहिर्गमने न किञ्चिदपि प्रयोजनमस्ति। यतः प्राणानां ज्ञानशक्तिर्नास्ति। किन्तु क्रियाशक्तिरेवास्ति। तस्माद्बाह्यपदार्थज्ञानसामर्थ्यं येषामस्ति तान्येव बहिर्ग-च्छन्ति। ज्ञानशक्तिश्चान्तःकरणस्य ज्ञानेन्द्रियाणां चास्ति। प्राणानां कर्मे-न्द्रियाणां च ज्ञानशक्तिर्नास्ति। किन्तु क्रियाशक्तिरेवास्ति। तस्मात्स्वप्ना-वस्थायां प्राणाः कर्मेन्द्रियाणि च स्थूलशरीरे एव तिष्ठन्ति। अतश्च मरण-निमित्तकदाहादिभ्यः स्थूलशरीरं संरक्षितं भवति। स्वप्नावस्थायामन्तःकरणं ज्ञानेन्द्रियाणि च बहिर्गत्वा सत्यगिरिसमुद्रादिकं दृष्ट्वा पुनः प्राणानां कर्मे-न्द्रियाणां च समीपं प्रत्यागच्छन्तीति।

**इदं न सङ्गच्छते**–(1) स्थूलसूक्ष्मसङ्घातमध्ये प्राण एव स्वामी। प्राणहीनं देहं क्षणार्धमपि गेहे न स्थापयन्ति। बहिररण्यं नीत्वा दहन्ति। प्राणरहितं शरीरं स्पृष्ट्वा स्नान्ति च। अतः स्थूलशरीरस्य सारः प्राणः। **तथा** सूक्ष्म-शरीरस्यापि प्रधानः प्राण एव। तथाहि, प्राणा इन्द्रियाणि च 'स्वेषु कः श्रेष्ठः' इति विषये परस्परं विवादमापन्नाः प्रजापतिसमीपं गतास्तमपृच्छन् "को नः श्रेष्ठः" इति। स होवाच प्रजापतिः—"यस्मिन् व उत्क्रान्ते स्थूलमिदं शरीममङ्गलं भवति स वः श्रेष्ठः।" इति। प्रजापतेर्वचनं श्रुत्वा क्रमेणैकैकमिन्द्रियं शरीरान्निर्गत्य संवत्सरं बहिरुषित्वा पुनः शरीरं प्राविशन्। तदा तत्तदिन्द्रियप्रवासकाले तत्तदिन्द्रियप्रयुक्तदर्शनादिरूपव्यापारविकलमपीदं शरीरमन्धबधिरादिरूपं भूत्वा प्राणेनावष्टब्धं सद्विधृतमतिष्ठत्। प्राणे तूच्चि-क्रमिषति विकलमिदं शरीरं भूमौ पिपतिषति स्म। तदा सर्वाणीन्द्रियाणि

'प्राण एव नः श्रेष्ठः' इति निश्चिक्युः। तस्माद्यावदेवास्मिन् देहे प्राणो निवसति तावदेवेतरेन्द्रियाणि तत्र तिष्ठन्ति। प्राणे तूत्क्रान्ते इतरेन्द्रियाण्यपि तदनूत्क्रामन्ति। तस्मात्सूक्ष्मसङ्घातस्य राजेव प्राण एव प्रधानः। प्राणे शरीरादनिर्गतेऽन्तःकरणं ज्ञानेन्द्रियाणि च न बहिर्गच्छेयुः।

(२) अथवा अन्तःकरणं ज्ञानेन्द्रियाणि च भूतानां सत्वगुणकार्याणि। अतस्तेषां ज्ञानशक्तिरस्ति, न क्रियाशक्तिः। प्राणस्य तु क्रियाशक्तिरस्ति। प्राणस्य क्रियाशक्तिबलादेव मरणसमये लिङ्गशरीरं स्थूलमिदं शरीरं विहाय लोकान्तरं गच्छति। प्राणबलेनैवेन्द्रियद्वाराऽन्तःकरणवृत्तिर्बहिर्घटादिदेशं गच्छति। प्राणसाहाय्यं विनाऽन्तःकरणादिकं न बहिर्गन्तुं प्रभवति। अत एव योगशास्त्रे उच्यते—'प्राणनिरोधं विना मनोनिरोधो न सिद्ध्यति। प्राणसञ्चरणेन मनसः सञ्चरणं भवति। प्राणनिरोधान्मनोनिरोधो भवति' इति च। अतो मनोनिरोधरूपराजयोगमनुष्ठातुमिच्छन् प्राणनिरोधरूपहठयोगमनुतिष्ठेत्। अनेनापि हेतुनान्तःकरणस्य गमनं प्राणाधीनं भवति। प्राणे बहिरनिर्गतेऽन्तःकरणं ज्ञानेन्द्रियाणि च न बहिर्गच्छेयुः॥

(३) स्वप्नावस्थायां स्थूलशरीरं प्राणसहितमेव दृश्यते। अतश्च स्वप्ने अन्तःकरणं बहिर्गत्वा सत्यपदार्थान् विषयीकरोतीत्येतन्न संभवति।

(४) अथवा कश्चन रात्रौ स्वप्ने स्वसंबन्धिभिर्मिलितो नानाव्यवहारान् करोति। प्रातर्जागरणानन्तरं यदा तान् संबन्धिनः साक्षात्पश्यति तदा 'वयं रात्रौ मिलिता अभूम। एतांश्च व्यवहारानकुर्म। इति वक्तुमर्हति। परं तु तथा न कथयति। पूर्वपक्षिरीत्या तु स्वप्नद्रष्टा बहिर्गतवान्। संबन्धिनं दृष्टवान्। तेन सह सत्यरूपान् व्यवहारांश्च कृतवान्। तथा परस्परदर्शन व्यवहरणं च संबन्धिनोऽपि परिज्ञातं भवितुमर्हति। ततश्च संबन्धी वा यदा स्वप्नद्रष्टारं पश्यति तदा सोऽपि तं प्रति 'वयं स्वप्ने मिलिता व्यवहारानकुर्म इति वक्तुमर्हति। परं तु सोऽपि न तथा वक्ति। सिद्धान्ते तु स्वप्ने बहिर्गमनं संबन्धिदर्शनं तेन सह व्यवहरणं सर्वं चान्तरेव कल्पितम्।

(५) अथवा स्वप्ने बहिर्गत्वा सत्यपदार्थान् पश्यतीत्यङ्गीकारे रात्रौ निद्रां कुर्वतः मध्याह्नसूर्यप्रकाशदर्शनं, गङ्गायाः दक्षिणतटे काशीपुरीदर्शनं, काश्याः प्राच्यां दिशि प्रयागक्षेत्रस्य, प्रतीच्यां दिशि गयाक्षेत्रस्य दर्शनं च स्वप्ने

---

१. अत्र प्राणशब्देनेन्द्रियशब्देन च तत्तदभिमानिदेवता ग्राह्याः।

न भवितुमुचितम् । रात्रौ मध्याह्नसूर्यप्रकाशस्य, गङ्गायाः दक्षिणतटे काशीपुर्याः, काश्याः प्राच्यां दिशि प्रयागक्षेत्रस्य, प्रतीच्यां दिशि गयाक्षेत्रस्य, चाभावात् ।

तस्मात् (1) स्वप्ने जाग्रत्यनुभूतपदार्थानां स्मरणं भवति, इति (2) बहिर्गत्वेश्वरसृष्टगिरिनद्यादिदर्शनं भवति इति च द्वावपि पक्षौ निराकृतौ वेदितव्यौ ।

**(आ. ३२२-३४१) 'जाग्रत्स्वप्नयोस्तुल्यता' इति सिद्धान्तनिरूपणम्—**

**(३२२) स्वप्ने त्रिपुटीसमुदायः सर्वोऽप्युपजायते—**

स्वप्ने जाग्रत्पदार्थस्मृतेर्लिङ्गशरीरबहिर्गमनस्य चासंभवेऽपि जाग्रतीव स्वप्नेऽपि ज्ञाता ज्ञानं, ज्ञेयमिति त्रिपुटी भासते । तस्मात्कण्ठाधःस्थनाड्यन्तरेव सर्वमुत्पद्यते । अयमर्थो माण्डूक्यबृहदारण्यकादिषु सूचितः । "स्वप्नस्थानोऽन्तःप्रज्ञः" । (मा. श्रु. 4) "स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति। अत्रायं पुरुषः स्वयंज्योतिर्भवति"। (बृ. 4-3-9) "न तत्र रथा न रथयोगा न पन्थानो भवन्ति । अथ रथान रथयोगान् पथः सृजते ।" (बृ. 4-3-10) इति । **अयमर्थः**—'न जाग्रत्कालीनाः पदार्था स्वप्ने भान्ति । किन्तु रथरथिकाश्वमार्गादयः सर्वेऽपि स्वप्ने अभिनवास्तत्काल एव सृज्यन्ते इति । तस्मात्स्वप्ने उपलभ्यमाना गिरिनदीसमुद्रवनग्रामपट्टणसूर्यचन्द्रादयः सर्वेऽपि नूतना उत्पद्यन्ते । यदि स्वप्ने पर्वतादयो नोत्पद्यन्ते तर्हि तेषां प्रत्यक्षज्ञानं स्वप्ने नोत्पत्तुमर्हति । जायते तु तेषां स्वप्ने प्रत्यक्षज्ञानम् । विषयेण सहेन्द्रियाणामन्तःकरणवृत्तेश्च संबन्धः प्रत्यक्षज्ञाने हेतुः । तस्मात्पर्वतादयो विषयाः तज्ज्ञानसाधनान्तःकरणेन्द्रियादिकं सर्वमप्यन्तरुत्पद्यन्ते ।

**ननु** स्वप्नपदार्थाः शुक्तिरजतादिवत्साक्षिभास्याः । अतस्तज्ज्ञानेऽन्तःकरणेन्द्रियाणामुपयोगो नास्ति । तस्मात् स्वप्ने ज्ञेयानां पर्वतादीनामुत्पत्त्यङ्गीकारस्योचितत्वेऽपि ज्ञातृज्ञानयोरिन्द्रियाणां चोत्पत्त्यङ्गीकारो नोचित इति चेन्न।

(१) **यथा** स्वप्ने पर्वतादयः प्रतीयन्ते **तथेन्द्रियाणि,** अन्तःकरणं, प्राणसहितस्थूलशरीरं चेत्येतान्यपि प्रतीयन्ते । तस्मात्तेषां सर्वेषामुत्पत्तिरङ्गीकार्यैव ।

(२) अथवा स्वप्नपदार्थानां नेत्रादिविषयता प्रतीयते। व्यावहारिकनेत्रादिविषयता स्वाप्नप्रातिभासिकपदार्थानां न घटते। समसत्ताकपदार्थयोरेव परस्परं साधकबाधकतास्तीति पञ्चमतरङ्गे निरूपितत्वात्। तथा च व्यावहारिकनेत्रादीनां शरीरे विद्यमानत्वेऽपि तेषां विषमसत्ताकत्वात्तज्जन्यज्ञानविषयत्वं स्वाप्नपदार्थानां न संभवेत्।

(३) अथवा व्यावहारिकेन्द्रियाणि स्वस्वगोलकानि विहाय कार्यकरणे न समर्थानि। स्वप्नावस्थायां निद्रां कुर्वतो हस्तपादवागादीनां गोलकानि निश्चलतया पार्श्वस्थेनानुभूयते। स्वप्नद्रष्टा तु स्वप्ने हस्तेन द्रव्यमादायाक्रोशन् धावति। तस्मात्स्वप्ने इन्द्रियाणामुत्पत्तिरवश्यमङ्गीकार्या।

(४) तथैव स्वप्ने सुखदुःखादिरूपं ज्ञेयं तज्ज्ञानं तज्ज्ञानाश्रयः प्रमाता चेत्येते च प्रतीयन्ते। असतः पदार्थस्य प्रतीतिर्न भवेत्। तस्मात् सकला त्रिपुटी स्वप्ने उत्पद्यते।

अनिर्वचनीयख्यातेः प्रकारस्त्वेवम्—यावन्ति भ्रमज्ञानानि भवन्ति तेषां सर्वेषामपि विषया अनिर्वचनीया उत्पद्यन्ते। विषयं विना न किञ्चिदपि ज्ञानमुत्पद्येतेति **सिद्धान्तः**। मतान्तरे तु वस्तुनो रूपान्तरेण भानमेव भ्रम इत्युच्यते। सिद्धान्ते तु यथा पदार्थोऽस्ति तथैव तज्ज्ञानं भवतीत्यभ्युपगम्यते। तस्माद्भ्रमस्थलेऽपि विषयोऽवश्यमुत्पद्यत एव। विषयं विना ज्ञानं न भवति। तथा च स्वप्ने त्रिपुट्या भानात् सकला त्रिपुटी उत्पद्यत एव।

## (आ. ३२३-३२४) स्वाप्नपदार्थस्याधिष्ठानोपादानयोः प्रदर्शनपूर्वकमुत्पत्तिवर्णनम्।

### (३२३) स्वप्ने पदार्थानामुत्पत्त्यङ्गीकारो न युक्त इति शङ्का—

स्वप्ने प्रतीयमानपदार्थानामुत्पत्त्यङ्गीकारे **यथा** सिद्धान्ते स्वप्नदृष्टान्तबलाज्जाग्रत्पदार्था मिथ्येति प्रसाध्यते, **तथा** जाग्रत्पदार्थानामिव स्वाप्नपदार्थानामप्युत्पत्तिमत्त्वात्तेऽपि सत्या इत्यङ्गीकार्यं भवेत्। स्वप्ने पदार्थानामुत्पत्त्यनङ्गीकारे नैष दोषः स्यात्। तथाहि जाग्रति पदार्था उत्पन्नाः सन्तः प्रतीयन्ते। स्वप्ने तु पदार्थाः असन्त एव प्रतीयन्ते। तस्मात्स्वप्नेऽसतां पदार्थानां ज्ञानं भ्रमरूपं भवति। अतस्तेषामुत्पत्त्यङ्गीकारो न युक्त एव।

### (३२४) पूर्वोक्तशङ्कायाः समाधानम्—

(१) यस्य वस्तुन उत्पत्तौ देशकालादिरूपो यावान् सामग्रीकलाप अपेक्षितस्तावन्तं सामग्रीकलापं विनैवोत्पद्यमानं वस्तु **मिथ्येत्यभिधीयते**। स्वप्ने

गजादीनामुत्पत्तावुचितदेशकालादिरूपसामग्री नास्ति। **चिरेण कालेन विस्तीर्णे** देशे उत्पत्तुं योग्या गजादयः स्वप्ने क्षणमात्रकालेनातिसूक्ष्म**कण्ठप्रदेशे** उत्पद्यन्ते। तस्मात्स्वाप्नगजादयो **मिथ्या**। (२) **यद्यपि** स्वप्नावस्थायामधिकदेशकालौ प्रतीयेते, **तथापि** गजादिपदार्थान्तरवदधिकदेशकालावपि स्वप्नेऽनिर्वचनीयप्रातिभासिकतयैवोत्पद्येते। तथाहि-विषयं विना प्रत्यक्षज्ञानं नोदेति। स्वप्नेऽधिकदेशकालयोर्ज्ञानमुत्पद्यते। व्यावहारिकदेशकालौ तु स्वल्पौ भवतः। तस्मात्प्रातिभासिकावधिकदेशकालावुत्पद्येते। परं तु स्वप्नावस्थायामुत्पन्नौ प्रातिभासिकाधिकदेशकालौ स्वप्नावस्थायामुत्पद्यमानगजादीनां कारणभावं न भजतः। कारणं पूर्वकाले भवति कार्यं चोत्तरकाले भवतीति हि नियमः। स्वप्ने तु देशकालौ गजादयश्च युगपदेवोत्पद्यन्ते। तस्मात्स्वप्ने प्रातिभासिकदेशकालयोर्गजादीनां च परस्परं कार्यकारणता न संभवति। व्यावहारिकदेशकालौ तु स्वल्पौ स्तः। न तौ गजाद्युत्पादने योग्यौ। तस्मादुचितदेशकालादिरूपसामग्रीं विनोत्पद्यमानाः स्वाप्नपदार्था **मिथ्या**।

(३) **अपि च** स्वप्ने गजादीनां मातापित्रादिरूपसामग्र्यपि नास्ति यद्यपि स्वप्ने प्राणिनः तेषां मातापित्रादयोऽपि प्रतीयन्ते। **तथापि** स्वाप्नमातापितरौ न पुत्रस्योत्पत्तिकारणतां भजतः। यतो माता पिता पुत्रश्चेति त्रयोऽपि युगपत्सहैवोत्पद्यन्ते। तस्मान्न तेषां कार्यकारणभावः। यस्या दोषसहिताविद्यायाः सकाशात् स्वाप्नपदार्था जायन्ते सैवाविद्या तेषां पदार्थानां मातृत्वं, पितृत्वं, पुत्रत्वं चोत्पादयति। स्वाप्नपदार्थोत्पत्तौ नान्या कापि सामग्र्यस्ति। निद्रादोषसहिताविद्यैव स्वाप्नपदार्थोत्पत्तौ कारणम्। दोषसहिताविद्याया जातं शुक्तिरूप्यादिकं **मिथ्या** भवति। तस्मात्स्वाप्नपदार्था अपि **मिथ्यैव न सत्याः**।

स्वाप्नपदार्थानामुपादानकारणमन्तःकरणम्; **अथवा** साक्षादविद्यैव। आद्यपक्षे **साक्षिचैतन्यं** स्वप्नाधिष्ठानम्। द्वितीयपक्षे **ब्रह्मचैतन्यं** स्वप्नाधिष्ठानम्। इत्थं च स्वप्नः अन्तःकरणस्य अथवा अविद्यायाः परिणामः। चैतन्यस्य विवर्तश्च भवति।

---

१. अत्रायं विशेषः—(1) स्थूलसूक्ष्मदेहद्वयावच्छिन्नकूटस्थचैतन्यरूप**पारमार्थिकजीवो**ऽस्ति। (2) मायावृतकूटस्थे कल्पितान्तःकरणे प्रतिफलितचिदाभासरूपः देहद्वयाभिमानवान् **व्यावहारिकजीवो**ऽस्ति। (3) निद्रारूपमायया ऽऽवृते व्यावहारिकजीवरूपाधिष्ठाने कल्पितः **प्रातिभासिकजीवो**ऽस्ति। एवं त्रिविधजीववादिभिर्वि-

**(आ. ३२५-३३१) त्रिविधसत्तापक्षे विलक्षणयोर्जाग्रत्स्वप्नयोः सत्ताभेदः; वस्तुतस्तयोरवैलक्षण्यात्सत्तैक्यमेव—**

**(आ. ३२५-३२६) तत्र शङ्का—**

**(३२५) ब्रह्मचैतन्यस्य स्वप्नाधिष्ठानत्वे ब्रह्मज्ञानमन्तरा स्वप्नो न निवर्ततेति शङ्का—**

द्वितीयपक्षे ब्रह्मचैतन्यं स्वप्नस्याधिष्ठानमिति अविद्योपादानमिति चोक्तम्। अधिष्ठानज्ञानमन्तरा कल्पितं न निवर्तेत। स्वप्नाधिष्ठानं च ब्रह्म। तस्माद्ब्रह्मज्ञानमन्तराऽज्ञानिनो जाग्रदवस्थायां स्वप्नो न निवर्तेत।

**(३२६) जाग्रत्स्वप्नयोर्ब्रह्माधिष्ठानकत्वे उभावपि व्यावहारिकौ स्याताम्। अथवोभावपि प्रातिभासिकौ स्यातामिति शङ्का—**

यथा स्वप्नस्याधिष्ठानं ब्रह्म उपादानं चाविद्या। तथैव वेदान्तसिद्धान्ते जाग्रति व्यावहारिकपदार्थानामप्यधिष्ठानं ब्रह्म। उपादानं चाविद्यैव भवति। तत्र जाग्रत्पदार्था **व्यावहारिका** इति, स्वाप्नपदार्थाः **प्रातिभासिका** इति

---

द्यारण्यस्वामिभिः 'स्वप्नाधिष्ठानं व्यावहारिकः जीवः जगच्च' इति कथ्यते। (1) स्वाप्नजीवस्य (द्रष्टुः) अधिष्ठानं **जाग्रज्जीवः** (द्रष्टा)। (2) स्वाप्नजगतः (दृश्यस्य) अधिष्ठानं **जाग्रज्जगत्** (दृश्यं) इति वर्ण्यते। (3) स्वप्नाध्यासोपादानं व्यावहारिकजीवजगतोरावारकं निद्रारूप**मवस्थाज्ञानं** (तूलाज्ञानं) भवति। तत्र व्यावहारिकद्रष्टा जडः। व्यावहारिकदृश्यं च जडमेव। तयोः सत्तास्फूर्तिप्रदत्वरूपाधिष्ठानत्वं न संभवति। तस्मात् (1) अहङ्कारावच्छिन्नचैतन्यं वा (2) अहङ्कारानवच्छिन्नचैतन्यं वा स्वप्नाधिष्ठानम्। इदं मतद्वयमपि समीचीनम्।

(1) तत्र प्रथममते अहङ्कारावच्छिचैतन्यावारकतूलाज्ञानमेव स्वप्नोपादानं भवति। जाग्रज्ज्ञानेनैव विनापि ब्रह्मज्ञानं तस्य निवृत्तिरपि संभवति। (2) अविद्याप्रतिबिम्बरूपजीवचैतन्यं, विम्बरूपेश्वरचैतन्यं वा विवरणकाररीत्या व्यापकत्वादहङ्कारानवच्छिन्नचैतन्यमित्युच्यते। तस्य स्वप्नाधिष्ठानत्वे तदावारकमूलाज्ञानं स्वप्नस्योपादानमित्यङ्गीकर्तव्यम्। जाग्रद्बोधेन तादृशस्वप्नस्य बाधरूपनिवृत्तिर्न संभवति। किन्तूपादाने विलयरूपनिवृत्तिः संभवति। **परन्तु** अहङ्कारानवच्छिन्नचैतन्यस्य स्वाधिष्ठानत्वाङ्गीकारेऽपि शरीरान्तःप्रदेशस्थचैतन्यमेवाधिष्ठानमिति फलति। बाह्यदेशस्थचैतन्यं नाधिष्ठानम्। अविद्याप्रतिबिम्बितजीवचैतन्यं, बिम्बरूपेश्वरचैतन्यं चेत्युभयमप्यहङ्कारानवच्छिन्नं भवति। व्यापकत्वाच्छरीरस्यान्तर्विद्यते च। अन्तर्देशस्थचैतन्ये या स्वप्नाधिष्ठानता तस्या अन्तःकरणमवच्छेदकमित्यभ्युपगमे अहङ्कारावच्छिन्नस्याधिष्ठानता सिद्ध्यति। तस्यैव चैतन्यस्य स्वप्नं प्रत्यधिष्ठानतायां अन्तःकरणस्यावच्छेदकत्वानङ्गीकारे अहङ्कारानवच्छिन्नस्याधिष्ठानता सिद्ध्यति। अहङ्कारानवच्छिन्नचैतन्यं तु अविद्याप्रतिबिम्बं चेति द्वयमपि भवति। मतभेदेन द्वयोरपि स्वप्नाधिष्ठानत्वं भवति। **तथापि** अविद्याप्रतिबिम्बरूपजीवचैतन्यस्याधिष्ठानत्वाभ्युपगम एव साधीयान्।

च कथ्यन्ते । एष भेदो न भवितुमर्हति । उभयोरप्यधिष्ठानं ब्रह्मैव भवति । उपादानं चाविद्यैव भवति । तस्माज्जाग्रत्स्वप्नयोरुभयोरपि व्यावहारिकता भवितुमर्हति । **अथवोभयोः** प्रातिभासिकता भवितुमर्हति । उभयोः सत्ता-वैषम्ये नास्त्युपपत्तिः ।

**(आ. ३२७-३२८) पूर्वोक्तशङ्कयोः समाधानम्—**

**(३२७) ब्रह्मज्ञानं विनापि स्वप्ननिवृत्तिप्रदर्शनम्—**

तत्र प्रथमशङ्कायाः समाधानमेवं भवति । निवृत्तिर्द्विविधेति पूर्वं चतुर्थ-तरङ्गे ख्यातिनिरूपणप्रसङ्गे उक्तम् । (१) कारणसहितकार्यविनाशरूपात्य-**न्तिकनिवृत्तिः** स्वप्नस्य जाग्रदवस्थायां ब्रह्मज्ञानमन्तरा न संभवति । (२) परंतु दण्डप्रहारेण **यथा** घटस्य मृत्तिकायां लयो भवति । **तथा** स्वप्न-हेतुभूतनिद्रारूपदोषनाशाद्वा स्वप्नविरोधिजाग्रदवस्थोत्पत्त्या वा अविद्यायां **लयरूपा निवृत्तिः** स्वप्नस्य ब्रह्मज्ञानं विनापि संभवेत् ।

**(३२८) दोषान्तरासहकृताविद्यामात्रजन्यं व्यावहारिकम् । दोषान्तरसहकृताविद्याजन्यं प्रातिभासिकमिति द्वितीयशङ्कासमाधानम्—**

यदुक्तं जाग्रत्स्वप्नौ समानाविति तन्न । **जाग्रति** देहादिपदार्थानामुत्पत्तौ दोषान्तरासहकृतकेवलाविद्योपादानकारणम् । स्वाप्नपदार्थानामुत्पत्तौ सादि-निद्रादिदोषसहिताविद्या कारणमिति विशेषोऽस्ति । तस्मादन्यदोषरहितकेवला-विद्याजन्यं **व्यावहारिकम्** । सादिदोषसहकृताविद्याजन्यं **प्रातिभासिकम्** । स्वाप्नपदार्थाः निद्रादोषसहकृताविद्याजन्यत्वात्**प्रातिभासिका** भवन्ति । जाग्र-त्पदार्था दोषान्तररहितकेवलाविद्याजन्यत्वाद्व्**यावहारिका** भवन्ति । इत्थं स्वाप्नपदार्थानां जाग्रत्पदार्थेभ्यो वैलक्षण्यं दृश्यते । इदं तु सर्वं सत्तात्रैविध्य-

---

**अथवा** अविद्याप्रतिबिम्बस्य कल्पितत्वादधिष्ठानत्वं नोचितम् । तस्मात् अन्तःकरणो-पहितमविद्योपहितं वा साक्षिचैतन्यं स्वप्नस्याधिष्ठानमित्यभ्युपगमो युक्तः । एतत्सर्वमपि **त्रिविधसत्तावादिमतेनोपपादितम्** । **दृष्टिसृष्टिवादरीत्या** तु सर्वानात्म-पदार्थानामेकैव (प्रातिभासिकी) सत्ता भवति । तस्माज्जाग्रत्स्वप्नयोरुभयोरपि ब्रह्मचैतन्य-मेवाधिष्ठानमित्यङ्गीक्रियते ।

**सा च दृष्टिसृष्टिर्द्विविधा—**दृष्टिसमसमया सृष्टिः । दृष्टिरेव विश्वसृष्टिरिति च । आद्ये जगत्प्रतीयते । परं तु तस्य प्रातिभासिक्येव सत्ता । द्वितीये जगत् तत्कारणम-ज्ञानं वा न किञ्चिदप्यस्ति । आत्मातिरिक्तं सर्वं शशशृङ्गादिवत्तुच्छम् । ब्रह्मैव सत्यमस्ति । तस्य च पारमार्थिकी सत्ता इत्येकसत्तावादोऽस्मिन् कल्पे ।

मङ्गीकृत्य स्थूलदृष्ट्योक्तम् । विचार्यमाणे तु सत्तात्रैविध्यं न सङ्गच्छते। जाग्रत्स्वप्नयोरपि परस्परं वैलक्षण्यमपि न सिद्ध्यति।

(३२९-३३०) **प्रमाणग्रन्थेषु सत्तात्रैविध्यमुक्तमित्याक्षेपः**—

वेदान्तपरिभाषादिग्रन्थेषु पूर्वोक्तरीत्या व्यावहारिकप्रातिभासिकपदार्थयोर्भेदो निरूपितः। तस्मात्तैः सत्तात्रैविध्यमङ्गीकृतम्। तथैव विद्यारण्यस्वामिभिरपि सत्तात्रैविध्यमभ्युपेतम्। एवं हि तैरुक्तम्-देहादिपदार्था द्विप्रकाराः। बाह्या आभ्यन्तराश्चेति। तत्रेश्वरसृष्टा **बाह्याः**। जीवसङ्कल्पकृता मनोमया **आन्तराः**। तत्र जीवसङ्कल्परचिताः मनोमया आन्तराः साक्षिभास्याः। ईश्वरसृष्टा बाह्याः प्रमातृप्रमाणगोचराः। आन्तरमनोमयदेहादय एव जीवस्य सुखदुःखहेतुभूताः। बाह्यास्त्वीश्वरसृष्टा न सुखदुःखादिहेतवः। तस्मादान्तरमनोमयपदार्थनिवृत्तावेव मुमुक्षुणा यतितव्यम्। बाह्यप्रपञ्चो न सुखदुःखहेतुः। अतस्तन्निवृत्तौ न यतितव्यम्। **तथाहि** कयोश्चित् द्वयोः पुरुषयोः पुत्रौ धनार्जनार्थं कदाचिद्देशान्तरं जग्मतुः। तयोर्मध्ये एकस्य पुरुषस्य पुत्रो दिष्टं गतः। अन्यस्य पुत्रो जीवन्नास्ते। प्रभूतं धनं च स संपादितवान्। स च स्वस्य प्रभूतधनलाभं स्वपित्रे निवेदयितुं द्वितीयस्य मरणं तत्पित्रे निवेदयितुं च कञ्चन वार्ताहरं प्रेषयामास। स तु विप्रलम्भको वार्ताहरः **जीवत्पुत्रकाय** पित्रे तव पुत्रो ममारेति, **मृतपुत्रकाय** पित्रे च तव पुत्रो नीरोगो विपुलं धनमर्जितवान्। गजमारुह्य सपरिवारोऽचिरादेवागमिष्यतीति चोवाच। प्रतारकस्य वार्ताहरस्य कपटवाक्यं श्रुत्वा **जीवत्पुत्रकः पिता** पुत्रशोकाद्भृशं रुरोद। **मृतपुत्रकः पिता** त्वतीव हर्षमवाप। इत्थमीश्वरसृष्टे पुत्रे देशान्तरे जीवत्यपि मनोमयपुत्रस्य मृतत्वादेको **दुःखमवाप**। तत्रेश्वरसृष्टः पुत्रो जीवन्नपि स्वपित्रे न **सुखं जनयति**। तथैवेतरस्येश्वरसृष्टः पुत्रो मृतोऽपि स्वपित्रे न **दुःखमुत्पादयति**। मनोमयपुत्रस्य जीवनात्सुखमेव तस्याभवत्। तस्मात्सर्वत्र **जीवसृष्टिरेव** सुखदुःखहेतुर्**नेश्वरसृष्टिः** सुखदुःखहेतुः। इत्थं पञ्चदशप्रकरणे द्वैतविवेकप्रकरणे विद्यारण्यस्वामिभिः प्रपञ्चितम्। तत्र जीवसृष्टिः **प्रातिभासिकी**। ईश्वरसृष्टिश्च **व्यावहारिकी**। ग्रन्थान्तरेष्वप्येवमेव सत्तात्रैविध्यपक्ष एवाश्रितः। तत्र **परमार्थसत्ता** चैतन्यस्य। चैतन्यभिन्नस्य जडस्य **व्यावहारिकसत्ता प्रातिभासिकसत्ता** चेति द्विधा सत्ता। सृष्ट्यादिकाले ईश्वरसङ्कल्पमात्रजन्यकेवलाविद्याकार्यपञ्चमहाभूततत्कार्याणां **व्यावहारिकसत्ता**। दोषसहकृता-

विद्याकार्यस्वाप्नपदार्थानां शुक्तिरजतादीनां च **प्रातिभासिकसत्ता**। इत्थं जाग्रत्पदार्थानां **व्यावहारिकसत्ता**। स्वाप्नपदार्थानां **प्रातिभासिकसत्ता** च वर्ण्यते केषुचिद्ग्रन्थेषु।

**(३३०) अनात्मपदार्थानां सर्वेषां प्रातिभासिकसत्त्वैव आत्मपदार्थस्यैव पारमार्थिकी सत्तेति सत्ता द्विविधैव। अतः—**

सत्तात्रैविध्यपक्षो मन्दाधिकारिक इति अधुनोत्तमाधिकारिकसत्त्वैकत्वप्रतिपादनाय जाग्रत्स्वप्नयोर्वैलक्षण्याभावः कथ्यते। देशकालादिकारणकलापमन्तरेणैव स्वप्ने गजादयोऽर्था उत्पद्यन्ते। तस्मात्ते मिथ्येत्युच्यन्ते। तथैवाकाशादिप्रपञ्चसृष्टिरपि ब्रह्मणः सकाशात् देशकालादिकारणकलापं विनैव भवति। अद्वितीयत्वेन ब्रह्मणस्तत्र स्वल्पोऽपि देशकालादिर्नास्ति। स्वप्ने तु गजाद्युत्पत्तियोग्यपुष्कलदेशकालाद्यभावेऽपि स्वल्पदेशकालादिर्विद्यते। सोऽप्याकाशादिसृष्टौ नास्ति। यतो देशकालादिशून्यपरमात्मनः सकाशादाकाशादिसृष्टिः श्रूयते। अत एव तैत्तिरीयोपनिषदि क्रमेणाकाशादिसृष्टिकथनेऽपि न देशकालादिसृष्टिरुक्ता। सूत्रकारभष्यकारादिभिरपि देशकालादिसृष्टिविचरो न कृतः। तैत्तिरीयोपनिषदः सूत्रकारभाष्यकारयोश्चायमभिप्रायः। यतः आकाशादिप्रपञ्चोत्पत्तिर्देशकालादिसामग्रीं विनोत्पद्यते। तत आकाशादयोऽपि स्वप्नवन्मिथ्यैवेति। सृष्टिः=उत्पत्तिः=अध्यारोपः।

---

१. इत आरभ्य ३४२ आवर्तावधि दृष्टिसृष्टिवादस्य प्रतिपादनं क्रियते।

२. **अत्रेदं रहस्यम्**—कुत्रचिच्छून्यवने द्वौ बलिनौ पुरुषौ स्वस्वबलपरीक्षणविषये विवादमकुरुताम्। 'योऽन्यं मारयति स बलीयान् ज्ञेय' इति। एवं प्रतिज्ञापूर्वकमुभावपि प्रत्येकं स्वस्वहस्ते निशितकोटिद्वयोपेतमायुधं मध्ये गृहीत्वा तस्यायुधस्यैकां कोटिं स्वोरसि कोट्यन्तरं चान्यस्योरसि प्रवेश्याभिमुखं भूत्वा युध्यन्तौ द्वावपि मम्रतुः। **एवमेव** सर्वप्रपञ्चशून्ये ब्रह्मरूपे वने जाग्रत्प्रपञ्चः स्वप्नप्रपञ्चश्चेति द्वौ बलिनौ पुरुषौ प्रतिभासेते। तयोश्च परस्परस्य विषये परस्परस्य दृष्टान्तेन परस्परस्य पराहतिरेवमेव ज्ञेया।

**तथाहि**—उचितदेशकालसामग्रीमन्तरेण यज्जायते तन्मिथ्येति प्रसिद्धं लोके। **यथा** देशरूपसामग्र्याः पूर्णत्वेऽपि कालरूपसामग्र्या न्यूनत्वात् ऐन्द्रजालिकनिर्मितहस्तिहर्म्यादिकं मिथ्या **तथैव** कण्ठस्थहितारव्यनाडीरूपाल्पप्रदेशे स्वल्पकाले च जायमानः स्वप्नप्रपञ्चो मिथ्या। तद्दृष्टान्तबलात् जाग्रत्प्रपञ्चोऽपि, मिथ्यैव। इत्थं स्वप्नप्रपञ्चदृष्टान्तेन जाग्रत्प्रपञ्चः पराहतो भवति।

**एवमेव** देशकालादिसामग्रीलेशशून्ये ब्रह्मणि जाग्रत्प्रपञ्चः प्रतीयते। तस्मात्स **असन्** भवति। प्रतीयमानौ देशकालौ तु जाग्रत्प्रपञ्चान्तर्गतौ तदनन्तर्गतदेशकालौ प्रपञ्चकारण-

**(३३१) देशकालयोरुत्पत्तिविषये आक्षेपसमाधाने**—ननु मधुसूदनसरस्वतीस्वामिभिर्देशकालौ साक्षाद् विद्याकार्यत्वेनोक्तौ। आदौ मायाविशिष्टपरमात्मनः सकाशात् मायापरिणामभूतदेशकालौ जायेते। ततः आकाशादय उत्पद्यन्ते। योग्यदेशकालरूपसामग्रीसत्वात्तत्सकाशादाकाशादिप्रपञ्चोत्पत्तिः संभवतीति चेत्।

**तन्न**। मधुसूदनसरस्वतीस्वामिनां देशकालौ प्रथममुत्पद्येते पश्चादाकाशादिकमिति नाभिप्रायः। अतीतकालस्थितं वस्तु प्रथममिति पूर्वमिति चोच्यते। भविष्यत्कालस्थितिकं वस्तु उत्तरमिति पश्चादिति चोच्यते। आकाशाद्युत्पत्तेः प्रथमं देशकालावुत्पन्नावित्यभ्युपगमे आकाशाद्युत्पत्तिकालात् यः पूर्वःकालस्तादृशकालोपहितः परमात्मा देशकालाद्यधिष्ठानमिति सिद्ध्यति। ततश्च देशकालाद्युत्पत्तिं प्रति पूर्वकालस्यापेक्षा भवति। कालस्योत्पत्तिमन्तरा च पूर्वकालो न प्रसिद्ध्यति। तस्मादाकाशादेः पूर्वकाले देशकालौ स्तः इत्यङ्गीकारो न सङ्गच्छते।

---

मिति चेदत्रायं प्रष्टव्यः—तौ देशकालौ किं ब्रह्मणोऽभिन्नावुत भिन्नाविति। आद्यपक्षे ब्रह्मभिन्नदेशकालयोरभावात् देशकालरूपसामग्रीशून्ये ब्रह्मणि प्रपञ्चस्य प्रतीतिः सिद्ध्यति। द्वितीयपक्षे ब्रह्मभिन्नदेशकालौ किं सत्यावुत मिथ्या।

यदि देशकालौ सत्यौ तदा अद्वैतश्रुतिविरोधः। यदि मिथ्या। तदा प्रपञ्चवत्तयोरपि कार्यत्वात् तयोः कारणतयाऽन्यौ देशकालौ वाच्यौ। स्वस्यैव स्वकारणत्वे **आत्माश्रयः**। प्रथमयोर्देशकालयोर्द्वितीयौ देशकालौ कारणं, द्वितीययोः प्रथमौ कारणमित्यभ्युपगमे**ऽन्योन्याश्रयः**। द्वितीययोस्तृतीयौ देशकालौ कारणं, तृतीययोः प्रथमौ देशकालौ कारणमित्यभ्युपगमे **चक्रकापत्तिः**। तृतीययोश्चतुर्थौ देशकालौ कारणं चतुर्थयोः पञ्चमौ कारणमित्यभ्युपगमे अनन्तदेशकालादिधारा**रूपाऽनवस्था**। तस्मान्न ब्रह्मणि देशकालौ सिद्ध्यतः। इत्थं देशकालादिसामग्रीशून्यब्रह्मणः सकाशाज्जाग्रत्प्रपञ्चोत्पत्त्या तस्यासत्त्वं **तुच्छत्वं** अध्यवसीयते।

**अपि च** जाग्रद्दशायां कदाचित्स्वप्नपदार्थस्मृतिर्भवति। स्वप्ने तु प्रायशो जाग्रत्पदार्थस्मरणं न संभवति। अतश्च जाग्रत्प्रपञ्चो**ऽसन्**। तद्दृष्टान्तबलात्स्वप्नप्रपञ्चो**ऽप्यसन्**। यदा जाग्रदवस्थाया अभावः सिद्धो भवति तदा तदन्तर्गतसमाध्यवस्थाया अप्यभावोऽर्थाच्चैतन्ये सिद्ध्यति। जाग्रत्स्वप्नयोरभावसिद्ध्या तदवस्थाद्वयान्तर्गतबुद्धेरभावात् तद्विलयात्मकसुषुप्त्यवस्थायाः, सुषुप्त्यन्तर्गतमरणमूर्च्छावस्थयोश्चाभावोऽपि सिद्ध्यति।

इत्थं ब्रह्मणि सर्वप्रपञ्चस्यासिद्ध्या **अजातवादः** सिद्ध्यति। "न तस्य कार्यं करणं च विद्यते," (श्वे. 6-8.) अपूर्वमनपरम्।

किन्तु मधुसूदनस्वामिनामयमाशय :—**यथा** भूतभौतिकप्रपंचः प्रतीयते **तथा** देशकालावपि प्रतीयेते । आत्मभिन्नं किञ्चिदपि न नित्यम् । तस्माद्देशकालावपि न नित्यौ । असन् पदार्थो न प्रतीयते । तस्मादाकाशादिवद्देशकालावप्युत्पद्येते । तौ च देशकालौ मायापरिणामौ चैतन्यविवर्तौ च । यो विवर्तः स न कस्यचिदपि कारणम् । तस्मादाकाशादिप्रपञ्चोत्पत्तौ देशकालयोः कारणता न सङ्गच्छतो ।

**अपि च** कारणं पूर्वभावि । कार्यं पश्चाद्भावीति स्थिते, आकाशाद्युत्पत्तेः पूर्वं देशकालोत्पत्तिर्न संभवतीति प्रतिपादितत्वात् सर्वथा देशकालावाकाशादिप्रपञ्चकारणं न भवतः इति सिद्धम् । किंतु स्वप्ने **यथा**युगपदेव पितापुत्रयोरुत्पत्तिर्युगपदुत्पद्यमानयोस्तयोः कार्यकारणत्वप्रतीतिश्च भवति । **तथा** जाग्रत्यपि मायाविशिष्टपरमात्मनः सकाशात् देशकालादिसहिताकाशादिप्रपञ्चोत्पत्तिः । तत्र च देशकालादेः कारणत्वप्रतीतिः, प्रपञ्चस्य कार्यत्वप्रतीतिश्च भवति । यस्या मायायाः सकाशात् देशकालसहितप्रपञ्चोत्पत्तिर्भवति तयैव मायया देशकालयोः कारणत्वं प्रपञ्चस्य कार्यत्वं च प्रतीयते ।

किञ्च किञ्चिद्वस्तु क्वचिद्देशविशेषे क्वचित्कालविशेषे च जायते । देशान्तरे कालान्तरे वा न जायते । तथा प्रलयकाले सकलः प्रपञ्चो नोत्पद्यते । सृष्टिकाले उत्पद्यते च । तस्मादपि देशकालयोः कारणत्वं प्रतीयते । वस्तुतस्तु न देशकालादिकमाकाशादिप्रपञ्चस्य कारणम् ।

---

कार्यकारणता ह्यत्र न किञ्चिदुपपद्यते ।
यादृगेव परं ब्रह्म तादृगेव जगत्त्रयम् ॥

तुच्छानिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
माया ज्ञेया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥

इत्यादिश्रुतिस्मृतिशतेभ्यः ।

१. देशकालयोरुत्पत्तौ पूर्वकालस्य कारणत्वे तस्य पूर्वकालस्योत्पत्तिं प्रति कस्यचित्कालस्य कारणत्वं वाच्यम् । तन्न संभवति । पूर्वकालस्यैव स्वोत्पत्तिकारणत्वे **आत्माश्रयो** दोषः । अस्य पूर्वकालस्यान्यः पूर्वकालः कारणमन्यस्य चायमेव कारणमित्याश्रयणे **अन्योन्याश्रयः** । द्वितीयस्य पूर्वकालस्य तृतीयः पूर्वकालः कारणं तृतीयपूर्वकालस्य च प्रथमः पूर्वकालः कारणमित्यभ्युपगमे **चक्रकदोषः** । तृतीयस्य पूर्वकालस्य चतुर्थः पूर्वकालः कारणं चतुर्थस्य पञ्चमः कारणमित्यङ्गीकारेऽनवस्थादोषः । इत्थं दोषसमूहसद्भावात् देशकालयोरुत्पत्तौ पूर्वकालस्य कारणत्वाङ्गीकारो न युज्यते ।

**(आ. ३३२-३३४) ब्रह्मनिष्ठकारणताया देशकालयोरङ्गीकारे अन्यथाख्यात्यापत्तिः स्यादित्याक्षेपः—**

**(३३२) देशकालयोराकाशादिकारणतास्तीति पूर्वपक्षिणः शङ्का—**

अत्रैवं शङ्का भवति—असन् पदार्थो न प्रतीयेत। सिद्धान्ते च न तथाङ्गीक्रियते वेदान्तिभिः। यद्यसन् पदार्थो भासेत तर्ह्यसत्ख्यात्यभ्युपगमप्रसङ्गः स्यात्। अपि च शशशृङ्गवन्ध्यासुतादेरपि भानं स्यात्। न तु तथा भासते। तस्मादसतः प्रतीतिर्नास्त्येव। किं च देशकालयोः कारणत्वं स्वतो यदि न स्यात् तर्हि मायाबलादपि तन्न भातुमर्हति। परं तु देशकालयोः कारणत्वं प्रतीयते। अतो देशकालौ सकलप्रपञ्चकारणमित्यङ्गीकार्यमेव।

**सिद्धान्तिना यदप्युच्यते**—ब्रह्म सकलप्रपञ्चकारणं, तन्निष्ठं कारणत्वमेव देशकालयोः प्रतीयते। न तु देशकालयोः कारणत्वं स्वतो विद्यते इति। **तदपि न सङ्गतम्।** तथाहि (१) ब्रह्म यथा देशकालयोरधिष्ठानं तथा सकलप्रपञ्चस्याप्यधिष्ठानं भवति। ततश्च देशकालयोरेव ब्रह्मनिष्ठकारणता प्रतीयते न त्वन्यत्रेत्यत्र विनिगमकं नास्ति। तस्मादधिष्ठानब्रह्मनिष्ठकारणता यदि देशकालयोः प्रतीयते तर्हि सर्वप्रपञ्चाधिष्ठानत्वाद्ब्रह्मणः निखिलप्रपञ्चेऽपि कारणता प्रतीयेतैव। ब्रह्मकार्यभूते प्रपञ्चे क्वचित् (देशकालयोः) कारणता क्वचिच्च (आकाशादौ) कार्यतेति वैषम्यं न युज्यते।

(२) **किञ्च** देशकालयोः कारणत्वं नास्ति, किन्तु ब्रह्मण्येव कारणत्वमस्ति। तच्च ब्रह्मनिष्ठं कारणत्वं देशकालयोः प्रतीयत इत्युच्यमाने अन्यथाख्यातिरङ्गीकृता भवति। यतो वस्तुनो रूपान्तरेण भानमन्यथाख्यतिरितीर्यते। अकारणभूतौ देशकालौ रूपान्तरेण कारणात्मना भातः- इत्यन्यथाख्यातिरेवाभ्युपगता भवति। सिद्धान्ते त्वन्यथाख्यातिः नाङ्गीकृता। अत्र विषयेऽन्यथाख्यातेरङ्गीकारे शुक्तावनिर्वचनीयरजतमुत्पद्यते इति सिद्धान्तो निष्फलो भवेत्। तथा हि—अन्यथाख्यातिर्द्विविधा। (१) देशान्तरस्थपदार्थस्य देशान्तरे भानमित्येकाऽन्यथाख्यातिः। यथा कान्ताकरगतरजतं पुरोवर्तिशुक्तौ भासते। (२) अथवा वस्तुनो रूपान्तरेण भानमप्यन्यथाख्यातिः। यथा शुक्तिकायाः रजतरूपेण भानम्। इत्थं सर्वभ्रमस्थलेऽपि अन्यथाख्यात्यैव निर्वाहसंभवेऽनिर्वचनीयरजतोत्पत्तिकथनमसङ्गतं स्यात्।

किञ्च विषयसमानाकारमेव ज्ञानं भवति। अन्यवस्तुनोऽन्यरूपेण ज्ञानं न संभवेत्। अतश्च रजताकाराज्ञानविषयीभूतमनिर्वचनीयं रजतमुत्पद्यते एव इत्यद्वैतसिद्धान्ते अकारणीभूतदेशकालयोः ब्रह्मनिष्ठकारणत्वस्य प्रतीतिर्न संभवेत्। यतो देशकालयोः प्रतीयमानं यत्कारणत्वं तत् तत्राविद्यमानं सन्न भायात्। न वा ब्रह्माश्रितं सदत्र भायात्, ततश्च देशकालयोरेव कारणत्वमस्ति। विद्यमानमेव कारणत्वं देशकालयोर्भातीति वक्तव्यम्। ततश्चाकाशादिप्रपञ्चस्य देशकालौ न कारणमिति सिद्धान्त्युक्तिरसङ्गतैव।

**(३३३) अधिष्ठानब्रह्मनिष्ठकारणता देशकालयोरन्यथाख्यात्या प्रतीयत इति सिद्धान्तिनः समाधानम्--**

**शङ्केयं न सङ्गच्छते।** तथाहि, ब्रह्मनिष्ठकारणतैव देशकालादौ प्रतीयते। **यथा** जपाकुसुमसंबद्धस्फटिके उपाधिकुसुमनिष्ठरक्तिमा प्रतीयते, **यथा च** स्वप्ने अधिष्ठाननिष्ठसत्यता स्वप्नोपलभ्यमानमिथ्यापर्वतहस्त्यादिषूपलभ्यते, तद्वत्। अत्र स्फटिके अनिर्वचनीयलौहित्योत्पत्तिर्नाङ्गीक्रियते। किन्तु सन्निहितजपाकुसुमस्थलौहित्यमेव स्फटिके प्रतीयते। ततश्च शुक्लस्फटिकस्य रक्तवर्णवत्वेन भासमानत्वात् स्फटिके रक्तवर्णज्ञानमन्यथाख्यातिरेव। तथैव स्वाप्नमिथ्यापदार्थेषु सत्यताप्रतीतिरप्यन्यथाख्यातिरेव। तत्रानिर्वचनीयसत्यतोत्पत्त्यङ्गीकारस्तु 'सत्यमिदं वस्तु मिथ्या' इति व्याहतवचनवदसंगतः। न चासत्प्रतीयेत। अतश्च स्वप्नाधिष्ठानाचैतन्यगतसत्यतैव मिथ्यापदार्थे प्रतीयते इति मिथ्यापदार्थनिष्ठसत्यताविषयकज्ञानमप्यन्यथाख्यातिरित्येवाङ्गीक्रियते। एवमेवाधिष्ठानब्रह्मनिष्ठकारणता देशकालयोरन्यथाख्यातिरीत्यैव प्रतिभाति।

**(३३४) अन्तःकरणस्य यत्र द्वाभ्यां पदार्थाभ्यां संबन्धस्तत्रान्यथाख्यातिः। यत्रैकेन पदार्थेन संबन्धस्तत्रानिर्वचनीयख्यातिः--**

**न चैवं** सर्वभ्रमेष्वप्यन्यथाख्यात्यभ्युपगमप्रसङ्ग इति वाच्यम्। शुक्तिकादिषु रजतादिभानस्थले अन्यथाख्यात्यभ्युपगमे विषयविलक्षणं ज्ञानं नोदेति इति न्यायविरोधस्य प्रसङ्गात्। यत्र स्फटिके लौहित्यज्ञानं जायते तत्र लोहितकुसुमस्य स्फटिकेन सह संबन्धोऽस्ति। तस्मात् स्फटिकसंबद्धकुसुमगतलौहित्यं स्फटिके प्रतीयते। अन्तःकरणवृत्तेर्लोहितकुसुमाकारतादशायां तस्याः वृत्तेर्विषयः लोहितकुसुमसंबद्धस्फटिकोऽपि। तस्मात् कुसुमगतलौहित्यं स्फटिके

प्रतीयते। एवं शुक्तिः रजतरूपेण न ज्ञायेत यतोऽन्यमतरीत्या शुक्तिदेशे अनिर्वचनीयं वा व्यावहारिकं वा रजतं नास्ति। किन्तु शुक्तिरेवास्ति। अन्तःकरणस्य शुक्तिसंबन्धे सति शुक्तिसमानाकारैव वृत्तिर्जायेत न रजताकाराऽन्तःकरणवृत्तिर्भवेत्। तस्मादस्मन्मते शुक्तिरजतादिभ्रमस्थले अविद्यापरिणामरूपं चैतन्यविवर्तरूपं चानिर्वचनीयं रजतं तज्ज्ञानं चेत्युभयमप्युत्पद्यते इत्यङ्गीक्रियते। स्फटिकलौहित्यभ्रमस्थले तु स्फटिकेन लोहितकुसुमेन चान्तःकरणवृत्तेः संबन्धोऽस्ति। लोहितपुष्पसंबन्धाल्लौहित्याकारा वृत्तिर्जायते। तस्या वृत्तेः स्फटिकेनापि संबन्धोऽस्ति। स्फटिके च लौहित्यप्रतिफलनमस्ति। तस्मात् पुष्पधर्मभूतलौहित्यं स्फटिके तस्या वृत्तेर्विषयीभवति। तथा च यत्र द्वयोः पदार्थयोः संसर्गोऽस्ति तत्रान्यधर्मस्यान्यत्र प्रतिभान**मन्यथाख्याति**रेव भवति। यत्र द्वयोः पदार्थयोः संबधो नास्ति **न तत्रान्यथाख्यातिः। किन्त्वनिर्वचनीयख्यातिरेव। यथा** लोहितपुष्पसंबद्धे स्फटिके पुष्पगतलौहित्यं प्रतिभाति। **तथा** स्वप्ने अधिष्ठानचैतन्येन संबद्धेषु हस्त्यादिषु अधिष्ठानचैतन्यधर्मसत्यता प्रतिभाति। स्फटिके लौहित्यभानमिव स्वाप्नपदार्थे सत्यताभानमप्यन्यथाख्यातिरेव। **एवमे**वाधिष्ठानचैतन्यगतं कारणत्वमधिष्ठानचैतन्यसंबद्धदेशकालयोः प्रतीयतेऽन्यथाख्यातिविधयैव।

**(३३५) जाग्रत्प्रपञ्चः सामग्रीं विनोत्पद्यते। तस्मात् स्वप्नप्रपञ्चवज्जाग्रत्प्रपञ्चोऽपि मिथ्यैव :—**

अन्यनिष्ठधर्मस्यान्यत्र प्रतीतावन्यथाख्यात्यभ्युपगमेनाधिष्ठानचैतन्यगता सत्यता **यथा** चैतन्येन संबद्धे सकलप्रपञ्चेऽप्यभ्युपगम्यते। **तथै**वाधिष्ठानचैतन्यस्थकारणताप्यधिष्ठानसंबद्धसकलप्रपञ्चेऽङ्गीकार्या भवेदिति यदाशङ्कितं **तन्न सङ्गच्छते**। तथाहि (१) स्वप्ने पितृशरीरं पुत्रशरीरं चेति द्वे शरीरे उत्पद्यते। स्वप्नोपलभ्यमानपितृपुत्रशरीरयोरुभयोरप्यधिष्ठानचैतन्यसंबन्धस्य समत्वेऽपि पितृशरीरे अधिष्ठानचैतन्यधर्मभूता कारणता प्रतीयते। पुत्रशरीरे तु तादृशपितृजन्यत्वरूपकार्यतैव प्रतीयते, न तु कारणता। एवमधिष्ठानचैतन्यसंबन्धस्य सर्वप्रपञ्चसाधारणत्वेऽपि देशकालयोरेव चैतन्यनिष्ठकारणता प्रतीयते। अन्यत्र तु कार्यतैव निसर्गतः प्रतीयते। (२) **अथवा** असङ्गोदासीनस्वभावत्वादधिष्ठानचैतन्यं **न** कस्यापि परमार्थतः कारणं भवति। मायाप्रतिबिम्बितचिदाभासस्य कारणत्वेऽपि आभासस्य स्वरूपं मिथ्या। यच्च स्वयं मिथ्या

न तदन्यस्य कारणं भवेत् । तस्माद्यदि परमात्मनि प्रपञ्चं प्रति कारणता संभवेत् तत् भ्रमवशाद्देशकालयोः प्रतीयेत । परमात्मनि तु कारणता नास्ति । तस्मात्कारणत्वादिधर्मशून्यस्यासङ्गस्य चैतन्यस्य कारणत्वं देशकालयोः प्रतीयते इत्युक्तिर्न सङ्गच्छते । "अपूर्वमनपरम् । (बृ. 2-4-19.) अन्यदेव तद्विदिता-दथोऽविदितादधि" (के. 1-3.) "न तस्य कार्यं करणं च विद्यते" (श्वे. 6-8.) "कार्यकारणता ह्यत्र न किञ्चिदुपपद्यते। यादृगेव परं ब्रह्म तादृगेव जगत्त्रयम् । इत्यादिश्रुतिस्मृतिशतेभ्यः । किन्तु मायाकृतानिर्वचनीय-देशकालावनिर्वचनीयकारणत्ववन्तौ भवतः । परमार्थतस्तु देशकालयोर्नास्ति कारणता । स्वप्ने कश्चनापुत्रो वन्ध्यः पुरुषः स्वकीयं पुत्रं, पौत्रं च पश्यति । तत्र पुत्रपौत्रयोः शरीरमनिर्वचनीयतयोत्पद्यते । पुत्रशरीरे पौत्रशरीरं प्रत्यनिर्वच-नीयकारणता चोत्पद्यते । न तु स्वप्ने परमार्थतः पुत्रपौत्रयोः शरीरं वा, पुत्रपौत्रशरीरयोः परस्परं कारणकार्यता वाऽस्ति । तथैव देशकालावनिर्वचनी-यावेव प्रतिभातः । परमार्थतस्तु देशकालयोराकाशादिप्रपञ्चस्य च कारण-कार्यता नास्त्येव । इत्थमुचितदेशकालरूपसामग्रीमन्तरेणैव जाग्रत्प्रपञ्चः उत्पद्यते । अतो जाग्रदपि स्वप्नवान्मिथ्यैव । यथा स्वप्नोपलभ्यमानस्त्रीपुत्रादीनां स्वप्ने एव सुखदुःखहेतुता भवति । न तु जाग्रदादौ; तदा तेषामभावात् । तथैव जाग्रत्प-दार्थानामपि तात्कालिकसुखदुःखादिहेतुत्वमेव, न तु स्वप्नादौ सुखदुःखादि-हेतुत्वम्, तदा तेषां पदार्थानामेवाभावात् । तस्माज्जाग्रत्स्वप्नौ समावेव । "त्रयः स्वप्नास्त्रय आवसथाः । अयमावसथोऽयमावसथोऽयमावसथः" ।

"स्वस्वप्नमापरोक्ष्येण दृष्ट्वा पश्यन् स्वजागरम् ।
चिन्तयेदप्रमत्तः सन्नुभावनुदिनं मुहुः ॥
चिरं तयोः सर्वसाम्यमनुसन्धाय जागरे ।
सत्यत्वबुद्धिं सन्त्यज्य नानुरज्यति पूर्ववत् ॥ इत्यादिश्रुतिस्मृति-

शतेभ्यः ॥

**(आ. ३३६, ३३७) जाग्रति पदार्थाः ज्ञानसमकालमेवोत्पद्यन्ते । अज्ञातसत्ताभावाद्द्वितीयजागरणपर्यंतं नानुवर्तन्ते । जाग्रत्स्वप्नपदार्था अस्थिराः ।**

**(३३६) मुख्यसिद्धान्ताज्ञानामेव जाग्रत्पदार्थानां स्थिरत्वबुद्धिः—**

**ननु** जागरात् स्वप्नमनुभूय पुनर्जागरणे सति प्रथमजागरे येऽर्था अनु-भूतास्त एव स्वप्नव्यवहितद्वितीयजागरेऽप्यनुभूयन्ते । न तु तथा प्रथमस्वप्न-

दृष्टपदार्था द्वितीयस्वप्ने दृश्यन्ते । तस्मात्स्वप्नपदार्थापेक्षया जाग्रत्पदार्था विलक्षणा एवेति चेत् **तन्न** । मुख्यसिद्धान्ताज्ञानमूलकत्वादस्याः शङ्कायाः । तथाहि—अद्वैतशास्त्रस्य मुख्यसिद्धान्ताज्ञानामेवं दृष्टिर्भवति—'संसारप्रवाहोऽयमनादिः । तत्र जीवस्य जाग्रत्स्वप्नसुषुप्त्यवस्था भवन्ति । **जाग्रत्काले** स्वप्नसुषुप्ती नश्यतः । **स्वप्नकाले** जाग्रत्सुषुप्ती नश्यतः । **तथैव सुषुप्तौ** जाग्रत्स्वप्ने नश्यतः । परन्तु यदा स्वप्नसुषुप्ती भवतः तदा जाग्रत्यनुभूतदारापत्यधनपशुगृहक्षेत्रारामादयोऽविनश्यन्तोऽनुवर्तन्त एव । तेषां ज्ञानमेव विनश्यति । पुनर्जागरणं यदा भवति तदा प्रथमजाग्रति स्थितपदार्थानामेव ज्ञानं भवतीति । इयं च मुख्यसिद्धान्ताज्ञानां दृष्टिः ।

**(३३७) जाग्रत्पदार्थाः सर्वेऽपि तद्विषयकज्ञानेन सहोत्पद्यन्ते । ज्ञानेन सहैव विनश्यन्ति च—**

**सिद्धान्तस्त्वेवम्**—सर्वे पदार्थाश्चैतन्य**विवर्ता** अज्ञानस्य **परिणामाश्च** । तस्मात् शुक्तिरजतवत् यदा यः पदार्थः प्रतीयते तदा अधिष्ठानचैतन्याश्रिताविद्यायाः द्विविधः परिणामो जायते । अविद्यायास्तमोगुणांशस्य **घटादिविषयरूपः** परिणामो भवति । अविद्यायाः सत्वगुणांशस्य **ज्ञानरूपपरिणामो** भवति । **यद्यपि** चैतन्यस्यैव ज्ञानमिति व्यपदेशात्सत्वगुणपरिणामस्य ज्ञानत्वोक्तिर्न सङ्गच्छते । **तथापि** सर्वं व्यापकचैतन्यं न ज्ञानं, किन्तु साभासवृत्त्यारूढचैतन्यमेव **ज्ञान**मित्युच्यते । तस्माच्चैतन्ये ज्ञानव्यवहारस्य संपादिका वृत्तिरेवेति चैतन्यस्य ज्ञानत्वापादकोपाधिभूतवृत्तावपि ज्ञानशब्दः प्रयुज्यते । 'घटज्ञानं जातं पटज्ञानं नष्ट'मिति लोके व्यवहारो दृश्यते । तत्र वृत्त्यारूढचैतन्यस्य स्वतः उत्पत्तिनाशासंभवेऽपि उपाधिभूतवृत्तेस्तत्संभवात् ज्ञाने उत्पत्तिनाशव्यवहारो भवति ।

इत्थं वृत्तौ ज्ञानशब्दप्रयोगसंभवात् तादृशवृत्तिरूपं ज्ञानं सत्त्वगुणपरिणामो भवति । तस्यां वृत्तौ **चैतन्यस्याभासो जायते** । घटादिविषयरूपपरिणामे तु **चैतन्यस्याभासो न जायते** । उभयोरपि घटादिविषयतज्ज्ञानयोरविद्यापरिणामत्वेऽपि घटादिविषया अविद्यायास्तमोगुणपरिणामत्वान्**मलिना** भवन्ति । अतस्तत्र **चिदाभासोदयो न भवति** । वृत्तिस्तु सत्वगुणपरिणामत्वात् **स्वच्छा** भवति । अतस्तत्र **चिदाभासोदयः संभवति** । इत्थं वृत्तौ चैतन्यप्रतिबिम्बग्रहणयोग्यतासत्त्वात् तदवच्छिन्नं चैतन्यं **ज्ञान**मिति, तदुपहितं

चैतन्यं साक्षीति चोच्यते। घटादिविषयाणां तु चैतन्याभासग्रहणयोग्यताया अभावात् विषयावच्छिन्नचैतन्यं **न ज्ञानं न वा साक्षी।**

इत्थं जाग्रत्पदार्थास्तज्ज्ञानानि च सहैवोत्पद्यन्ते सहैव नश्यन्ति। अतस्तेऽपि प्रातिभासिका एव स्वाप्नपदार्थवत् इति **वेदान्तरहस्यम्।** तस्मात् प्रथमजाग्रति दृष्टा एव पदार्थाः स्वप्नसुषुप्त्यनन्तरं पुनरपि द्वितीयजाग्रत्यनुभूयन्ते इत्युक्तिरसङ्गतैव ॥

**(आ. ३३८-३४०) जाग्रत्पदार्थानां मिथः कार्यकारणता-नास्तीति प्रतिपादनम् :—**

**(३३८) स्वप्नपदार्थः साक्षादविद्याकार्यं—जाग्रत्पदार्थस्तदीया-साधारणकारणजन्य इति जाग्रत्स्वप्नयोर्न साम्यमिति शङ्का :—**ननु स्वप्नात् प्रबुद्धः 'पूर्वं ये पदार्था मया दृष्टास्तानेवाद्य पश्यामि' इति प्रत्यभि-जानाति। तस्माज्जाग्रत्पदार्थाः ज्ञानसमकालोत्पत्तिनाशशालिनो न भवन्ति। किन्तु ज्ञानत्प्रागूर्ध्वं च विद्यन्ते। अतोऽज्ञातसत्ताका जाग्रत्पदार्था: इत्येव युक्तमिति चेत्, न। स्वप्ने तत्क्षणोत्पन्नेषु पदार्थेषु इमे गिरिनदीसमुद्रादयो मम जन्मनः प्रागेवोत्पन्ना वर्षसहस्रकालादारभ्य वर्तन्ते इति प्रतीतिर्भवति केषां-चित्। तत्र तत्क्षणोत्पन्ने स्वाप्नपदार्थे या चिरन्तनत्वप्रतीतिः सा भ्रान्तिरेव। तस्माद्ययाऽविद्यया स्वप्ने मिथ्याभूताः गिरिनदीसमुद्रादयः पदार्था उत्पादिता-स्तयैवाविद्यया तत्तत्पदार्थानां चिरन्तनत्वं तादृशचिरन्तनत्वविषयकज्ञानं चा-निर्वचनीयतयोत्पाद्यते। **एवमेव** जाग्रत्पदार्थेषु वस्तुतश्चिरन्तनत्वाभावेऽपि अविद्यावशादेव तत्तत्पदार्थैः सहैव मि[1]थ्याभूतं स्थिरत्वमप्यनिर्वचनीतयोत्पद्यते। अतश्च जाग्रत्पदार्थानामपि स्थिरत्वप्रतीतिर्भ्रान्तिरेव।

**आक्षेपः**—नन्वेवं सति **स्वाप्नपदार्थाः** साक्षादविद्यापरिणामाः। **जाग्रत्पदार्थास्तु** न साक्षादविद्यापरिणामाः। किन्तु **यथा** घटादयः दण्डचक्रकुलालादिभिर्जायन्ते **तथैव** सर्वेऽपि जाग्रत्पदार्थास्तत्तदसाधारणकारण-वशाज्जायन्ते। यदि जाग्रत्पदार्थाः साक्षादविद्यापरिणामाः स्युः, तदा आकाशादिक्रमेण पञ्चभूतोत्पत्तिः पञ्चीकरणं पञ्चीकृतभूतेभ्यो ब्रह्माण्डोत्पत्ति-

१. सुप्तप्रबुद्धस्य पुरुषस्य घटादिजाग्रत्पदार्थान् दृष्ट्वा पूर्वं जागरकाले येऽवस्थि-तास्त एवैते घटादयः इति जायमानः प्रत्यभिज्ञाप्रत्ययः सोऽयं नदीप्रवाहः, सेयं दीप-ज्वाला इत्यादिप्रत्यभिज्ञाप्रत्ययवद्भ्रम एव। तस्मान्मुख्यदृष्टान्तः स्वप्न एव। स चार्थो ग्रन्थकारेणैवोपरि वक्ष्यते।

रित्यादिकं श्रुत्योच्यमानमसङ्गतं भवेत्। तस्मादीश्वरसृष्टाः जाग्रत्पदार्थाः स्वस्वोपादानकारणपरिणामा एव। न तु साक्षादविद्यापरिणामाः। **स्वाप्नपदार्थास्तु सर्वेऽपि** साक्षादविद्यापरिणामाः। यस्मात् सर्वेषां स्वाप्नपदार्थानामेकैवाविद्योपादानं भवति तस्मात् स्वाप्नपदार्थानां तज्ज्ञानानां च युगपदेवैकस्या अविद्यायाः सकाशादुत्पत्तिः संभवेत्। **जाग्रत्पदार्थास्तु** स्वोत्पत्तेः प्राग्विद्यमानेभ्यो भिन्नभिन्नेभ्यस्तेभ्यस्तेभ्यः स्वस्वोपादानकारणविशेषेभ्यः उत्पद्य स्वस्वोपादनकारणेषु विलीयन्ते। घटादिजाग्रत्पदार्थोत्पत्तेः पूर्वं नाशादूर्ध्वं च मृत्पिण्डादिरूपोपादानकारणानि वर्तन्ते। एवं जाग्रत्पदार्थाः केचन स्वल्पकालावस्थायिनः केचन स्थिरकालावस्थायिनः यथोचितं परस्परं कार्यकारणभावमापन्नाश्च वर्तन्ते। न तथा स्वाप्नपदार्थाः इति जाग्रत्स्वप्नयोः साम्यं न युज्यते इति चेत्।

## (३३९) जाग्रत्स्वप्नयोः साम्यसमर्थनम्—

**नैष दोषः**। जाग्रत्पदार्थेष्विव स्वाप्नपदार्थेष्वपि कार्यकारणताप्रतीतिरस्ति। "मदीया गौर्वत्समजनयत्। मम जाया पुत्रमसूत" इति। स्वप्नो नैसर्गिकः। तत्र युगपदेवोत्पद्यमानेषु स्वाप्नपदार्थेषु गोजायादीनां बहुकालस्थायिता कारणता च प्रतीयते। वत्सपुत्रादीनां तु पश्चाद्भाविता कार्यता च प्रतिभासेते। दृष्टिसमये समकाले एवोत्पन्नानां तेषां मध्ये नैवास्ति वस्तुतः पूर्वपश्चात्कालता परस्परं कार्यकारणता वा। गोर्वत्सस्य च तथैव जायायाः पुत्रस्य चाविद्यैव साक्षादुपादानम्। **एवमेव** जाग्रद्दशायामपि केचन पदार्थाः अधिककालस्थायिनो ज्यायांसः कारणरूपा इति, केचन पदार्थाः अल्पकालस्थायिनो यवीयांसः कार्यरूपा इति च स्वप्ने इव प्रतिभान्ति। परमार्थतस्तु न कोऽपि पदार्थः कस्यचिदपि पदार्थस्य कारणभावं वा कार्यभावं वा भजते। किन्त्वविद्ययैव ते ते पदार्थास्तथा तथा प्रतिभान्ति। तस्मात्स्वप्न इव जाग्रदपि साक्षादविद्याकार्यमेव।

## (३४०) सृष्टिश्रुतीनां लयचिन्तनद्वाराऽद्वैते तात्पर्यम्—

सृष्टिक्रमप्रतिपादकश्रुतीनां न सृष्टौ तात्पर्यं, किन्तु ब्रह्मणोऽद्वितीयत्वबोधने एव। सर्वे पदार्थाः परमात्मन एव जायन्ते इति तद्विवर्तभूता एव। यत् यद्विवर्तभूतं तत् तत्स्वरूपमेव भवति, न ततोऽतिरिच्यते। अतो नाम-

रूपात्मकः सकलः प्रपञ्चः ब्रह्माव्यतिरिक्ततया ब्रह्मैवेतीममर्थं बोधयितुमेव सृष्टिश्रुतिः प्रवृत्ता नान्यत्प्रयोजनमस्ति सृष्टिश्रुतेः ।

तत्र सृष्टौ यः क्रम उक्तस्तस्यापि स्थूलदृशां पुंसां उत्पत्तिक्रमविपरीत-क्रमेण परमकारणे ब्रह्मणि सर्वकार्यलयचिन्तनद्वाराऽद्वितीयब्रह्मावबोधनायैवेत्य-द्वैतबोधनमेव प्रयोजनम् । न त्वाकाशादीनामुत्पत्तौ क्रमबोधने वा, तेषां परस्परकार्यकारणताबोधने, वा सृष्टिश्रुतेः प्रामाण्यम् । सृष्टौ नास्ति क्रमः किन्तु सर्वे पदार्थाः एकस्या एवाविद्यायाः सकाशादुत्पन्नाः । तत्र परस्परं कार्यकारणभावो वा पूर्वपश्चात्कालीनत्वं वा अविद्याकृते स्वप्ने इव मिथ्यैव प्रतिभासते । श्रुत्योक्तमाकाशादीनां पूर्वपश्चाद्भावित्वकार्यकारणत्वादिकं तु कारणव्यतिरेकेण कार्यं नास्तीति मन्दानां लयचिन्तनार्थं कृतम् । यथा वस्तुस्वरूपमस्ति तथैव ध्यानं कर्तव्यमिति नियमो नास्ति । तस्माज्जाग्र-त्पदार्थानामपि परस्परं कार्यकारणभावो नास्त्येव ।

### (३४१) दृष्टिसृष्टिवाद एवाङ्गीकार्यः—

परमार्थतस्तु जागरितपदार्थानामपि कार्यकारणत्वादिकं किञ्चिदपि न संभवति । सर्वेपि पदार्थाः साक्षादविद्याकार्यभूताः शुक्तिरजतादिवत् स्वाप्नवच्च । साक्षादविद्याकार्यत्वेन प्रातिभासिकत्वादविद्यावृत्त्युपहितसाक्षिणैव सर्वेऽपि पदार्थाः प्रकाश्यन्ते । अविद्याया ज्ञेयाकारः ज्ञानाकारश्च परिणामः युग-पदेवोत्पद्य युगपदेव नश्यति स्वप्नवदेव । 'दर्शनं सृष्टिरदर्शनं लयः' इति न्यायात् यदा पदार्थः प्रतीयते तदैव प्रतीतिविषयः पदार्थो जायते । न तु कालान्तरे पदार्थोत्पत्तिरस्ति । अयमेव **दृष्टिसृष्टिवाद** इत्युच्यते ।

---

१. दृष्टिः=अविद्यावृत्तिरूपं ज्ञानं, तदुत्पत्तिसमये एव सृष्टिः=दृश्यप्रपञ्चोत्पत्तिः । अस्यार्थस्य प्रतिपादनं **दृष्टिसृष्टिवाद** इति **अजातवाद** इति च कथ्यते । अयं च वादो बृहदारण्यकोपनिषद्भाष्ये, वार्तिके, माण्डूक्योपनिषत्कारिकायां, तद्भाष्ये, तत्रैवानन्द-गिरिव्याख्याने, वासिष्ठे, सूतसंहितायां, वेदान्तमुक्तावल्यां, आत्मपुराणे, अद्वैतसिद्धौ, अन्येषु च वेदान्तग्रन्थेषु प्रतिपाद्यतेऽत्यादरेण । विशेषजिज्ञासवस्तान्ग्रन्थानवलोकयेयुः । "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।" इति न्यायेनैतद्ग्रन्थेनैव जिज्ञासूनां दृष्टिसृष्टिसिद्धान्तज्ञानं सम्यक् जायते । ग्रन्थान्तरावलोकनं तु तेषां बुद्धिविनोदनाय भवति । इतोऽप्यन्यो दृष्टिसृष्टिवादोऽस्ति । तत्र—

"सत्ता सर्वपदार्थानां नान्या संवेदनादृते ।<br>ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ॥<br>अर्थस्वरूपं भ्राम्यन्तः पश्यन्त्यन्ये कुदृष्टयः ॥" इति

सत्तान्तरनिन्दापूर्वकं सत्तैकत्वप्रतिपादनेन जगतस्तुच्छत्वमुच्यते । अयमेव सर्वोत्तमः पक्षो दुर्लभाधिकारिकः ॥

अस्मिन् पक्षे पदार्थानामज्ञातसत्ता नास्ति। किन्तु ज्ञातसत्तैवास्ति। अद्वैतवादेऽयमेव सिद्धान्तपक्षः। अस्मिन् पक्षे सत्ताद्वैविध्यमेव न सत्तात्रैविध्यम्। सर्वेषामेव दृश्यानामनात्मपदार्थानां स्वाप्नपदार्थानामिव प्रातिभासिकसत्तैव। प्रतिभासकालादन्यकालेऽनात्मपदार्थानां सत्ता नास्ति। तस्मान्नास्त्येव तृतीया व्यावहारिकी सत्ता।

किञ्चास्मिन् पक्षे निखिलानात्मपदार्थाः साक्षिभास्याः। प्रमातृप्रमाणयोर्विषयभूतं न किञ्चिदप्यस्ति वस्तु। यतोऽन्तःकरणमिन्द्रियाणि घटादिविषयाः, इति त्रिपुटीज्ञानं चेति सर्वमपि स्वप्न इव युगपदेव जायते। अतस्तेषां मध्ये न विषयविषयित्वं संभवति। घटादिविषयाः, नेत्रादीन्द्रियाणि, अन्तःकरणं चेत्येतानि यदि ज्ञानात्पूर्वं स्युस्तदा नेत्रादिद्वारान्तःकरणस्य वृत्तिरूपं ज्ञानं प्रमाणजन्यं भवेत्। तच्चान्तःकरणं, इन्द्रियाणि, विषयाश्चेति त्रितयं ज्ञानपूर्वकाले नास्ति। ज्ञानकाले एव स्वप्ने इव त्रिपुटी उत्पद्यते। तस्मात् त्रिपुटीजन्यं ज्ञानं किञ्चिदपि नास्ति। **तथापि** ज्ञाने स्वप्नवत् त्रिपुटीजन्यता प्रतीयते। तस्माज्जाग्रत्पदार्थाः साक्षिभास्याः; न प्रमाणजन्यज्ञानविषयाः। अतोऽपि जाग्रत्पदार्थाः स्वप्नसमाः **मिथ्या** भवन्ति।

**किञ्च** जाग्रति केचन पदार्था मिथ्यारूपेण केचन सत्यरूपेण च प्रतीयन्ते। तत्रापि अनादिकालमारभ्य केचन पदार्था विद्यन्ते। केचन विनश्यन्ति। तत्सदृशाश्चान्ये उत्पद्यन्ते। इत्थं प्रपञ्चधाराया उच्छेदो न कदापि भवतीति समुत्पन्नज्ञानस्य प्रपञ्चो न प्रतीयते। इतरेषां तु भासते इति। तादृशस्य ज्ञानस्य गुरुर्वेदान्ताश्च साधनानि। तैः साधनैः परमार्थसत्यस्य लाभः सिद्ध्यतीति चेत्येवंरूपा प्रतीतिर्जाग्रति भवति। एवं केषाञ्चित्पदार्थानां मिथ्यात्वं, केषाञ्चिन्नाशः, केषांचिदुत्पत्तिः, गुरुवेदान्तादिसाधनैः परमपुरुषार्थलाभः इति च। एतत्सर्वमविद्याकृतस्वप्नन्मिथ्यैव।

"न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥" (प. चि. 235-कृ. 71.)

"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्।"

"न बन्धोऽस्ति न मोक्षोऽस्ति कदाचित् कस्यचित् क्वचित्।
सर्वमात्ममयं शान्तमित्येवं प्रत्ययं स्फुटम्॥

सबाह्याभ्यन्तरं राम सर्वत्र दृढतां नय।"

"अविद्यमानोऽप्यवभासते द्वयो
ध्यातुर्धिया स्वप्नमनोरथौ यथा।
तत्कर्म सङ्कल्पविकल्पकं मनो
बुधो निरुन्ध्यादभयं ततः स्यात् ॥"

इत्याद्यनेकश्रुतिस्मृतीतिहासपुराणानुभवादिभ्यः। वासिष्ठरामायणे चेत्थमनेकेतिहासा उपलभ्यन्ते।

**किञ्च** क्षणकालमात्रव्यापिनि स्वप्नेऽनेन्तकल्पकालो भाति। जाग्रतीव स्थिरतया पदार्थाः प्रतिभान्ति। तैः पदार्थैश्चिरकालं भोगो भुज्यते। तथा चोक्तं पञ्चदश्यां ब्रह्मानन्देऽद्वैतानन्दप्रकरणे :—

"निद्राशक्तिर्यथा जीवे दुर्घटस्वप्नकारिणी।
ब्रह्मण्येषा स्थिता माया सृष्टिस्थित्यन्तकारिणी ॥ (86)
स्वप्ने वियद्गतिं पश्येत् स्वमूर्धच्छेदनं तथा।
मुहूर्ते वत्सरौघं च मृतपुत्रादिकं पुनः ॥ (87)
इदं युक्तमिदं नेति व्यवस्था तत्र दुर्लभा।
यथा यथेक्ष्यते यद्यत् तत्तद्युक्तं तथा तथा ॥ (88)
ईदृशो महिमा दृष्टो निद्राशक्तेर्यदा तदा।
मायाशक्तेरचिन्त्योऽयं महिमेति किमद्भुतम् ॥ (89)

तस्माज्जाग्रत्पदार्थानां स्वाप्नपदार्थापेक्षया वैलक्षण्यं किञ्चिदपि नास्ति। किं त्वात्मनो भिन्नं सर्वं मिथ्यैव। "अतोऽन्यदार्तम्" "न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तम्" (बृ. 4. 3. 23—31) इत्यादिश्रुतिभ्यश्च ॥

---

१. **कल्पकालनिर्णयः**—
१५ (15) निमेषाः (अक्षिपक्ष्मपरिस्पन्दाः) एका काष्ठा।
३० (30) काष्ठाः एका कला।
३० (30) कलाः एको मुहूर्तः (घटिकाद्वयम्)।
३० (30) मुहूर्ताः एकं दिनम् (अहोरात्रम्)।
१५ (15) दिनानि एकः पक्षः।
२ (2) पक्षौ एको मासः।
२ (2) मासौ एको ऋतुः।
३ (3) ऋतवः एकमयनम्।
२ (2) अयने एको वत्सरः।

(आ. ३४२-४३८) गुरुवेदान्तादीनां मित्यात्वे दृष्टान्तप्रदर्शनम्-

(३४२) संसारस्य स्वप्नवत्स्वल्पकालस्थायित्वे बन्धानादित्वं, तन्निवृत्तिरूप-मोक्षोद्देश्यकश्रवणादिसाधनानुष्ठानं च न घटेतेति तत्त्वदृष्टेस्तृतीयः प्रश्न :-तत्त्वदृष्टिः पृच्छति-ईश्वरसृष्टिरनन्तकल्पकालादनादितया प्रवर्तते। तत्र ज्ञानी मुच्यते, अज्ञानी संसरति। यदि जाग्रदपि स्वप्नसमः स्यात् तदा यथा स्वप्नः क्षणं, मुहूर्तं, प्रहरकालं वा भवति। तथा संसारोऽपि क्षणं, मुहूर्तं, प्रहरकालं, ततः किञ्चिदधिककालं वा भवितुमर्हति। (१) संसारस्य स्वप्नवत्स्वल्पकालस्थायित्वे बन्धोऽनादिकालात्प्रवर्तते इति न युज्येत। (२) बन्धनिवृत्तिरूपमोक्षप्राप्तये श्रवणादिसाधनानुष्ठानं च निष्फलं भवेदिति।

---

१,७२८,००० (1,728,000) वत्सराः एकं कृतयुगम्।

१,२९६,००० (1,296,000) वत्सराः एकं त्रेतायुगम्।

८६४,००० (864,000) वत्सराः एकं द्वापरयुगम्।

४३२,००० (432,000) वत्सराः एकं कलियुगम्।

४,३२०,००० (4,320,000) वत्सराः अथवा चतुर्युगसमाहारः एकं महायुगम्।

३०६,७२०,००० (306,720,000) वत्सराः अथवा ७१ (71) महायुगानि एकं मन्वन्तरम्।

४,२९४,०८०,००० (4,294,080,000) वत्सराः अथवा ९९४ (994) महायुगानि—१४ (14) चतुर्दश मन्वन्तराणि।

२५,९२०,००० (25,920,000) वत्सराः अथवा ६ (6) महायुगानि—द्वौ युगसन्धी।

४,३२०,०००,००० (4,320,000000) वत्सराः अथवा १००० (1000) महायुगानि—कल्पः अथवा ब्रह्मणः एकमहः (दिवा)।

८,६४०,०००,००० (8,640,000,000) वत्सराः अथवा २००० (2000) महायुगानि ब्रह्मणः एकं दिनम् (अहोरात्रम्)।

३,११०,४४०,०००,००० (3,110,440,000,,000) वत्सराः ब्रह्मणः एकोऽब्दः। (वत्सरः)।

३११,०४०,०००,०००,००० (311,040,000,000,000) वत्सराः ब्रह्मण आयुः अथवा महाकल्पः, द्विपरार्धावसानम्।

१. अयंच दृष्टिसृष्टिवादस्य निश्चयः।

**गुरुरुत्तरमाह—यद्यपि** पूर्वोक्तसिद्धान्ते (१) बन्धमोक्षौ गुरुवेदान्तादयश्च नाङ्गीक्रियन्ते। (२) किन्तु चैतन्यमेकं नित्यमुक्तमस्ति (३) अविद्यापरिणामाश्चैतन्ये नानाविवर्तरूपा भवन्ति। तैर्विवर्तैरात्मस्वरूपस्य न काचिदपि हानिः। (४) आत्मा सदासङ्गः एकरसश्चास्ते। (५) अद्यावधि न कोऽपि मुक्तः। अग्रे च न कोऽपि मुक्तो भविष्यति। जीवन्मुक्तिशास्त्रं तु प्ररोचकोऽर्थवादः। किं तु चैतन्यं नित्यमुक्तमस्ति। (६) अविद्यायास्तत्परिणामानां च चैतन्येन सह कदाचिदपि संबन्धो नास्ति। तस्माद्बन्धो वेदो, गुरुः, श्रवणादीनि, समाधिर्मोक्षश्चेत्येतेषां प्रतीतिः स्वप्न इवाविद्याजन्यैव। तस्मान्मिथ्यैव सर्वे पदार्थाः। (७) एतेषां बहुकालस्थायित्वमप्यविद्याजन्यमेव। **तथापि** सिद्धान्तमिममजानतः स्थूलदृष्टेरयं प्रश्नः;इति।

**(आ. ३४३-४६६) अगृध्रदेवस्य (इच्छारहितात्मदेवस्य) स्वप्नव्याख्यानव्याजेन तत्त्वदृष्टिं प्रति गुरोरुत्तरम्—**

**(आ. ३४३-३५१) गतप्रश्नस्योत्तरम्—**

**(३४३) शिष्यस्य गुरुतदुपदेशादिप्रतीतिर्मिथ्येति सदृष्टान्तं गुरोर्वचनम्—**

---

१. अत्रायमभिप्रायः—अस्मिन् दृष्टिसृष्टिवादे "ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत्। अहं ब्रह्मास्मीति।" (बृ. 1-`-10) इत्यादिश्रुत्या, "ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यते च।" इति बृहदारण्यकभाष्यात्,

"व्याधसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः॥" इत्यादिवार्तिकाच्च स्वाविद्यया जीवभावमापन्नस्य ब्रह्मण एकत्वादेक एव जीवोऽङ्गीक्रियते। अन्यजीवरूपगुरुशिष्ययोरङ्गीकारो नास्त्येव। किन्तु स्वप्नगतैकमुख्यजीवाद्भिन्ना अन्ये जीवाभासा **यथा** प्रतीयन्ते, तथैवाभासरूपाः गुरुशिष्यादयः प्रतिभान्ति। तस्मिन् गुरावीश्वरबुद्ध्या भक्त्यादिप्रदर्शनमपि स्वाप्नगुर्वादौ भक्त्यादिप्रदर्शनवन्मिथ्यैव। **किञ्चास्मिन्** पक्षे जीवेश्वरादयः षट् पदार्थाः स्वरूपतोऽनादय अङ्गीकृताः।

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥" इति॥

तत्र ब्रह्मणि **पारमार्थिकसत्ता**ऽस्ति। ब्रह्मभिन्नपञ्चके (प्रपंचे) **व्यावहारिका सत्ता** वर्तते। प्रवाहरूपेणानादावितरस्मिन् सकलकार्यप्रपञ्चे **प्रातिभासिकसत्ता**विद्यते। अतश्चास्मिन् पक्षे उत्तरोत्तराध्यासकारणीभूतपूर्वपूर्वाध्यासज्ञानजन्यसंस्काराश्रयाविद्याया **ईश्वरस्य** च सत्त्वात् न क्षणिकविज्ञानवादप्राप्तिः। **न** वा निरीश्वरवादप्राप्तिः। अयमर्थोऽद्वैतसिद्धौ मधुसूदनसरस्वतीभिः प्रतिपादितः। अयमर्थो जीवप्रसङ्गादत्र वर्णितः।

हे सोम्य! यथा निद्रादोषात्स्वप्ने अध्यापकोऽध्ययनं, वेदशास्त्र-पुराणधर्मशास्त्राणि, अध्येता, कर्म, तत्फलं चेत्यादिकं प्रतीयते। तेषु सर्वेषु पदार्थेषु सत्यत्वभ्रान्तिश्चोपजायते। तथापि स्वप्ने सर्वे पदार्था मिथ्यैव भवन्ति। तथा जाग्रत्यपि सर्वे पदार्था मिथ्यैव। तेषु सत्यत्वप्रतीतिर्भ्रम एव। अहं तव गुरुत्वेन प्रतीतः सन् बन्धनिवर्तकवेदान्तोपदेशं करोमीति यत् तदपि तव मिथ्याप्रतीतिरेव।

यथा अगृधदेवस्य स्वप्ने मिथ्याप्रतीतिविषया गुरुवेदान्तादयोऽनिर्वच-नीयतयोत्पन्नास्तथैव तव प्रतीतौ अहं मदुपदेशादिकं च सर्वं वस्तु मिथ्यैवा-निर्वचनीयतया प्रतिभाति।

(आ. ३४४-४६५) अगृधदेवस्य स्वप्नः—

(३४४) अगृधदेवस्य स्वप्नदर्शनम्—

अगृधदेवस्यैवं स्वप्नः समभवत्—अगृधनामा कश्चन देवः स्वयम-नादिकालनिद्रां कुर्वाण इव स्वप्नमपश्यत्। तस्मिन् स्वप्ने तस्य पुरुषस्यैवं प्रतीतिरभवत्—(१) अहं चण्डालोऽस्मि, (२) महादुःखी भवामि, (३) अस्थिमज्जारुधिरत्वङ्मांसमेदोवीर्यरूपसप्तधातुभिर्मे मुखं पूरितमस्ति, (४) महाघोरे भयङ्करे व्याघ्रगजादिसङ्कुले महारण्ये इतस्ततः परिभ्रमामि; इति।

तादृशदेवोऽहमितस्ततो भ्रमन् नानास्थानानि पश्यामि। (१) तत्र क्वचिद्देशे नाना भयङ्कराः प्राणिनो मां भक्षयितुं ममाभिमुखाः प्रधावन्ति, (२) क्वचित्पूयशोणितपूर्णे महागर्ते पतिताः केचन प्राणिनो हाहाकारशब्दान् कुर्वन्ति, (३) अन्यत्र क्वचित् संतप्तलोहमयस्तम्भनिबद्धाः प्राणिनो विक्रो-शन्ति, (४) क्वचिच्च संतप्तवालुकापूर्णे मार्गे पादुकाहीना नग्नपादाः पुरुषा गच्छन्ति। तांश्च राजभटा लोहमयदण्डेन ताडयन्ति। इत्थं नानाभयङ्कर-

---

१. गृधा नामेच्छा। सा च सर्वदोषाणामुपलक्षणम्। गृधारहितोऽगृधः। देवः= स्वप्रकाशचैतन्यम्। अगृधश्चासौ देवश्चागृधदेवः। तथा च अविद्यातत्प्रयुक्तरागादिरूपसर्व-मलशून्यशुद्धचैतन्यमगृधदेवशब्दस्य गूढोऽर्थः।

२. स्वप्नः=जननमरणप्रवाहरूपसंसाराख्यो महास्वप्नः।

३. चण्डालः=अविद्याऽहंकारादिविशिष्टः स्थूलसूक्ष्मदेहद्वयाभिमानी जीवः।

४. महारण्ये=संसाराख्ये जगति।

५. इत आरभ्य नरकवर्णनं क्रियते।

स्थानानि स्वप्ने पश्यन् स देवः कदाचिदात्मानमप्यपराधिनं तादृशापराधफलभूतदुःखभागिनं च स्वप्नेऽपश्यत् ।

तस्मिन्नेव स्वप्ने सोऽगृधदेवोऽन्यत्र दिव्यं[1] स्थानमपश्यत् । तत्र च (१) उत्तमा देवता विराजन्ते, (२) तासां देवतानां भोगा दिव्या भवन्ति, (३) अमृतस्य दर्शनमात्रेण ता देवतास्तृप्ताः, (४) क्षुत्पिपासे ताः देवताः न बाधेते, (५) तासां देवतानां शरीराणि मलमूत्रादिरहितानि दिव्यानि प्रकाशन्ते, (६) उत्तमविमाने स्थितः कश्चन देवो रमते । तच्च विमानं तस्य देवस्येच्छानुसारेण गच्छति, (७) कुत्रचिद्रम्भोर्वश्यादयोऽप्सरसो नृत्यन्ति । तासां सकलान्यप्यङ्गानि निर्दोषाणि विलसन्ति । तत्र सर्वा योषितः संपूर्णगुणोपेता[2] राजन्ते (८) तासामङ्गेभ्यः कामोद्दीपकोत्तमसुगन्धः प्रसरति । क्वचित्ताभिः सह देवा रमन्ते, (९) अगृधदेवः स्वयमपि कदाचिद्देवभावं प्राप्तः ताभिर्दिव्याङ्गनाभिः साकं दिव्येषु स्थानेषु सुचिरं कालं रमते । (१०) एवं दिव्यस्थानेष्वप्सरोभी रममाणोऽगृधदेवः सहसाऽकस्मादेव[3] रुधिरमलादिपूरिते कुण्डे निमग्नो भवति ।

तस्मिन्नेव स्वप्ने सोऽगृधदेवोऽन्यत्र[4] स्थाने. स्थितं सर्वाधिपतिं[5] पुरुषं पश्यति । तस्याज्ञाकरा अनुचरास्तस्याग्रे[6] तिष्ठन्ति । (१) केषांचित्पुरुषाणां सोऽधिपतिस्तस्यानुचराश्च सौम्यरूपाः प्रतीयन्ते, (२) केषांचित्पुरुषाणां[7] ते भयङ्कररूपाः प्रतीयन्ते, (३) तद्वनस्थितानां पुरुषाणां कर्मानुसारेण सोऽधिपतिः फलं यच्छति ।

इत्थमगृधदेवः स्वप्ने नानास्थानानि पश्यन् क्वचित्[9] (१) वेदपारायणपरान् ब्राह्मणानपश्यत्, (२) क्वचिद्यज्ञशालायां यायजूका उत्तमान् क्रतूननुतिष्ठन्ति (३) क्वचिदुत्तमाः पुण्या नद्यः प्रवहन्ति । तत्र पुण्यकाङ्क्षिणो

१. इत आरभ्य स्वर्गवर्णनम् ।

२. काव्यालङ्कारादिग्रन्थेषूक्ताः स्त्रीणां सौन्दर्यादयो द्वात्रिंशद् गुणा ये उक्तास्तैरुपेताः ।

३. पुण्ये क्षीणे, पापे फलोन्मुखे सति ।

४. इत आरभ्य यमलोकवर्णनम् ।

५. धर्मराजो यमः ।

६. यमदूताः ।

७. पुण्यवताम् ।

८. पापिष्ठानाम् ।

९. इत आरभ्य भूलोकस्य, तत्रापि भारतवर्षस्य वर्णनम् ।

जनाः स्नान्ति, (४) कश्चिज्ज्ञानिन आचार्याः शिष्येभ्यो ब्रह्मविद्यामुपदिशन्ति, अधिगतब्रह्मविद्याः विद्याबलात्तद्वनान्निष्क्रान्ता भवन्ति ।

अनया रीत्याऽगृधदेवस्य स्वप्ने क्षणमात्रे नानाश्चर्यरूपान् पदार्थान् पश्यतः पुनरप्येवं प्रतीतिः समजायत । (१) अहमस्मिन् वने बहोः कालान्निवसामि, (२) अस्य वनस्य कदाप्युच्छेदो न भवति, (३) (i) कदाचिद्भगवतश्चतुर्भ्यो मुखेभ्यो निर्गतैर्नानाविधैर्बीजैर्वनमिदमुत्पन्नम्, (ii) जलसेचनेन वनमिदं पाल्यते, (iii) कदाचिद्भगवतो घोरहास्यकारिमुखादुद्गमिष्यताग्निना वनमिदं दग्धं भविष्यति; (४) वनोत्पत्त्या सह ममाप्युत्पत्तिरभूत् । वनदाहे ममापि दाहो भविष्यति, (५) सर्वं वनं दग्ध्वा ईश्वरोऽवशिष्टो भविष्यति, (६) तस्येश्वरस्य शरीरे वनस्य बीजमवस्थितं भवेत् । एवं प्रतीतिः स्वप्ने एव तस्यागृधदेवस्य स्कामवेदश्रवणात्समजायत ॥

## (३४५) अगृधदेवस्य स्वप्न एव गुरुणा समागमः—

वारं वारमात्मनो जन्ममरणप्रवाहपातं श्रुत्वाऽगृधदेव एवं विचारयति स्म—(१) केनोपायेनाहमस्माद्वनान्निर्गच्छेयम् (२) वनान्निर्गमनासिद्धावपि कथं मम चण्डालभावो दूरीभवेत । सदा देवभावश्च सिद्ध्येत्; (३) वनान्निर्गन्तुं नान्य उपायोऽस्ति । ब्रह्मविद्योपदेष्टा आचार्य एव स्वशिष्यान् वनादस्मान्निस्तारयेदिति । एवं विचारयन्नेव सोऽगृधदेवः स्वप्न एव कञ्चनाचार्यवर्यमलभत । विधिवदुपसन्नाय तस्मै शिष्यायाचार्यो देववाणीमयं मिथ्याभूतवेदान्तग्रन्थमुपदिदेश ।

---

१. भगवान् = ब्रह्मविष्णुशिवरूपेण जगत उत्पत्तिपालनसंहारकर्तेश्वरः ।

२. बीजैः = जीवानां परिपक्वादृष्टैः ।

३. जलसेचनेन = कर्मानुसारेण सुखदुःखानुभवरूपभोगप्रदानेन ।

४. वनम् = जन्ममरणप्रवाहरूपः संसारः ।

५. दग्धं = प्रलयं गतम् ।

६. चण्डालभावः = जीवभावः ।

७. देवभावः = ब्रह्मत्वम् ।

८. "आचिनोति हि शास्त्रार्थमाचारे स्थापयत्यपि ।
स्वयमाचरते यस्मात् तस्मादाचार्य उच्यते ॥
आम्नायतत्वविज्ञानात् चराचरसमत्वतः ।
यमादियोगसिद्धत्वादाचार्य इति कथ्यते ॥" (इति वायुपुराणे)

(आ. ३४६-३५२) मिथ्याचार्येण मिथ्याशिष्याय मिथ्या-संस्कृतग्रन्थेनोपदेशः—

आ. ३४६-३४८ ग्रन्थारम्भे मङ्गलाचरणम्—

**३४६ मङ्गलाचरणस्य प्रयोजनं, मङ्गलाचरणप्रकारभेदाश्च—** ग्रन्थारम्भेऽवश्यं मङ्गलमाचरितव्यम्। (१) मङ्गलाचरणेन ग्रन्थसमाप्तिप्रतिबन्धीभूतविघ्ना विनश्यन्ति। **विघ्नो** नाम पापमेव। पापेन प्रतिबद्धानि भूत्वा शुभकार्याणि न सिद्ध्यन्ति। तानि च पापानि मङ्गलाचरणेन नश्यन्ति। (२) पापरहितेनापि ग्रन्थादौ मङ्गलमाचरणीयमेव। तदकरणे ग्रन्थकर्तरि पुरुषाणां नास्तिकत्वभ्रान्त्या तदीयग्रन्थे प्रवृत्तिर्न स्यात्।

तच्च मङ्गलं त्रिविधम्—(१) वस्तुनिर्देशरूपम्, (२) आशीर्वादरूपम् (३) नमस्काररूपञ्चेति। सगुणः अथवा निर्गुणो यः परमात्मा स वस्तु इत्यभिधीयते; तस्य कीर्तनमेव **वस्तुनिर्देशः**। आत्मनः अथवा शिष्यस्य यद्वाञ्छितं तस्य प्रार्थनमेव**वाशीर्वादरूपमङ्गलम्**। स्वापकर्षबोधनानुकूलः नमश्शब्दोच्चारणादिरूपो व्यापारो **नमस्काररूपमङ्गलम्**।

**(३४७) ग्रन्थारम्भे गणेशदेव्याद्यनुसन्धानमपि मङ्गलाचरणमेव—** गणेशस्य देव्याश्चेश्वरत्वं पुराणेषु प्रसिद्धम्। तस्माद्गणेशादीनां चिन्ता नानीश्वरचिन्ता। पुराणे गणेशस्य यज्जन्मोक्तं तत् जीवानामिव न कर्मफलभूत जन्म। रामकृष्णादिरिव गणेशोऽपि भक्तानुग्रहप्रयोजनकः परमात्मन आविर्भावविशेष एवेति भगवतो व्यासस्य परमाभिप्रायः।

अत्रेदं रहस्यम्—

परमार्थदृष्ट्या जीवोऽपि परमात्मनो न भिन्नः। किन्तु जननमरणादिरूपबन्धस्यात्मनि योऽध्यासः स एव जीवस्य **जीवत्वम्**। स च जन्मादिरूपो बन्धो गणेशादीनामात्मनि न प्रतीयते। तस्मात्ते न जीवाः। अनेन प्रकारेण गणेशादीनामीश्वरत्वं सिद्धम्। "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः।" (मु. 3-1-2; श्वे. 4-7.) **अस्य मन्त्रस्यायमर्थः—** "अन्यं=देहोपाधिकजीवाद्विलक्षणं, ईशं=असंसारिणं, महिमानं=सर्वस्य जगतोऽयमहमस्म्यात्मा सर्वभूतस्थो नेतरोऽविद्याजनितोपाधिपरिच्छिन्नो मायात्मेति जगद्रूपां विभूतिं, अस्येति=मम परमेश्वरस्यैवेति, यदा पश्यति तदा वीतशोको भवति=सर्वस्माच्छोकसागराद्विमुच्यते कृतकृत्यो भवति" (इति

भाष्ये वर्णितोऽर्थः)। तस्माद् ग्रन्थारम्भे गणेशादीनां चिन्तनमुपपद्यते। ईश्वरस्य नानारूपवर्णनं सर्वेषामीश्वरत्वद्योतनाय। गुरुभक्तिरीश्वरभक्तिश्च विद्याप्राप्तावन्तरङ्गसाधनमिति द्योतनाय च।

(३४८) **निर्गुणसगुणवस्तुनिर्देशरूपनमस्काररूपाशीर्वादरूपमङ्गलप्रदर्शनम्**—

तत्र **निर्गुणवस्तुनिर्देशरूपमङ्गलं** यथा—

"परिपूर्णं चिदानन्दं बुद्धिसाक्षि यदद्वयम्।
सूर्यादिभासकं नित्यं तेजः शुद्धं तदस्म्यहम्॥"

**सगुणवस्तुनिर्देशरूपमङ्गलं** यथा—

"विघ्नाः समूलं नश्यन्ति यन्नामोच्चारणात्सकृत्।
[1]त्रिपुरघ्नोऽपि यं स्मृत्वा जघान त्रिपुरासुरान्॥
विना तु येन देवाश्च स्वेप्सितं नाप्नुवन्ति हि।
सर्वविघ्नविनाशाय चिद्गणेशं नमामि तम्॥"

**नमस्काररूपमङ्गलं** यथा—

"असुराणां निहन्तारं त्रातारं सुरचेतसाम्।
रमाकान्तमुमाकान्तं नमाम्यनिशमद्वयम्॥"

**गुरोः स्ववाञ्छितप्रार्थनरूपमाशीर्वादमङ्गलम्**—

"यया शक्त्या देवदेवो जगत्सृष्ट्यादिकर्मकृत।
सा मे तिष्ठतु वाक्पीठे ग्रन्थस्यास्य समाप्तये॥"

**शिष्यस्य स्ववाञ्छितप्रार्थनरूपमङ्गलम्**—

"संसारबन्धसंशान्त्या निजानन्दप्रकाशनात्।
निवर्तयतु जन्मादिदुःखं शिष्यस्य मे गुरुः॥

**(आ. ३४९-३५१) वेदान्त[2]शास्त्रप्रणेतुराचार्यस्य (श्रीवेदव्यासस्य) नम[3]स्कारः**—

१. मयदानवनिर्मितत्रिपुरभञ्जनप्रवृत्तो महादेवो यदा विजयं नालभत तदा स सर्वैर्देवैः सहितो विघ्नराजं गणेशमाराध्य विजयमवाप। महादेवस्य विजयेन देवा निर्भया अभवन्निति कथा पुराणेषु प्रसिद्धा।

२. वेदान्ता नामोपनिषदः। तासां तात्पर्यस्य निर्णायकत्वात् तदनुसारिब्रह्मसूत्ररूपोत्तरमीमांसाख्यशारीरकशास्त्रमपि **वेदान्तशास्त्र**मित्युच्यते। तत्कर्ता श्रीवेदव्यासः।

३. स्वापकर्षस्य स्वाभीष्टदेवतागुर्वादिरुत्कर्षस्य च मनसा चिन्तनं वाचा कीर्तनं, तथोत्कृष्टदेवतागुर्वादीन् प्रति कायेन प्रणिपातादिकरणं च **नमस्कारः**। त्रिविधा एते नमस्काराः क्रमेणोत्तममध्यमकनिष्ठरूपा भवन्ति।

(३४९) दृष्टान्तः वने वायुकृतोऽनर्थः—

(१) वायुः, (२) वने प्रसृतः कण्टकिवृक्षान् कम्पयित्वा, (३) वृक्षाणां कण्टकान् प्रसार्य, (४) रम्याणि, (५) कमलपुष्पाणि, (६) स्वस्थानादपच्छिद्य, (७) कण्टकेषु तानि पुष्पाण्यासज्य भ्रामयति। (८) तन्मार्गगामिनः पथिकस्य कण्टकलग्नानि कमलपुष्पाणि दृष्ट्वैवं चिन्तोदिता— (९) सुन्दराण्येतानि कमलानि नैतत्स्थानयोग्यानि, (१०) किन्तूत्तमस्थानयोग्यानीति। (११) स पथिकस्तानि कमलानि हस्ते गृहीत्वा, (१२) पुनरपि विचारयामास—पवनोऽयं यथा पुनरप्येनानि पुष्पाणि कण्टकेषु नासञ्जयेत्। (१३) तथा संविधानं कार्यमिति। एवं विचार्य सूत्रनिर्मितजालकेन कण्टकिवृक्षान् पृथक् चकार। तेन जालकेन पुष्पाणि कण्टकप्रवेशात्परिरक्षितानि।

(३५०) दार्ष्टान्तिकं शिष्यविषये भेदवादिकृतोऽनर्थः— यथायं दृष्टान्तस्तथा प्रकृते। (१) [1]भेदवाद्याचार्यरूपो वायुः, (२) वेदरूपे वने (३) [2]अर्थवादरूपकण्टकिवृक्षेषु कामकर्मरूपान् कण्टकान् प्रवर्त्य (४) कापट्यरागद्वेषादिदोषरहित (५) सुशुद्धशिष्यरूपकमलानि (६) शमदमादिरूपस्वस्थानात्प्रच्याव्य (७) कामकर्मरूपकण्टकेष्वासज्य भ्रामयति। एवं कामकर्मनिरतानुच्चावचसंसारदुःखभागिनो दृष्ट्वा (८) मार्गगपान्थवत् सर्वव्यापी महाविष्णुरेव (९) मनोहारिकमलवत् शुद्धान्तःकरणा एते पुरुषाः न सकण्टकस्थानार्हाः। (१०) किन्तु मत्स्वरूपप्राप्तियोग्या एवैते इति निश्चित्य श्रीवेदव्यासरूपेणावतीर्य (११) तान् शिष्यानात्मतत्त्वोपदेशरूपे स्वोत्सङ्गे स्थापयामास। यथा प्रचण्डोऽपि वायुः कस्यचिदुत्सङ्गस्थानि पुष्पाण्युद्धर्तुं न प्रभवति। तथा ब्रह्मनिष्ठाचार्योपदेशाधीनं पुरुषं भेदवादी सुनिपुणतर्कैरपि भ्रामयितुं न शक्नोति। "नैषा तर्केण मति-

---

तत्र (1) मानसनमस्कारो बीजम्, (2) वाचिकनमस्कारोऽङ्कुरः, (3) कायिकनमस्कारो वृक्षः। (4) तैर्गुर्वादीनां प्रसादरूपं फलमवाप्यते।

१. अत्र भेदवादिन आचार्यत्वोक्तिः देवदत्ते सिंहत्वोक्तिरिवौपचारिकी।

२. विध्यर्थस्य स्तावकत्वेन निन्दकत्वेन च द्विविधोऽर्थवादः। अपि च

"विरोधे गुणवादः स्यादनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥ इति।

किञ्च गुडजिह्विकान्यायेन कर्मफलस्तुतिद्वारा निष्कामकर्मप्रवर्तकः परकृतिपुराकल्परूपश्च।

रापनेया" (क. 1-2-9.) इत्यादिश्रुतेः। तस्माद्ब्रह्मनिष्ठाचार्योपदेश एवात्रोत्सङ्गः। (१२) पुनरपि वेदव्यासरूपी भगवान् चिन्तयामास। (१३) पुनरप्ययं भेदवादी अन्यानपि कामकर्मरूपकण्टकमार्गे प्रवर्त्य भ्रामयेदिति अतोऽन्येषामपि स्वशिष्याणां भ्रमनिवृत्तये **न्यायविचारात्मकसूत्ररूप**जालेन वेदान्तवाक्यरूपवृक्षान् कण्टकिद्रुमेभ्यो व्यभजत्।

वने सन्ति द्विविधा वृक्षाः—(१) सकण्टका वृक्षाः। (२) निष्कण्टकाः पुष्पफलशालिनो वृक्षाश्चेति। निष्कण्टका वृक्षा यदि जालेन कण्टकिवृक्षेभ्यो विभक्ताः भवन्ति तदा तत्पुष्पाणि कण्टकेषु न पतेयुः। **एवं** वेदेऽपि सन्ति द्विविधानि वाक्यानि। तत्र कानिचिद्वाक्यानि[1] फलैः कर्मस्तुतिद्वारा बहिर्मुखं पुरुषं **कर्मणि प्रवर्तयन्ति**। अन्यानि[2] वाक्यानि कर्मफलानामनित्यत्वादिदोषनिरूपणद्वारा **कर्मणः** सकाशात् पुरुषं **निवर्तयन्ति**।

(३५१) **व्याससूत्रमेवानर्थनिवृत्त्युपायः**—वेदव्यासो वेदवाक्यानि विभज्य स्वकीयब्रह्मसूत्रेण वेदगतानां सकलवाक्यानां निवृत्तावेव तात्पर्यं **न तु प्रवृत्तौ** कस्यचिदपि वाक्यस्येति बोधयामास। वस्तुतस्तु **प्रवृत्तिबोधकवाक्यानामपि** स्वाभाविकप्रवृत्तेः निषिद्धकर्मप्रवृत्तेश्च पुरुषं निवर्त्य विहितकर्मसु पुरुषस्य प्रवृत्तिमुत्पाद्य विहितकर्मानुष्ठानेन शुद्धान्तःकरणस्य पुरुषस्य सर्वकर्मफलेभ्यो वैराग्यपूर्वकं ज्ञाननिष्ठासंपादने एव तात्पर्यमिति निवृत्तावेव सर्ववेदवाक्यानां तात्पर्यम्। **अर्थवादवाक्यानां** कर्मफलबोधकत्वमपि गुडजिह्विकान्यायेनैव[3]। न तु तेषां वाक्यानां फले तात्पर्यम्। अमुमर्थं श्रीवेदव्यास एव स्वसूत्रैः बोधयति। एवं व्याससूत्रात् ज्ञात्वा पुरुषः काम-

---

१. "अपाम सोममृता अभूम" इत्यादीनि।

२. "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" (छा. 8-1-6.) इत्यादीनि।

३. शिशोः रोगनिवृत्तिकामा माता स्वकीयगुडलिप्ताङ्गुलिं शिशोर्जिह्वायामासज्य कटुकौषधे मधुरत्वबुद्धिं शिशोरुत्पाद्य तं शिशुं कटुकौषधं पाययति। शास्त्रेष्वयमेव **गुडजिह्विकान्याय** इत्युच्यते। एवमेव श्रुतिरूपमाताऽपि श्रुत्युक्तकर्मफलस्तावकवचनरूपार्थवादवाक्यरूपगुडलिप्ताङ्गुलिं पामरजीवरूपशिशूनास्वादयित्वा स्वर्गादिप्राप्तिरूपकर्मफलं बोधयित्वा पुरुषान् कर्मणि प्रवर्तयति। परं तु लोके **यथा** मातुः शिशोः रोगनिवृत्तावेव तात्पर्यं, न तु शिशोः गुडलिप्तस्वाङ्गुल्यास्वादनसंपादने। **तथा** वेदरूपमातुरपि पामरजनानां कर्मभिः पापनिवृत्तिद्वारा चित्तशुद्धिसंपादन एव तात्पर्यं, न तु स्वर्गादिफले।

कर्मभ्यो निवर्तते । यथा सूत्रनिर्मितं जालं कण्टकेभ्यः पुष्पाणि निवारयति । तथा व्याससूत्रमिदं (ब्रह्ममीमांसासूत्रं) कामकर्मानुष्ठानात्पुरुषं निवारयतीति जालत्वेन रूपितम् ।

"चकार सूत्रं यो व्यासः नैष्कर्म्यार्थविबोधकम् ।
तमहं दासभूतः सन् प्रणमामि मुहुर्मुहुः ॥"

(३५२) अगृधदेवस्य त्रयः प्रश्नाः—

(1) अहं कः ? (2) संसारस्य कर्ता कः ? (3) मुक्तेः कारणं किं ज्ञानमुत कर्माथवोपासनमथवा कर्मोपासने उभे अपि ? इति ।

तत्र (1) हे भगवन्! 'अहं कः' इति प्रश्नस्यायमभिप्रायः—(१) किमहं देहस्वरूपः (२) अथवा देहाद्भिन्नः ?। 'अहं मनुष्यः' इति 'मम देहः' इति च द्विविधप्रतीतिसंभवान्मे संशयो जातः। यदि भवान् मां देहाद्भिन्नं ब्रवीति तर्हि (३) अहं किं कर्तृभोक्तृस्वरूपः (४) उताक्रियः ?। यदि मां भवानक्रियं कथयति, तर्हि (५) अहं किं सर्वशरीरेष्वेकः, (६) उतानेकः ?। इति ।

(2) 'अस्य संसारस्य कर्ता कः' इति द्वितीयप्रश्नस्यायमाशयः—(१) अस्य संसारस्य कर्ता कश्चनास्ति वा ? (२) अथवायं संसारः स्वयमेवोत्पन्नः ?। यदि कश्चन कर्ताऽस्ति तर्हि (३) स कर्ता किं जीवः (४) उतेश्वरः ?। यदीश्वरः कर्ता तदा (५) स ईश्वरः किमेकदेशे स्थितः परिच्छिन्नः (६) उत स ईश्वरो व्यापकः ? । यदीश्वरो व्यापकस्तर्हि यथा (७) व्यापकादाकाशाज्जीवो भिन्नस्तथेश्वरादपि जीवो भिन्नः, (८) अथवेश्वराज्जीवोऽभिन्नः ?

(3) मुक्तेः कारणं किमिति तृतीयप्रश्नस्यायमभिप्रायः—(१) मुक्तेः कारणं किं ज्ञानं ? (२) उत कर्म ? (३) उतोपासनम् ? (४) उतोभयम् ?। उभयमिति पक्षे, (५) किं ज्ञानकर्मणी ? (६) उत ज्ञानोपासने, (७) उत कर्मोपासने ?

(आ. ३५३-३८२) अहं कः ? इति प्रश्नस्योत्तरम्—

(३५३) आत्मा सङ्घातस्य साक्षी—

शिष्यकृतप्रथमप्रश्नस्य गुरुरेवमुत्तरमाह—'त्वं सच्चिदानन्दस्वरूपोऽसि'

१. आत्मनो देहेन्द्रियप्राणमनोबुद्धयादिविलक्षणत्वं पूर्वमेव निरूपितम् ।

इति। अनेन 'देहाद्भिन्नस्त्वम्' इत्युक्तं भवति। देहो ह्यसद्रूपो जडरूपो दुःखरूपश्चास्ति। आत्मा तु तद्विलक्षणः सच्चिदानन्दरूपः।

त्वं कर्ता भोक्ता च न भवसि। (१) यस्य दुःखमस्ति स दुःखनिवृत्तये सुखप्राप्तये च कर्म करोति, अतः स **कर्ता** इत्युच्यते। (२) त्वयि दुःखाभावात् **दुःखनिवृत्तये** न त्वं कर्मकर्ता भवसि। (३) त्वमानन्दस्वरूपोऽसि, अतः **सुखप्राप्तये** च त्वं न कर्मकर्ता भवसि। (४) यः कर्ता भवति स एव भोक्तापि भवति। त्वं न कर्ता अतो भोक्तापि त्वं न भवसि। धर्माधर्मजनक-शुभाशुभकर्मकर्ता तत्फलसुखदुःखभोक्ता स्थूलसूक्ष्मसङ्घातः न त्वम्। त्वं तु सङ्घातस्य साक्षी।

(३५४) **आत्मा व्यापकः एकश्च** :—अत एवात्मा एक एव। न नाना। यद्यात्मा कर्ता भोक्ता च भवेत्तदा नाना भवेत्। तथाहि एकः सुखी आस्ते। अपरश्च दुःखी। कर्तृत्वभोक्तृत्वादिधर्मविशिष्टः एक एवेत्यङ्गीकारे एकस्य सुखे सर्वेषां सुखं, एकस्य दुःखे सर्वेषां च दुःखं प्रसज्येत। न तु तथाऽस्त्यनुभवः। तस्माद्भोक्ता नानेत्येवाङ्गीकार्यम्। आत्मा त्वभोक्ता। अत एव एक एवात्मा। एक एवात्मा सर्वशरीरेषु व्यापकः।

### (३५५) साङ्ख्यमतनिरूपणं, तन्निराकरणं च :—

साङ्ख्या हि आत्मा अकर्ता अभोक्ता च इत्यङ्गीकुर्वन्तोऽप्यात्मनो नानात्वमभ्युगच्छन्ति। तच्चात्यन्तविरुद्धम्।

---

१. तथा चोक्तं भगवत्पादैः:—

"नाहं देहो नेन्द्रियाण्यन्तरङ्गो
नाहङ्कारः प्राणवर्गो न बुद्धिः।
दारापत्यक्षेत्रवित्तादिदूरः
साक्षी नित्यः प्रत्यगात्मा शिवोऽहम्॥" इति॥ (अद्वैतपञ्चके 1.)

"देहेन्द्रियमनोबुद्धिप्रकृतिभ्यो विलक्षणम्।
तद्वृत्तिसाक्षिणं विद्यादात्मानं राजवत्सदा॥"

"नाहं प्राणो नैव शरीरं न मनोऽहं
नाहं बुद्धिर्नाहं महदहङ्कारधियौ च।
योऽत्र ज्ञांशः सोऽस्म्यहमेवेति विदु-
र्यं तं संसारध्वान्तविनाशं हरिमीडे॥" (हरिमीडेस्तोत्रे-36.)

तथाहि—**साङ्ख्यानां सिद्धान्तस्त्वेवम्** :-(१) सत्वरजस्तमोगुणानां साम्यावस्था **प्रधान**मिति कथ्यते। तच्च प्रधानं **प्रकृति**रेव भवति। न विकृतिः। **विकृति**र्नाम कार्यं, **प्रकृति**र्नामोपादानकारणम्। तदिदं प्रधानं महत्तत्त्वस्योपादानकारणत्वात् **प्रकृति**र्भवति। इदं च प्रधानमनादित्वा**द्विकृति**र्न भवति। (२-८) महत्तत्वं, अहङ्कारः, पञ्चतन्मात्राश्चेति सप्त प्रकृतिविकृतयो भवन्ति। तत्र पूर्वपूर्वमुत्तरोत्तरस्य प्रकृतिः, उत्तरोत्तरं पूर्वपूर्वस्य विकृतिः। पञ्चतन्मात्राः पञ्चभूतानां प्रकृतयः। इत्थं सप्तैतानि तत्त्वानि प्रकृतिविकृतयो भवन्ति। (9-24) पञ्चभूतानि, दशेन्द्रियाणि, मनश्चेति षोडश तत्त्वानि विकृतय एव न प्रकृतयः। (२५) पुरुषो न प्रकृतिर्नापि विकृतिः। यद्वस्तु यदा वस्त्वन्तरस्य कारणं भवति तदा तद्वस्तु **प्रकृति**र्भवति, यदा कार्यं भवति तदा तद्वस्तु **विकृति**र्भवति। पुरुषस्तु न कस्यचिदपि कारणं भवति। तस्मान्न **प्रकृतिः**; न कस्यचिदपि कार्यं भवति। तस्मान्न **विकृतिः**। अतोऽसङ्गः पुरुषः। इत्थं साङ्ख्यमते **पञ्चविंशतितत्त्वानि** भवन्ति। (१)तत्त्वमिति पदार्थस्य नाम। (२) साङ्ख्यमते ईश्वरो नाङ्गीक्रियते। (३) स्वतन्त्रा

---

१. मायायाः सकाशात् महत्तत्त्वमजायत। महत्तत्वाच्च सत्वरजस्तमोगुणभेद-विशिष्टाहङ्कारतत्वमजायत। तस्माच्च पञ्चतन्मात्रा अजायन्त।

२. सेश्वरसाङ्ख्यनिरीश्वरसाङ्ख्यभेदात्**साङ्ख्यमतं द्विविधम्**। (1) कर्दमदेव-हूत्योः पुत्रो भगवदवतारः कपिलः **सेश्वरसाङ्ख्यमत**मङ्गीकरोति। (2) अन्योऽपि कपिलोऽभूत्। स **निरीश्वरसाङ्ख्यमतमङ्गीकृतवान्**। तस्य मते ईश्वरो नाङ्गीक्रियते। किन्तु **प्रधानमेव** जगतः कारणमिति, पुरुषस्य भोगमोक्षकारणमिति चाङ्गीक्रियते।

**तदेतन्न सङ्गच्छते** :—प्रलयकाले सत्वादिगुणानां साम्यावस्था **प्रधान**मिति, सृष्टिकाले यदा तत्प्रधानं साम्यावस्थां त्यजति तदा जगदुत्पद्यते इति च ते कथयन्ति। तन्न युक्तम्। प्रधानस्य जडत्वात् स्वत एव तत् साम्यावस्थापरित्यागसमर्थं न भवति। चेतनस्य पुरुषस्य तन्मतेऽसङ्गत्वान्न तस्य प्रधानेन संबन्धो भवति। चेतनसंबन्धं विना जडं न किञ्चिदपि कार्यमुत्पादयितुं शक्नोति। तस्मात् 'प्रधानरूपमायाविशिष्टं चैतन्यमन्तर्यामीश्वरो भवति। स एव जगतः कर्ता' इत्येव साङ्ख्येनाप्यभ्युपगन्तुमुचितम्।

किञ्चात्मनो नानात्वस्य प्रकृतेर्नित्यत्वस्य चाङ्गीकारं कुर्वतः, आत्मनि सजातीयात्मान्तरसंबन्धस्य विजातीयप्रकृतिसंबन्धस्य चापरिहार्यत्वात् नानात्मनामसङ्गत्वोक्तिर्व्याहता भवेत्। व्यापकस्यैकस्यात्मनोऽङ्गीकारे नानान्तःकरणरूपोपाधिप्रयुक्तभोगाद्यसांकर्यव्यवस्था सिद्ध्यति। तस्मादात्मनानात्वोपगमो विफलः। आत्मनानात्वाभ्युपगमेऽद्वैतश्रुतिविरोधश्च। आत्मभेदबाधकयुक्तयश्चोत्तरत्र प्रदर्शयिष्यन्ते। **तस्मादसङ्गतं साङ्ख्यमतम्।**

प्रकृतिरेव जगतः कारणं भवति। (४) पुरुषस्य भोगमोक्षनिमित्तं प्रकृतिरेव प्रवर्तते। पुरुषो न प्रवर्तते। (५) प्रकृतेर्विषयरूपपरिणामात्पुरुषस्य भोगो भवति। (६) बुद्धिद्वारा विवेकरूपप्रकृतिपरिणामान्मोक्षः सिद्ध्यति। (७) **यद्यपि** पुरुषस्यासङ्गत्वात्तस्मिन् भोगमोक्षौ न संभवतः। **तथापि** ज्ञानसुखदुःखरागद्वेषादयो बुद्धेः परिणामा भवन्ति। तस्या बुद्धेरात्मना सहाविवेकोऽस्ति, विवेकस्तु नास्ति। तस्मादात्मन्यारोपितौ बन्धमोक्षौ संभवतः। (८) अविवेकसिद्धो य आत्मनि भोगस्तेनैव साङ्ख्यमते आत्मा भोक्तेति कथ्यते। (९) परमार्थत आत्मा न भोक्ता। बुद्धिरेव भोक्त्री। (१०) बुद्धिस्त्वात्मनो भिन्ना। (११) ईदृशज्ञानस्यैव **विवेक** इति संज्ञा। (१२) ईदृशज्ञानाभाव **एवाविवेक** इत्युच्यते। इत्थं च (१३) साङ्ख्यमते आत्मा असङ्गोऽस्ति। (१४) सुखादयो बुद्धेः परिणामत्वात् बुद्धेरेव धर्माः। (१५) आत्मा नाना च।

**अत्रेदं सिद्धान्तः**—तदेतत्साङ्ख्यमतमत्यन्तविरुद्धम्—सुखदुःखादीनामात्मधर्मत्वे तेषां प्रतिशरीरं भेदादात्मनो भेदः सिद्ध्येत्। तच्च सुखदुःखादिकं नात्मनो धर्मः, किन्तु बुद्धेरेव धर्मः। तस्मात्सुखदुःखादिभेदाद् बुद्धिभेद एव सिद्ध्येत्। न त्वात्मनो भेदः सिद्ध्येत्।

**यथैकस्मिन्** व्यापके आकाशे नानोपाधीनां धर्माः उपाध्याकाशयोरविवेकात्प्रतीयन्ते। **तथैवैकस्मिन्** व्यापके आत्मनि नानाबुद्धीनां धर्मा बुद्ध्यात्मनोरविवेकात्प्रतीयन्त इत्यभ्युपगम एव साङ्ख्यमतेऽप्युचितः। आत्मानमसङ्गत्वेनाभ्युपगम्य तस्य नानात्वाङ्गीकारो निष्फल एव।

किञ्च केचनात्मानो मुक्ताः, केचन बद्धाश्च भवन्ति। इत्थं बन्धमोक्षयोर्भेदादात्मभेदः सिद्ध्यतीत्यप्यसङ्गतमेव। यदि बन्धमोक्षावात्मन्यङ्गीक्रियेते तदा बन्धमोक्षभेदादात्मनो भेदः सिद्ध्येत्। तौ च बन्धमोक्षौ साङ्ख्यमतेऽसङ्गे आत्मनि नाङ्गीक्रियेते। किन्तु बुद्ध्यविवेकाद्बन्धः, बुद्धिविवेकाद्बन्धान्मोक्षश्चाङ्गीक्रियेते तन्मते। यद्वस्तु अविवेकादुत्पद्यते विवेकाच्च नश्यति तद्वस्तु रज्जुसर्पवन्मिथ्या। आत्मनि बुद्ध्यविवेकाद्बन्धो भवति। विवेकाच्च स बन्धो निवर्तते। अतश्चात्मनि बन्धो मिथ्या। **यथा** बन्धो मिथ्या **तथा** आत्मनि मोक्षोऽपि मिथ्यैव। यत्र बन्धः सत्यस्तत्र मोक्षोऽपि सत्यो भवेत्। आत्मनि बन्धस्य मिथ्यात्वान्मोक्षोऽपि मिथ्यैव।

इत्थं मिथ्याबन्धमोक्षौ आकाशवदेकस्मिन्नात्मनि युज्येते। तस्मात् बन्धमोक्षभेदादात्मभेदो न सिद्धयति। तस्मात्साङ्ख्याभिमतात्मभेदो न युक्तः!

**(आ. ३५६-३६४) त्रिविधनैयायिकमतवर्णनं, तन्निराकरणं च।**

**(आ. ३५६-३६०) आत्मा व्यापक इति मतवर्णनं तत्खण्डनं च।**

**(आ. ३५६-३५८) आत्मनो व्यापकत्वोपपादनम्।**

**(३५६) जीवस्यानेकत्वव्यापकत्वनित्यत्वज्ञानगुणकत्वादिवर्णनम्—**

साङ्ख्यानामिव नैयायिकानामप्यात्मभेदोऽसङ्गत एव। एष च नैयायिकसिद्धान्त:—

(1) सुखं, दुःखं, ज्ञानं, इच्छा, द्वेषः, प्रयत्नः, धर्मः, अधर्मः, ज्ञानजन्यसंस्कारः, सङ्ख्या, परिमाणं, पृथक्त्वं, संयोगः, विभागः, इति **चतुर्दश गुणा जीवरूपात्मनिष्ठाः।**

---

१. अत्रेमा **भेदबाधकयुक्तय**:—एकस्यात्मनो भेदोऽन्यस्मिन्नात्मनि विद्यत इति वदन् वादी प्रष्टव्य:—(1) 'स भेदः किं भेदरहित आत्मनि वर्तते, (2) उत भेदसहित आत्मनि? इति। (1) **प्रथमपक्षे** व्याघातदोषो भवति। अन्यप्रतियोगिकभेदाश्रयमात्मानं भेदरहितं ब्रवीषि। पश्चात्तत्रात्मनि भेदं च साधयसि। तदिदं ते वचनं 'मम पिता बाल्यादारभ्य ब्रह्मचारी' इति वचनमिव व्याघातदोषास्कन्दितम्। (2) भेदसहिते आत्मनि भेदो विद्यते इति **द्वितीयपक्षे** (१) आत्मा येन भेदेन सहितोऽस्ति स भेदः साध्यमानोऽयं भेदश्च किं परस्परमभिन्नौ, उत भिन्नौ? तत्राद्यपक्षे स्वसहिते आत्मनि स्वस्य विद्यमानतेत्य**ात्माश्रयदोष**:। येन भेदेन सहितः आत्माऽस्ति स आत्मनो विशेषणरूपो भेदः। साध्यमानस्तु भेदस्ततोऽन्य इति परस्परं भिन्नाविति चेत् (i) तदा आत्मनो विशेषणरूपभेदस्य भेदरहिते आत्मन्यसंभवात् भेदसहिते आत्मन्येव तस्यावस्थितिर्वक्तव्या। तस्मादात्मनि प्रथमभेदस्य स्थित्यर्थं द्वितीयभेदो विशेषणत्वेन वक्तव्यः। ततः द्वितीयभेदस्य स्थित्यर्थं प्रथमभेदो विशेषणत्वेन वक्तव्यः। तथा च परस्परस्य स्थित्यर्थं परस्परस्यापेक्षाऽस्तीत्य**न्योन्याश्रयदोष**:। (ii) आत्मनि द्वितीयभेदस्थित्यर्थं तदाश्रयस्यात्मनो भेदसहितत्वसंपादनाय तद्विशेषणत्वेन तृतीयभेदाङ्गीकारे, तस्य तृतीयभेदस्य स्थित्यर्थं पूर्ववदेवात्मनो भेदसहितत्वं संपादनीयम्। तत्र तृतीयभेदस्थित्यर्थं तदाश्रयस्यात्मनः प्रथमभेदो विशेषणमिति कथने तदा प्रथमभेदस्थित्यर्थं द्वितीयभेदः द्वितीयभेदस्थित्यर्थं तृतीयभेदः, पुनश्च तृतीयभेदस्थित्यर्थं प्रथमभेदोऽपेक्ष्यत इति चक्रवद्भ्रमणा**च्चक्रकदोषापत्तिः**। (iii) यदि तृतीयभेदस्थित्यर्थं भेदाश्रयमात्मानं भेदसहितं कर्तुं तस्य विशेषणरूपश्चतुर्थो भेदोऽङ्गीक्रियते, ततश्चतुर्थभेदस्थित्यर्थं पञ्चमभेदोप्यङ्गीक्रियते तदा प्रमाणरहितभेदधारारूपानवस्थादोषप्रसङ्गः। तस्मादात्मनः परस्परभेदोऽसङ्गतः। एताश्च भेदबाधकयुक्तयः नैयायिकादिसकलभेदवादिसंमतात्मभेदखण्डनेऽपि योज्याः।

(2) सङ्ख्या, परिमाणं, पृथक्त्वं, संयोगः, विभागः, ज्ञानं, इच्छा, प्रयत्नः, **इत्यष्टौ गुणा ईश्वरनिष्ठाः** ।

(3) तत्रैतावान् भेदोऽस्ति—**ईश्वरस्य** ज्ञानेच्छाप्रयत्ना **नित्याः** । **जीवस्य** ज्ञानादित्रय**मनित्यम्** । **ईश्वरः** एको व्यापको नित्यश्च। **जीवस्तु** नाना, सर्वत्र व्यापको नित्यश्च। जीवस्य ज्ञानमनित्यम्। तस्माद्यदा ज्ञानरूपगुणोऽस्ति तदा चेतनः । यदा ज्ञानगुणो नष्टस्तदा जडः पाषाणतुल्यो भवति ।

(4) जीवेश्वराविव आकाशकालदिङ्मनांस्यपि नित्यानि ।

(5) पृथिवीजलतेजोवायूनां परमाणवो नित्याः । गवाक्षजालकनिर्गतेषु सूर्यकिरणेषूपलभ्यमानसूक्ष्मरजसः षष्ठो भागः **परमाणुरिति** कीर्त्यते। स परमाणुरात्मवन्नित्यः ।

(6) जात्यादयोऽन्येऽपि केचन पदार्था न्यायमते नित्याः सन्ति । वेदविरुद्धसिद्धान्तानां बहूनां लेखने जिज्ञासूनां प्रयोजनं नास्तीति नात्र ते लिख्यन्ते ।

(7) 'अहं मनुष्यो ब्राह्मणः' इति देहे आत्मभ्रान्तिर्भवति । ततो रागद्वेषौ भवतः । ताभ्यां धर्माधर्मनिमित्ते कर्मणि प्रवृत्तिर्भवति । ततः शरीर-संबन्धद्वारा सुखदुःखादयो भवन्ति । इत्थं न्यायमते आत्मनः संसारं प्रति **भ्रान्तिज्ञानमेव कारणम्** ।

(8) तच्च भ्रान्तिज्ञानं तत्त्वज्ञानान्निवर्तते ।

(9) देहादिसकलपदार्थेभ्य आत्मा भिन्न इति निश्चय एव **तत्त्वज्ञानम्** । (१) तेन तत्त्वज्ञानेन 'अहं मनुष्यो ब्राह्मणः' इति भ्रान्तिर्निवर्तते। (२)

---

१. अत्रायं विशेषः—नैयायिकमते तत्त्वज्ञानस्य हेतुर्मननम् । 'आत्मा इतरपदार्थेभ्यो भिन्नः । आत्मत्वात् । यः इतरपदार्थेभ्यो भिन्नो न भवति । किन्त्वितरपदार्थरूप एव भवति स नात्मा । यथा घटः ।' इति व्यतिरेक्यनुमानेनात्मनि इतरपदार्थभेदानुमिति-ज्ञानं भवति । इदमेव ज्ञानं **मनन**मिति कथ्यते । इतरपदार्थज्ञानमन्तरा आत्मनीतर-पदार्थभेदज्ञानं न संभवेत् । यस्य भेदोऽन्यत्र भवति सः भेदप्रतियोगीत्युच्यते । तादृश-प्रतियोगिज्ञानं विना भेदज्ञानं न संभवति । तस्मादात्मनि इतरपदार्थभेदानुमितिरूपमननं प्रत्युपयोगित्वादितरपदार्थनिरूपणमपि तत्त्वज्ञानोपयोगीति तेषां मतम् ।

**तदेतन्न संभवति**—श्रुतस्यार्थस्य निश्चयं प्रत्यनुकूलाः प्रमेयगतसंदेहनिवर्तिकाश्च या युक्तयस्तासां चिन्तनमेव **मननमि**त्युच्यते । भेदज्ञानेन त्वनर्थ एव भवति । "सर्वं खल्विदं ब्रह्म" (छा. 3-14-1.) इत्यादिश्रुतिवाक्यैरभेदे एव सर्ववेदानां तात्पर्यं सिद्धम् ।

भ्रान्तिनाशे रागद्वेषौ नश्यतः। (३) रागद्वेषयोरभावे धर्माधर्मार्थकर्मणि प्रवृत्तिर्न भवति। (४) प्रवृत्त्यभावे शरीरसंबन्धरूपजन्माभावः सिद्ध्यति। प्रारब्धं तु भोगेन नश्यति। (५) शरीरसंबन्धाभावे एकविंशतिदुःखानां ध्वंसो भवति।

(10) **न्यायमते** तादृशदुःखध्वंस एव **मोक्षः**।

शरीरं, श्रोत्रत्वङ्नेत्रजिह्वाघ्राणमनांसीति षडिन्द्रियाणि, षण्णामिन्द्रियाणां विषयाः, षडिन्द्रियजन्यज्ञानानि, सुखदुःखे इति तन्मते **एकविंशतिदुःखानि**। शरीरादिकं दुःखजनकत्वात् दुःखमिति कथ्यते। स्वर्गादिसुखमपि नाशभयाद् दुःखकारणम्। तस्मात् दुःखमित्युच्यते।

यद्यपि न्यायमते श्रोत्र[1]मनसोर्नित्यत्वात्तयोर्नाशो न संभवति। तथापि

---

"द्वितीयाद्वै भयं भवति।" (बृ. 1-4-2.) "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति।" (क. 2-1-10.) इत्यादिभिर्भेदज्ञानस्य निन्दा च क्रियते। तस्माद्भेदज्ञानस्य साक्षाद्वा तत्त्वज्ञानद्वारा वा पुरुषार्थहेतुत्वं नास्त्येव।

किञ्च मननशब्दात् 'आत्मन इतरपदार्थेभ्यो भेदप्रतीतिरूपोऽर्थो न स्वरसतो भवति। किं तु मननपदस्य चिन्तनमित्यर्थ एव स्वारसिकोऽर्थः। वाक्यान्तरानुसारेण तु मननशब्दस्य अभेदचिन्तने पर्यवसानं भवति। केनापि प्रकारेण मननशब्दस्य 'आत्मनः इतरेभ्यो भेदचिन्तनं' इत्यर्थो न सिद्ध्यति।

**अथवा**–यदीतरपदार्थज्ञानेनैव पुरुषार्थ(मोक्ष)साधनीभूततत्त्वज्ञानं प्राप्यत इत्युच्यते। तर्हि सकलपुरुषाणां तत्त्वज्ञानप्राप्तिरयत्नतः सिद्ध्येत्। अथवा न कस्यापि सिद्ध्येत्। तथाहि—(1) यदीतरपदार्थानां सामान्यज्ञानं तत्त्व (आत्म) ज्ञाने अपेक्ष्यते। तदा सर्वपुरुषाणामितरपदार्थविषयकसामान्यज्ञानस्य सत्वात् इतरपदार्थज्ञानपूर्वकेतरपदार्थभेदज्ञानेन सर्वेषां तत्त्वज्ञानं भवितुमर्हति। (2) यदि सर्वपदार्थानामसाधारणधर्मपुरस्कारेणेतरपदार्थानां ज्ञानं तत्त्वज्ञानेऽपेक्ष्यते तदा सर्वज्ञेश्वरं विना न कस्यापि असाधारणधर्मपुरस्कारेण सकलेतरपदार्थज्ञानं संभवेत्। तस्मात्सकलेतरपदार्थज्ञानपूर्वकं आत्मनीतरपदार्थभेदज्ञानस्याभावात् सकलानात्मपदार्थभिन्नात्मज्ञानरूपतत्त्वज्ञानं न कस्यापि भवेत्।

तस्मान्नैयायिकाभिमतस्यात्मनः स्वसजातीयान्यात्मभ्यः विजातीयानात्मपदार्थेभ्यश्च भेदज्ञानं न संभवेत्। तस्मान्नैयायिकमतानुसारिणां तत्त्वज्ञानासंभवात् देहादिष्वात्मभ्रान्तेरभावो न सिद्ध्येत्। भ्रान्तिनाशाभावाद्रागद्वेषयोर्निवृत्तिर्न स्यात्। रागद्वेषानिवृत्त्या धर्माधर्मनिमित्तप्रवृत्तेरभावश्च न सिद्ध्येत्। प्रवृत्त्यभावासिद्धौ शरीरसंबन्धरूपजन्माभावश्च न सिद्ध्येत। जन्माभावासिद्धावेकविंशतिदुःखध्वंसरूपमोक्षोऽपि न सिद्ध्येत। **किन्तु** महावाक्यरूपश्रुत्यर्थभूताभेदज्ञानमेव कारणसहितसकलानर्थनिवृत्तिपूर्वकपरमानन्दप्राप्तिरूपमोक्षहेतुः।

[1] न्यायमते श्रोत्रस्याकाशरूपतामभ्युपगम्य नित्यत्वमुच्यते। **तन्न युज्यते**। (1) श्रुतौ नेत्रादीनामिव आकाशाच्छ्रोत्रस्याप्युत्पत्तिः कथिता। उत्पत्तिमतो वस्तुनो **नित्यत्वं न संभवति**।

येन रूपेण श्रोत्रमनसोर्दुःखहेतुत्वं तद्रूपं नश्यति। पदार्थज्ञानोत्पादकत्वात् श्रोत्रमनसी दुःखहेतू भवतः। मोक्षकाले श्रोत्रमनसी पदार्थज्ञानं न जनयतः। कर्णगोलकेनावच्छिन्न आकाशः श्रोत्रमित्यभिधीयते। तच्च कर्णगोलकं मोक्षकाले नास्ति। तस्मादाकाशरूपश्रोत्रेन्द्रियसत्वेऽपि गोलकाभावाज्ज्ञानं न भवति। अनया रीत्या ज्ञानजनकं यच्छ्रोत्रेन्द्रियस्य स्वरूपं तदेव दुखं, तस्यैव नाशः।

---

(2) श्रोत्रस्याकाशरूपतोक्तिरपि न संभवति। नैयायिकाः कर्णगोलकस्थमाकाशं **श्रोत्रमाहुः। तदयुक्तम्**। कर्णगोलकस्थे आकाशे सत्येव कदाचिच्छ्रवणक्रियाया मान्द्यमथवा तस्याः क्रियाया अभावो वा संपद्यते। न तथा भवितुमर्हति। तस्मात्पञ्चीकृतभूतरूपो यः कर्णगोलकवृत्त्याकाशस्तदन्यो योऽपञ्चीकृतभूतरूपाकाशः तस्य सत्वगुणांशकार्यं श्रोत्रेन्द्रियमुत्पत्तिविनाशशालि वर्तते। तच्चानित्यम्।

(3) अथवा 'तुष्यतु दुर्जनः' इति न्यायेन श्रोत्रस्याकाशरूपत्वाभ्युपगमेऽपि तस्य नित्यत्वं न संभवति। "आत्मन आकाशः संभूतः।" (तै. ब्र. 1.) इति तैत्तिरीयवाक्यमाकाशस्योत्पत्तिं ब्रुवत्तस्या**नित्यताम्**आवेदयति। इत्थमाकाशस्यानित्यत्वे सिद्धे तदेकदेशस्य श्रोत्रस्यानित्यत्वमस्तीति कैमुतिकन्यायसिद्धम्। इति श्रोत्रस्य नित्यत्वासंभवो ज्ञेयः।

(1) एवमेव **मनसोऽपि नित्यता न युज्यते**। (1) मनसः परमाणुरूपत्वमुपगम्य तस्य नित्यत्ववादिनं, किं मनो निरवयवमथवा सावयव'मिति पृच्छेत्। मनसो निरवयवत्वे तस्मिन् मनस्यवयवरूपदेशाभावात्, मनस आत्मना सह संयोगेन जन्यस्य ज्ञानरूपगुणस्योत्पत्त्यभावाज्जगदान्ध्यप्रसङ्गः स्यात्। सावयवत्वे तस्य घटपटादेरिवानित्यता निर्विवादसिद्धा।

(2) **अथवा** यदि मनो नित्यं स्यात्तदा सुषुप्तौ विशेषविज्ञानजनकत्वरूपलिङ्गाभावगम्यो यो मनसः स्वोपादाने लयः स न भवेत्। अतोऽपि हेतोर्मनोऽनित्यमेव।

(3) **अथ यदि नैयायिको वदेत्**—'आत्ममनसोः संयोगो ज्ञानहेतुः। स च संयोगः एकस्य क्रियया वोभयोः क्रियया वा भवेत्। विभावात्मनि क्रिया न कदापि भवति। मोक्षकाले वा सुषुप्तिकाले वा भोगोन्मुखस्यादृष्टस्याभावात् मनस्यापि क्रिया न भवति। तस्मादात्ममनसोः संयोगाभावात् विशेषविज्ञानं न भवति' इति।

**तदपि न सङ्गच्छते**—विभुपदार्थेन सह सर्ववस्तूनां क्रियां विनैव सदा संयोगोऽस्ति। **यथा** व्यापकेनाकाशेन सह क्रियारहितपर्वतवृक्षपाषाणादीनां सदा संयोगेऽस्ति। **तथा** मोक्षसुषुप्त्यादिषु क्रियारहितस्यापि मनसो विद्यमानतया तस्य विभुना आत्मना सह संयोगस्य सिद्धत्वादवश्यं विशेषविज्ञानोत्पत्तिः स्यादेव। न तु तथोत्पद्यते। तस्मात् सुषुप्त्यादिकालेऽवश्यं मनसो लयः। पुनरपि जाग्रति मनस उत्पत्तिश्च भवतीत्यङ्गीकार्यम्। **इत्थमुत्पत्तिनाशवदेव मनः**। तस्य नित्यत्वकथनं प्रलाप एव॥

आत्मना सह मनसः संयोगेन ज्ञानमुत्पद्यते। स च संयोगो न्यायसिद्धान्तेऽन्यतरस्य क्रियया अथवोभयोः क्रियया भवति। यथा (१) वृक्षविहगयोः संयोगः विहगस्यैकस्यैव क्रियया भवति। (२) द्वयोर्मेषयोः संयोगस्तूभयक्रियया भवति। तथा विभावात्मनि क्रिया न कदापि भवति। मोक्षकाले मनस्यपि क्रिया न भवति। तस्मात्संयोगवन्मन एव मोक्षकाले नास्ति।

---

१. (1) आत्मना सह मनसः संयोगेन यदि ज्ञानं भवति तदा सुषुप्तौ तादृशसंयोगाभावात्, सुप्तोत्थितस्य जागरणकाले जायमानस्य सुखाज्ञानयोः स्मरणरूपस्य ('सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इत्याकारकस्य ज्ञानस्य, मूलभूतानुभवो न सिद्ध्येत्।

(2) किञ्च, आत्मना सह मनसः संयोगेन यदि ज्ञानं जायेत तदा न्यायमते मनसोऽणुपरिमाणत्वात् तत्संयोगाज्जायमानज्ञानस्य शरीरैकदेशवर्तित्वमेव स्यात्। कृत्स्नशरीव्यापित्वं न भवेत्। तथा सति कण्टकवेधादिजन्यपीडायाः कृत्स्नशरीरावच्छेदेनानुभवो न स्यात्।

(3) सिद्धान्तपक्षे इव मनसः कृत्स्नशरीरव्यापित्वाभ्युपगमेन कृत्स्नशरीरव्यापिपीडानुभवासंभवरूपदोषपरिहारेऽपि सुषुप्तौ सुखाज्ञानयोर्यत् सामान्यज्ञानं भवति तस्यासंभव आपतेत्।

तस्मात् 'आत्मना सह मनसः संयोगेन ज्ञानमुत्पद्यत' इत्येतदसङ्गतमेव। किन्तु आत्मनः स्वरूपभूतमुत्पत्तिनाशरहितं ज्ञानं नित्यं' इत्यभ्युपगम एवोचितः'

"सत्यं ज्ञानमनन्तं ब्रह्म" (तै. ब्र. 1.), "प्रज्ञानं ब्रह्म" (ऐ. 3. 1.), "विज्ञानमानन्दं ब्रह्म" (बृ. 3. 9. 27. 7.), "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्" (बृ. 4. 3. 30.), "प्रज्ञानघनः" "चिदेकरसो ह्यात्मा"—

"शुद्धचैतन्यरूपात्मा सर्वसिद्धिविवर्जितः।
नामरूपविहीनात्मा परसंवित्सुखात्मकः॥"
"भावाभावकलाविनिर्मुक्ता चिद्विद्याऽद्वितीया ब्रह्मसंवित्तिः।
सच्चिदानन्दलहरी महात्रिपुरसुन्दरी॥" (बह्वृचोपनिषत् 5)
"सैषा चिदविनाशात्मा स्वात्मेत्यादिकृता भिदा।
सैषा चिदमलाकारा निर्विकल्पा निरास्पदा॥
महाचिदेकैवेहास्ति महासत्तेति चोच्यते॥"

"सदानन्दचिन्मात्रम्"। "स्वप्रकाशमानन्दघनम्"। अनिर्वचनीयं ज्योतिः"—

"सर्वविलक्षणं निर्गुणं निरुपप्लवं ज्योतिराभ्यन्तरम्"
"ज्योतिरेकमद्वितीयं सर्वकल्पनातीतम्।
ध्रुवमक्षरमेकं सदा चकास्ति सच्चिदानन्दम्॥"

इत्यादिश्रुतिभ्यः। कार्यकारणगुणगुणिक्रियाक्रियावज्जातिव्यक्त्यादीनां भेदकल्पनाऽत्यन्तवेदबाह्येति "अपरिग्रहाच्चात्यन्तमनपेक्षा" (ब्र. 2. 2. 17) इत्यादौ सूत्रभाष्यकारादिभिः प्रदर्शितम्।

(३५७) त्वङ्मनसोः संयोगेनात्मनि ज्ञानमुत्पद्यते आत्मा स्वभावतो जड इत्येकदेशिनैयायिकमतम्—

कश्चनैकदेशी[1] त्वचा सह मनसः संयोगं ज्ञानस्य कारणमाह। आत्मना सह संयोगं न कारणमाह। सुषुप्तौ पुरीतन्नामकनाड्यां मनः प्रविशति। अतस्त्वचा सह मनसः संयोगो नास्ति। तस्मात्सुषुप्तौ ज्ञानं नोत्पद्यते। एतन्मते त्वचा सह संयुक्तं मन एव ज्ञानद्वारा दुःखहेतुत्वात् दुःखमित्युच्यते। न तु केवलं मनः। मोक्षे त्वचो नाशात्तया सह संयोगाभावाज्ज्ञानं नोत्पद्यते। मोक्षकाले मनोऽस्ति। परं तु दुःखहेतुज्ञानजनकं त्वक्संयुक्तं यन्मनस्तस्य संयोगनाशान्नाशो भवति।

(११) इत्थं मोक्षदशायां परात्मनो भिन्नो दुःखरहितो व्यापक आत्मा जडरूपस्तिष्ठति। ज्ञानगुणेन ह्यात्मा प्रकाशते। जीवस्य सर्वं ज्ञानमिन्द्रियजन्यमेव; न नित्यम्। तच्चेन्द्रियजं सर्वं ज्ञानं मोक्षकाले नष्टम्। तस्मात्प्रकाशरहितो जडरूप आत्मा मोक्षदशायां वर्तत इति न्यायसिद्धान्तः।

---

१. कश्चन नैयायिकैकदेशी त्वचा सह मनसः संयोगं ज्ञानस्य हेतुमाह। **तन्न युक्तम्—(1) यथा** 'मनसा सहात्मनः संयोगो ज्ञानहेतुः' इत्यत्र न किमपि प्रमाणमस्ति। **तथा** 'त्वचा सह संयोगो ज्ञाहेतुः' इत्यत्रापि श्रुत्यादिरूपं किञ्चिदपि प्रमाणं नास्ति।

(2) प्रमाणासिद्धस्वकपोलकल्पितवस्त्वभ्युपगमे।

"मृगतृष्णांभसि स्नातः खपुष्पकृतशेखरः।
एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः॥"

इत्यादिवाक्यार्थोऽप्यङ्गीकार्यो भवेत्। तस्मात्त्वचा सह मनसः संयोगो न ज्ञानहेतुः।

(3) सुषुप्तौ त्वचा मनसः संयोगाभावेऽपि प्रज्ञावतां बुद्ध्याद्यगम्यं सुखाज्ञानयोः सामान्यज्ञानं भवति। तन्न स्यात् त्वङ्मनसोः संयोगस्य ज्ञानहेतुत्वाभ्युपगमे। तस्मात् त्वङ्मनसोः संयोगो न ज्ञानकारणम्। किन्तु 'आत्मनः स्वरूपमेव ज्ञानम्' इति श्रुतिसिद्धोऽर्थोऽङ्गीकर्तुमुचितः।

२. न्यायमते 'आत्मा विभुर्जडश्च' इत्यङ्गीकृतम्। **तदेतच्छ्रुतिविरुद्धम्।** "अत्रायं पुरुषः स्वयं ज्योतिर्भवति।" (बृ. 4-3-9-14) योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः।" (बृ. 4-3-7.) "सत्यं ज्ञानमनन्तं ब्रह्म।" (तै. ब्र. 1.) "प्रज्ञानं ब्रह्म।" (ऐ. 3-1.) इत्याद्यनेकश्रुतिवाक्यैर्व्यापकस्यात्मनश्चेतनस्वरूपत्वं श्रूयते। युक्तयोऽप्यन्ते मूले ३६९-३७२. आवर्तेषु वर्णयिष्यन्ते। अतः 'आत्मा स्वरूपतो जडः' इति **नैयायिकोक्तिरसङ्गता।**

### (३५८) न्यायमते आत्मनोऽनेकत्वव्यापकत्वयोरुपपादनम्—

न्यायमते पूर्वोक्तरीत्या सुखदुःखबन्धमोक्षा आत्मनः संभवन्ति। अतः आत्माऽनेकः सर्वत्र व्यापकश्च। सकलाल्पपदार्थैः सह संयोग एव न्यायमते व्यापकस्य लक्षणं न तु सजातीयविजातीयस्वगतभेदशून्यत्वम्। न्यायमते यद्यप्यात्मनो निरवयवत्वात् स्वगतभेदशून्यत्वमात्मनि संभवति। तथापि सजातीयविजातीयभेदशून्यत्वं न संभवति। किन्तु सजातीयद्वितीयात्मनो भेदः आत्मन्यस्ति। तथा विजातीयघटपटादिरूपानात्मभेदश्चात्मन्यस्ति। तस्मात्सजातीयविजातीयस्वगतभेदशून्यत्वं न व्यापकस्य लक्षणम्। किन्तु सर्वाल्पपदार्थसंयोगित्वमेव तल्लक्षणम्।

अत्रैवं यदि कस्यचित् शङ्का स्यात्—'न्यायमते आत्मवत् आकाशकालदिशोऽपि व्यापकाः। परमाणुश्च सूक्ष्मो निरवयवश्च। तादृशपरमाणुना सह सर्वव्यापकपदार्थानां संयोगो न युज्यते। परमाणुर्यदि सावयवः स्यात्तदा तस्य क्वचिद्देशे आत्मनः संयोगो देशान्तरेषु चेतरव्यापकपदार्थानां संयोगश्च भवेत्। न तु परमाणुः सावयवः। किन्तु निरवयवोऽतिसूक्ष्मश्च। तस्मात्परमाणुना सहैकस्मिन्नेव देशे सकलव्यापकपदार्थानां संयोगो वक्तव्यः। स च न घटते। एकस्य व्यापकपदार्थस्य संयोगेन निरुद्धे स्थाने व्यापकपदार्थान्तरसंयोगस्यासंभवात्। तस्मान्नानापदार्थानां व्यापकत्वं न युज्यते। तस्मादेकस्यैव पदार्थस्य व्यापकत्वाङ्गीकारो युक्तः इति' इति। तदेवं समाधानं नैयायिको ब्रूयात्—

'सावयववस्तुनः संयोग एवान्यवस्तुसंयोगं प्रति विरोधी। (१) यस्मिन् भूमिप्रदेशे हस्तस्य संयोगो भवति तत्र पादस्य संयोगो न संभवेत्।

---

१. सिद्धान्ते 'सजातीयविजातीयस्वगतभेदाभावो' व्यापकस्य लक्षणम्। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्।" (छा. 2-1-6) इति छान्दोग्यश्रुत्यनुसारीदं लक्षणम्। अत्र **एक**पदेन सजातीयभेदो निषिध्यते। **एव**कारेण विजातीयभेदनिषेधो भवति; **अद्वितीय**पदेन स्वगतभेदनिषेधश्च भवति। एतल्लक्षणानुसारेण देशकालवस्तु—कृतपरिच्छेदरहितत्वमपि **व्यापकस्य लक्षणमिति** सिद्धम्।

(२) **एक**पदेन देशकृतोऽन्तो निषिद्धः। तथाहि यद्वस्तु परिच्छिन्नं तन्नाना भवति। यद्व्यापकं तत् नाना न भवति, किन्त्वाकाशवदेकमेव। यस्मादात्मा एकस्तस्मान्न परिच्छिन्नः। किन्तु व्यापकः। तस्मादेवात्मा देशकृतान्तरहितो भवति। न्यायमते तु नाना व्यापका अङ्गीक्रियन्ते। तदद्वैतश्रुतेर्वक्ष्यमाणयुक्तेर्लोकानुभवस्य च विरुद्धम्। उक्तश्रुतिगतैकपदेनात्मनो देशकृतोऽन्तः निषिद्ध्यते।

निरवयववस्तुसंयोगस्तु न स्थानस्य निरोधकः, तस्मात्स नान्यसंयोगस्य विरोधी। सोऽयमनुभवसिद्धोऽर्थः। (२) घटे यत्र देशे आकाशस्य संयोगोऽस्ति तत्रैव देशे कालदिशोरपि संयोगोऽस्ति। घटस्य यः कोऽपि देशो यदि आकाशकाल-दिग्भ्यो बहिः स्यात् तस्मिन् देशे आकाशकालदिशां संयोगो न स्यात्। किन्तु न तथाऽस्ति घटादीनां आकाशकालदिग्भ्यो बहिर्भूतः कश्चन देशः। किन्तु सकलपदार्थानां सर्वोऽपि देशः आकाशकालदिक्ष्वेव वर्तते। तस्मात्सर्व-पदार्थानां सर्वेष्वपि देशेष्वाकाशकालदिशां संयोगोऽस्त्येव।

इत्थं परमाणावप्येकस्मिन्नेव देशे नानानिरवयवव्यापकपदार्थानां संयोगो युक्त एव। नात्र कश्चिदपि दोषोऽस्ति। तस्मादात्मा नाना भवति। सर्वत्र व्यापकश्च भवति।' इति।

**(३५९) 'आत्मा व्यापकः, अनेकः, कर्ता, भोक्ता च' इति न्यायमतस्य निराकरणम्**—सकलात्मनां सकलपदार्थैः सह संयोगोऽस्तीति न्यायमतम्। नानात्मनां अव्यापकैः परिच्छिन्नैः सकलैरपि देहेन्द्रियमनोभिः परमाणुभिश्च संयोगोऽस्तीति नैयायिकमतं न सङ्गच्छते। तथाहि व्यापकानां नानात्मनामङ्गीकारे सर्वशरीरैः सर्वेषामप्यात्मनां संयोगोऽङ्गीकार्यः। तदा चेदं शरीरमस्यैवात्मनो नेतरस्यात्मन इति निश्चायकप्रमाणाभावात् एकैकस्यात्मनः सर्वाण्यपि शरीराणि संबन्धीनीत्यापतेत्। यस्य कर्मणा यच्छरीरमारब्धं तदेव शरीरं तदात्मसंबन्धि' इति व्यवस्थाऽपि न युज्येत। यतो येन शरीरेण यत् कर्म कृतं तेनापि शरीरेण सकलात्मनां संबन्धोऽभूत् तस्मात्कर्मापि सकलात्मसंबन्ध्येव भवेत्। न त्वेकात्ममात्रसंबन्धि भवेत्।

यस्यात्मनो मनस्सहितं यच्छरीरमभूत् तस्यात्मनः तदेव शरीरमित्युक्ति-रपि न समीचीना।

(1) शरीरेणेव मनसापि सकलात्मनामपि संबन्धस्य साधारण्यादिदं

---

(२) निश्चयवाचकेन **एवकारेणा**त्मनो निरपेक्षव्यापकत्वं बोध्यते। तेन च काल-कृतोऽन्तः प्रतिषिद्ध्यते।

(३) **अद्वितीयपदेन**—भेदप्रतियोग्यन्यवस्तुनिषेधादात्मनि वस्तुकृतोऽप्यन्त प्रतिषिद्धः। इत्थं सिद्धान्तोक्तमुभयविधमपि व्यापकत्वलक्षणं श्रुत्यनुसारि। व्यापकत्व-निर्वचनं श्रुत्यैव प्रदर्शितम्—"यत्र नान्यत्पश्यति नान्यच्छृणोति, नान्यद्विजानाति स भूमा" (छा. 7-24-1.) इति। वस्तुकृतपरिच्छेदाभावसिद्ध्यैव देशकालकृतपरिच्छेदा-भावोऽप्यर्थात्सिद्धः, देशकालयोरपि वस्त्वन्तर्गतत्वात्।

मनोऽस्यैवात्मनः इति निश्चयेऽपि प्रमाणं नास्ति। किं तु सकलात्मनां सकलान्यपि मनांसि संबन्धीन्येव भवन्ति। तथैवेन्द्रियाण्यपि सकलात्म-संबन्धीन्येव भवन्ति।

(2) बाह्यपदार्थेषु 'अयं पदार्थो मदीयः, अयमन्यदीयः' इति व्यवहारः शरीरनिमित्तकः। प्रदर्शितरीत्या सर्वशरीराणां सर्वात्मसाधारण्यात् सर्वेऽपि बाह्याः सर्वात्मसंन्धिन एव भवन्ति।

**अथ यदि नैयायिको ब्रूयात्**—'यस्यात्मनो यस्मिन् शरीरे अहं-ममबुद्धी' भवतस्तस्यात्मनस्तदेव शरीरम्। अहमिति बुद्धिरेकैव। तथा ममेति बुद्धिरप्येकैव। तस्मात्सर्वेष्वात्मसु सा बुद्धिर्न भवेत्; किन्त्वेको धर्मः एक-धर्म्याश्रित एव भवेत्। तस्मादेकस्यैवात्मनः संबन्धी भवति। तथा च यस्या-त्मनो यत् शरीरं संबन्धि भवति तेन शरीरेण संबद्धानि मनइन्द्रियबाह्यवस्तूनि तदात्मसंबन्धीन्येव। तस्माद्व्यापकनानात्मनामङ्गीकारेऽपि न दोषः' इति।

**सापि वार्ताऽसङ्गतैव**—अहमिति बुद्धिरेकस्मिन् शरीरे एकस्यैवा-त्मनो भवतीत्येतत् न्यायमते न युज्यते। किन्तु सर्वेषामप्यात्मनामेकस्मिन् शरीरे अहमिति बुद्धिर्भवितुमर्हति। तथाहि—न्यायमते बुद्धिर्नाम ज्ञानम्। तच्च ज्ञानमात्ममनसोः संयोगेनोत्पद्यते। मनसा सह संयोगः सर्वेषामात्मनामस्ति। अतश्च मनसा संयोगेन यदा एकस्मिन् शरीरे एकस्यात्मनो अहंबुद्धिरुदेति, तदा सर्वेषामप्यात्मनां अहंबुद्धिरुदेतुमर्हति।

**अथ यद्येवं प्रत्यवस्थीयते**—'यद्यपि मनसा सह संयोगः सर्वात्म-साधारणः। तथापि यस्मिन्नात्मनि ज्ञानजनकादृष्टमस्ति। तस्यैवात्मनोऽहंबुद्धि-रुत्पद्यते' इति। **तदप्यसङ्गतमेव**। तथाहि—यो व्यापकनानात्माङ्गीकर्ता तस्य मते एकशरीरस्थशुभाशुभकर्मभ्यां तच्छरीरसंबद्धसर्वात्मनामप्यदृष्टोदयोऽव-श्यमङ्गीकर्तव्यः। इयं वार्ता पूर्वमेवोक्ता। तस्माद्व्यापकनानात्माङ्गीकारे एक-स्मिन् शरीरे सर्वेषामप्यात्मनां सुखदुःखभोगापत्तिरपरिहार्या। न तु तथा-स्त्यनुभवः। तस्मात् 'आत्मा व्यापको, नाना, कर्ता, भोक्ता च' इति **न्याय-सिद्धान्तो न समीचीनः।**

**(३६०) अन्तःकरणमेव कर्तृ भोक्तृ च। तच्चान्तःकरणं नाना मध्यमपरिमाणं चेति वेदान्तसिद्धान्तकथनम्**—

---

१. न्यायमतोक्तं व्यापकत्वलक्षणं श्रुतियुक्तिलोकानुभवविरुद्धम्।

वेदान्तसिद्धान्ते त्वन्तःकरणमेव कर्तृ भोक्तृ च। तच्चान्तःकरणं नाना। तच्चान्तःकरणं न व्यापकं, नाप्यणु। किन्तु शरीरपरिमाणकम्। दीपप्रकाशवदन्तःकरणं बृहच्छरीरप्राप्तौ विकसति। अल्पशरीरप्राप्तौ सङ्कुचति च। अयमर्थः सिद्धान्तबिन्दौ मधुसूदनस्वामिभिः प्रतिपादितः। यस्यान्तःकरणस्य येन शरीण संबन्धो भवति तस्यान्तःकरणस्य तस्मिन् शरीरे भोगो भवति।

अन्तःकरणस्य व्यापकत्वस्वीकारे सर्वशरीराणि सर्वसाधारणानि भवेयुः। भोगोऽपि सर्वेषामापद्येत। अन्तःकरणस्य व्यापकत्वास्वीकारे नैष दोषो भवति। अन्तःकरणस्याणुपरिमाणत्वस्वीकारे शरीरैकदेशेऽन्तःकरणस्य स्थितिर्वाच्या। **तथोक्तिरप्यसङ्गता।** तथा सति युगपदेव पादे मस्तके च कण्टकवेधे सति द्वयोरपि स्थानयोर्युगपदेवानुभूयमाना पीडा नोपपद्येत। यद्यन्तः-करणमणु तदा तदेकस्मिन् काले एकस्मिन्नेव स्थाने स्यात्। ततश्च यस्मिन् स्थानेऽन्तःकरणं स्थितं तत्रैव पीडानुभवो युज्येत। न तु द्वयोः स्थानयोः युगपदेव पीडानुभवस्य युक्तिरस्ति।

तस्मादन्तःकरणं नाणु नापि व्यापकम्। किंतु शरीरसमानपरिमाण-कम्। अतो न कोऽपि दोषः। अणुव्यापकाभ्यां यद्विलक्षणं **तन्मध्यमपरि-माणक**मिति कथ्यते।

### (आ. ३६१-३६२) आत्मनो मध्यमपरिमाणत्ववादिमतनिरा-करणम्—

### (३६१) आत्मनो मध्यमपरिणत्ववादिनैयायिकमतकथनम्—

न्यायमते केचन नवीना एवमाहुः—(१) आत्मा नाना, कर्ता, भोक्ता च। न तु व्यापकः। अतो न भोगसाङ्कर्यम्। (२) नाप्यणुरात्मा। अतः उभयत्र कण्टकवेधजन्यपीडानुभवासंभवदोषोऽपि न। किन्तु **यथा** वेदान्तिमते अन्तःकरणं मध्यमपरिमाणं तथा आत्मापि मध्यमपरिमाणो भवति। तस्मिन्नात्मनि चतुर्दश गुणाः सन्ति। इति।

### (३६२) पूर्वोक्तमतनिराकरणम्—

---

१. **यथा** नानाघटानां व्यापकत्वाङ्गीकारो निष्फलस्त**था** प्रतिशरीरं कर्तृभोक्तृ-रूपनानात्मनां व्यापकत्वाभ्युपगमो निष्फलः। **अथवा** नानान्तःकरणाभ्युपगमेनैव भोगा-साङ्कर्यसिद्धेर्व्यापकस्यात्मनो नानात्वाङ्गीकारो निष्प्रयोजनः।

**अयमपि पक्षो न समीचीनः** । (१) आत्मनः सङ्कोचविकासशालित्वाभ्युपगमे दीपप्रभेवात्मापि विकारी विनाशी च स्यात् । ततश्च मोक्षप्रतिपादकशास्त्रस्य मोक्षसाधनानां च वैयर्थ्यं भवेत् । (२) मध्यमपरिमाणत्वमात्मनोऽङ्गीकृत्य संकोचविकासयोरनङ्गीकारे 'आत्मा केन शरीरेण समानपरिमाणः' इत्यत्र निश्चायकप्रमाणाभावः । (३) आत्मनः मनुष्यशरीरसमानपरिमाणत्वाङ्गीकारे, यदा आत्मा हस्तिशरीरमाप्नोति तदा कृत्स्ने शरीरे आत्मा न भवेत् । ततश्च यत्र देशे हस्तिन आत्मा नास्ति तत्र पीडानुभवो न स्यात् । (४) यदि हस्तिशरीरसमानपरिमाण आत्मेत्यङ्गीक्रियते, तदा हस्तिशरीरादपि बृहच्छरीरं यदात्मा प्राप्नोति तदा तस्य शरीरस्यैकदेशे पूर्वोक्तरीत्या पीडानुभवो न स्यात् । सर्वशरीरापेक्षया बृहत्परिमाणकं न कस्यचिदपि शरीरमस्ति । येन समानपरिमाणक आत्मा अभ्युगम्येत । (५) सर्वशरीरापेक्षया विराट्च्छरीरं बृहत् । आत्मनो विराट्च्छरीरसमानपरिमाणकत्वाङ्गीकारे विराट्च्छरीरे सर्वशरीराणामन्तर्भूतत्वात् सर्वेषामात्मनां सर्वैः शरीरैः संबन्धः सिद्धः । ततश्च पूर्वोक्तो दोषोऽवस्थित एव ।

**किञ्च** 'यद्वस्तु मध्यमपरिमाणं तदनित्यं, शरीरवत्' इति नियमोऽस्ति । तस्मादात्मापि मध्यमपरिमाणत्वादनित्यो भवेत् । वेदान्तसिद्धान्ते त्वन्तःकरण ज्ञानेन नश्यति । तस्मादन्तःकरणमनित्यम् । अन्तःकरणस्य मध्यमपरिमाणत्वाङ्गीकारे न दोषोऽस्ति । इत्थं नवीनतार्किकमतमप्यसमीचीनमेव ।

### (३६३) आत्मनोऽणुपरिमाणत्ववादिमतनिराकरणम्—

**अन्ये केचन नैयायिका** 'आत्मा नाना अणुपरिमाणश्च' इत्याहुः । **सापि वार्ता न युज्यते** । (१) आत्मा कर्ता भोक्ता चेत्यङ्गीकारे अन्तःकरणस्याणुत्वपक्षे यो दोष उक्तः सोऽत्रापि प्रसज्येत । (२) आत्मा कर्ता भोक्ता चेत्यनङ्गीकारे आत्मनो नानात्वाङ्गीकारो निष्फलो भवति । व्यापकस्यैकस्यात्मन एव सर्वशरीरवृत्तित्वाङ्गीकार एव श्रेयान् ।

आत्मनः कर्तृत्वभोक्तृत्वानङ्गीकारे नैयायिकस्य स्वसिद्धान्तत्यागोऽपि भवति । ज्ञानसुखदुःखधर्माधर्मादयः आत्मनो धर्मा इत्यणुवादिसिद्धान्तः । तस्मादात्मनोऽणुत्वाभ्युपगमे यस्मिन् शरीरदेशे आत्मा नास्ति स देशो मृतसमानो भवेत् । तत्र पीडाद्यनुभवो न स्यात् ।

(३६४) आत्मनोऽणुत्ववादिन आक्षेपः, तत्समाधानं, आत्मनोऽणुत्ववाचिश्रुतितात्पर्यं च ।

अथ यद्युच्यते 'यद्यप्यात्मा शरीरस्यैकदेश एव वर्तते । **तथापि** कस्तूरिकामोदवदात्मनो ज्ञानं कृत्स्नं शरीरं व्याप्नोति । ततश्च कृत्स्ने शरीरे अनुकूलप्रतिकूलयोः संबन्धस्यानुभवो भवतीति' ।

तदप्ययुक्तमेव । यत्र गुणिद्रव्यमस्ति तत्रैव गुणो वर्तते । तथा आत्मनो ज्ञानमप्यात्मनोऽन्यत्र न स्यात् । कस्तूरिकायाः सूक्ष्मो भागः यावन्तं देशं व्याप्नोति तावन्तमेव देशं कस्तूरिकामोदो व्याप्नोति । तस्मात्कस्तूरिकादृष्टान्तोऽत्र न घटते । अतश्च 'आत्मा अणुः' इति पक्षोऽयुक्त एव ।

क्वचिच्छ्रुतौ 'आत्मा अत्यन्ताणोरप्यणुः' इति यदुच्यते तदात्मनो दुर्ज्ञेयत्वाभिप्रायेणोक्तम् । **यथा** अत्यन्ताणुवस्तूनां ज्ञानं मन्ददृष्टीनां पुरुषाणां न संभवति । **तथा** बहिर्मुखानां पुरुषाणामात्मज्ञानं न भवति । तस्मादणुसमान आत्मा इत्येव श्रुतेस्तात्पर्यं; न 'अणुपरिमाण' इति । "महतो महीयान् ।" (क. 1-2-20; श्वे. 3-20), "ज्यायानाकाशात् ।" "महान्तं विभुमात्मानम् ।" (क. 1-2-20), "स एषोऽनन्तोऽपर्यन्तः ।" इत्यादिना बहुषु स्थलेषु श्रुत्यैवात्मनो व्यापकत्वप्रतिपादनात्[1] । तस्मादात्मा नाणुपरिमाणः ।

एवं च 'आत्मा व्यापको नाना च ।' 'आत्मा मध्यमपरिमाणो नाना च ।' आत्मा अणुपरिमाणो नाना च इत्युक्तयोऽत्यन्तमसङ्गताः ।

(आ. ३६५-३६७) सिद्धान्तप्रदर्शनम्—

(३६५) आत्मा एको व्यापकः । सुखादयोऽन्तःकरणधर्माः अन्तःकरणोपहितात्मनि कल्पिताः—

पारिशेष्यात्[2] आत्मा एको व्यापकश्च । आत्मनि धर्माधर्मसुखदुःख-

१. "अणोरणीयान् महतो महीयान् ।" (क. 1-2-20; श्वे. 3-20) इति श्रुतेरयमाशयः—(1) **पृथिव्यपेक्षया** जलं सूक्ष्मं व्यापकं च । (2) **जलात्तेजः** सूक्ष्मं व्यापकं च । (3) **तेजसो** वायुः सूक्ष्मो व्यापकश्च । (4) **वायोराकाशः** सूक्ष्मो व्यापकश्च । (5) **आकाशान्माया** सूक्ष्मा व्यापिका च । (6) **मायापेक्षया** आत्मा सूक्ष्मो व्यापकश्च । इत्येवं श्रुतिष्वात्मनः सर्वापेक्षया सूक्ष्मत्वं व्यापकत्वं च वर्ण्यते । अयमर्थः उपदेशसाहस्रीग्रन्थे भगवत्पादैरुक्तः । तथा च 'आत्मा अणुः' इत्यङ्गीकारो निष्फलः ।

२. प्रसक्तानां बहूनां मध्ये इतरनिषेधे सति यदवशिष्यते तद्विषयकनिश्चयः **पारिशेष्यमित्युच्यते** । "प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गात् शिष्यमाणे संप्रत्ययः" इति (प. चि. 245 श्लोकव्याख्या) ।

बन्धमोक्षाणामङ्गीकारे केषाञ्चित् सुखं केषाञ्चिद्दुःखं, केषाञ्चिद्बन्धः केषाञ्चिन्मोक्षश्चेति व्यवहारो न सिद्ध्येत्। अतो धर्मादयो बुद्धेर्धर्माः।

**यद्यपि** बुद्धेर्जडत्वात्तत्रापि धर्मसुखादयो न युज्यन्ते **तथापि** तेषामात्मधर्मत्वं न संभवतीत्यभिप्रायेण बुद्धिधर्मत्वोक्तिरिति ज्ञेयम्। 'ते बुद्धेर्धर्मा इति नाभिप्रायः।

गुहाधिकरणभाष्यानुसारीदं वाक्यम्। तथा च "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वम्। अनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञः। तावेतौ सत्त्वक्षेत्रज्ञौ इति। सत्वशब्दो जीवः। क्षेत्रज्ञशब्दः परमात्मेति यदुच्यते। तन्न। सत्वक्षेत्रज्ञशब्दयोरन्तःकरणशारीरपरतया प्रसिद्धत्वात्। तत्र चैव व्याख्यातत्वात्—'तदेतत्सत्त्वं, येन स्वप्नं पश्यति। अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः। तावेतौ सत्त्वक्षेत्रज्ञौ" इति। "नेयं श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्वं वक्ष्यामीति प्रवृत्ता। किन्तर्हि? चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मस्वभावतां च वक्ष्यामीति। तदर्थं सुखादिविक्रियावति सत्वे भोक्तृत्वमध्यारोपयति। इदं हि कर्तृत्वं भोक्तृत्वं च सत्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृतं कल्प्यते। परमार्थतस्तु नान्यतरस्यापि संभवति। अचेतनत्वात्सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य। अविद्याप्रत्युपस्थापितस्वभावत्वाच्च सत्त्वस्य सुतरां न संभवति। तथा च श्रुतिः—"यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्" (बृ. 4. 3. 31) इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहारं दर्शयति। "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" (बृ. 4. 5. 15) इत्यादिना च विवेकिनः कर्तृत्वादिव्यवहाराभावं दर्शयति।" (ब्र. सू. 1. 2. 12. सूत्रस्थभाष्यम्) इति।

बुद्धिः सुखादयश्चात्मन्यध्यस्ताः। (१) यद्यत्राध्यस्तं तत्तत्र न **परमार्थतोऽस्ति**। यथा रज्ज्वाद्यध्यस्तं सर्पादि न परमार्थतो रज्ज्वादावस्ति। **तथा** बुद्धिसुखादिकं नात्मनि विद्यते। (२) अध्यस्तं वस्तु **न कस्यचिदप्याश्रयो** भवति। अतो बुद्धिरपि न सुखाद्याश्रयः। परन्तु (१) अज्ञानं **शुद्धचैतन्येऽ**ध्यस्तम्। (२) अन्तःकरण**मज्ञानोपहिते चैतन्ये**ऽध्यस्तम्। (३) **अन्तःकरणोपहिते** धर्माधर्मौ, सुखदुःखे, बन्धमोक्षौ चेत्येतेऽध्यस्ताः। इत्थमात्मनो धर्माधर्माद्यधिष्ठानत्वेऽन्तःकरणस्योपाधित्वात् धर्माधर्मादयोऽन्तःकरणस्य धर्मा इति व्यपदिश्यन्ते।

### (३६६) धर्मादयोऽन्तःकरणविशिष्टात्मनि न कल्पिताः—

धर्मादयोऽन्तःकरणविशिष्टात्मन्यध्यस्ता इति न युज्यते। विशेषण-सहितं हि **विशिष्ट**मित्यभिधीयते। धर्मादेरध्यासाधिष्ठानस्यात्मनोऽन्तःकरणं विशेषणमित्यङ्गीकारे अन्तःकरणमपि धर्मसुखादेरधिष्ठानं भवेत्। तन्न युज्यते। मिथ्यावस्तु नाधिष्ठानं भवेत्। तस्मादात्मनि धर्माद्यध्यासं प्रत्यन्तःकरणं न विशेषणं भवति। किन्तूपाधिर्भवति। **उपाधेरयं स्वभावः**—यः उपाधिः स स्वयं तटस्थः सन् यावति देशे स्वयमस्ति तावति देशे स्थितं वस्तु बोधयति। **विशेषणस्यायं स्वभावः**—यत् विशेषणं तत् यावति देशे स्वयमस्ति तावति देशे स्थितं वस्तु स्वेन सहैव बोधयति। विशेषणव**द्विशिष्टमिति,** उपाधिम-**दुपहित**मिति चोच्यते।

इत्थमन्तःकरणविशिष्टस्थितधर्मादेरध्यस्तत्वे यत्र देशेऽन्तःकरणमस्ति तद्देशस्थितचैतन्यभागः अन्तःकरणं चेत्युभयमप्यधिष्ठानं भवेत्। तत्रान्तः-करणस्य स्वयमप्यध्यस्तत्वादधिष्ठानत्वं न भवितुमर्हति। अनेनाभिप्रायेणान्तः-करणोपहिते धर्मादयोऽध्यस्ता इत्युच्यन्ते। तस्मात् यत्र देशेऽन्तःकरणमस्ति तद्देशस्थितचैतन्यभागमात्रेऽधिष्ठानताऽस्ति, अन्तःकरणे नास्ति' इत्युक्तिः समञ्जसा।

### (३६७) तथैवान्तःकरणमप्यज्ञानोपहिते एवाध्यस्तं नाज्ञानवि-शिष्टे। तथा चाध्यस्तधर्मादीनामधिष्ठानमात्मैव—

(१) अध्यासाधिष्ठानत्वं प्रति अन्तःकरणमुपाधिर्भवति। तस्मात्सुख-दुःखादयो बुद्धिधर्माः कथ्यन्ते। (२) अविवेकात्तु अन्तःकरणात्मनोरुभयोरपि ते प्रतीयन्ते। तस्मादन्तःकरणविशिष्टप्रमातृधर्मत्वेनोच्यन्ते। तत्र (१) धर्मादयोऽन्तःकरणस्य धर्मा भवन्ति; (२) **अथवा** अन्तःकरणविशिष्टप्रमातृ-धर्मा भवन्ति; (३) **अथवा** रज्जुसर्पवत्, स्वप्नपदार्थवत् गन्धर्वनगरवत् नभो-नैल्यवच्च न कस्यचिदपि धर्मा भवन्ति। सर्वथा आत्मनो धर्मा न भवन्ति।

यद्यप्यात्मनि तेऽध्यस्तास्**तथापि** यद्वस्तु यस्मिन्नध्यस्तं भवति तद्वस्तु तस्मिन् परमार्थतो नास्ति। तस्माद्रागद्वेषधर्माधर्मसुखदुःखबन्धमोक्षरहितः एको व्यापक आत्मास्ति। **अध्यस्तं** नाम कल्पितमित्यर्थः।

### (३६८) आत्मनः सद्रूपत्ववर्णनम्—

आत्मा सद्रूपः। यद्वस्तु ज्ञानेन बाध्यते तत् **असदि**त्युच्यते। यस्य

निवृत्तिः कालत्रयेऽपि न भवति तत् **सदित्युच्यते**। सर्वपदार्थानां तेषां निवृत्तेश्चात्मा अधिष्ठानम्। यद्यात्मन एव निवृत्तिरभ्युपगम्यते तदा तस्या अधिष्ठानान्तरं वाच्यम्। न हि शून्ये निवृत्तिः संभवति। आत्मनस्तन्निवृत्तेश्चाधिष्ठानान्तराभ्युगमे तस्याप्यधिष्ठानान्तरमभ्युपेयं भवेत्। तथा चानवस्थादोषः प्रसज्येत।

किञ्चात्मनोऽपि निवृत्तिमङ्गीकुर्वन्तमेवं पृच्छेत्—'यः कोऽप्यात्मनोनिवृत्तिमनुभवति न वा'? इति। (१) आमनो निवृत्तिरनुभूयते इत्युक्तिरसङ्गता। योऽनुभवति स एवात्मा स्वस्वरूपं च भवति। तस्य निवृत्तेर्योऽनुभवः सः स्वमस्तकच्छेदनस्य स्वेनैव योऽनुभवस्तत्तुल्यो भवेत्। तस्मादात्मनो निवृत्त्यनुभवोऽसङ्गतः। (२) अथ यद्युच्यते 'आत्मनो निवृत्तिर्भवत्येव। परं तु सा निवृत्तिर्न केनाप्यनुभूयत' इति। तर्हि 'आत्मनो निवृत्तिर्न भवति' इत्येषोऽर्थः सिद्धः। यद्वस्तु न केनाप्यनुभूयते तद्वस्तु वन्ध्यासुतसमं भवति। तस्मादात्मनो निवृत्तिर्न भवति। **अतश्चात्मा सद्रूपः**।

### (आ० ३६९-३७२) आत्मनश्चिद्रूपत्ववर्णनम्—

### (३६९) आत्मा सर्वार्थप्रकाशकः—

आत्मा चिद्रूपोऽस्ति। प्रकाशरूपं ज्ञानमेव [1]**चिदित्युच्यते**। (१) 'अप्रकाशरूप आत्मा' इत्यङ्गीकारे अनात्मजडवस्तूनां प्रकाशः कदापि न भवेत्। (२) अन्तःकरणेनेन्द्रियैश्च पदार्थानां प्रकाशकथनं तु न युज्यते। तथाहि, (१) यत्परिच्छिन्नं तत् घटादिवत् **कार्यम्**। अन्तःकरणमिन्द्रियाणि च परिच्छिन्नत्वात्—**कार्याणि**। (२) देशकालाभ्यां यस्यान्तो भवति तत् **परिच्छिन्नम्**। (३) यत् कार्यं तत् **जडम्**।

अन्तःकरणमिन्द्रियाणि च जडानि। तैः कस्यापि वस्तुनः प्रकाशो न स्यात्। तस्मादात्मैव सर्वपदार्थानां प्रकाशकः। अतश्चात्मा प्रकाशस्वरूपः।

### (३७०) आत्मा प्रकाशरूपो नेत्याक्षेपस्तत्समाधानं च—

यदि कश्चिदाचक्षीत—'आत्मा न प्रकाशरूपः। किन्तु जडः।

---

१. अलुप्तप्रकाश एव **चिदित्युच्यते**। चैतन्यस्वरूपस्य ज्ञानस्य लोपो (नाशो) नास्ति। "न हि द्रष्टुर्दृष्टेः विपरिलोपो विद्यतेऽविनाशित्वात्।" (बृ. 4. 3. 23.) इत्यादिश्रुतेः।

आत्मनि ज्ञानरूपो गुणोऽस्ति। तेन ज्ञानेनात्मानात्मनां प्रकाशो भवति' इति। तमेवं पृच्छेत्—'आत्मनो ज्ञानरूपो गुणः किं नित्य उतानित्य' इति।

(१) यदि ज्ञानं नित्यमित्युच्यते तदा आत्मनः स्वरूपमेव ज्ञानमिति सिद्धयति। तथाहि, आत्मनोऽन्यत् सर्वमनित्यमिति नियमः "अतोऽन्यदार्तम्।" (बृ. 3. 7. 25) "न तु तद्द्वितीयमस्ति" बृ. 4. 3. 23-30) इत्यादिश्रुतिभ्यः। यदि ज्ञानमात्मनो भिन्नमित्यभ्युपगम्यते तदा ज्ञानमनित्यमेव स्यात्। अतो ज्ञानस्य नित्यत्वमभ्युपगम्य तस्यात्मनो भिन्नत्वकथनं न युज्यते।

(२) यदि ज्ञानमनित्यमिति कथ्यते तदा घटादिवत् ज्ञानं जडं स्यात्। यदनित्यं वस्तु तज्जडमिति नियमः। अतो 'ज्ञानमनित्यं इति वचनमसङ्गतम्। तस्माज्ज्ञानं नित्यमेव। तच्च नित्यं ज्ञानमात्मस्वरूपमेव। अनित्यत्वाङ्गीकारे कदाचिदात्मनि ज्ञानं स्यात्कदाचिन्न स्यात्। ततश्चात्मनो भिन्नमपि ज्ञानं भवेत्। नित्यत्वाङ्गीकारे तन्न भिन्नं भवेत्।

यो गुणः स गुणिनि कदाचित्स्यात् कदाचिन्न स्यात्। यथा वस्त्रस्य नीलपीतादिगुणः कदाचिदस्ति कदाचिन्नास्ति, तद्वत्। तस्माद्यो गुणः स **आगमापायी** भवति। ज्ञानं तु नित्यत्वादागमापायि न भवति। तस्मादात्मनः स्वरूपमेव ज्ञानम्।

**(३७१) अन्तःकरणाद्यजन्यत्वाज्ज्ञानमनित्यं न भवति—**

**ज्ञानस्यानित्यत्वाभ्युगमे** इन्द्रियैर्वाऽन्तःकरणेन वा ज्ञानमुत्पद्यत इति वाच्यम्। **तन्न सङ्गच्छते**। तथाहि—सुषुप्ताविन्द्रियादीनि न सन्ति। सुखज्ञानं तूत्पद्यते। तन्नोत्पत्तुमर्हति। सुषुप्तौ सुखस्य ज्ञानानङ्गीकारे सुप्तोत्थितस्य 'अहं सुखमस्वाप्सम् इति सौषुप्तसुखस्य स्मरणं न स्यात्। यद्वस्तु पूर्वमनुभूतं तस्यैव स्मरणं भवेत्। अननुभूतस्य स्मरणं न स्यात्। सुप्तोत्थितस्य सौषुप्तसुखस्मरणस्य जायमानत्वात् सुषुप्तौ सुखस्यानुभवोऽस्ति। तादृशज्ञानोत्पादकेन्द्रियादिकं सुषुप्तौ नास्ति। तस्माज्ज्ञानं नित्यम्।

ज्ञानं विना न कदाप्यात्मा भवति। तस्माज्ज्ञानमात्मनः स्वरूपम्। **यथा** औष्ण्यं विना कदाप्यग्नेरभावादौष्ण्यमग्नेः स्वरूपमेव। **तथा** ज्ञानमप्यात्मनः स्वरूपमेव। य आगमापायी स गुणः। औष्ण्यं ज्ञानं चागमापायरहिते। तस्मात्ते क्रमेणाग्नेरात्मनश्च स्वरूपभूते। यद्वस्तु कदाचिद्भवति **कदाचिच्च न भवति तदागमापायि** भवति।

**(३७२) अन्तःकरणवृत्तेरुत्पत्तिविनाशौ स्तः, न ज्ञानस्य—**

उत्पत्तिविनाशावन्तःकरणवृत्तेर्भवतः। न ज्ञानस्य। (१) आत्मस्वरूप भूतं ज्ञानं विशेषव्यवहारहेतुर्न भवति। किन्तु ज्ञानसहिता वृत्तिर्वृत्त्यारूढं व ज्ञानं व्यवहारहेतुः। **इयमवच्छेदवादस्य रीतिः**। (२) **आभासवादे** त्वाभाससहितया वृत्त्या व्यवहारो भवति। आभासद्वारा वा साक्षाद्वृत्तिद्वार वा आत्मस्वरूपज्ञानेनैव सर्वव्यवहारः सिद्ध्यति। ज्ञानं विना तु न कोऽपि व्यवहारः सिद्ध्यति। इत्थं सर्वप्रकाशकः ज्ञानस्वरूप आत्मैव। तस्मादात्म **चिद्रूपः**।

**(आ. ३७३-३७६) आत्मा आनन्दस्वरूपः—**

**(३७३) आत्मैव आनन्दस्वरूपः। विषये आनन्दो नास्ति—**

आत्मा आनन्दस्वरूपोऽस्ति। आत्मा यद्यानन्दरूपो न स्यात्तद विषयसंबन्धात्स्वरूपानन्दस्य भानं न संभवेत्। विषये त्वानन्दो नास्तीति चतुर्थतरङ्ग एव प्रतिपादितम्।

विषये यद्यानन्दो भवेत्तदा यस्मिन् विषये कस्यचित्सुखं भवति तस्मिन्नेव विषयेऽन्यस्य दुःखमुत्पद्यमानं न घटेत। तथाहि—अग्नेः स्पर्शे नाग्निकीटस्य, सर्पदर्शनेन सर्पिण्याः, सिंहदर्शनेन सिंह्याः आनन्दो भवति अन्येषां पुरुषाणां तु दुःखमेव भवति। तन्नोपपद्येत यदि विषये आनन्दो भवेत्। **सिद्धान्ते** तु अग्निकीटस्याग्निस्पर्शेच्छा भवति। तदा तस्य चञ्चलाय बुद्धौ स्वरूपानन्दभानं न भवति। सिद्धे त्वग्निसंबन्धे क्षणमात्रमिच्छा दूरी भवति। तदा निश्चलायां तस्य बुद्धौ स्वरूपानन्दो भाति। अन्येषां पुरुषाण त्वग्निसंबन्धेच्छा न भवति, किन्तु पदार्थान्तरसंबन्धेच्छास्ति। सा च पदार्थ

---

१. अग्निकीटः = अग्न्युपजीवी कीटविशेषः।

२. यस्मादेकस्मिन्नेव विषये केषांचित्सुखमितरेषां दुःखं च भवति तस्मात् विषयः नियमेन स्वविषयकेच्छारहितानां स्वविषयकेच्छासहितानामपि पुरुषाणां सुखहेतुर्भवति। किंतु स्वविषयकेच्छासहितानां पुरुषाणां स विषयः स्वप्राप्त्या इच्छाति रस्कारद्वारा अन्तर्मुखायां वृत्तौ प्रियमोदप्रमोदपर्यायरूपात्मस्वरूपानन्दप्रतिबिम्बस्य निमि भवति। तस्माद्विषये आनन्दकारणता व्यभिचरति। **किञ्च** विषयप्राप्त्या वा एकान्तदेशस सेवनेन वा जायमानो य इच्छाया अभावः सः प्रतिबिम्बसुखस्य नियमेन कारणं भवति

आत्मा यद्यानन्दरूपो न स्यात्तदा अन्तर्मुखायां वृत्तौ य **आनन्दो** भवति स भवितुमर्हति। तस्मादात्मा **आनन्दरूपः**। अयं सर्वप्रकरणनिष्कर्षः।

न्तरेच्छा अग्निसंबन्धान्न दूरीभवति । तस्माच्चञ्चलेऽन्तःकरणेऽग्निसंबन्धादानन्दो न भवति ।

(३७४) इच्छानिवृत्तौ स्वरूपानन्दभानप्रकारनिरूपणम् । अत्रेयं शङ्का स्यात्—

'अन्तःकरणस्येच्छारूपवृत्तिर्विषयप्राप्त्या विनष्टा । निमित्ताभावान्नान्या वृत्तिरुत्पद्यते । वृत्तिं विना स्वरूपानन्दस्य भानं न स्यात् । तस्माद्विषये एवानन्दोऽस्ति' इति ।

नैषा शङ्का युज्यते—(१) इच्छारूपान्तःकरणवृत्तिर्नास्तीति सत्यम् । सत्यामपीच्छारूपवृत्तौ तत्रानन्दो न प्रकाशेत । इच्छारूपवृत्तिः राजसी । आनन्दप्रकाशः सात्त्विकवृत्तावेव स्यात् । तथापि वाञ्छितपदार्थलाभे सति तादृशविषयस्वरूपं विषयीकर्तुं ज्ञानरूपा अन्तःकरणस्य या वृत्तिरुदेति सा सात्त्विकी । "सत्त्वात् संजायते ज्ञानम्" (भ. गी. 14-1) इति सत्त्वगुणाज्ज्ञानमुत्पद्यते इति नियमः । तस्यां सात्त्विकवृत्तावानन्दो भाति । परं तु सा ज्ञानरूपा वृत्तिर्बहिर्मुखा । तस्याः पृष्ठभागस्थितान्तःकरणोपहितचैतन्यस्वरूपानन्दो यस्तस्य ग्रहणं तया वृत्त्या न स्यात् । तस्मात्तस्यां वृत्तौ विषयोपहितचैतन्यस्वरूपानन्दो भाति । तच्च विषयोपहितचैतन्यमात्मनो न भिन्नम् । तस्मादात्मानन्द एव विषये भातीति कथ्यते । तस्याः ज्ञानरूपवृत्तेरुत्पत्तौ विषयेण सह नेत्रादीनां संबन्धो हेतुः ।

(२) अथवा विषयज्ञानरूपबहिर्मुखवृत्तेरन्या काचनान्तर्मुखी वृत्तिरुत्पद्यते[1] । तस्यामन्तःकरणोपहितचैतन्यरूपानन्द एव भाति । अयमेवोत्तमसिद्धान्तः । तादृशान्तर्मुखवृत्तेरुत्पत्ताविच्छादीनामभाव एव कारणम् । इच्छादिरहितस्यैकान्ते स्थितस्योदासीनपुरुषस्य बहिर्मुखज्ञानरूपा कापि वृत्तिर्नोत्पद्यते । आनन्दभानं तु तस्य भवति । तस्मादिच्छादीनामभावरूपनिमित्तेनोत्पन्नाऽन्तर्मुखा वृत्तिरानन्दं गृह्णातीति सिद्ध्यति । तस्माद्वाञ्छितपदार्थलाभानन्तरमिच्छादीनां विरहे सति विषयज्ञानानन्तरमन्तर्मुखा वृत्तिरुत्पद्यते । तयाऽन्तःकरणोपहितानन्दो गृह्यते ।

---

१. इयमेकाग्रतायुक्ता सात्त्विकी वृत्तिः । सैव **प्रियमोदप्रमोदवृत्ति**रिति प्रोच्यते ।

तदिदं स्वरूपानन्दग्रहणं विषयज्ञानं चात्यन्तमव्यवहिततयोत्पद्येते। अत एव 'अहं विषये आनन्दमन्वभवम्' इति भ्रान्तिः पुरुषस्योपजायते। प्रथमपक्षापेक्षया अयं पक्ष उत्तमः। विषयज्ञानरूपया वृत्त्या अन्तःकरणोपहितानन्दस्य प्रकाशो न युज्यते। विषयज्ञानरूपवृत्त्या विषयोपहितानन्दस्य भानं यदि स्यात्, तदा मार्गस्थितवृक्षादीनां ज्ञानरूपाया वृत्तेरपि सात्त्विकत्वात् तया वृत्त्याऽपि वृक्षोपहितचैतन्यस्वरूपानन्दस्य भानं भवेत्। तथैव सर्वैरपि ज्ञानैः ज्ञेयोपहितचैतन्यस्वरूपानन्दस्य भानमापद्येत। तस्मादनात्मवस्तूनां ज्ञानरूपया बहिर्मुखवृत्त्या ज्ञेयोपहितचैतन्यस्वरूपस्यानन्दस्य ग्रहणं न भवति।

इत्थं विषयसंबन्धादात्मस्वरूपानन्दस्य भानं भवति। आत्मा आनन्दरूपो यदि न स्यात् तदा विषयसंबन्धादानन्दस्य भानं नोपपद्येत। तस्मादात्मा आनन्दरूपोऽस्ति।

**(३७५) सर्वापेक्षया अतिशयितप्रीतेरास्पदत्वादात्मा आनन्दरूपः—**

आत्मसंबन्धिषु (ममतास्पदेषु) वस्तुषु प्रीतिर्जायते। तत्रापि सन्निहितेषु पदार्थेष्वधिकं प्रेम भवति। इत्थं बाह्यबाह्यतरादिवस्त्वपेक्षया आन्तरान्तरतरादिवस्तुष्वधिका प्रीतिर्जायते। तथाहि—(१) परम्परया आत्मनः

---

१. **यथा** कश्चन श्वा शुष्कास्थिखण्डेन सञ्जातव्रणात्स्वकीयमुखताल्वादिप्रदेशाद्रुधिरं स्रुतमास्वादयन् रुधिरमिदमस्थिखण्डान्मम लब्धम् इति मन्यते। **एवमेव** वाञ्छितविषयप्राप्तिरूपनिमित्तादिच्छानिवृत्तिद्वारोत्पन्नायामन्तर्मुखवृत्तौ प्रतिबिम्बितस्वरूपानन्दमनुभवन्नविवेकी अहं विषये आनन्दमनुभवामि इति मन्यते। अनया भ्रान्त्या पुनरप्यधिकाधिकविषयप्राप्तिनिमित्तं प्रयतते। विवेकी तु पूर्वोक्तभ्रान्तेरभावात् निरूपाधिकानन्दावाप्तये वेदान्तविचारादौ प्रवर्तते।

(1) **यद्यपि** विषयानुभवकाले य आनन्दो भाति सोऽपि स्वरूपनन्द एव। **तथापि** श्वदृतिस्थितगोक्षीरवत् निषिद्धत्वात् स विषयानन्दोऽ**नुपादेयो** भवति। किञ्चानेकविक्षेपहेतुत्वाच्च विषयानन्दो **हेयः**।

(2) विषयाभावपूर्वकः विचारादिसाधननिमित्तकः य आनन्दः स तु सुवर्णादिपात्रस्थगोक्षीरवत् शास्त्रविहितत्वादुपादेयः।

२. 'विषयाकारवृत्त्या विषयोपहितचैतन्यरूपानन्दो भाति' इति प्रथमपक्षादपि 'अन्यथा अन्तर्मुखवृत्त्या अन्तःकरणोपहितचैतन्यरूपानन्दो भाति' इति द्वितीयः पक्षः श्रेयान्। अयमेव पक्षः पूर्वं चतुर्थतरङ्गे वर्णितः।

स्वसंबन्धिनि **पुत्रस्य मित्रे** प्रीतिर्भवति। (२) पुत्रमित्रापेक्षया **पुत्रे**ऽधिका प्रीतिः। (३) पुत्रापेक्षयापि **स्थूलसूक्ष्मशरीरयो**रधिका प्रीतिः। (४) तयोर्मध्ये स्थूलापेक्षया **सूक्ष्मदेहे**ऽधिका प्रीतिः। अत्र पूर्वपूर्वापेक्षया उत्तरोत्तरमात्मनः सन्निहितम्।

तत्र (१) आत्मनः आभासः सूक्ष्मशरीरे भवति, नान्यत्र। अतः आभासद्वारा आत्मनः **सूक्ष्मशरीरेण** संबन्धोऽस्ति, नेतरैः। (२) स्थूलशरीरेण सूक्ष्मशरीरस्य संबन्धोऽस्ति। तस्मात् **स्थूलशरीरेण** सह सूक्ष्मशरीरद्वारा आत्मनः संबन्धोऽस्ति। (३) **पुत्रेण** सह स्थूलशरीरद्वारा संबन्धोऽस्ति। (४) **पुत्रमित्रेण** सह पुत्रद्वारा संबन्धोऽस्ति। अनया रीत्या उत्तरोत्तरो यः आत्मनः समीपवर्ती तत्राधिका प्रीतिर्भवति।

यस्यात्मनः संबन्धात्पदार्थान्तरेषु प्रीतिरुपजायते तस्मिन्नात्मन्येव मुख्या प्रीतिरस्ति। न पदार्थान्तरेषु। **यस्मात्** पुत्रमित्रे पुत्रसंबन्धादेव प्रीतिर्भवति तस्मात्पुत्रे एव प्रीतिः न पुत्रमित्रे। एवमात्मनोऽत्यन्तसन्निहितेष्वधिकप्रीतेर्जायमानत्वात् सर्वेषामात्मन्येव मुख्या प्रीतिरिति सिद्धम्।

सा च प्रीतिरानन्दे (सुखे) दुःखाभावे चोत्पद्यते, नान्यत्र। अन्यपदार्थेषु या प्रीतिः सा आनन्दोद्देशेनाथवा दुःखाभावोद्देशेनैव भवति। तस्मादानन्दात् दुःखाभावाच्चान्यत्र प्रीतिर्न भवति। तस्मात्सर्वप्रीतिविषयः आत्मा **आनन्दरूपो** भवति।

दुःखाभावोऽप्यात्मरूप एव। कल्पितवस्तुनोऽभावोऽधिष्ठानरूप **एव**। "अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः।" इति वचनात्। **यथा** सर्पस्याभावो रज्जुरूप एव **तथा** कल्पितदुःखस्याभावोऽपि आत्मस्वरूप **एव**। इत्थमात्मा आनन्दरूप इति सिद्धम्।

**(३७६) न्यायमते आनदस्यात्मगुणत्वोक्तिरसङ्गता—**

न्यायमते आनन्दः आत्मनो गुण इति कथ्यते। तन्न समीचीनम्। तथाहि—(१) आनन्दगुणो यदि नित्यस्तर्हि तस्यागमापायित्वं न घटेत। तस्मादात्मनः स्वरूपमेवानन्दः इति सिद्ध्येत्। "आनन्दो ब्रह्मेति व्यजानात्।" (तै. भृ. 6.) "विज्ञानमानन्दं ब्रह्म।" (बृ. 3-9-2-7-7.) इत्यादिश्रुतेः। न्यायमते नित्य आनन्दो नास्त्येव। (२) आनन्दो यद्यनित्यस्तदा अनुकूलविषयेणेन्द्रियाणां संबन्धे आनन्द उत्पद्यत इत्यङ्गीकार्यम्। ततश्च सुषुप्तावा-

नन्दभानं न स्यात्। सुषुप्तौ विषयेण सहेन्द्रियाणां संबन्धो नास्ति। तस्मादानन्दः नात्मनो गुणः। किन्त्वात्मैवानन्दरूपः। इत्थमात्मा सच्चिदानन्दरूप इति सिद्धम्।

**(आ. ३७७-३७८) सच्चिदानन्दाः परस्परं न भिन्ना इति निरूपणम्—**

**(३७७) सच्चिदानन्दानामैक्यं ब्रह्मात्मनोरैक्यं च—**

सच्चिदानन्दाः परस्परमभिन्नाः सन्तः एकरूपा एव भवन्ति। यदि आत्मगुणाः स्युस्तदा परस्परं भिन्ना अपि भवेयुः। तेषामात्मस्वरूपत्वान्न ते भिन्ना भवन्ति। एक एवात्मा निवृत्तिरहितत्वात् (नाशरहितत्वात्) 'सन्' इति कथ्यते। जडविलक्षणतया प्रकाशरूपत्वात् **चित्** इति कथ्यते। दुःखविलक्षणतया मुख्यप्रीतिविषयत्वाद्**आनन्द** इति च कथ्यते। **यथा** उष्णप्रकाशरूपोऽग्निर्भवति **तथा** सच्चिदानन्दरूप आत्मा भवति। सच्चिदानन्दस्वरूपमेव शास्त्रेषु '**ब्रह्म**' गीयते, "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. ब्र. 1) "प्रज्ञानं ब्रह्म।" (ऐ. 3-1.) "विज्ञानमानन्दं ब्रह्म।" (बृ. 3-9-27-7.) "सच्चिदानन्दतेजः कूटस्थं ब्रह्म।" "सत्यज्ञानानन्तानन्दपरिपूर्णं सनातनमेकमेवाद्वितीयं ब्रह्म।" इत्यादिवचनैः। तस्मादात्मा ब्रह्मस्वरूप एव। '**ब्रह्म**' इति व्यापकस्य संज्ञा। "बृह बृहि वृद्धौ" इति धातोर्निष्पन्नः ब्रह्मशब्दः यन्निरतिशयं व्यापकं तदाचष्टे। (१) यस्य देशकृतोऽन्तो नास्ति तत् **व्यापक**मित्युच्यते। तस्मादात्मा यदि ब्रह्मणो भिन्नः स्यात्तदा आत्मा देशकृतान्तवान् स्यात्। यस्य देशकृतोऽन्तोऽस्ति तस्य कालकृतोऽप्यन्तोऽस्तीति नियमः। तस्मात्तद्वस्तु 'अनित्यं' भवेत्। यस्य कालकृतोऽन्तोऽस्ति तद्वस्त्व**नित्य**मिति कीर्त्यते। तस्मादात्मा ब्रह्मणो न भिन्नः।

ब्रह्म यद्यात्मभिन्नं स्यात्तदा ब्रह्म अनात्मा भवेत्। आनात्मभूतं घटादिकं जडं भवति। तस्मादात्मनो भिन्नं ब्रह्मापि जडं भवेत्। तस्माद् ब्रह्म आत्मनो न भिन्नम्। ब्रह्मस्वरूप एवात्मा।

**(३७८) उपाधिभेदं विना आत्मनो ब्रह्मणश्च भेदो नास्ति—**

(१) एकमेव चैतन्यं सर्वप्रपञ्चस्य मायायाश्चाधिष्ठानं भवति। तस्मात् **तद् ब्रह्मेति** कथ्यते। (२) तदेव चैतन्यं अविद्याया व्यष्टिदेहादीनां चाधिष्ठानं भवति। **तस्मादात्मेति** कथ्यते। (१) तत्पदस्य लक्ष्यं **ब्रह्मेति** कथ्यते।

(२) त्वंपदस्य लक्ष्यमात्मेति कीर्त्यते। (१) ईश्वरसाक्षी तत्पदस्य लक्ष्यो भवति। (२) जीवसाक्षी त्वंपदस्य लक्ष्यो भवति। व्यष्टिसङ्घातोपहितं चैतन्यं जीवसाक्षी। समष्टिसङ्घातोपहितचैतन्यमीश्वरसाक्षी। यद्यपि जीवस्येश्वरस्य चैकत्वं न युज्यते। तथापि जीवसाक्षिण ईश्वरसाक्षिणश्चोपाधिभेदाद्भेदः स्वरूपत एकत्वं चास्ति। यथा मठे स्थितस्य घटाकाशस्य मठाकाशस्य चोपाधिभेदं विना स्वरूपतो भेदो नास्ति। तथा आत्मनो ब्रह्मणश्चोपाधिभेदं विना भेदो नास्ति। आत्मेति ब्रह्मेति चैकमेव वस्तु।

(आ. ३७९-३८१) ब्रह्मरूपस्यात्मनो जन्मरहितत्वप्रतिपादनम्—

(३७९) आत्मनो जन्म न युज्यते—

सोऽयं ब्रह्मरूप आत्मा जन्मरहितः। आत्मनो जन्माङ्गीकारे सोऽनित्यः स्यात्। परलोकवादिन आस्तिकस्य नैतदिष्टम्। यद्यात्मा उत्पत्तिनाशवान् तदा प्रथमजन्मनि पूर्वकर्म विनैव सुखदुःखभोगो, भोगं विनैव कृतस्य कर्मणो नाशश्चापद्येयाताम्। तस्मादात्मनः कर्तृत्वभोक्तृत्वाङ्गीकारेऽपि जन्मनाशरहित एव सोऽङ्गीकार्यः।

अपि चात्मनो जन्माङ्गीकारे, कारणं विना कस्यचिदपि वस्तुन उत्पत्त्यदर्शनात्, आत्मनः कस्माच्चित् कारणाज्जन्म वक्तव्यम्। तत्तु न सङ्गच्छेत। तथाहि यदात्मनः कारणं तदात्मनो भिन्नमिति वक्तव्यम्। आत्मभिन्नं सर्वमात्मनि कल्पितम्। तस्मात् तदात्मनः कारणं न भवेत्। यथा रज्जौ कल्पितः सर्पो न रज्जोः कारणं भवति। तथैवात्मनि कल्पितं वस्त्वात्मनः कारणं न भवेत्।

(३८०) कल्पिते वस्तुन्यंशभेदोऽस्ति—

एकस्यां रज्जौ नानापुरुषाणां 'दण्डः, सर्पः, भूच्छिद्रं, जलधारा' इति नाना भ्रान्तयो भवन्ति। तस्यां भ्रान्तावंशद्वयमस्ति। (१) एकः सामान्येदमंशः, (२) अन्यः सर्पादिविशेषांशः इति। स च सामान्येदमंशः सर्पादिविशेषांशेषु सर्वेषु व्यापकः। अयं सर्पः, अयं दण्डः, इदं भूच्छिद्रं, इयं जलधारा इत्येवंरीत्या सर्पादिविशेषांशेषु इदमंशः व्यापकोऽस्ति। सोऽयं व्यापकः सामान्येदमंशः रज्जुस्वरूपमेव। तादृशसामान्येदमंशस्य ज्ञानमेव भ्रान्तिकारणरज्जुसामान्यांशज्ञानमिति वर्ण्यते।

सोऽयं सामान्येदमंशः सत्यः। रज्जुज्ञानानन्तरमपि '**इयं** रज्जुः' इतीदमंशस्य प्रतीतिसत्वात्। (१) **यथा** भ्रान्तिकाले '**अयं** सर्पः' इति सर्पादिना सह इदमंशः प्रतीयते; (२) **तथा** भ्रान्तिनिवृत्त्यनन्तरमपि '**इयं** रज्जुः' इति रज्ज्वा सह इदमंशः प्रतीयते।

यदीदमंशोऽपि मिथ्या स्यात् तदा सर्पादेरिव भ्रान्तिनिवृत्त्यनन्तरं तस्येदमंशस्यापि प्रतीतिर्न भवेत्। तस्मात्सर्पादिभ्रान्तौ व्यापकः इदमंशः सत्यः। अधिष्ठानं रज्जुस्वरूपम्। तस्मिन् परस्परव्यभिचारिणः सर्पादयः कल्पिताः।

(३८१) **सर्वपदार्थेष्वंशपञ्चकवर्णनम्**—

सर्वपदार्थेषु पञ्चांशाः सन्ति। 'नाम, रूपं, अस्ति, भाति, प्रियम्' इति पञ्चांशाः। (१) 'घट' इत्यक्षरसमुदायो **नाम**। (२) पृथुबुध्नवर्तुलत्वादिकं **रूपम्**। (३) 'घटो वर्तते' इति **अस्ति**। (४) 'घटः प्रतीयते' इति **भाति**। (५) 'घटः प्रिय' इति **प्रियम्**। सर्पादिकमपि सर्पिण्यादिकस्य प्रियं भवति। इत्थं सर्वपदार्थेष्वपि पञ्चांशाः सन्ति। तत्र 'अस्तिभातिप्रियात्मक'मंशत्रयं सर्वपदार्थेषु **व्यापकम्**। 'नाम-रूपमित्यंशद्वयं **व्यभिचरति**। यद्वस्तु क्वचिद्विद्यते, क्वचिच्च न विद्यते तत् **व्यभिचारि** इत्युच्यते। 'घट' इति नाम 'पृथुबुध्नवर्तुलत्वादि' रूपं च पटे न विद्यते। 'पट' इति नाम 'आतानवितानात्मत्वादि' रूपं च घटे न विद्यते। इत्थं सर्वपदार्थेष्वपि नामरूपांशौ **व्यभिचारिणौ**। अस्ति-भाति-प्रियमित्यंशत्रयं सर्वात्रानुगतमस्ति। **यथा** सर्पदण्डादिष्वनुगतेदमंशः सत्यः अधिष्ठानं च भवति **तथा** सर्वपदार्थेष्वनुगताः 'अस्ति-भाति-प्रियांशाः सत्याः अधिष्ठानरूपाश्च भवन्ति। सर्पदण्डादिवत् व्यभिचारिनामरूपांशौ **कल्पितौ**। 'अस्ति-भाति-प्रियांशाः' सच्चिदानन्दरूपा भवन्ति। तस्मादा**त्मस्वरूपा** भवन्ति। इत्थं सच्चिदानन्दरूपे आत्मनि संपूर्णो नामरूपप्रपञ्चः कल्पितः। कल्पितः पदार्थः कोऽपि आत्मनो जन्महेतुर्न भवति। तस्मादात्मा जन्मरहितः। यस्य वस्तुनो जन्म भवति तस्यैव (१) सत्ता, (२) वृद्धिः, (३) परिणामः,

१. '**घटो जायते**' इति व्यवहारहेतुर्जन्म। '**घटो जातः**' इति व्यवहारहेतुः **अस्तितारूपो** विकारः। अयमेव विकारः प्रकटतेति **सत्तेति** चोच्यते। एवमेव **जातस्य लब्धसत्ताकस्य** शिशोः बाल्ययौवनादिप्राप्तिरूपा **वृद्धिः**। ततः वार्धक्यप्राप्तिरूपः **परिणामः**। ततो रोगादिना कार्श्यरूपो**ऽपक्षयः**। ततो मरणरूपो **नाशश्चेति** षड्भावविकारा ज्ञेयाः।

(४) अपक्षयः, (५) विनाशः, इतीतरे **पञ्च विकारा** भवन्ति। आत्मनो जन्माभावात् तदुत्तरभाविनः पञ्च विकारा न भवन्ति। इत्थमात्मा जन्मादिषड्भावविकाररहित इति सिद्धम्।

### (३८२) आत्मनोऽसङ्गत्ववर्णनम्—

आत्मा असङ्गोऽस्ति। **सङ्गो** नाम संबन्धः। स च संबन्धः सजातीयविजातीयस्वगतपदार्थैः सह भवति। घटस्य घटान्तरेण संबन्धः **सजातीयेन** संबन्धो भवति। घटस्य पटेन संबन्धः **विजातीयेन** संबन्धो भवति। **स्वगता** नामावयवाः। ततश्च पटस्य तन्तुभिः संबन्धः **स्वगतेन** संबन्धो भवति। (१) यदि द्वावथवा अनन्ता आत्मानो भवेदुस्तदा सजातीयेनात्मना संबन्धो भवेत्। आत्मा च एक एव। तस्मात्**सजातीयेना**त्मना आत्मनः संबन्धो नास्ति। (२) आत्मनो विजातीयः अनात्मा। अनात्मा च मरीचिकोदकवदात्मनि कल्पितः। तेन कल्पितेन सहात्मनः संबन्धो न घटेत। न हि मरीचिकोदकेन भूमेः संबन्धोऽस्ति। यदि संबन्धः स्यात्तदा मरुभूमिस्तेनोदकेनार्द्रीक्रियेत। **यथा** मरीचिकोदकेन मरुभूमेः संबन्धो नास्ति **तथा** आत्मनि कल्पितेन **विजातीयेना**नात्मना आत्मनः संबन्धो नास्ति। (३) आत्मनो यद्यवयवाः स्युस्तदा आत्मनः स्वगतेन संबन्धो भवेत्। आत्मा नित्यः। तस्मान्निरवयवः। तस्मात् **स्वगतेन** संबन्धो नास्ति। इत्थं सजातीयविजातीयस्वगतसंबन्धः आत्मनो नास्ति। तस्मादात्मा असङ्गः।

हे सोम्य! इत्थं सच्चिदानन्दब्रह्मस्वरूपः जन्मादिविकाररहितः असङ्गश्चात्माऽस्ति। स एव त्वमसि। एवं 'अहं कः?' इति प्रथमप्रश्नस्योत्तरमुक्तम्।

## (आ. ३८३-३८७) अस्य संसारस्य कर्ता कः? इति द्वितीयप्रश्नस्योत्तरम्—

### (३८३) जगतः कर्तेश्वर इति वर्णनम्—

'जगतः कर्ता कः' इति द्वितीयप्रश्नस्येदानीमुत्तरमुच्यते। व्यापकचैतन्यमाश्रित्य तदेव विषयीकुर्वाणा **मायैव** सदसद्विलक्षणात्यद्भुतशक्तिरूपाज्ञानमित्युच्यते। तस्मादज्ञानाज्जगत उत्पत्तिभङ्गौ भवतः। उत्पत्तिभङ्गयोः कथनेन स्थितिरपि गृहीता भवति। अनेनायमर्थः सिद्ध्यति—(1) मायायुक्तं

चैतन्यमीश्वर इति वर्ण्यते। (2) स चेश्वरो जगदुत्पत्तिस्थितिभङ्गानां हेतुर्भवति, इति।

अनयोत्तया 'जगतः कोऽपि कर्ताऽस्ति वा, अथवा स्वयमेव जगदुत्पन्नम्" इति प्रश्नस्य, 'जगतः कर्ता कश्चन जीवो वा अथवेश्वरः' इति प्रश्नस्य चोत्तरं वर्णितं भवति।

**(आ. ३८४-३८५) ईश्वरः सर्वज्ञः सर्वशक्तिमान् स्वतन्त्रश्चेति वर्णनम्।**

**(३८४) ईश्वरस्य सर्वज्ञत्वादिविशेषणानि—**

जगतः कर्तेश्वरः। जगत् स्वयं नोत्पन्नम्। कर्तारं विना यदि जगद्भवेत्तदा कुलालमन्तरेणापि घटो जायेत। अतो जगतः कर्ता कश्चिदस्ति। **(1) स च कर्ता सर्वज्ञः।** यो यस्य कार्यस्य कर्ता सः तत्कार्यं तदुपादान.

---

१. जगतः कारणविषये नाना वादाः सन्ति। (1) असत्कारणवादिनो जगतः कारणं नास्तीति, (2) केचन जगतः कारणमभाव इति, (3) अपरे शून्यमिति, (4) नैयायिकाः परमाणव इति, (5) केचन काल इति, (6) चार्वाकाः स्वभाव इति, (7) मीमांसका अदृष्टमिति, (8) प्रत्यक्षवादिनो यदृच्छेति, (9) प्रत्यक्षप्रमाणवादिनः पृथिव्यादितः पृथिव्यादिपञ्चभूतानीति, (10) साङ्ख्याः प्रकृतिरिति, (11) योगिनो हिरण्यगर्भरूपासङ्गपुरुष इति, (12) इतरे कालादिसंयोग इति, (13) केचन परिणामिपुरुषो जीव इति, (14) परे ब्रह्मेति च बहवो बहुधा जगतः कारणं वर्णयन्ति।

अत्रैकैकस्मिन्नपि पक्षे दोषोऽस्ति। तथाहि—

(1) जगतः कारणाभावे घटोऽपि कारणं विनोत्पद्येत, अतः प्रत्यक्षविरोधोऽकारणवादे दोषः।

(2) अभावस्य कारणत्वे आभावाद्भावोत्पत्तिरिति प्रत्यक्षविरोध एव दोषः।

(3) शून्यस्य कारणत्वे बीजं विनापि धान्योत्पत्त्यापत्तिरित्यसंभवो दोषः।

(4) निरवयवानां जडानां च परमाणूनां संयोगोऽसंभावित इति परमाणुकारणवादे दोषः।

(5) कालस्य सदा सत्वेऽपि सर्वकार्याणां सर्वदोत्पत्तेरदर्शनात् कालस्य कारणत्वासंभवो दोषः।

(6) वन्ध्यायां वीर्यसंबन्धेऽपि तस्य वीर्यस्य गर्भोत्पादकत्वाभावदर्शनात् स्वभावो न कारणम्।

(7) अदृष्टस्य कारणत्वेऽस्मात्कारणादिदमेव कार्यमुत्पद्यते इति निश्चयो न स्यात्।

(8) यदृच्छायाः कारणत्वे पृथिव्यादिभूतेभ्यो जगदुत्पत्तिरसंभाविता स्यात्।

(9) जडपृथिव्यादीनि स्वयमेव कारणापेक्षाणि भवन्ति। तस्मात्तानि स्वयं कारणानि न भवेयुः।

कारणं च ज्ञात्वैव करोति। तस्माज्जगतः कर्तापि जगत्तदुपादानकारणं च ज्ञात्वैव जगदुत्पादयति। इत्थं यस्माज्जगतः कर्ता जगत्तदुपादानकारणं च जानाति तस्मात्स **सर्वज्ञः**। स जगतः कर्ता **सर्वशक्तिमांश्च**। अल्पशक्तिभिर्जीवैरस्य जगतः सृष्टिर्मनसाप्यचिन्त्या। अतोऽद्भुतस्य जगतः कर्ता अद्भुतशक्तिमान्। इत्थं जगतः कर्ता सर्वशक्तिमान्। स **स्वतन्त्रश्च**। योऽल्पशक्तिः स पराधीनो भवति। सर्वशक्तिमांस्तु न पराधीनो भवति। तस्मादयं स्वतन्त्रः। इत्थं च जगतः कर्ता सर्वज्ञः, सर्वशक्तिमान् स्वतन्त्रश्च। तमेव **ईश्वर** इति वर्णयन्ति।

**(३८५) अल्पज्ञत्वादिधर्मविशिष्टो जीवो न जगतः कर्ता—**

योऽल्पज्ञः अल्पशक्तिमान् पराधीनश्च स जीव इत्यभिधीयते। यद्यप्यल्पज्ञत्वादयो जीवे परमार्थतो न सन्ति। तथाप्यविद्याकृतमिथ्याभूतकिञ्चिज्ज्ञत्वादयो जीवे प्रतीयन्ते। अतस्ते किञ्चिज्ज्ञत्वादयो जीवे व्यपदिश्यन्ते। अविद्याकृतकिञ्चिज्ज्ञत्वादिभ्रान्तिरेव **जीवत्वनिमित्तम्**। सा चाल्पज्ञत्वादिभ्रान्तिरीश्वरे नास्ति। किन्तु मायाकृतसर्वज्ञत्वादयः ईश्वरे सन्ति। अयमर्थः सविस्तरमुत्तरत्र प्रतिपादयिष्यते।

एवं च जगतः कर्ता न जीवः। किन्त्वीश्वर एव।

**(३८६) ईश्वरो व्यापको नित्यश्च—**

स चेश्वरो नैकदेशमात्रे वर्तते। किन्तु सर्वत्र व्यापकोऽस्ति। ईश्वरः एकदेशमात्रे वर्तत इत्यङ्गीकारे स ईश्वरोऽनित्यो भवेत्। यस्य देशतोऽन्तोऽस्ति तस्य कालतोऽप्यन्तोऽस्तीति नियमात्। यदनित्यं तत् कर्तृजन्यमिति नियमादीश्वरस्यानित्यत्वे तस्यापि कश्चन कर्ता अङ्गीकर्तव्यो भवेत्।

ईश्वरस्य कर्ता कश्चिदस्तीत्येतन्न घटते। तथाहि—

(10) जडा प्रकृतिः स्वयं न प्रवर्तेत।
(11) यदि पुरुषोऽसङ्गः स कथं कारणं भवेत्।
(12) कालादयो जडाः। तस्मान्न कारणानि।
(13) जीवो न कारणमिति मूल एव वर्णयिष्यते।
(14) निर्विकारं ब्रह्म च न कारणं भवेत्। इत्थं प्रदर्शितेषु चतुर्दशस्वपि मतेषु दोषोऽस्ति। 'मायाविशिष्टं ब्रह्म कारणम्' इति मते तु नास्ति दोषः कोऽपि।

(१) ईश्वरस्येश्वर एव कर्तेत्यङ्गीकारे **आत्माश्रयदोषः** स्यात् । स्वयमेव क्रियायाः कर्ता (आश्रयः) स्वयमेव क्रियायाः कर्म (विषयः) च यदि भवति तदा आत्माश्रयदोषः । **यथा** कुलालः क्रियायाः कर्ता घटश्च कर्म **तथा** सर्वत्र क्रियायाः कर्ता कर्म च भिन्नावेव । न तु तयोरेकत्वमस्ति । तथा चेश्वरस्योत्पत्तौ तस्यैव कर्तृत्वकर्मत्वयोरभ्युपगमे **आत्माश्रयदोषः** सुस्थिरः । **कर्म** नाम कार्यम् । कार्यस्य विरोधी **दोषः** । आत्माश्रयश्च कार्यस्य विरोधी । तस्मात्सदोषो भवति । तस्मादीश्वरस्यान्यः कर्ता अङ्गीकर्तव्यः ।

(२) स च द्वितीयः कर्ता प्रथमकर्तैव कर्तृजन्यो वाच्यः । स च द्वितीयकर्तुः कर्ता द्वितीयकर्तुर्भिन्नो वाच्यः । प्रथमकर्ता य ईश्वरः स एव द्वितीयकर्तुः कर्तेत्यङ्गीकारे **अन्योन्याश्रयदोषः** ।

(३) तस्मात्तृतीयकर्ता कश्चनाङ्गीकार्यः । तस्य तृतीयकर्तुः कर्ता द्वितीयकर्तेत्यङ्गीकारे पुनश्चान्योन्याश्रयदोषः । प्रथमकर्तेत्यङ्गीकारे **चक्रिकादोषः** । चक्रभ्रमणवत् (१) प्रथमकर्ता द्वितीयकर्तृजन्यः (२) द्वितीयकर्ता तृतीयकर्तृजन्यः, (३) तृतीयः प्रथमजन्यः, (४) स प्रथमकर्ता पुनरपि द्वितीयजन्यः इत्येवंरीत्या कार्यकारणभावभ्रमणसंभवात् । चक्रिकास्थले सर्वेषां परस्परसापेक्षत्वान्न किञ्चिदपि सिद्धयेत् । अन्योन्याश्रयस्थले द्वयोः परस्परापेक्षाऽस्ति । एकस्य सिद्धिं विनाऽन्यस्य सिद्धिर्न भवति ।

(४) तस्मात् **यथा** (१) कुलालस्य कर्ता न स्वयमेव भवति । किन्तु तस्य पितैव भवति **तथा** प्रथमकर्तुरीश्वरस्य अन्यः कर्ता वाच्यः । (२) कुलालस्य पिता न स्वपुत्राज्जातः । किन्त्वन्यस्मादेव पितुर्जातः । तथा द्वितीयकर्तापि न प्रथमकर्तुर्जातः किन्त्वन्यस्मादेव कर्तुर्जातो वाच्यः । (३) कुलालस्य पितामहः न कुलालात्, न वा कुलालस्य पितुर्जातः । किन्तु चतुर्थात् (यः कुलालस्य प्रपितामहः तस्मात्) जातः । (४) **तथैव** तृतीयकर्ता न प्रथमकर्तुर्न वा द्वितीयकर्तुरुत्पन्नः । किन्तु चतुर्थात्कर्तुरुत्पन्नो वाच्यः । तस्य चतुर्थस्य कर्तुरन्यः पञ्चमः कर्ताऽङ्गीकर्तव्यः । **एवमनवस्थादोषो** भवति । **अनवस्था** नाम धारा=प्रवाहः । कर्तृधाराया अङ्गीकारे 'जगतः कर्ता अयमेव' इति निश्चयो न स्यात् । यस्य कस्यचित् जगतः कर्तृत्वेनाङ्गीकारे युक्तिर्नास्ति । युक्त्यभाव एव **विनिगमनाविरह** इत्युच्यते ।

अन्ये केचिदेवमाहुः—'धारायाः क्वचिद्विश्रान्त्यङ्गीकारे यस्मिन् कर्तरि धाराया अन्तोऽङ्गीक्रियते स एव जगतः कर्तेत्यङ्गीकर्तुमुचितम्। ततः पूर्वतनाः सर्वे कर्तारो निष्फलाः। अयमेव **प्राग्लोप** इति कथ्यते।' कर्तृधाराविश्रान्त्यवधिभूतकर्तुः प्राग्भाविनामभावः **प्राग्लोप** इत्युच्यते। एवञ्चेश्वरस्य देशतोऽन्तवत्वाभ्युपगमे तस्योत्पत्तिरङ्गीकार्या भवेत्। ईश्वरस्योत्पत्त्यङ्गीकारे च आत्माश्रयादिदोषा आपतन्ति। तस्मादीश्वरस्य देशतोऽन्तो नास्ति। किन्त्वीश्वरो व्यापकः। अत एव नित्यश्च।

## (३८७) ईश्वरस्य जीवस्य च स्वरूपतो भेदाभावः—

तस्य व्यापकस्येश्वरस्य जीवस्य च स्वरूपतो नास्ति भेदः। किन्तूपाधिना भेदोऽस्ति। अवच्छेदवादे मायाविशिष्टचैतन्य**मीश्वर** इत्युच्यते। अविद्याविशिष्टचैतन्यं तु **जीव** इति। आभासवादे मायया आभासेन च विशिष्टं चैतन्य**मीश्वर** इति वर्ण्यते। आभाससहिताविद्याविशिष्टचैतन्यं जीव इति च। आभासवादे आभाससहिताविद्यायाः आभाससहितमायायाश्च भेदोऽस्ति। तथैवावच्छेदवादे अविद्याया मायायाश्च भेदोऽस्ति। स्वरूपतश्चैतन्यस्य भेदो नास्ति। बिम्बप्रतिबिम्बपक्षे अज्ञानगतचैतन्यप्रतिबिम्बो **जीवः**। बिम्बचैतन्य**मीश्वरः**। अस्मिन् पक्षेऽपि चैतन्यस्य स्वरूपतो नास्ति भेदः। किन्त्वेकस्मिन्नेव चैतन्ये जीवत्वेश्वरत्वे कल्पिते। अयमर्थोऽग्रे ४५१—४५६ आवर्तेषु कथयिष्यते। तथा च जगतः कर्ता सर्वज्ञः सर्वशक्तिमान् स्वतन्त्रश्चेश्वर एव। स चेश्वरो व्यापकः। तस्य जीवस्य च विशेषणमात्रेण भेदः। स्वरूपतो नास्ति भेदः। 'जगतः कर्ता कः' इति द्वितीयप्रश्नस्यैवमुत्तरमुक्तम्।

## (आ. ३८८-४१९) 'मोक्षस्य कारणं किम्?' इति तृतीयप्रश्नस्योत्तरम्—

## (३८८) मोक्षस्य साधनं ज्ञानमेव—

'मोक्षस्य साधनं किं ज्ञानम्, अथवा कर्म, अथवोपासनं, अथवोभयं? इति प्रश्नस्येदानीमुत्तरमुच्यते। मुक्तेः साधनं न कर्म। नापि ध्यानं (उपासनं)। किन्तु ज्ञानमेव। आत्मनि बन्धो यदि सत्यः स्यात्तदा तन्निवृत्तिरूपो मोक्षो ज्ञानेन न भवेत्, किन्तु कर्मणोपासनने वा भवेत्। बन्धश्च आत्मनि न सत्यः, किन्तु रज्जुसर्पवन्मिथ्या। तस्य मिथ्याबन्धस्य निवृत्तिरधिष्ठानज्ञानेनैव भवेत्। कर्मणोपासनेन वा न निवर्तेत। यथा रज्जौ सर्पः कयापि क्रियया

न दूरीभवति । किन्तु रज्जुज्ञानेनैव दूरीभवति तथा आत्माज्ञानात्प्रतीयमानो बन्धस्तत्कारणभूतमज्ञानं चात्मनो ज्ञानेनैव निवर्तेयाताम् ।

### (आ. ३८९-३९२) कर्मोपासनयोर्मोक्षसाधनत्वाभावः—

**(३८९) कर्मोपासनयोः फलमनित्यम्; ताभ्यां नित्यो मोक्षो न सिद्ध्यति**—(1) मोक्षो यदि कर्मणः फलं स्यात्तदा मोक्षोऽनित्यो भवेत्। तथाहि—कृष्यादिकर्मणां फलमन्नादिकमनित्यं भवति । यज्ञादिकर्मणां फलं स्वर्गादिकमप्यनित्यम् । "तद्यथा कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते ।" (छा. 8.1.6.) "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" (मु. 1.2.12.) इत्यादिश्रुतिभिः कर्मफलस्यानित्यत्वं वर्णितम् । मोक्षस्य कर्मफलत्वाङ्गीकारे सोऽनित्यो भवेत् । तस्मान्मोक्षो न कर्मणः फलम् ।

मोक्षः उपासनफलमित्यङ्गीकारेऽपि सोऽनित्य एव स्यात् । उपासनमपि मानसं कर्मैव । कर्मफलस्यानित्यत्वनियमात् मोक्षः उपासनरूपकर्मणोऽपि न फलम् ।

**(३९०) पञ्चविधमपि कर्मफलं मुमुक्षोरनपेक्षितम्**—

कर्म कुर्वतस्तेन कर्मणा उत्पत्तिः, आप्तिः, विकारः, संस्कारो, नाशश्चेति पञ्चविधं फलं जायते । उत्पत्तिः=पदार्थस्योत्पत्तिः आप्तिः=पदार्थस्य प्राप्तिः । विकारः=पदार्थस्य पूर्वरूपपरित्यागेन रूपान्तरप्राप्तिः, संस्कारः= पदार्थगतमलनिवृत्तिरूपः, पदार्थे गुणाधानरूपश्चेति द्विविधः । नाशः=पदार्थस्य ध्वंसः, इति कर्मजन्यफलस्य पञ्च प्रकारा भवन्ति। एषां मध्ये किमपि फलं मुमुक्षुविषये न घटते। अतश्च मुमुक्षुर्ज्ञानसाधनश्रवणादावेव प्रवर्तते न कर्मणि ।

**यथा** कुलालस्य कर्मणा तस्य घटोत्पत्तिरूपं फलं सिद्ध्यति **तथा मुमुक्षोः** कर्मणा मोक्षोत्पत्तिरूपं फलं न सिद्ध्यति। सर्वानर्थनिवृत्तिः परमानन्दप्राप्तिश्च हि

---

१. "भावनाजं फलं यत्स्यात् यच्च स्यात्कर्मणः फलम् ।
न तत् स्थास्न्विति मन्तव्यं पण्यस्त्रीगमनं यथा ॥" (बृ. वा.)
"भावनाजं फलं यत्स्यात् यच्च स्यात्कर्मणः फलम् ।
न तत् स्थास्न्विति मन्तव्यं द्रविडेष्विव सङ्गतम् ॥" (नै. सि. 3-93.)
"अविरोधितया कर्म नाविद्यां विनिवर्तयेत् ।
विद्याऽविद्यां निहन्त्येव तेजस्तिमिरसङ्घवत् ॥"

मोक्षः। यथा रज्जौ सर्पनिवृत्तिर्नित्यसिद्धा तथात्मनि दुःखनिवृत्तिरपि नित्यसिद्धा। आत्मा परमानन्दस्वरूपः। तस्मात्परमानन्दप्राप्तिरपि नित्यसिद्धा। इत्थं स्वभावसिद्धस्य मोक्षस्य कर्मणोत्पत्तिर्न युज्यते। यद्वस्तु प्रागसिद्धं तद्वस्तु कर्मणोत्पद्येत। प्रागेव सिद्धस्य वस्तुन उत्पत्तिर्न कर्मणा भवेत्।

**(३९१) वेदान्तश्रवणमपि न मोक्षस्योत्पत्तये—**

वेदान्तश्रवणमपि न मोक्षोत्पत्तये श्रुतम्। किन्तु "नैवास्ति किञ्चित्कर्तव्यं नित्यमुक्तचिदात्मनः" इत्येतदर्थज्ञानायैव श्रवणम्। ईदृशज्ञानोत्पत्तिमात्रेण 'ममास्ति किञ्चित्कर्तव्यम्' इति भ्रान्तिर्निवर्तते। वेदान्तश्रवणादनन्तरमपि यस्य कर्तव्यताप्रतीतिरस्ति स न तत्त्ववित्। अनेनैव कारणेन नित्यनिवृत्तानर्थनिवृत्तिर्नित्यप्राप्तानन्दप्राप्तिश्च वेदान्तश्रवणस्य न फलमिति सुरेश्वराचार्यैर्नैष्कर्म्यसिद्धौ निरूपितम्। तस्मान्मोक्षस्योत्पत्तिरूपं कर्मणः फलं मुमुक्षोर्न युज्यते।

**(३९२) मुमुक्षुणा काङ्क्षितानि पदार्थनाश-पदार्थप्राप्ति-पदार्थविकार-पदार्थसंस्काररूपाणि फलान्यपि न सन्ति—**

यथा दण्डप्रहाररूपकर्मणा घटनाशरूपं फलं भवति तथा मुमुक्षोः कर्मणा कस्यचिदपि पदार्थस्य नाशरूपं फलं युज्यते। अन्यपदार्थानां नाशो न मुमुक्षोः काङ्क्षितः, किन्तु बन्धनाश एव काङ्क्षितः। स च बन्ध आत्मनि नास्ति। किन्तु मिथ्या आत्मनि प्रतीयते। सा च मिथ्याप्रतीतिः कर्मणा न नश्येत्। आत्मयाथार्थ्यज्ञानेनैव मिथ्याप्रतीतिर्नश्येत्। तस्मान्मुमुक्षोः पदार्थनाशरूपं कर्मसाध्यं फलं नास्ति।

---

१. **यथा** रज्जौ व्यावहारिकसत्ताकसर्पस्याभावरूपा सर्पस्य निवृत्तिर्नित्यसिद्धा **तथा**त्मनि परमार्थसत्ताककार्यसहिताज्ञानरूपानर्थस्यात्यन्ताभावरूपा तस्य निवृत्तिरपि नित्यसिद्धा।

२. **यथा** विस्मृतकण्ठचामीकरस्य प्राप्तिर्**यथावा** गृहे गूढनिहितनिधेः प्राप्तिर्नित्यसिद्धा **तथा** निजस्वरूपस्य परमानन्दस्य प्राप्तिः सर्वेषां नित्यसिद्धा।

३. "ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
न किञ्चिदपि कर्तव्यमस्ति चेन्न स तत्ववित्॥
विज्ञातब्रह्मतत्वस्य यथापूर्वं न संसृतिः।
अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः॥"

४. पूर्वरूपं त्यक्त्वा अन्यरूपप्राप्तिर्**विकारः**। स एव **विक्रिया परिणाम** इति चोच्यते।

**यथा** गमनारूपकर्मणा ग्रामप्राप्तिः फलं भवति **तथा** मुमुक्षोः कर्मणा मोक्षप्राप्तिरूपफलं न भवति। नित्यमुक्तस्यात्मनो मोक्षप्राप्तिरूपफलवर्णनं न युक्तम्। यस्य बन्धोऽस्ति तस्य मोक्षप्राप्तिर्वर्णयितुं शक्यते। आत्मनि बन्धाभावात् मोक्षप्राप्तिरूपं फलमपि मुमुक्षोः कर्मणा न सिद्ध्यति।

**यथा** पाकरूपकर्मणा तण्डुलस्य ओदनात्मकरूपान्तरप्राप्तिरूपविकारः पाचकस्य फलं सिद्ध्यति **तथा** मुमुक्षोः कर्मणा विकाररूपफलमपि न युज्यते, निर्विकारत्वादात्मनः। यः आत्मनि प्रथमं बन्धमङ्गीकृत्य पश्चान्मोक्षदशायां चतुर्भुजत्वादिविलक्षणरूपप्राप्तिमङ्गीकरोति तस्य मते अन्यरूपप्राप्तिरूपविकारः मुमुक्षोः कर्मणः फलं भवेत्। तादृशान्यरूपप्राप्तिरात्मनो नाङ्गीक्रियते। तस्मात् कर्मणा **विकाररूपफलसिद्धिरपि** मुमुक्षोर्नास्ति।

(१) **यथा** वस्त्रस्य क्षालनरूपकर्मणा मलनिवृत्तिरूपः संस्कारो भवति **तथा** मलनिवृत्तिरूपसंस्कारोऽपि मुमुक्षोः कर्मणो न फलम्। अन्यस्य मलनिवृत्तिः मुमुक्षोः कर्मणा न वाञ्छिता। किन्त्वात्मनो मलनिवृत्तिरेव वाञ्छितेति वक्तव्यम्। नित्यशुद्धे आत्मनि च मलं नास्ति। तस्मान्मलनिवृत्तिरूपसंस्कारो न घटते।

अन्तःकरणगतपापरूपमलस्य निवृत्तिः कर्मफलमित्युक्तिर्यद्यपि सत्यैव तथापि विचार्यमाणे शुद्धान्तःकरणो यो मुमुक्षुस्तस्यान्तःकरणे न पापमस्ति। तस्मात् पापरूपमलस्य निवृत्तिरूपः **संस्कारोऽपि मुमुक्षुकर्मणो न फलम्।**

अज्ञानस्य मलत्वेऽपि, तस्यात्मवृत्तित्वेऽपि तस्य निवृत्तिः कर्मणा न संभवति। यतोऽज्ञानस्य ज्ञानमेव विरोधि न कर्म। तस्मान्मुमुक्षोः **कर्मणः मलनिवृत्तिरूपसंस्कारो न फलम्।**

(२) **यथा** कौसुम्भजले मज्जनरूपकर्मणा वस्त्रे रक्तवर्णरूपगुणोत्पत्तिरूपः संस्कारः फलं भवति **तथा** मुमुक्षोः कर्मणा गुणोत्पत्तिरूपसंस्कारोऽपि न सिद्ध्यति। अन्यत्र गुणोत्पत्तेर्वर्णयितुमयुक्तत्वादात्मन्येव गुणोत्पत्तिर्वर्णनीया। निर्गुणे च तस्मिन् गुणोत्पत्तिर्न घटते। तस्मान्मुमुक्षोर्गुणोत्पत्तिरूपसंस्कारोऽपि **कर्मणः फलं न** संभवति।

इत्थं पञ्चविधमेव कर्मणः फलम्, नान्यत्। तत् पञ्चविधमपि कर्मफल मुमुक्षुविषये न घटते। तस्मान्मुमुक्षुः कर्म परित्यज्य ज्ञानसाधनश्रवण एव प्रवर्तते।

उपासनमपि मानसं कर्मैव । तस्मात्तन्निराकरणे पृथग्युक्तिर्नोक्ता । एवं च केवलं कर्म वोपासनं वा न मोक्षकारणं, किन्तु ज्ञानमेव मोक्षकारणम् ।

**(आ. ३९३-३९६) कर्मोपासने ज्ञानस्य मोक्षस्य च साधने इति वादिनामाक्षेपाः—**

**(३९३) कर्मोपासनसहितमेव ज्ञानं मोक्षसाधनमिति केचित्—**

[1]केचन कर्मोपासनाभ्यां सहितमेव ज्ञानं मोक्षसाधनमिति वर्णयन्ति तत्र युक्तिं दृष्टान्तमप्याहुः ।

(१) **दृष्टान्तः—यथा** आकाशे पक्षी एकेन पक्षेण न गन्तुं शक्नोति । किन्तु द्वाभ्यामेव पक्षाभ्यां गमनं भवति । **तथा** ज्ञानरूपेणैकेन पक्षेण मोक्षलोको न गन्तुं शक्यः । किं तु ज्ञानकर्मभ्यामेव गन्तुं शक्यः । उपासनसहितं कर्म एकः पक्षः । ज्ञानं द्वितीयः पक्षः । उपासनस्य मानसकर्मत्वात्कर्मोपासने मिलित्वा एकः पक्षो भवति ।

**(३९४) कर्मोपासने साक्षान्मोक्षसाधने इत्यपरे—**

(२) **अन्यो दृष्टान्तः**—सेतुदर्शनात् सत्यस्य पापस्य नाशो भवति । सेतुदर्शनं च प्रत्यक्षरूपं ज्ञानम् । तच्च ज्ञानरूपं सेतुदर्शनं श्रद्धाभक्तिसहितगमनादिनियममप्यपेक्षते । श्रद्धादिरहितपुरुषस्य सेतुदर्शनात्फलासिद्धिरिति शास्त्रसिद्धान्तात् । **यथा** सेतुदर्शनरूपं प्रत्यक्षज्ञानं स्वफलपापनाशोत्पत्तौ श्रद्धानियमादिकमपेक्षते **तथा** ब्रह्मज्ञानमपि मोक्षरूपफलोत्पत्तौ कर्मोपासनादिकमपेक्षते ।

केवलज्ञानेन मोक्षः सिद्ध्यतीत्यङ्गीकुर्वाणोऽपि कर्मोपासने ज्ञानस्य साधने इति मन्यते । तथाहि शुद्धे निश्चले चान्तःकरणे ज्ञानमुदेति ।

---

१. प्राचीनवृत्तिकारो भर्तृप्रपञ्चः (ब्रह्मसूत्राणां टीकाकर्ता) समुच्चयवादी । तदनुसारिणामयं पक्षः ।

**अत्रेदं ज्ञेयम्**—समसमुच्चयः क्रमसमुच्चयश्चेति समुच्चयो द्विविधः । अग्निहोत्रादिकर्मणां श्रवणादेश्च युगपदेवानुष्ठानं समसमुच्चयः । अन्तःकरणशुद्ध्यर्थं विविदिषासिद्धिपर्यन्तं नित्यकर्मानुष्ठेयम् । सिद्धायां तु विविदिषायां कर्म सन्यस्य श्रवणादिना ज्ञानं संपादनीयमिति क्रमसमुच्चयः । तत्र समसमुच्चयस्त्याज्यः । क्रमसमुच्चयो ग्राह्य इति सर्ववेदतात्पर्यम् । तत्र तत्र खण्डनमपि समसमुच्चयस्यैव न क्रमसमुच्चयस्य ।

तच्चान्तःकरणं शुभकर्मणा शुद्ध्यति। उपासनेन निश्चलीभवति। इत्थमन्तः-करणस्य शुद्धिनैश्चल्यसंपादनद्वारा कर्मोपासने ज्ञानसाधने इत्यङ्गीकृतम्।

**(३९५) कर्मोपासने परम्परया मोक्षस्यापि साधने इत्यन्ये—**

**यथा** कर्मोपासने ज्ञानसाधनत्वेनाङ्गीकृते **तथा** ज्ञानफलमोक्षसाधने इत्यप्यङ्गीकर्तुमुचितम्। **अत्र दृष्टान्तः**—यथा जलस्य सेचनं वृक्षस्योत्पत्तिं प्रति वृक्षफलस्योत्पत्तिं प्रति च साधनं **तथा** कर्मोपासने ज्ञानोत्पत्तिं प्रति ज्ञानफलमोक्षस्योत्पत्तिं प्रति च साधने भवतः। न च वने स्थितस्य वृक्षस्य फलं जलसेचनं विनाप्युत्पद्यते इति वाच्यम्। तत्रापि वृक्षस्य मूले भूमिस्थजलेन संबन्धोऽस्ति। तेन जलेन वृक्षस्य फलमुत्पद्यते। जलसंबन्धाभावे वृक्षः शुष्येत्। फलमपि नोत्पद्येत। तस्मात्कर्मोपासने ज्ञानस्य ज्ञानफलमोक्षस्य च साधने।

एवं च कर्म, उपासनं, ज्ञानं चेति त्रीण्यपि मोक्षस्य साधनानि। तस्माज्ज्ञान्यपि कर्माण्यनुतिष्ठेदेव।

**(३९६) समुत्पन्नज्ञानसंरक्षणार्थमपि कर्मोपासने अपेक्षिते—**

**अथवा** कर्मोपासने समुत्पन्नं ज्ञानं संरक्षितुं हेतूभवतः। ज्ञानी कर्मोपासने त्यजति चेत्तदा **यथा** जलसंबन्धाभावे प्ररूढोऽपि वृक्षः शुष्यति, **तथा** ज्ञानिन उत्पन्नमपि ज्ञानं विनश्येत्। तथाहि शुद्धेऽन्तःकरणे ज्ञानमुत्पद्यते। शुभकर्मणामकरणे ज्ञानिनः पापं भवेत्। उपासनाकरणे ज्ञानिनश्चित्तं पुनरपि चाञ्चल्यं भजेत। तस्मिन्नशुद्धे चञ्चले चान्तःकरणे, शुष्कभूमावुत्पन्नवृक्षवत्, ज्ञानं नावस्थितं भवेत्।

**अपरो दृष्टान्तः—यथा** परिमार्जनप्रोक्षणादिसंस्कारैः शुद्धिमापादिते स्थाने वेदाध्ययनशाली ब्रह्मचारी निवसति। येन केनापि कारणेन तस्मिन् स्थाने अशुद्धिमापादिते स तत्र न तिष्ठति, किन्तु तत् स्थानं परित्यजति। **तथा** कर्मोपासनादित्यागेनाशुद्धिं चाञ्चल्यं च प्राप्तेऽन्तःकरणे ज्ञानं न तिष्ठेत्। तस्मात् कर्मोपासने ज्ञानसंरक्षणहेतू भवतः।

तथा च कर्म, उपासनं, ज्ञानं चेति त्रीणि मोक्षकारणानीत्यङ्गीकारे कर्मोपासने ज्ञानसंरक्षणहेतुभूते केवलं ज्ञानं मोक्षस्य हेतुरित्यङ्गीकारे च ज्ञानिना कर्मोपासने अनुष्ठेये एव। अयं **समुच्चयवाद** इत्युच्यते।

**(आ. ३९७-३९९) कर्मोपासनयोर्ज्ञानेन सह विरोध इति पूर्वोक्ताक्षेपाणां समाधानम्—**

**(३९७) कर्म ज्ञानस्य विरोधि—**

सोऽयं समुच्चयवादो न समीचीनः। येषां देहातिरिक्तात्मज्ञानं नास्ति तेषां कर्म न संभवति। जन्मान्तरे भोगाय हि कर्मानुष्ठीयते। देहस्त्वग्निना दह्यते। तस्माद्देहेन **जन्मान्तरभोगो न सिद्ध्यति। तस्मात् देहातिरिक्तात्मज्ञानं कर्मणो हेतुः।** तस्य देहभिन्नस्यात्मनः कर्तृत्वभोक्तृत्वज्ञानमपि कर्मणो हेतुः। 'अहं पुण्यपापयोः कर्ता। तयोः कर्मणोः फलं मम भविष्यति' इति ज्ञानं यस्यास्ति स एव कर्म करोति। ज्ञानी त्वात्मानमेवं न जानाति। किन्तु 'पुण्यपापसुखदुःखादिरहितासङ्गब्रह्मरूप एवात्मास्ति' इति वेदान्तजन्यं ज्ञानं ज्ञानिनोऽस्ति। इदं च ज्ञानं कर्मणो न हेतुः, प्रत्युत कर्मणो विरोधि। तस्माज्ज्ञानिनि कर्म न संभवति।

**किञ्च कर्तुः कर्मफलस्य च भेदज्ञानं कर्मणो हेतुः।** स कर्ता कर्मफलं च ज्ञानिनः स्वात्मनो भिन्नतया न प्रतीयेते। ज्ञानिनः सर्वमात्मस्वरूपेणैव प्रतीयते। तस्मादपि ज्ञानिनः कर्म न संभवति। भाष्यकारैर्ज्ञानिनः कर्माभावो नानाप्रकारैः प्रतिपादितः।

कर्मणो ज्ञानस्य च फलतोऽपि विरोधोऽस्ति। तस्मादपि ज्ञानकर्मणोः समुच्चयो न युज्यते। (१) कर्मणः फलमनित्यः संसारः। (२) ज्ञानस्य फलं नित्यो मोक्षः।

**(३९८) आत्मनि जात्याद्यध्यासः कर्महेतुः। ज्ञानिनस्तदभावश्च—**

आत्मनि जात्याश्रमावस्थानामध्यासः कर्महेतुः। तत्तज्जात्याश्रमावस्थानामनुरूपतया भिन्नभिन्नकर्माणि शास्त्रेषु विहितानि। तस्माज्जात्यादीनामध्यासः कर्महेतुः।

**यद्यपि** जात्याश्रमावस्था देहस्यैव धर्माः। कर्मिणश्च 'देहे आत्मबुद्धिर्नास्ति, किन्तु सः देहभिन्नमेवात्मानं कर्तारं मन्यते' इति पूर्वमुक्तम्।

---

१. ब्राह्मणक्षत्रियवैश्यशूद्राः वर्णा एव जातय इत्युच्यन्ते। ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसन्यासाः आश्रमाः। बाल्यकौमारयौवनवार्धक्यान्यवस्थाः।

तस्मादात्मनि जात्याश्रमावस्थानां प्रतीतिः कर्मिणोऽपि न युज्यत एव। **तथापि** कर्मिणो देहव्यतिरिक्तस्यात्मनोऽपरोक्षज्ञानं नास्ति। किन्तु शास्त्रजन्यपरोक्षज्ञानमस्ति। देहे आत्मज्ञानमपरोक्षमस्ति। यदि कर्मिणः देहातिरिक्तस्यात्मनोऽपरोक्षज्ञानं स्यात् तदा तज्ज्ञानं देहे अपरोक्षात्माज्ञानस्य विरोधि भवेत्। परोक्षज्ञानस्यापरोक्षज्ञानेन विरोधो नास्ति। तस्मात्। देहभिन्नकर्त्रात्मज्ञानं देहात्मज्ञानं चेति द्वयमप्येकस्यैव युज्यते।

**अत्र दृष्टान्तः**—शिलादार्वादिनिर्मितमूर्तौ शास्त्रजन्यं परोक्षमीश्वरज्ञानमस्ति। शिलादिज्ञानमप्यपरोक्षमस्ति। तयोर्ज्ञानयोर्नास्ति विरोधः। एकस्यैव पुरुषस्य द्वे अपि बुद्धी भवतः। रज्जौ यस्य सर्पभिन्नत्वज्ञानमपरोक्षं जायते तस्यापरोक्षसर्पभ्रान्तिर्निवर्तते। अनेन चापरोक्षभ्रान्तेरपरोक्षज्ञानेनैव विरोधः परोक्षज्ञानेन न विरोध इति नियमः सिद्धः। तस्माद्देहभिन्नस्यात्मनः परोक्षज्ञानं देहे अपरोक्षात्मज्ञानं चैकस्य युज्यते। तदिदं ज्ञानद्वयमपि कर्महेतुः। आत्मा देहभिन्नोऽपि कर्तृरूपः इति ज्ञानं कर्महेतुः। तच्चात्मनः कर्तृरूपेण ज्ञानं भ्रान्तिः। विदुषस्तु सा भ्रान्तिर्नास्ति। **तस्माद्विदुषो नास्ति कर्माधिकारः।**

देहे अपरोक्षात्मबुद्धिर्यदि स्यात्तदा देहधर्मजात्याश्रमावस्थाः प्रतीयेरन्। सा च देहात्मबुद्धिर्विदुषो नास्ति। किन्तु ब्रह्मरूपेणात्मनोऽपरोक्षज्ञानमस्ति। तस्माज्जात्याश्रमवस्थाभ्रान्त्यभावादपि **विदुषो न कर्माधिकारः।**

'अहमुपासको देव उपास्यः' इति बुद्ध्योपासनं सिद्ध्यति। विदुषस्तूपास्योपासकभावप्रतीतिर्नास्ति। 'मे देहादिसङ्घातः देवस्य देहादयश्च स्वप्नवत् कल्पिताः। चैतन्यमेकमेवास्ति' इति विदुषो निश्चयः। अतश्च ज्ञानस्योपासनस्य च विरोधः।

**(३९९) आकाशे पक्षिपतनदृष्टान्तोऽत्र न युज्यते—**

पक्षिणो द्वावपि पक्षौ एककाले एव स्तः। तस्मान्न तयोः परस्परविरोधः। ज्ञानस्य कर्मोपासनाभ्यां विरोधोऽस्ति। तस्मादेककालावस्थानं न तयोः संभवति।

**(आ. ४००-४१३) मोक्षमुद्दिश्य ज्ञानस्य कर्मोपासनयोरपेक्षाभावः—**

(४००) **सेतुदर्शनदृष्टान्तः प्रकृते न युज्यते**—

मोक्षं प्रति ज्ञानस्य कर्मोपासनयोः साहाय्यविषये प्रदर्शितः सेतुदर्शन[1]-दृष्टान्तो न सङ्गच्छते। सेतुदर्शनं न दृष्टफलस्य हेतुः, किन्त्वदृष्टफलस्यैव हेतुः। यत् फलं प्रत्यक्षेण प्रतीयते तत्फलं **प्रत्यक्षफलमित्युच्यते। यथा** भोजनस्य फलभूता तृप्तिः प्रत्यक्षा तद्वत्। तस्माद्भोजनं दृष्टफलस्य हेतुः। **तथा** सेतुदर्शनेन न किञ्चिदपि प्रत्यक्षं फलं प्रतीयते। किन्तु पापस्य नाशरूपं फलं शास्त्रेणाधिगम्यते। यत् प्रत्यक्षेण न प्रतीयते **तददृष्टफलमित्युच्यते।** तस्मात् **यथा** यज्ञादिकर्म स्वर्गाद्यदृष्टफलस्य हेतुः **तथा** सेतुदर्शनमपि पाप-नाशरूपादृष्टफलस्य हेतुः। योऽदृष्टफलहेतुः तस्य स्वफलोत्पादने यावती सामग्री सहायतया शास्त्रेण चोद्यते, तावत्या सामग्र्या सहित एव स फलस्य हेतुर्भवति। नतु स केवलो हेतुर्भवति। अत एव श्रद्धानियमादिसहितमेव सेतुदर्शनं पापनाशरूपफलहेतुः। श्रद्धानियमादिरहितं न फलहेतुः। सेतु-दर्शनेन प्रत्यक्षं किमपि फलं न दृश्यते। केवलं शास्त्रात् तत्फलमवगम्यते। शास्त्रं च श्रद्धानियमादिसहितमेव सेतुदर्शनं पापनाशकमित्याह। केवलसेतु-दर्शनेन फलोत्पत्तौ न किञ्चिदपि प्रमाणमस्ति। तस्मात्सेतुदर्शनं स्वफलोत्पत्तौ श्रद्धाभक्तिनियमादिकमपेक्षते।

(४०१) **ज्ञानफलस्य मोक्षस्य नित्यप्राप्तत्वाज्ज्ञानस्य कर्मोपा-सनापेक्षाभावः**—

तमोनिवृत्तौ दीपप्रभावत् स्वफलोत्पत्तौ ब्रह्मविद्या कर्मोपासने नावेक्षते। ब्रह्मविद्यायाः फलमपि स्वर्गादिवद्यदि लोकविशेषरूपादृष्टफलं स्यात्। यदि च शास्त्रं तस्य लोकविशेषस्य केवलब्रह्मविद्यया अप्राप्यत्वं कर्मोपासनसहित-तब्रह्मविद्याप्राप्यत्वं च बोधयेत्तदा ब्रह्मविद्यापि सेतुदर्शनवत् स्वफलोत्पत्तौ कर्मो-पासने अपेक्षेत। न हि ब्रह्मविद्याफलरूपो मोक्षः स्वर्गादिवल्लोकविशेषरूपा-दृष्टफलम्, किन्तु मोक्षो नित्यप्राप्तः। बन्धस्तु भ्रान्त्या प्रतीयते। तस्या भ्रान्ते-र्निवृत्तिरेव **ब्रह्मविद्यायाः फलम्।** केवलया ब्रह्मविद्यया तस्या भ्रान्तेर्निवृत्तिर-स्माकं (ब्रह्मविदां ज्ञानिनां) प्रत्यक्षा। रज्जुज्ञानात् सर्पभ्रान्तेर्निवृत्तिर्यथा सर्वेषां प्रत्यक्षा तद्वत्। तस्मादधिष्ठानज्ञानस्य फलं भ्रान्तिनिवृत्तिरूपं दृष्टमेव फलम्।

---

१. रावणवधाय लङ्कां गन्तुं श्रीरामचन्द्रेण रामेश्वरमारभ्य लङ्कापर्यन्तं समुद्रे सेतुर्बद्धः। सोऽत्र सेतुर्विवक्षितः।

दृष्टफलस्योत्पत्तिः यावत्या सामग्र्या साध्यतया प्रत्यक्षेण प्रतीयते तावती सामग्री **दृष्टफलस्य हेतुरित्युच्यते** । **यथा** तुरीतन्तुवेमादिभिः पटस्योत्पत्तिः प्रत्यक्षेति तुरीतन्तुवेमादिकं पटस्य हेतुः । **यथा** च केवलभोजनेन तृप्तिरूपं फलं प्रत्यक्षमिति **केवलभोजनमेव तृप्तिहेतुः** । **यथा** वा केवलाधिष्ठानज्ञानात् भ्रान्तिनिवृत्तिः प्रत्यक्षेण प्रतीयत इत्यधिष्ठानज्ञानमेव **भ्रान्तिनिवृत्तेर्हेतुः** । **यथा** रज्जुज्ञानं भ्रान्तिनिवृत्तौ नान्यदपेक्षते तथा बन्धभ्रान्तेरधिष्ठानभूतनित्यमुक्तात्मज्ञानमपि बन्धभ्रान्तिनिवृत्तौ कर्मोपासने नापेक्षते ।

**(४०२) केवलं ज्ञानमेव मोक्षसाधनमिति शास्त्रवचनमपि :—**

ज्ञानफलस्य मोक्षस्य स्वर्गादिवल्लोकविशेषत्ववर्णनेनादृष्टरूपत्वाङ्गीकारे **वेदवाक्यविरोधः** स्यात् । "न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ।" (बृ. 4.4.6.) "अत्र ब्रह्म समश्नुते" इत्यादिश्रुतयो ज्ञानिनः प्राणा न कमपि लोकं गच्छन्तीति वर्णयन्ति ।

मोक्षस्य लोकविशेषरूपत्वाङ्गीकारे स्वर्गादिवन्**मोक्षोऽनित्यः** स्यात् । मोक्षस्य[१] लोकविशेषरूपत्वाङ्गीकारेऽपि केवलज्ञानेनैव मोक्षप्राप्तिरङ्गीकर्तव्या । शास्त्रप्रतिपादितोऽर्थः शास्त्रानुसारेणैवाङ्गीकर्तव्यः । शास्त्रं च 'मोक्षः केवलज्ञानेनावाप्यते' इत्याह ।

"भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥" (मु. 2-2-8)

"यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥" (श्वे. 6-20)

"तमेव विदित्वाऽतिमृत्युमेति ।" (श्वे. 3. 8.)

"तरति शोकमात्मवित् ॥" (छा. 7-3-1.)

"तमेवं विद्वानमृत इह भवति ।" इति ।

"ज्ञात्वा देवं मुच्यते सर्वपाशैः । ज्ञात्वा देवं सर्वपाशापहानिः ॥'
इति ॥

---

१. 'तुष्यतु दुर्जनः' इति न्यायेन, सिद्धान्ती मोक्षस्य लोकविशेषरूपत्वाङ्गीकारेऽपि स ज्ञानं विना न सिद्ध्यतीत्याह । दुर्बलः पुरुषः प्रबलस्य स्वशत्रोः प्रथमं स्वप्रहारं प्रत्यवकाशं दत्वा पश्चात्तं मारयति । एष एव **दुर्जनतोषन्याय** इत्युच्यते ।

तस्मात् **केवलं ज्ञानं मोक्षहेतुः।** कर्मोपासनज्ञानानि त्रीणि न मोक्षकारणानि।

**(४०३) कर्मोपासने ज्ञानस्य साधने न मोक्षस्य :—**

**वृक्षदृष्टान्तोऽप्यसङ्गतः—**

पूर्वपक्षिणा प्रदर्शितो वृक्षदृष्टान्तोऽसङ्गतः। **यद्यपि** जलसेचनं वृक्षस्योत्पत्तौ रक्षणे च हेतुस्**तथापि** फलोत्पत्तौ न हेतुः। तथाहि वृद्धो यो वृक्षस्तस्य जलसेचनं रक्षणायैव न फलाय। जलेन पुष्टो यो वृक्षः स फलहेतुरिति सत्यम्। न तु जलसेचनं फलोत्पत्तिं प्रति हेतुः। **एवमेव** कर्मोपासने ज्ञानोत्पत्तौ हेतूभवतः, न तु मोक्षे। तस्माज्ज्ञानोत्पत्तेः प्रागेवान्तःकरणस्य शुद्धये चाञ्चल्यनिवृत्तये च कर्मोपासने अनुष्ठेये। ज्ञानोत्पत्तेरनन्तरं मोक्षनिमित्तं न ते अनुष्ठेये।

ज्ञानोत्पत्तेः पूर्वमप्यन्तःकरणे यावत्पर्यंतं मलविक्षेपौ स्तस्तावत्पर्यन्तमेव ते अनुष्ठेये। यस्यान्तःकरणं शुद्धं निश्चलं च जातं स जिज्ञासुः श्रवणविरोधिनी कर्मोपासने त्यजेदेव। विविदिषासन्यासं कुर्यादिति यावत्।

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥" (भ. गी. 6. 3.)

"जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनाम्।
चित्तस्य शान्तये कर्म न तु वस्तूपलब्धये॥"

वस्तुसिद्धिर्विचारेण नान्यथा कर्मकोटिभिः।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः॥"

इत्यादिवचनेभ्यः। शमः=सन्यासः। **मलं** नाम पापम्। तच्चाशुभवासनाया हेतुः। यावत्पर्यन्तं मलमस्ति तावत्पर्यन्तमशुभवासनाऽस्ति। यदाऽशुभवासना नोदेति तदा मलाभावो निश्चेयः। अन्तःकरणस्य चाञ्चल्यैकाग्र्ये ह्यनुभवसिद्धे। तस्मादुत्तमजिज्ञासोर्विदुषो विषये कर्मोपासने निष्प्रयोजने।

**(४०४) कर्मोपासने न ज्ञानरक्षणे उपयुज्येते, ज्ञानविरोधित्वात्तयोः। यदुक्तम्** ज्ञानरक्षणनिमित्तं कर्मोपासने अनुष्ठेये। **यथा**

जलेनोत्पन्नो वृक्षो जलेन रक्ष्यते। जलसंबन्धाभावे वृद्धोऽपि वृक्षः शुष्यति, तथा कर्मोपासनाभ्यामुत्पन्नं ज्ञानं कर्मोपासनाभ्यां रक्षितं भवति। यदि ज्ञानी कर्मोपासने न कुर्यात्तदा पुनरप्यन्तःकरणमशुद्धं चञ्चलं च भवेत्। शुष्कभूमौ वृक्ष इवाशुद्धे चञ्चले चान्तःकरणे पूर्वोत्पन्नमपि ज्ञानं नश्येत्। तस्माज्ज्ञानवानपि कर्मोपासने अनुतिष्ठेत्' इति। **तन्न युज्यते**—आभाससहिते अथवा चैतन्यविशिष्टेऽन्तःकरणे 'अहमसङ्गं ब्रह्मैवास्मि' इति या वृत्तिरुदेति सैव वेदान्तस्य फलरूपं ज्ञानम्। तच्च कर्मोपासने विना स्वयमेव नश्यति। अथवा चैतन्यस्वरूपे ज्ञाने लीनं भवति।

**अथ यदुच्यते**—'स्वरूपभूतं ज्ञानं नित्यम्; तस्मात्तस्य नाशो वा रक्षणं वा न युज्यते। परं तु वेदान्तफलभूतं ब्रह्मविद्यारूपं ज्ञानं कर्मोपासनाभ्यामुत्पद्यते। कर्मोपासनपरित्यागे उत्पन्नापि ब्रह्मविद्या नश्यति। तस्मात्तस्यपि रक्षणाय कर्मोपासने ज्ञानिनाप्यनुष्ठेये' इति। **तदपि न संभवति**। (१) सकृदुत्पन्नया अन्तःकरणस्य ब्रह्माकारवृत्त्या तत्क्षणे एवाज्ञानभ्रान्त्योर्नाशरूपं फलं सिद्ध्यति। अज्ञानभ्रान्त्योर्नाशानन्तरं पुनरपि **वृत्तेः संरक्षणे नास्त्युपयोगः**। (२) कर्मोपासनाभ्यामन्तःकरणवृत्तेः संरक्षणमप्ययुक्तमेव। तथाहि—कर्मोपासनयोरनुष्ठाने क्रियमाणे कर्मोपासनसामग्रीविषयकवृत्तिरूपं ज्ञानमेव भवेत्। न तु ब्रह्मज्ञानम्। वृत्त्यन्तरोत्पत्तौ प्रथमा वृत्तिर्नावतिष्ठेतेति नियमात्। तस्मात्कर्मोपासने ज्ञानरूपवृत्त्युत्पत्तौ परम्परया हेतू भवतः। उत्पन्नवृत्तेस्तु विरोधिनी ते। तस्मात्कर्मोपासनाभ्यां **ज्ञानरक्षणं** न युज्यते।

**(आ. ४०५-४०६) ज्ञानिनः पापचाञ्चल्ययोरभावात्तस्य कर्मोपासने अनुपयुक्ते—**

**(४०५) शुभकर्मत्यागेनाशुभकर्मानुष्ठानेन वा ज्ञानिनः पापासंभवः—**

**यदुक्तं** 'ज्ञानिनः कर्मत्यागेन पापं संभवेत्। इति। **तदयुक्तम्**। तथाहि, (१) शुभकर्मत्यागः पापहेतुर्न भवति। किन्तु निषिद्धकर्मानुष्ठानमेव पापहेतुः। भाष्यकारादिभिरयमर्थो बहुधा प्रतिपादितः। तस्मात्कर्मत्यागेन **पापं न संभवेत्**। (२) ज्ञानिनः सर्वप्रकारैः पापासंभव एव। तथाहि—

---

१. "नासतो विद्यते भावः।" (भ. गी. 2. 16) "कथमसतः सज्जायेत।" (छा. 6-2-2.) इत्यादिवचनेभ्यो नाभावाद्भावोत्पत्तिः संभवति।

पुण्यपापे तदाश्रयान्तःकरणं च परमार्थतो न सन्ति। "अतोऽन्यदार्तम्।" (बृ. 3-7-23) "न तु तद्द्वितीयमस्ति।" (बृ. 4-3-23-3) "यत्र नान्यत्पश्यति।" (छा. 7-2-41) इत्यादिश्रुतिभ्यः। अविद्यया तानि मिथ्या प्रतीयन्ते। साऽविद्या मिथ्याप्रतीतिश्च ज्ञानवतो न स्तः। तस्माच्छुभकर्मत्यागेनाशुभकर्मानुष्ठानेन वा ज्ञानिनः पापं न संभवेत्।

"अहं ब्रह्मेति विज्ञानात्कल्पकोटिशतार्जितम्।
सञ्चितं विलयं याति प्रबोधात्स्वप्नकर्मवत्॥

यत्कृतं स्वप्नवेलायां पुण्यं वा पापमुल्बणम्।
सुप्तोत्थितस्य किं तत्स्यात् स्वर्गाय नरकाय वा॥"

"पुण्यानि पापानि निरिन्द्रियस्य
निश्चेतसो निर्विकृतेर्निराकृतेः।
कुतो ममाखण्डसुखानुभूते—
ब्रूते ह्यनन्वागतमित्यपि श्रुतिः॥
हयमेधसहस्रा-
ण्यथवा कुरुताद्ब्रह्महतिलक्षाणि।
परमार्थविन्न पुण्यै-
र्न च पापैः स्पृश्यते विमलः॥" इत्यभियुक्तोक्तेः।

(४०६) जीवन्मुक्तानन्दस्य ब्रह्माकारवृत्तिरेव कारणं, अतोऽपि ज्ञानिनः कर्मोपासने नापेक्षिते—

अत्रायं सिद्धान्तः—मन्दं दृढं चेति ज्ञानं द्विविधम्। (१) संशयादिसहितं ज्ञानं मन्दम्। (२) संशयादिरहितं ज्ञानं दृढम्। दृढज्ञानवतः किञ्चिदपि कर्तव्यं नास्ति। सकृदुत्पन्नं संशयादिरहितमन्तःकरणवृत्तिरूपं ज्ञानमेवाविद्यां निश्शेषं नाशयति। आलोक इव तमः। तस्य वृत्तिरूपज्ञानस्य नाशेऽपि सम्यज्ज्ञाते आत्मनि भूयोऽपि भ्रान्तिर्नोदेति। भ्रान्तिकारणाविद्यायाः सकृदुत्पन्नज्ञानेनैव नष्टत्वात्। तस्मात् भ्रान्तेरविद्यायाश्चाभावात् पुनरपि वृत्तिज्ञानोत्पत्तौ किञ्चिदपि प्रयोजनं नास्ति।

जीवन्मुक्तानन्दस्यानुवृत्तिसिद्धये यदि कश्चिद्वृत्तिज्ञानस्यावृत्तिमपेक्षते, तदा स भूयोभूयो वेदान्तार्थमनुचिन्तयतु। वेदान्तार्थानुसन्धानबलेनैव

ब्रह्माकारा वृत्तिः पुनः पुनरुदियात् । कर्मोपासनाभ्यां ब्रह्माकारा वृत्तिर्न जायेत। अन्तःकरणस्य शुद्धिनैश्चल्यसंपादनद्वारैव कर्मोपासने ज्ञाने उपयुज्येते, नान्येन प्रकारेण । विदुषोऽन्तःकरणे तु पापचाञ्चल्ये न स्तः । अविद्या हि रागद्वेषादि-द्वारा पापचाञ्चल्ययोः कारणं भवति । सा चाविद्या ज्ञानेनैव नश्यति । तस्माद्विदुषः पापचाञ्चल्ययोरभावात् कर्मोपासनाभ्यां नास्त्युपयोगः ॥

**(४०७) ज्ञानिनाप्यन्तःकरणचाञ्चल्यनिवृत्तये उपासनमनुष्ठेय-मित्याक्षेपस्तत्समाधानञ्च—**

**यद्यत्रैवमाशङ्क्येत**—'रागद्वेषादयोऽन्तःकरणस्य सहजा धर्माः । यावत्कालपर्यन्तमन्तःकरणमस्ति तावत्कालपर्यन्तं रागद्वेषादयो ज्ञानिनोऽपि सर्वथा न नश्येयुः । ताभ्यां रागद्वेषाभ्यां ज्ञानिनोऽप्यन्तःकरणं चाञ्चल्यमा-पद्येत । तस्माच्चाञ्चल्यनिवृत्तये ज्ञानिनाप्युपासनमवश्यमनुष्ठेयम् । **यद्यप्यन्तः**-करणचाञ्चल्येन ज्ञानिनो विदेहमोक्षस्य काचिदपि हानिर्नास्ति **तथापि** चञ्चलेऽन्तःकरणे स्वरूपानन्दभानं न स्यात् । ततश्चान्तःकरणचाञ्चल्यं जीवन्मुक्तेर्विरोधि । तस्माज्जीवन्मुक्त्यानन्दसिद्धयेऽन्तःकरणस्य चाञ्चल्य-निवृत्त्यर्थमुपासनं ज्ञानिनाप्यनुष्ठेयमेव' इति । **तन्न सङ्गच्छते**—**यद्यपि** दृढ-बोधो यस्यान्तःकरणेऽस्ति तस्य समाधिविक्षेपावुभावपि तुल्यावेवेति तेन विदुषाऽन्तःकरणनैश्चल्यसंपादानार्थं न कोऽपि प्रयत्नः कर्तव्यः । तथापि विदुषः प्रवृत्तिनिवृत्ती प्रारब्धाधीने । प्रारब्धं कर्म प्रतिप्राणि विलक्षणम्—(1) जनकादेरिव केषाञ्चिद्विदुषां **प्रारब्धं भोगहेतुर्भवति** । यस्य **प्रारब्धं भोग-हेतुस्तस्य** प्रारब्धकर्मवशाद्भोगेच्छा भोगसाधनसंपादने प्रयत्नश्च जायते । (2) शुकवामदेवादीनामिव केषाञ्चिद्विदुषां **प्रारब्धं निवृत्तिहेतुर्भवति** । यस्य **प्रारब्धं निवृत्तिहेतुस्तस्य** जीन्मुक्त्यानन्देच्छा भोगान्तरे वैमनस्यं चोदेति । जीवन्मुक्त्यानन्दाकाङ्क्षी सततं ब्रह्माकारवृत्त्यावृत्तिनिमित्तं वेदान्तार्थचिन्तनमेव कुर्यात्, नोपासनम् । न ह्यन्तःकरणनैश्चल्यमात्रेण ब्रह्मानन्दस्य विशेषरूपेण भानं भवति । किन्तु ब्रह्माकारवृत्त्यैव । सा च ब्रह्माकारा वृत्तिः सततं वेदान्तार्थ-चिन्तनेनैव जायते । नोपासनेन । विदुषोऽन्तःकरणचाञ्चल्यमपि वेदान्तार्थ-चिन्तनेनैव दूरीभवति । अतश्च विदुषोऽन्तःकरणनैश्चल्यसंपादनाय नोपासने प्रवृत्तिर्जायते । तथा च यस्य दृढबोधः सञ्जातस्तस्य कर्मोपासनयोः प्रवृत्तिर्न भवति ।

**(आ. ४०८-४०९) दृढज्ञानिनामदृढज्ञानिनामुत्तमजिज्ञासूनां च कर्मोपासनयोरनधिकारः—**

**(४०८) मन्दबोधवानुत्तमजिज्ञासुरपि कर्मोपासनयोर्न प्रवर्तते—**

(१) यस्य तु मन्दबोधोऽस्ति स मननिदिध्यासने एव कुर्यात्। तेन कर्मोपासने न कर्तव्ये। यस्य मन्दबोधोऽस्ति स **उत्तमजिज्ञासुः**। तस्य मननिदिध्यासने विना कर्तव्यान्तरं नास्ति। सोऽयमर्थः शारीरके सूत्रकारैर्भाष्यकारैश्च प्रतिपादितः। (ब्र. सू. भा. 4-10-2.)

(२) विदुषा तु मननिदिध्यासने अपि चोदनया कर्तव्यत्वबुद्ध्या नानुष्ठेये। किन्तु जीवन्मुक्त्यानन्दाय मननिदिध्यासनयोर्विद्वान् प्रवर्तते। सा च प्रवृत्तिर्विदुषः स्वेच्छयैव न चोदनया। 'यद्यहं वेदाज्ञारूपं कर्म न कुर्यां तदा मे जननमरणादिरूपः संसारो भवेत्' इति बुद्ध्या क्रियमाणमेव कर्म कर्तव्यमित्युच्यते। सेयं जन्मादिविषयिणी बुद्धिर्विदुषो न भवति। तस्मात्स्वेच्छयैव विद्वान् मननिदिध्यासने करोति। अतस्ते मननिदिध्यासने 'कर्तव्ये' इति व्यपदेशानर्हे। एवं च यस्य मन्दबोधो वा दृढबोधो वा सञ्जातस्तस्य कर्मोपासने 'कर्तव्ये' न भवतः।

**(४०९) असञ्जातबोधो य उत्तमजिज्ञासुः, यश्च मन्दजिज्ञासुस्तयोरुभयोरपि कर्मोपासनयोरनधिकारः—**

(१) यस्य बोधो न सञ्जातः। किन्तु तीव्रतरा आत्मज्ञानेच्छास्ति, भोगेच्छा च नास्ति तस्यान्तःकरणं शुद्धमेवास्ते। तस्मात्स **उत्तमजिज्ञासुरि**त्युच्यते। तस्य बोधसिद्धये श्रवणादिकमेवानुष्ठेयं; न कर्मोपासने। कर्मोपासनयोः फलभूतान्तःकरणशुद्धिनैश्चल्ययोस्तस्य सिद्धत्वात्।

(२) यः ज्ञाने सामान्येच्छया श्रवणादौ प्रवर्तते। यस्य चान्तःकरणं भोगे आसक्तं स **मन्दजिज्ञासुः**। सोऽपि श्रवणं परित्यज्य पुनरपि कर्मोपास-

---

१. "श्रृण्वन्त्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहम्। मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः॥ (प. तृ. 260.)

"विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्ययात्।

देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम्॥" (प. तृ. 261)

तत्त्वबोधशून्यस्य श्रवणं, संशयवतो मननं, विपर्यस्तस्य (अन्यथाप्रतिपन्नस्य) निदिध्यासनं च कर्तव्यत्वेन चोदितम्। अज्ञानसंशयविपर्यासशून्यस्य तत्त्वविदो न किञ्चिदपि कर्तव्यमस्ति।

नयोः प्रवर्तितुं नार्हति । कर्मोपासनफलभूतान्तःकरणशुद्धिनैश्चल्ये श्रवणेनैव तस्य सिद्धे भवतः । श्रवणस्यावृत्त्यैवान्तःकरणदोषस्य निवृत्त्या तस्येह जन्मनि जन्मान्तरे वा ब्रह्मलोके वा ज्ञानं सिद्ध्येत् । आवृत्तिर्नामाभ्यासः । पुनःपुनरनुष्ठानम् । साधनानुष्ठाने प्रयत्नधारेति यावत् । श्रवणं परित्यज्य कर्मोपासनयोः प्रवर्तमानः **आरूढपतित** इत्यभिधीयते ।

इत्थं च **ज्ञानिनः, उत्तमजिज्ञासोश्च** कर्मोपासनयोरधिकारो नास्ति । **मन्दजिज्ञासुर्यो** वेदान्तश्रवणे प्रवृत्तस्तस्याप्यधिकारो नास्ति । यस्य ज्ञाने इच्छास्ति । परं तु बुद्धिर्भोगे आसक्ता, तस्मात् श्रवणे न प्रवर्तते तस्य मन्दजिज्ञासोः निष्कामकर्मण्युपासने चाधिकारोऽस्ति । यस्य तु भोगे एवेच्छास्ति । ज्ञानेच्छा नास्ति । स **बहिर्मुख** इति कीर्त्यते । तस्य सकामकर्मण्यप्यधिकारोऽस्ति ।

तस्माज्ज्ञानिनः कर्मोपासनयोरधिकारो नास्ति । कर्मोपासने ज्ञानस्य विरोधिनी ।

**(आ. ४१०-४१२) कर्मोपासने दृढबोधस्य न विरोधिनी किन्तु मन्दबोधस्यैव—**

**(४१०) दृढबोधस्य कर्मोपासनयोश्चाविरोधः—**

यद्यपि कर्मोपासने अप्यन्तःकरणस्य शुद्धिनैश्चल्यसंपादनद्वार ज्ञानोत्पत्तिं प्रति हेतू भवतस्तथापि ज्ञानोत्पत्तेरनन्तरं कर्मोपासनयोरनुष्ठाने उत्पन्नमपि ज्ञानं नश्येदिति हेतोस्ते ज्ञानविरोधिनी । न ज्ञानेच्छाहेतू भवतः ।

(१) "अहं कर्ता, यज्ञादिकं मया कर्तव्यं, यज्ञादेः स्वर्गः फलम्" इति भेदबुद्ध्या कर्मानुष्ठीयते । (२) "अहमुपासकः, देव उपास्यः' इति

---

१. "निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् ।
जिज्ञासायां संप्रवृत्तो नाद्रियेत् कर्मचोदनाम् ॥"

२. मोक्षसोपानमारुह्य ततश्च्युतस्यारूढपतितस्य विषये "करस्थं पायसं त्यक्त्वा कूर्परं लेढि दुर्मतिः" इति प्रसिद्धः **करंलेढिन्यायः** प्रसज्यते ।

"उपेक्ष्य तत्तीर्थयात्राजपादीनेव कुर्वताम् ।
पिण्डं समुत्सृज्य करं लेढीति न्याय आपतेत् ॥" (प. ध्या. 130)

उपेक्ष्य = अपरोक्षज्ञानसाधननिर्गुणोपासनश्रवणादिकं परित्यज्येत्यर्थः ।

भेदबुद्ध्योपासनमनुष्ठीयते। ते द्वे अपि बुद्धी सर्वं खल्विदं ब्रह्म इति बुद्धिं दूरीकृत्यैव भवतः। तस्मात्कर्मोपासने ज्ञानस्य विरोधिनी।

**यद्यपि** ज्ञानी आत्मानमसङ्गतया जानाति **तथापि** भोजनादिरूपं देह-व्यवहारं वा, जनकादिवत् ततोऽप्यधिकं राज्यपालनादिव्यवहारं वा करोत्येव। तस्य व्यवहारस्य ज्ञानं न विरोधि भवति। न वा व्यवहारो ज्ञानस्य विरोधी भवति। तथाहि यदात्मस्वरूपं ज्ञानेनासङ्गतया ज्ञातं तस्मिन्नात्मनि यदि व्यवहारः प्रतीतो भवेत्तदा व्यवहारस्य ज्ञानं विरोधि स्यात्। ज्ञानस्य च व्यवहारो विरोधी भवेत्। विदुषस्तु स व्यवहारः आत्मनि न प्रतीयते। 'सर्वो व्यवहारो देहाद्याश्रयः। व्यवहारसहितदेहादीनामात्मनि संबन्धो नास्ति।' इत्यनया बुद्ध्या ज्ञानी सर्वव्यवहारान् करोति। अतो विदुषः प्रवृत्तिरपि निवृत्तिरेव।

(४११) ज्ञानिनः कर्म आभासरूपमेव :—

**यथा** ज्ञानिनो भोजनादिरूपो व्यवहारो न ज्ञानस्य विरोधी **तथा** 'आत्मा असङ्गः, क्रियाः सर्वाः मनोवाक्कायाश्रिताः' इति ज्ञात्वा क्रियमाणे कर्मोपासने न ज्ञानस्य विरोधिनी। यदि विद्वानसङ्गत्वेन ज्ञातमात्मानं कर्तेति मत्वा कर्मोपासने कुर्यात्तदा ज्ञानस्य ते कर्मोपासने विरोधिनी भवेताम्। सोऽयमात्मनोऽसङ्गत्वविषयको दृढनिश्चयो विदुषः कर्मोपासनाभ्यां न दूरी-भवति। तस्मादाभासरूपे कर्मोपासने दृढबोधस्य न विरोधिनी। अत एव जनकादयः आभासरूपं कर्मानुष्ठितवन्तः॥

---

१. "जगत्सत्यत्वमापाद्य प्रारब्धं भोजयेद्यदि।
सदा विरोधि विद्यायाः भोगमात्रान्न सत्यता॥" (प. तृ. 177.)
"यदि विद्याऽपह्नुवीत जगत्प्रारब्धघातिनी।
तदा स्यान्न तु मायात्वबोधेन तदपह्नवः॥" ( „ „ 179.)
"मायामयः प्रपञ्चोऽयमात्मा चैतन्यरूपधृक्।
इति बोधे विरोधः को लौकिकव्यवहारिणः॥" (प. ध्या. 88.)
"अपेक्षते व्यवहृतिर्न प्रपञ्चस्य वस्तुताम्।
नाप्यात्मजाड्यं किं त्वेषा साधनान्येव काङ्क्षति॥" ( „ „ 89.)
"मनोवाक्कायतद्बाह्यपदार्थाः साधनानि तान्।
तत्त्वविन्नोपमृद्नाति व्यवहारोऽस्य नो कुतः॥" ( „ „ 90.)
ज्ञानं प्रारब्धजन्यव्यवहाराविरोधीति भावः।

२. आत्मा असङ्गः। सर्वाः क्रियाः मनोवाक्कायाश्रिताः' इति ज्ञात्वा क्रियमाणे **कर्मोपासने आभासरूपे** भवतः।

आत्मानमसङ्गं ज्ञात्वेतरव्यवहारवत् वैदिकशुभकर्माद्यनुष्ठानमपि देहादि-धर्म इत्येव ज्ञात्वा विदुषा क्रियमाणं शुभं **कर्माप्याभासरूपमेव**। तस्यापि ज्ञानेन सह विरोधो नास्ति। भाष्यकारादिभिः कर्मोपासनयोर्ज्ञानेन यो विरोध उक्तः सः 'आत्मा कर्ता भोक्ता च' इति ज्ञानपूर्वकं क्रियमाणकर्मोपसनविषयः। न त्वाभासरूपकर्मोपासनविषयः।

**(४१२) मन्दबोधस्य कर्मोपासनयोश्च विरोध एव—**

मन्दबोधस्य त्वाभासरूपे अपि कर्मोपासने विरोधिनी। संशयादि-सहितो बोधो **मन्दबोध** इत्युच्यते। यस्यान्तःकरणे 'आत्मा असङ्गो वा, किं वा न तथा' इति कदाचित्संशयो जायते, स पुरुषः 'आत्मा असङ्ग एव; न मे कर्तव्यं किञ्चिदप्यस्ति' इति वारं वारमनुसन्धानं कुर्यात्। एव-मनुचिन्तयतः कालेन संशयनिवृत्त्या दृढबोधो जायेत। तथा चिन्तनमकुर्वन् यदि कर्मोपासने एवानुतिष्ठेत्तदा जातोऽपि मन्दबोधो दूरीभवेत् अहं कर्ता भोक्ता इति विपरीतनिश्चय एव दृढीभवेत्। तस्मान्मन्दबोधोदयात्पूर्वमेव कर्मोपासने अनुष्ठेये मन्दबोधोदयानन्तरं न ते अनुष्ठेये।

मन्दबोधः पुरुषः कर्मोपासने अनुतिष्ठति चेत्तदा तस्य जातोऽपि मन्दबोधो नश्यतीत्यत्रायं दृष्टान्तः—**यथा** पक्षिणी शिशूनां पक्षोत्पत्तिपर्यन्तमेव स्वाण्डानि सेवते। अभयं यथा भवेत्तथा सम्यग्रक्षतीति यावत्। शिशूनां पक्षोत्पत्यनन्तरमण्डानि न रक्षति। यदि पक्षोत्पत्यनन्तरमप्यण्डानि रक्षेत् तदा अण्डान्तर्गतजलेनातिसुकुमारशिशुपक्षा द्रवीभूय विनश्येयुः। **तथा** ज्ञानोत्पत्तेः पूर्वमेव कर्मोपासने अनुष्ठेये। न तु ज्ञानोत्पत्तेरनन्तरमपि। यदि ज्ञानोत्पत्यनन्त-रमपि कर्मोपासने सेव्येते तदा बालपक्षिन्यायेन मन्दबोधोऽपि नश्येत्। **यथा** मातृरूपवृद्धपक्षिण्याः अण्डसंबन्धेन न कापि हानिस्**तथा** दृढबोधस्य कर्मोपास-नाभ्यां हानिर्न भवति। **यथा** वृद्धपक्षिण्या अण्डेन कर्तव्य उपकारो नास्ति **तथा** दृढबोधस्यापि कर्मोपासनाभ्यां कर्तव्य उपकारः नास्ति। तथा च ज्ञानिनो मोक्षार्थमनुष्ठेयं किञ्चिदपि नास्ति। इति मोक्षस्य किं कारणम्" इति तृतीय-प्रश्नस्योत्तरमभिहितम्।

**(४१३) उपसंहारः**—हे सोम्य! मयोपदिष्टः सर्वोऽयमर्थः सर्ववे-दसारः। तस्मादत्र त्वं श्रद्धत्स्व। एतदर्थज्ञानेन जननमरणप्रवाहरूपोऽपारो यः संसारमहोदधिस्तस्य तरणमनायासेन ते सिद्ध्येत्।

## (आ. ४१४-४१७) उपदिष्टार्थसङ्ग्रह :—

**(४१४) जीवस्वरूपम्**—'जगत्कर्तेश्वरः। स तव स्वरूपान्न भिन्नः। त्वं सच्चिदानन्दरूपं ब्रह्मैवासि' इति प्रागुपदिष्टमेवार्थं पुनरप्याचार्यः कृपया शिष्यं प्रति सङ्ग्रहेणोपदिशति 'हे सोम्य! त्वं दैन्यं परित्यज्य निजस्वरूपं जानीयाः। जन्मादिरहितं शुद्धं ब्रह्मैव त्वमसि। दृश्यं समस्तं जगत् त्वमेव प्रकाशयसि। स्वाज्ञानेन जगत्सर्वं त्वमेव सृजसि। पुनः समस्तं जगत्संहृत्य त्वमविनाशी अवशिष्यसे। मिथ्याप्रपञ्चं दृष्ट्वेषदपि त्वं न खिद्यसे। त्वं देवानामपि देवोऽसि। त्वमखण्डानन्दघनोऽसि। जगज्जीवेश्वरादयस्त्वयि मायया स्वाप्नार्थवत् रज्जुसर्पशुक्तिरजतादिवच्च प्रतीयन्ते।' इति। अत्रैते श्लोका भवन्ति—

"दैन्यं परित्यज्य निजात्मरूपं
सच्चित्सुखं पश्य सदाऽद्वितीयम्।
जन्मादिशून्यं परमेव तत्त्वं
ब्रह्मासि शुद्धं निजबोधरूपम्॥
दृश्यं समस्तं दृगभिन्न आत्मा
त्वमेव विद्योतयसि स्वभासा।
स्वाज्ञानतः सर्वमिदं विसृज्य,
पश्चाच्च संहृत्य विशिष्यसेऽजः॥
मिथ्याप्रपञ्चं दृष्ट्वापि न किञ्चित्खिद्यते तव।
मनो, देवादिदेवोऽपि त्वमेव सुखनीरधिः॥
त्वन्मायावशतो भाति जगज्जीवेशविभ्रमः।
स्वप्नवद्रज्जुसर्पादिशुक्तिकारजतादिवत्॥"

इति (ग्रन्थकृत एवैते श्लोकाः)

## (आ. ४१५-४१६) ज्ञानसाधनवर्णनम्:—

**(४१५) मुमुक्षोः हेयवर्गस्योपदेश**:—हे सोम्य पदार्थेषु दृढासक्तिरूपं रागं, लोभं, द्वेषं, कामं च दूरीकुरु। रागलोभद्वेषकामग्रहणं सर्वासां राजसमानसवृत्तीनामुपलक्षणम्। सर्वाः राजसतामसवृत्तयः समूलमुन्मूलयितव्या इति यावत्। राजसतामसवृत्तयो ज्ञानस्य विरोधिन्यः। तासामुन्मूलनं विना

ज्ञानं नोदियात् । तस्मात्तासां निवृत्तिर्जिज्ञासोरवश्यमपेक्षिता । इति जिज्ञासोर्हेयवर्गोपदेशः ।

(४१६) **ज्ञानस्य बहिरङ्गसाधनोपदेशः—**

विवेकः, वैराग्यं, शमादिषट्कसंपत्तिः, मुमुक्षुत्वं, इत्येतानि चत्वारि ज्ञानस्य साधनानि । तेषु विवेकः प्रधानं साधनम् । अतः प्रथमं तस्य कीर्तनम् । विवेकेनैव वैराग्यादिकमुत्पद्यते । अतश्चाचार्यः शिष्याय विवेकमेव प्रथममुपदिशति—हे सोम्य ! संसारसमुद्रं मृगतृष्णिकाजलसमं मिथ्येति वारं वारं चिन्तय। संसारस्य मिथ्यात्वोक्त्या मिथ्यासंसारकल्पनाधिष्ठानभूत आत्मा न मिथ्या । किन्तु सत्य इत्युक्तं भवति । ऐन्द्रजालिकेन प्रदर्श्यमानानद्भुतान् पदार्थान् पश्यन्तं पुत्रं पितैवमुवाच—'ऐन्द्रजालिकेन प्रदर्श्यमानमाम्रवृक्षादिकं सर्वं मिथ्या' इति । पितुरिद वचनं शृण्वन् पुत्रः ऐन्द्रजालिकमपि मिथ्येति न जानाति । किन्तु सत्यमेव तं जानाति । **एवमेव** 'जगन्मिथ्या' इत्युपदेशेन 'आत्मा सत्यः' इति शिष्यो विजानात्वित्यभिप्रायेणैवाचार्यः संसारसमुद्रं मिथ्येत्यकथयत् ।

इति 'जगन्मिथ्या, आत्मा सत्यः' इति गुरुर्विवेकमुपदिदेश । विवेके सिद्धे इतरसाधनानि स्वयमेवोपदेशं विनैव सिद्ध्येयुः । अतश्च विवेकोपदेशादेवेतरसाधनोपदेशोऽप्यर्थात्सिद्धः । इति ज्ञानस्य बहिरङ्गसाधनानि ।

ज्ञानस्यान्तरङ्गसाधनं तु श्रवणादिकमेव। **हे** शिष्य ! श्रवणरूपसाधनेन ज्ञानरूपं भानुमासाद्याज्ञानरूपं तमो विनाशय । **तम** इत्यन्धकारस्याज्ञानस्य च नाम । तत्रान्धकार उपमानमज्ञानमुपमेयम् । सादृश्यानुयोगि **उपमेयम्** । सादृश्यप्रतियोगि **उपमान**मिति ज्ञेयम् ।

(४१७) **ज्ञानस्वरूपम्—**

ज्ञानस्वरूपं साङ्ख्यन्यायादिशास्त्रेष्वन्यथान्यथा वर्णितम् । अतो महावाक्यानुसारेण ज्ञानस्वरूपमिदानीं वर्ण्यते—जीवेश्वरयोरुपाधिभूताविद्यामायाभागौ परित्यज्य तयोः प्रतीयमानं भेदं च विहाय तयोर्ज्ञानरूपो यश्चैतन्यांशस्तं भेदरहितं जानीहि । इत्थं महावाक्येषु भागत्यागलक्षणया जीवेश्वरयोरेकत्वं जानीयाः । इत्येवं वेदसारं वारं वारं विचिन्त्यात्मानं गोपाय । देहादिष्वासक्तिं कुर्वन् प्रपञ्चं मा पश्य ।

उक्तमेवार्थं पुनरपि संक्षिप्याह गुरुः—हे सोम्य! त्वं विनाशिदेहादिसङ्घातरूपो नासि। किन्त्वविनाशिब्रह्मरूपोऽसि। वृक्षरूपः संसारो मिथ्या। **यथा** नभसि नैल्यमधोमुखेन्द्रनीलकटाहरूपत्वादिकं चाविद्यमानमपि मिथ्या प्रतीयते **तथा** संसारोऽप्यात्मन्यविद्यमानोऽपि मिथ्या प्रतीयते। तथा चोक्तं भागवते—

"अविद्यमानोऽप्यवभासते द्वयो
ध्यातुर्धिया स्वप्नमनोरथौ यथा।
तत्कर्मसंकल्पविकल्पकं मनो
बुधो निरुन्ध्यादभयं ततः स्यात्॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते।
ध्यायतो विषयानस्य स्वप्नाऽनर्थागमो यथा॥"

इत्यादि। श्रुतिस्मृत्योः संसारस्य वृक्षरूपककल्पनादत्रापि वृक्षशब्दः संसारे प्रयुक्तः।

**(आ. ४१८-४१९) मोक्षस्य साधनं ज्ञानमिति प्रकारान्तरेण वर्णनम्—**

**(४१८) रागवैराग्ये क्रमेणाज्ञानिज्ञानिनोश्चिह्नभूते—**

मोक्षस्य साधनं ज्ञानमेव। अयमर्थः प्रकारान्तरेण वर्ण्यते। हे सोम्य! देहाभिमानवानज्ञानी, तादृशाभिमानरहितो ज्ञानी च क्रमेण बन्धमोक्षयोर्भाजनभूतौ। **अज्ञानी** बन्धस्याश्रयः। **ज्ञानी** च मोक्षस्याश्रयः। रागो वैराग्यं च क्रमेण तयोर्ध्वजभूतौ। **यथा** ध्वजो राज्ञो नगरस्य चिह्नं **तथा** रागोऽ**ज्ञानिनो**

---

१. (1) सर्वेषामप्युत्कृष्टत्वादुच्छ्रितं मायाविशिष्टं ब्रह्म यस्य **मूलं**, (2) महत्तत्वं यस्याङ्कुरः, (3) अहङ्कारो यस्य स्कन्धः, (4) पञ्चतन्मात्राः यस्य **शाखाः**, (5) उक्तं महत्तत्त्वादिकं सर्वमपि कार्यरूपत्वेन निकृष्टत्वाद्य**स्याधः शाखाः**, (6) वेदादिरूपं शास्त्रं प्ररोचनरूपमधुरवाक्यैर्यस्यानित्यत्वादिदोषाच्छादकत्वात्**पर्णानि**, (7) चत्वारः पुरुषार्थाः यस्य **रसाः**, (8) धर्माधर्मौ यस्य **पुष्पं**, (9) जननमरणादिदुःखं यस्य **फलं**, (10) अज्ञानिजीवरूपः पक्षी यस्य **भोक्ता**, (11) वैराग्येण तीक्ष्णीकृतज्ञानरूपः कुठारो यस्य **छेदकः**, एतादृशोऽयं संसाररूपोऽश्वत्थ**वृक्षः**। इत्थं शास्त्रेषु संसाररूपो वृक्षोबहुधा वर्णितः।

२. धूमाद्यथा वह्निरनुमीयते तथा रागवैराग्याभ्यामज्ञानिज्ञानिनोः स्वरूपमनुमीयते।

लिङ्गम्। वैराग्यं च **ज्ञानिनो** लिङ्गम्। यद्यप्यज्ञानिनोऽपि वैराग्यमुत्पद्यते तथापि तस्य वैराग्यं ज्ञानिवैराग्याद्विलक्षणम्। हे सोम्य! शब्दादिविषयेषु सत्यत्वभ्रान्तिः, रज्जुसर्पवद्विषयो भ्रमरूप इति निश्चयबुद्धिश्च क्रमेण, वायुर्लतामिव, रागं वैराग्यं च सदा चालयतः। रागवैराग्ययोः शैथिल्यं न जनयत इति यावत्। विषयेषु सत्यत्वबुद्ध्या रागस्य शैथिल्यं दूरीक्रियते। विषयेषु भ्रमत्वमिथ्यात्वबुद्ध्या वैराग्यस्य शैथिल्यं दूरीक्रियते इति तात्पर्यार्थः।

**(४१९) ज्ञान्यज्ञानिनोर्वैराग्ये वैलक्षण्यप्रदर्शनं; अज्ञानिनोऽन्तःकरणस्य साक्ष्यविषयकत्वस्य ज्ञानिनोऽन्तःकरणस्य साक्षिविषयकत्वस्य च वर्णनम्—**

ज्ञानिनस्त्वयं निश्चयः—'विषयोऽसत्यः अतस्तत्र सत्यत्वबुद्धिर्भ्रान्तिरेव'; इति। भ्रान्तिज्ञानं तद्विषयभूतमिथ्यावस्तु चेत्युभयमपि **भ्रम** इत्युच्यते। **अनेन** च ज्ञानिनो वैराग्यापेक्षयाऽज्ञानिनो वैराग्यस्य भेद उक्तो भवति। तथाहि अज्ञानिनो वैराग्यं विषयमिथ्यात्वबुद्ध्या नोत्पन्नम्। किं तु तात्कालिकविषयदोषज्ञानेनैवोत्पन्नम्। अत एव तद्वैराग्यं मन्दं भवति। 'विषयो मिथ्या' इत्येषा बुद्धिरज्ञानिनो नोदेति।

(१) **यद्यपि** शास्त्रेण युक्त्या चाज्ञान्यपि 'विषयो मिथ्या' इति जानाति। **तथापि** 'विषयो मिथ्या' इत्यपरोक्षबुद्धिर्ज्ञानिन एव भवति। न तु शास्त्रपरिचयवतोऽप्यज्ञानिनो भवति। तस्मादज्ञानिनः परोक्षया विषयमिथ्यात्वबुद्ध्या नापरोक्षा विषयसत्यत्वबुद्धिर्निवर्तते। इत्थमज्ञानिनो यदा विषये वैराग्यमुत्पद्यते तदा परोक्षा मिथ्यात्वबुद्धिरस्ति। परं तु परोक्षमिथ्यात्वबुद्ध्यपेक्षया प्रबला विषयसत्यत्वबुद्धिरस्ति। तस्मादज्ञानिनः परोक्षमिथ्यात्वबुद्धिर्वैराग्यस्य हेतुर्न भवति। किं तु प्रबलया सत्यत्वबुद्ध्या विषयेषु राग एवोत्पद्यते। कदाचिद्वैराग्योदयेऽपि तत्र विषयमिथ्यात्वबुद्धिर्न हेतुः। किन्तु तात्कालिकं विषयदोषज्ञानमेव।

(२) **ज्ञानवान्** हि सर्वप्रपञ्चमपि मिथ्यात्वेनापरोक्षतया जानाति। तया अपरोक्षमिथ्यात्वबुद्ध्या अपरोक्षसत्यत्वबुद्धिर्दूरीक्रियते। तस्माद्रागहेतुभूतविषयसत्यत्वबुद्धिर्ज्ञानिनो नास्ति। वैराग्यहेतुभूतविषयमिथ्यात्वबुद्धिरेवास्ति। यदि ज्ञानिनो विषये सत्यत्वबुद्धिः पुनर्भवेत्तदा पुनरपि रागोद्भवेन वैराग्यं दूरीभवेत्। किन्तु अपरोक्षतया मिथ्येति निश्चितेऽर्थे पुनरपि **सत्यत्व-**

बुद्धिर्न जायत एव। **यथा** अपरोक्षतया मिथ्येति ज्ञाते रज्जुसर्पे सत्यत्वबुद्धिः पुनर्नोदेति **तथा** ज्ञानिनः पुनरपि विषये सत्यत्वबुद्धिर्न जायते। इत्थं ज्ञानिनो रागस्योत्पत्तिर्वैराग्यस्य निवृत्तिश्च न संभवतः। तस्माज्ज्ञानिनो वैराग्यं दृढं भवति।

(३) विषयदोषदृष्टिजन्यमज्ञानिनो वैराग्यं तु कालेन दूरीभवेत्। तथाहि, यस्मिन् विषये दोषदृष्टिर्जायते तस्मिन्नेव विषये कालान्तरे सम्यक्त्वबुद्धिर्भवति। **यथा** सर्वेषां पुरुषाणां पशुधर्मान्ते स्त्रीविषये दोषदृष्टिर्जायते, पुनश्च क्षणान्तरे तस्यां सम्यक्त्वबुद्धिरपि जायते; तद्वत्। तथा च यदा दोषदृष्टिर्दूरीभवति, तदा वैराग्यमपि दूरीभवति। तस्मादज्ञानिनो दृढं वैराग्यं नास्ति।

इत्थं रागवैराग्ये क्रमेणाज्ञानिनो ज्ञानिनश्च लिङ्गत्वेनोक्ते। अन्यदप्यज्ञानिज्ञानिनोश्चिह्नमुच्यते—**यथा** प्रासादोपरि गजादिमूर्तिरूपं चिह्नमस्ति **तथा** (१) बन्धधामन्यज्ञानिनोऽन्तःकरणे **साक्ष्यरूपा** मूर्तिर्वर्तते; (२) मोक्षधामनि ज्ञानिनोऽन्तःकरणे **साक्षिरूपा** मूर्तिर्वर्तते। साक्षिणो विषयभूतः प्रपञ्चः **साक्ष्य** इति कथ्यते। (१) साक्ष्यरूपा मूर्तिः **मलिना**। साक्षिरूपा मूर्तिः **शुद्धा**। तत्र साक्ष्यरूपमूर्तावासक्तो **रागी**। साक्षिरूपमूर्तावासक्तस्त्यागी विरागी च। चञ्चलं भ्रमरूपं जगद्यो निजस्वरूपमिति मन्यते सः दुःखस्वरूपे कूपे निमज्जति। अचञ्चलं ब्रह्मैव निजस्वरूपमिति यो मन्यते स आनन्दस्वरूपो भवति।

### (आ. ४२०-४६२) महावाक्यार्थज्ञानम्—

### (आ. ४२०-४४२) लक्षणानिरूपणम्—

### (आ. ४२०) त्रिविधलक्षणानिर्देशः—

पूर्वस्मिन् ३२७ आवर्ते भागत्यागलक्षणा प्रपञ्चिता। तत्र हेतुवर्णनायेदानीं लक्षणाभेदः कथ्यते। पण्डिता हि (१) जहती लक्षणा, (२) अज-

---

१. अज्ञानिनो दृढवैराग्यं न भवतीत्ययमभिप्रायः भगवता भगवद्गीतायां
"विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते॥" (2-59) इत्युक्तम्।
निराहारस्य = बाह्यविषयत्यागिनो जिज्ञासोर्विषयेषु स्थूलरागो निवर्तते। परं तु रसशब्दवाच्यः वासनारूपो यः सूक्ष्मरागः सोऽपि परब्रह्मापरोक्षज्ञानेन निवर्तते इत्यर्थः।

हती लक्षणा, (३) भागत्यागरूपा लक्षणा इति त्रिविधां लक्षणामाहुः । तत्राद्यं द्वयं महावाक्यार्थज्ञाने नोपयुज्यते । महावाक्यं हि भागत्यागलक्षणया बोद्धुर्निजस्वरूपभूतं ब्रह्म बोधयति ।

**(४२१) लक्षणायाः सामान्यस्वरूपं निवेदनीयमिति शिष्यप्रश्नः—**

शिष्यः पृच्छति—'स्वामिन्! सामान्यज्ञानानन्तरं हि विशेषजिज्ञासा भवति । **यथा** 'ब्राह्मणोऽयम्' इति सामान्यतो ज्ञाते तदनन्तरं 'सारस्वतोऽयम्, द्राविडोऽयम्' इति विशेषज्ञानमुदेति **तथा** लक्षणायाः सामान्यस्वरूपज्ञानानन्तरमेव जहत्यादिविशेषस्वरूपज्ञानाकाङ्क्षा भवेत् । लक्षणायाः सामान्यज्ञानं विना जहत्यादिविशेषज्ञानं न संभवेत् । तस्माल्लक्षणायाः सामान्यस्वरूपं प्रदर्शयित्वा ततो जहत्यादिविशेषस्वरूपं तत्तल्लक्षणादिवर्णनपूर्वकं बोधयन्तु भवन्तः इति ।

**(४२२) गुरोरुत्तरम्—शक्तिलक्षणाख्यवृत्तिद्वयनिर्देशः—**

हे सोम्य! 'ऐकाग्र्येण शृणु मम वाक्यम् । लक्षणां तद्भेदांश्च जानीयाः । पदस्यार्थेन सह यः संबन्धस्तस्य' [१]**वृत्तिः** इति संज्ञा । सा च वृत्तिः

१. वत्सस्य गवा सह संबन्धोऽस्ति । तेन संबन्धेन स वत्सः बह्वीनां गवां मध्ये वर्तमानां स्वमातरं विविच्य ज्ञात्वा तन्निकटमुपसर्पति । संबन्धं विना प्रवृत्तिर्न भवेत् । तया प्रवृत्त्या वत्सस्य गोश्च **जन्यजनकभावरूपः संबन्धो** ऽवगम्यते । तादृशजन्यजनकभावरूपसंबन्धस्य ज्ञानं प्रति हेतुभूता वत्सप्रवृत्तिरपि **संबन्ध** इत्यभिधीयते ।

**एवमेव** शब्दानां स्वस्वार्थे प्रवृत्तिरपि न तयोः (शब्दार्थयोः) कश्चन संबन्धं विना न भवेत् । तथा च शब्दस्य स्ववाच्यार्थेन सह **वाच्यवाचकभावरूपः संबन्धः;** लक्ष्यार्थेन सह **लक्ष्यलक्षकभावरूपः संबन्धश्चा**वगम्येते । द्विविधोऽप्ययं संबन्धः स्मार्यस्मारकभावरूपः संबन्ध इत्यप्यभिधीयते । (1) वाच्यरूपः **अथवा** लक्ष्यरूपोऽर्थः पदेन स्मरणयोग्यो भवति । तस्मादर्थः **स्मार्य** इत्युच्यते । (2) वाचकरूपः **अथवा** लक्षकरूपः शब्दः तस्यार्थस्य स्मारणे योग्यो भवति, तस्माच्छब्दः **स्मारक** इति कीर्त्यते । तस्माच्छब्दार्थयोः परस्परं स्मारकस्मार्यभावरूपः संबन्धोऽस्ति । तादृशसंबन्धस्य ज्ञानं प्रति हेतुभूता शब्दस्य स्वार्थे या प्रवृत्तिः सापि **शब्दस्यार्थेन सह संबन्ध** इति वर्ण्यते । तादृशप्रवृत्तिरूपसंबन्ध एव **शब्दस्य वृत्तिरि**त्युच्यते । तादृशवृत्तिरूपः संबन्धः क्वचित् शक्तिरूपः । क्वचिल्लक्षणारूपश्च भवति ।

इदमत्र प्रसङ्गादवधेयम्—(1) वेदान्तशास्त्रे **वृत्तिशब्दः** अन्तःकरणस्य **अथवा** अविद्यायाः परिणामस्य संज्ञा । (2) वर्तनमथवा स्थितिरपि **वृत्तिरि**त्युच्यते क्वचित् ? (3) जीवनमपि **वृत्तिरि**त्यभिधीयते । प्राणव्यापारोऽपि **वृत्तिरिति** वर्ण्यते । (5) व्याकरणशास्त्रस्य कश्चन विभागोऽपि **वृत्तिरि**त्याख्यायते । एष्वर्थेषु मध्ये शब्दस्यार्थेन संबन्धरूपा वृत्तिरेवास्मिन् शास्त्रे **वृत्तिशब्दस्यार्थत्वेन ग्रहीतुं योग्या,** नान्योऽर्थः ।

'शक्तिः' 'लक्षणा' इति द्विविधा। तयोः स्वरूपं सलक्षणं वर्ण्यमानं शृणु' इति गुरुरवदत्।

---

१. शब्दगतं यत् स्वार्थविबोधनसामर्थ्यं तदेव **शब्दस्य शक्तिः** इति वर्ण्यते। सा शक्तिरूपा वृत्तिः कपालद्वयमध्यस्थितकपालसंयोगवत्, कार्यकारणात्मकपदार्थद्वयमध्यस्थितसमवायसंबन्धवत्, अथवा तादात्म्यसंबन्धवच्च शब्दार्थयोर्मध्येऽस्ति। तस्मात् सेयं शक्तिः शब्दस्यार्थेन सह विद्यमानः शक्तिवृत्तिरूपः **साक्षात्संबन्धो** भवति। इयं च साक्षात्संबन्धरूपा शक्तिवृत्तिः (1) योगः (2) रूढिः (3) योगरूढिः इति त्रिविधा।

(1) यस्य शब्दस्य स्वावयवयोगेना (मेलनेना) र्थज्ञानोत्पादनसामर्थ्यमस्ति तस्य शब्दस्य स्वार्थेन सह **योगशक्तिरूपः संबन्धो**ऽस्ति। स संबन्ध एव शब्दस्य **योगवृत्तिरि**ति वर्ण्यते। यथा 'पादरक्षा' इति पदे 'पाद' 'रक्षा' इत्यवयवद्वयमस्ति। तयोर्द्वयोरवयवयोर्योगेन (मेलनेन) कण्टकादिभ्यः पादत्राणयोग्योपानदादिरूपार्थस्य ज्ञानं जायते। तस्मात् 'पादरक्षा' इति पदस्य पादरक्षणयोग्योपानदादिरूपतदर्थेन सह **योगशक्तिरूपः संबन्धो**ऽस्ति।

(2) यस्य पदस्यार्थज्ञानमवयवैर्न जायते, किन्तु अस्य पदस्यायमेवार्थः' इत्येवं पदार्थबोधनविषयकः सङ्केतो (परिभाषा) यस्य पदस्य येनार्थेनास्ति, तस्य पदस्य तेनार्थेन सह **रूढिशक्तिरूपः संबन्धो**ऽस्ति। स एव संबन्धः शब्दस्य **रूढिवृत्तिः** इत्यभिधीयते। **यथा** 'उष्णीषः इति पदस्यावयवेभ्यो न कस्याप्यर्थस्य बोधो जायते। किन्तु 'उष्णीषः' इति पदात् शिरोवेष्टनरूपोऽर्थः लोके सङ्केतपूर्वकं ज्ञायते। तथा चोष्णीषपदस्य शिरोवेष्टनरूपार्थेन सह रूढिशक्तिरूपः सबन्धोऽस्ति।

(3) यस्य पदस्यावयवैर्यस्यार्थस्य बोधो जायते तस्य तस्मिन्नर्थे लौकिकसंकेतोऽप्यस्ति तस्य पदस्य तेनार्थेन सह योगरूढिरित्युभयरूपा शक्तिरस्ति। यथा 'अङ्गरक्षा' इति पदे 'अङ्ग' 'रक्षा' इत्यवयवद्वयमस्ति। तयोर्योगेन (मेलनेन) 'चोल' (कञ्चुक) इत्यर्थस्य ज्ञानं भवति। पादरूपाङ्गस्य रक्षणकर्त्रीं पादुकां बोधयितुं 'अङ्गरक्षा' पदं न प्रयुञ्जीत किंतु चोल (कञ्चुक)रूपमर्थं बोधयितुमेवेदं पदं प्रयुञ्जीत। अस्मिन् कञ्चुकरूपेऽर्थे 'अङ्गरक्षा'पदस्य लौकिकः सङ्केतोऽप्यस्ति। तस्मात् 'अङ्गरक्षा' पदस्य स्वार्थेन कञ्चुकेन सह **योगरूढिरित्युभयरूपशक्तिसंबन्धोऽस्ति**। [पङ्कजादिपदमत्र प्रसिद्धोदाहरणम्] सेयं शब्दस्य त्रिविधा शक्तिवृत्तिः **मुख्यवृत्तिः** इत्युच्यते।

शब्दस्य शक्तिवृत्तिरूपसंबन्धाज्ज्ञायमानः शब्दस्य साक्षात्संबन्धी योऽर्थः स **शक्यार्थ** इति वर्ण्यते। **यथा** 'पिता' इति शब्दस्य शक्तिवृत्तिरूपः साक्षात्संबन्धः जनकरूपार्थेन सह वर्तते। तस्मात् पिता इति शब्दस्य शक्तिवृत्तिरूपसंबन्धेन ज्ञातुं योग्यः, साक्षात्संबन्धी च जनकरूपो योऽर्थः सः पितृशब्दस्य शक्यार्थ इति कथ्यते।

२. शक्यार्थसंबन्धिनि वक्तृतात्पर्यविषयीभूते चार्थान्तरे शब्दस्य यः परंपरासंबन्धः स शब्दस्य लक्षणावृत्तिरित्युच्यते। यथा कृतोद्वाहमङ्गलं पितामहसमीपवर्तिनं पौत्रं प्रति सर्वेभ्यः पूर्वं 'पितरं नमस्कुरु' इत्याप्तवाक्यगतेन पितेति शब्देन पितामहबोधनं लक्षणावृत्त्या। तत्र शक्यार्थरूपजनकसंबन्धिनि वक्तृपुरुषतात्पर्यविषयीभूते पितामहरूपार्थान्तरे यः पितृशब्दस्य परंपरासंबन्धः स पितेति शब्दस्य लक्षणावृत्तिः

(आ. ४२३-४४०) शक्तिलक्षणम्—

(४२३) न्यायमतेन शक्तिलक्षणम्—

'घटः' इत्येतत्पदश्रवणमात्रेण सकलकलशरूपस्यार्थस्य ज्ञानं सर्वेषां भवतु' इतीश्वरेच्छैव न्यायशास्त्रे शक्तिरित्युच्यते।

(४२४) पदनिष्ठमर्थज्ञानोत्पादनसामर्थ्यं पदशक्तिरिति सिद्धान्ते शक्तिलक्षणम्—

(१) घटपदं शृण्वतः कलशरूपार्थबोधजननानुकूलं घटपदनिष्ठं सामर्थ्यमेव **घटपदस्य शक्तिः। एवमेव** पटपदं शृण्वतः वस्त्ररूपार्थबोधजननाकूलं पटपदनिष्ठं सामर्थ्यमेव **पटपदस्य शक्तिः।** एवमेव सर्वपदानां तत्तदर्थबोधजननाकूलं तत्तत्पदनिष्ठं सामर्थ्यमेव तत्तत्पदस्य शक्तिरिति ज्ञेयम्।

अत्र दृष्टान्तः—

यथा वह्नेः स्वसंबद्धपदार्थदाहजननसामर्थ्यरूपा शक्तिरस्ति तथा श्रोतुः श्रवणेन्द्रियसंयुक्तशब्दस्य स्वसंबद्धार्थज्ञानजननसामर्थ्यरूपा शक्तिरस्ति। अग्नौ दाहकत्वशक्तिवत् जले सेचकत्वं, दाहशान्तिकरत्वं, चूर्णपिण्डीकारकत्वमित्यादि सामर्थ्यमस्ति। तत्सामर्थ्यमेव शक्तिरित्युच्यते। एवं सर्वपदार्थेषु स्वस्वकार्यजननाकूलं सामर्थ्यमस्ति। तत्सामर्थ्यमेव शक्तिरिति श्रुतिसिद्धान्तः। अयमर्थः मनसि निश्चयेन धार्यः। नैयायिकादिसिद्धान्तस्तु हेयः।

---

तादृशलक्षणावृत्तिबोध्यः शब्दस्य शक्यार्थद्वारा परंपरया संबद्धो योऽर्थः स शब्दस्य लक्ष्यार्थ इत्युच्यते। यथा पितेति शब्दस्य शक्यार्थभूतजनकद्वारा परम्परया संबद्धः यः पितामहरूपोऽर्थः स पितेति शब्दस्य लक्ष्यार्थः। यस्य शब्दस्य येनार्थेन साक्षात्संबन्धं विनैवान्यद्वारा संबन्धो वर्तते तस्य शब्दस्य तेनार्थेन सह परंपरासंबन्ध उच्यते। तथाहि–पौत्ररूपतृतीयपुरुषस्य पितामहात्मकप्रथमपुरुषेण सह साक्षात्संबन्धस्य (जन्यजनकभावस्या) भावेऽपि पुत्रस्य स्वपित्रा सह साक्षात् (जन्यजनकभाव) संबन्धोऽस्ति। पितुश्च (स्वपित्रा) पितामहेन सह संबन्धोऽस्ति। तस्मात्पौत्रस्य पितामहेन सह पितृद्वारा संबन्धोऽस्ति। अयमेव परंपरासंबन्धः।

तथैव शब्दस्य साक्षात्संबन्धी यः शक्यार्थस्तस्मादन्यः शक्यार्थसंबन्धी च योऽर्थः न तेन सह साक्षात्संबन्धोऽस्ति। अपि तु शब्दस्य शक्तिरूपः संबन्धः शक्यार्थेन सह वर्तते। शक्यार्थस्य च संयोगादिरूपो यः कश्चन संबन्धः वक्तृतात्पर्यविषयभूतेन स्वसंबद्धेनान्येनार्थेन सह वर्तते। तस्माच्छब्दस्य स्वशक्यसंबन्धिनान्यार्थेन सह शक्यार्थद्वारा संबन्धोऽस्ति। अत एव स परंपरासंबन्ध इत्युच्यते। शब्दस्यायमेव परंपरासंबन्धो लक्षणावृत्तिः। यस्य शब्दस्य परंपरासंबन्धो येनार्थेन भवति स तस्य शब्दस्य लक्ष्यार्थः। इत्थं लक्षणावृत्तेः सामान्यलक्षणमुदाहरणं चोक्तम्। जहल्लक्षणादित्रिविधभेदोदाहरणमुपरिष्टात् ४३०-४३२ आवर्तटिप्पण्यां वक्ष्यते।

आक्षेपः—वर्णसमुदायात्मकपदातिरिक्तशक्त्यभावादीश्वरेच्छैव शक्तिः। वह्नेः स्वरूपातिरिक्ततया शक्तिर्नाम नोपलभ्यते। दाहहेतुभूतं वह्निनिष्ठ-सामर्थ्यमेव वह्नेः शक्तिरिति पूर्वोक्तं न युक्तम्। वह्नौ दाहहेतुत्वं केवल-मस्ति। अप्रसिद्धं सामर्थ्यं वह्नौ कल्पयित्वा तस्य दाहकारणत्वकल्पनात् अग्निनिष्ठप्रसिद्धदाहकारणत्वपरित्यागाच्च न किञ्चिदप्यस्ति प्रयोजनम्। यथा दृष्टान्तेऽग्नौ शक्तिर्नाम न काचिदतिरिक्ता भाति तथा दार्ष्टान्तिके पदेऽपि अक्षरसमुदायात्मकपदस्वरूपातिरिक्ता शक्तिर्न भाति। तादृशशक्त्यङ्गीकारे प्रयोजनं च नास्ति। तस्मान्न्यायमतोक्तेश्वरेच्छारूपा शक्तिरेव युक्ता।

## पूर्वोक्ताक्षेपस्य समाधानम्—

## अग्न्यादौ अग्न्याद्यतिरिक्तदाहादिकार्यजननानुकूलसामर्थ्यरूप-शक्तिसद्भावकथनम्—

गुरुरुवाच—हे सोम्य! सति प्रतिबन्धे ज्वलताप्यग्निना दाहो नैव जायते। उत्तेजकसान्निध्ये त्वग्निना संयुक्तः पदार्थः सत्यपि प्रतिबन्धके दह्यते। विनैव शक्तिं केवलाग्नेरेव दाहकारणत्वाङ्गीकारे उत्तेजकसहितप्रतिबन्ध-कसद्भावदशायां इव, प्रतिबन्धकशून्यकाले इव च उत्तेजकशून्यप्रतिबन्धक-सद्भावदशायामपि दाहो नियमेन जायेत। दाहकारणीभूतकेवलाग्नेः तद्दश-प्रतिबन्धकसद्भावदशायामपि सत्त्वात्। अस्मन्मते तु अग्निनिष्ठशक्तेः शक्ति-सहिताग्नेर्वा दाहहेतुत्वाभ्युपगमान्नायं दोषः। न केवलाग्नेर्दाहहेतुत्वमस्म-न्मते। प्रतिबन्धकसद्भावदशायां प्रतिबन्धकेन नाग्नेर्नाशो वा तिरोधानं वा संभवति। किन्त्वग्निनिष्ठशक्तेर्नाशो वा तिरोधानं वा भवति। तस्माद्दाहहेतु-भूताग्निशक्तेः, शक्तिविशिष्टाग्नेर्वाऽभावादेव न दाहो जायते। यत्र तु प्रति-बन्धकसमीपे उत्तेजकं नास्ति—तत्र प्रतिबन्धकोऽग्निशक्तेर्नाशं वा तिरोधानं वा करोति। उत्तेजकं तु पुनरपि शक्तेरुत्पत्तिमाविर्भावं वा करोति। तस्मात्सत्यपि प्रतिबन्धके उत्तेजकमाहात्म्यात् दाहकशक्तेः शक्तिविशिष्टाग्नेर्वा सद्भावाद्दाहो जन्यते। इत्थं प्रतिबन्धकेन विनश्यन्ती उत्तेजकेन पुनरुत्पद्यमाना चाग्नेः शक्तिरेव दाहकारणम्। कार्यविरोधि यत् तत्प्रतिबन्धकमित्युच्यते। प्रति-बन्धकसद्भावेऽपि यत् कार्यसाधकं तदुत्तेजकमिति कथ्यते। अग्निविषये प्रतिबन्धकत्वमुत्तेजकत्वं च मणिमन्त्रौषधादीनाम्। मणिमन्त्रौषधादीनां मध्ये

यस्य सान्निध्याद्दाहो न जायते स प्रतिबन्धकः। यस्य सान्निध्यात्सत्यपि प्रतिबन्धे दाहो जायते स उत्तेजकः।

हे सोम्य! अग्नाविव जलादिसकलपदार्थेष्वपि स्थितां तत्तत्कार्य-जननानुकूलां शक्तिं जानीहि। विना तु शक्तिं न केनापि कारणेन किमपि कार्यं जन्यते। इत्थं शक्तेः प्रयोजनं निरूपितम्। अग्निस्वरूपा-तिरिक्तशक्तिर्नास्तीत्याक्षेपसमाधानरूपतया तादृशशक्तिसद्भावविषये अनुभवः प्रदर्श्यते—'इदानीं प्रतिबन्धकसद्भावदशायां प्रज्वलत्यप्यग्नौ शक्तिः (दाह-सामर्थ्यं) नास्ति। पश्चादुत्तेजकसद्भावदशायां शक्त्यन्तरं जायते' इति शक्तिसद्भावविषयकानुभवः टीकरनाथादिसिद्धपुरुषविनोदचेष्टाः पश्यतां सर्वेषा-मस्ति तादृशलोकानुभवः केन शक्यतेऽपलपितुम्। अनुमितिप्रमात्मको-ऽयमनुभवः न केनापि प्रकारेण बाधितुं शक्यते। इत्थं सिद्धान्तानुसारेण शक्तिस्वरूपं तत्प्रमाणं च निरूपितम्।

### (आ. ४२५-४२७) शक्तिविषये मतान्तरखण्डनम्—

**(४२५) ईश्वरेच्छैवं पदशक्तिरिति नैयायिकोक्तं न साधु।** ईश्वरे-च्छा तावदीश्वरनिष्ठो धर्मः। न तु पदधर्मः। ईश्वरेच्छायाः पदनिष्ठत्वासं-भवात् पदशक्तिरिति वक्तुं न शक्यते। शक्तेः पदधर्मत्वे हि पदशक्तिरिति वक्तुं युज्यते। अतः पदनिष्ठार्थावबोधनसामर्थ्यमेव पदशक्तिः स्यात्।

**(४२६) वैयाकरणरीत्या शक्तिलक्षणं तावत्पदनिष्ठार्थयोग्यता।** पदनिष्ठा अर्थयोग्यता नाम पदनिष्ठपदार्थबोधहेतुत्वमेव। घटपदे कलशरूपार्थ-

१. प्रतिबन्धकीभूतमणिमन्त्रौषधादयः तेषामग्निनिष्ठदाहशक्तिनाशकत्वातिरोभाव-कत्वादयः, तथोत्तेजकीभूतमणिमन्त्रौषधादयः तेषामग्निनिष्ठदाहशक्त्युत्पादकत्वाविर्भाव-कत्वादयश्च टीकरनाथादिसिद्धपुरुषेषु प्रसिद्धम्।

२. कुम्भकारस्य घटचिकीर्षा यथा कुम्भकाराश्रयत्वात् कुम्भकारधर्मस्तथा 'अयं शब्दः इममर्थमभिव्यञ्जयतु' इतीश्वरेच्छेश्वराश्रयत्वादीश्वरस्यैव धर्मः स्यात् न तु पदस्य। अतः ईश्वरेच्छा ईश्वरस्यैव शक्तिः स्यात् न तु पदस्य।

३. "इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा
अनादिरर्थैः शब्दानां संबन्धो योग्यता तथा।"

(इति वैयाकरणभूषणसारे ३६ कारिका) इन्द्रियाणां स्वविषयेषु चाक्षुषादिषु घटादिषु यथाऽनादिर्योग्यता तदीयचाक्षुषादिकारणता तथा शब्दानामपि अर्थैः सह तद्बोधकतैव योग्यता। सैव शक्तिरित्यर्थः। इति" तद्विवरणम्। मञ्जूषायां तु वाच्यवाचकभावकारणी-भूतपदार्थयोस्तादात्म्यं शक्तिरित्युक्तम्।

ज्ञानहेतुत्वरूपयोग्यताऽस्ति। सा योग्यतैव शक्तिः। अयमर्थः हरिकारिकां प्रमाणीकृत्य वैयाकरणभूषणाख्यग्रन्थे निरूपितः।

(आ. ४२७-४२८) वैयाकरणाभिमतशक्तिखण्डनम्—

(४२७) अर्थज्ञानहेतुत्वरूपा योग्यता शक्तिरिति वदन् प्रष्टव्यः—किं भवन्मते पदे सामर्थ्यमस्ति, उत नास्तीति। आद्ये अस्मदभिमता शक्तिरङ्गीकृता भवति। द्वितीये लोकप्रसिद्धसामर्थ्यरूपा शक्तिरेव पदशक्तिरित्यभ्युपेया। न तु पदनिष्ठार्थबोधहेततारूपयोग्यता पदशक्तिरिति।

**अयमभिप्रायः**—पदे सामर्थ्यमभ्युपगच्छतस्तादृशसामर्थ्यातिरिक्तशक्त्यन्तराभ्युपगमो न युज्यते। किन्तु सामर्थ्यमेव शक्तिरित्यभ्युपगम एव युज्यते। सामर्थ्यं, बलं, ज्योक्, शक्तिः इत्येतेषां पदानामेकार्थबोधकत्वप्रसिद्धेः। अत एव लोके सामर्थ्यरहितं पुरुषं 'अशक्तोऽयम्' इति वदन्ति। किञ्च भर्जितं प्ररोहासमर्थं बीजं दृष्ट्वाऽस्य बीजस्याङ्कुरोत्पादनशक्तिर्नास्तीति वदन्ति। इत्थं सामर्थ्यं, शक्तिः इति पदयोरेकार्थत्वं लोकप्रसिद्धम्। अग्नावपि सामर्थ्यरूपैव शक्तिरिति निश्चितम्। तस्मात् पदेऽपि सामर्थ्यस्यैव शक्तित्वाभ्युपगमो युक्तः। पदे सामर्थ्यमङ्गीकृत्य तद्विलक्षणयोग्यतायाः शक्तित्वाभ्युपगमे लोकप्रसिद्धिविरोधः स्यात्। सामर्थ्यमेव योग्यतेत्युच्यते' इति यदि वैयाकरणो ब्रूयात् तदा सिद्ध्यत्येवास्मन्मतम्।

(४२८) अथ यदि वैयाकरणो ब्रूयात् सामर्थ्याभ्युपगमे हि पदेऽपि सामर्थ्यरूपा शक्तिरेव भवेदित्यापाद्येत; न सामर्थ्यमङ्गीक्रियतेऽस्मन्मते। तस्मादर्थज्ञानजनकत्वरूपयोग्यतैव पदशक्तिरिति। तदा स प्रष्टव्यः—सामर्थ्यं किं पदे केवले नाङ्गीक्रियते, उताग्न्यादिसर्वपदार्थेष्वपीति। द्वितीयपक्षो न युक्तः। अग्न्यादिसर्वपदार्थेषु सामर्थ्यरूपशक्तिसद्भावस्य पूर्वं युक्तिभिः साधितत्वात्। पदे केवलं अर्थबोधजनकत्वरूपयोग्यतैव शक्तिः। न तु तदतिरिक्तसामर्थ्यरूपा शक्तिरस्ति इति प्रथमपक्षे द्वितीयपक्षोक्तो यो दोषः 'वह्न्यादौ सामर्थ्यरूपशक्त्यनङ्गीकारे प्रतिबन्धकसान्निध्ये दाहाद्यनुत्पत्तिर्नोपपद्येत' इत्यादिः स दोषो यद्यपि नास्ति। तथापि पदे सामर्थ्यानभ्युपगमे 'असमर्थं पदं योग्यम्= सामर्थ्यहीनं पदमर्थज्ञानं जनयति' इति भवदीयः सिद्धान्त इति पर्यवस्यति। तदिदमसङ्गतम्। 'पदन्त्वसमर्थमेव। तथाप्यर्थज्ञानं जनयती'त्येषा तवोक्तिः 'अयं नपुंसकः। तथाप्यमोघवीर्यः' इत्युक्तिवदत्यन्तं व्याहता। सामर्थ्ययुक्तं

हि समर्थं, सामर्थ्यहीनं चासमर्थम् । असमर्थेन न किञ्चिदपि कार्यं सिद्ध्यतीति लोकप्रसिद्धिः । ततश्चासमर्थेन पदेनार्थज्ञानरूपकार्यमपि न संभवेदेव । तस्मात्पदे सामर्थ्यमवश्यमभ्युपेयम् । एवञ्च भर्जिते बीजे अङ्कुरोत्पत्तिहेतुत्वस्येवासमर्थे पदेऽर्थबोधहेतुत्वस्यासंभवात् अर्थबोधहेतुत्वरूपयोग्यता न पदशक्तिः । किन्तु सा योग्यता पदस्य येन सामर्थ्येन संपद्यते तत्सामर्थ्यमेव पदशक्तिरित्यभ्युपेयम् । ततश्च लोकप्रसिद्धसामर्थ्यस्यैव शक्तित्वाङ्गीकारे न कोऽपि दोषः ।

### (आ. ४२९-४३१) भट्ट[1]मतेन शक्तिलक्षणम्—

(४२९) पदस्यार्थेन सह तादात्म्यरूपो यः संबन्धः सा शक्तिरिति भट्टमतानुयायिन आहुः । सोऽयं तादात्म्यरूपः संबन्ध[2]: भेदाभेदस्वरूप इति च ते कथयन्ति ।

---

१. कुमारिलभट्ट इति भट्टपाद इति चास्य व्यपदेशः । मण्डनमिश्रस्य प्रभाकरस्य चायं गुरुः । जैमिनीयपूर्वमीमांसाया वार्तिकमयं विरचयामास ।

२. अभावसादृश्यभिन्नः प्रतियोगिसापेक्षो ज्ञानविषयश्चात्र संबन्ध इत्युच्यते। यत्र (यद्वस्तु) संबद्ध्यते तदधिकरणमनुयोगीति उच्यते । यद्वस्तु संयोगि तत् प्रतियोगीत्युच्यते । संबन्धस्यानेकविधत्वेऽपि संयोगः, समवायः, तादात्म्यमिति त्रयः प्रधानभूताः ।

(क) तत्र द्वयोर्द्रव्ययोः संबन्धः संयोगः । अयं च त्रिविधः—कर्मजसंयोगः, संयोगजसंयोगः, सहजसंयोगश्चेति । यदुत्पत्तौ क्रिया असमवायिकारणं (निमित्तं) स कर्मजसंयोगः । स द्विविधः—अन्यतरकर्मजः उभयकर्मजश्चेति । एकस्य क्रियया जन्यः अन्यतरकर्मजः । यथा—पतता पक्षिणा सह वृक्षस्य जायमानः संयोगः । उभयक्रियाभ्यां जन्यः उभयकर्मजः । यथा—मेषद्वयसंबन्धजः मेषयोः संयोगः । संयोगरूपासमवायिकारणजन्यः संयोगजसंयोगः । यथा—हस्तवृक्षसंयोगात् कायवृक्षसंयोगः संयोगजसंयोगः । जन्मतः सिद्धसंबन्धः सहजसंयोगः । यथा सुवर्णे पार्थिवभागस्य तैजसभागस्य च विद्यमानः संबन्धः सहजसंयोगः ।

(ख) नित्यसंबन्धः समवायः । न्यायमते गुणगुणिनोः, जातिव्यक्त्योः, क्रियाक्रियावतोः कारणकार्ययोश्च (अवयवावयविनोश्च) संबन्धः समवायः ।

(ग) न्यायमते स्वरूपसंबन्ध एव तादात्म्यसंबन्ध इत्युच्यते । पूर्वमीमांसावार्तिककारो भट्टः स्वमते स्वल्पभेदसहितोऽभेदस्तादात्म्यमित्यवोचत् । वेदान्तसिद्धान्ते तु भेदाभेदविलक्षणः संबन्धः तादात्म्यमित्याहुः । अस्यैवानिर्वाच्यतादात्म्यमित्यपि नाम । भेदविलक्षण इत्युक्तेर्वास्तवोऽभेद इति सिद्धम् । अभेदविलक्षण इत्युक्तेः कल्पितो भेद इति च सिद्धम् । तस्मात्सिद्धान्ते कल्पितभेदविशिष्टो वास्तवाभेदस्तादात्म्यमिति सिद्धम् । गुणगुण्यादीनां न्यायमतोक्तसमवायस्थाने भाट्टा वेदान्तिनश्च तादात्म्यसंबन्धमभिप्रयन्ति ।

अयं च तेषामभिप्रायः–(१) अग्निरिति पदस्य वह्निरूपार्थेन नात्यन्तं भेदः। अत्यन्तभेदे सति यथा अग्निपदादत्यन्तभिन्ना जलादिपदार्थाः अग्निरिति पदेन न प्रतीयन्ते। तथा अग्निरिति पदेन आग्नि पदादत्यन्तभिन्नो वह्निरूपपदार्थोऽपि न प्रतीयेत।

(२) पदस्य स्वार्थेन सहात्यन्तभेदाभाववदत्यन्ताभेदोऽपि नास्ति। यद्यत्यन्ताभेदो वाच्यवाचकयोः स्यात्, तदा अग्निपदवाच्यार्थभूतवह्निना यथा मुखं दह्यते, तथाऽग्निरूपार्थवाचकाग्निशब्दोच्चारणमात्रेणापि मुखं दह्येत। न तु तथा अग्निशब्दमुच्चारयितुः पुरुषस्य मुखं दह्यते। तस्माद्वाच्यवाचकयोर्नास्त्यत्यन्ताभेदोऽपि।

अपितु—अग्निपदस्य वह्निरूपार्थेन सह भेदसहितोऽभेदो वर्तते। भेदसत्त्वान्मुखं न दह्यते। अभेदसत्त्वात् अग्निरिति पदेन वह्निप्रतीतिर्जायते। यथा अग्निरिति पदस्य वह्निरूपार्थेन भेद-

---

स च तादात्म्यसम्बन्धस्त्रिविधः—(१) सहजतादात्म्यं। (२) कर्मजतादात्म्यं, (३) भ्रान्तिजतादात्म्यमिति च।

१. चिदहङ्कारे प्रतिफलति। चित्प्रतिबिम्बोऽहङ्कारश्चेत्युभयं मिलित्वा तप्तायःपिण्डवदेकीभूय चिद्वदेवावभाति। तादृशचित्प्रतिबिम्बयुक्ताहङ्कारस्यैव सहजतादात्म्यमिति नाम। उत्पत्तिदशायामेवोभयमपि मिलित्वैवोत्पन्नमिति चिदहङ्कारयोस्तादात्म्यमेव सहजतादात्म्यमित्युच्यते।

२. चित्प्रतिबिम्बयुक्तत्वेन चिद्वद्भासमानस्याहङ्कारस्य स्थूलशरीरेण सह संबन्धो यः स कर्मजतादात्म्यमित्युच्यते। जाग्रद्भोगप्रदकर्मणः उत्पत्तौ तत्कर्मजतादात्म्यमपि जायते। तत्कर्मनाशे तत्कार्मजतादात्म्यमपि नश्यति। कर्मण उत्पत्तौ कर्मजतादात्म्यमप्युत्पद्यते। कर्माभावे कर्मजतादात्म्यमपि नश्यति। जाग्रत्सुषुप्त्यादिषु तथा दर्शनात्।

३. अहं ब्राह्मणः, क्षत्रियः, ब्रह्मचारी, गृहस्थः इत्यादिचित्तवृत्तिसहिताहङ्कारस्य अहं शब्दार्थभूतसाक्षिणा सह तादात्म्यं भ्रान्तिजतादात्म्यम्। सर्वाभीष्टात्मस्वरूपमेवाहमिति प्रतीयते। अज्ञानाधीनभ्रान्तिजन्यत्वादस्य भ्रान्तिजतादात्म्यमिति नाम। न्यायमतोक्तगुणगुण्यादिसंबन्धरूपसमवायस्थाने वेदान्तिनां भट्टानां च मते तादात्म्यमुच्यते। अनयोस्तादात्म्ययोर्भेदोऽस्ति। केवलभेदे तादात्म्योक्तिर्न युज्यते। अभेदप्रतीतिविषयस्यापि तादात्म्योक्तेः केवलभेदाश्रयेऽभेदप्रतीत्यसंभवात्। तस्मात्तादात्म्यसंबन्धे अभेद आवश्यकः। अपि च केवलाभेदे संबन्ध एव न सिद्ध्यति। द्वयोरेव हि संबन्धः संभवति। न तु स्वेनैव स्वस्य। तस्मात्सर्वत्र संबन्धे भेद आवश्यकः। तस्मात्तादात्म्यसंबन्धे भेदोऽप्यपेक्ष्यते। इत्थं भेदाभेदद्वयमन्तरा तादात्म्यसंबन्धो नोपपद्यते। यद्यपि भेदाभेदयोः सामानाधिकरण्यं न संभवति, विरोधात्। तथापि प्रागुक्तरीत्या कल्पितभेदसहितवास्तवाभेदस्य एकत्र सामानाधिकरण्यं सिद्ध्यति। अयमेवानिर्वचनीयतादात्म्यसंबन्ध इत्युच्यते।

सहितोऽभेदो वर्तते तथैव उदकं, वनं, नीरं, जीवनमित्यादिपदानां जलरूपार्थेन सह भेदसहितोऽभेदो वर्तते। उदकशब्दजलरूपार्थयोरत्यन्तभेदसत्त्वे, यथा उदकमित्यादिशब्दादत्यन्तभिन्ना अग्न्याद्या अर्थाः उदकमिति शब्दान्न प्रतीयन्ते तथा जलरूपार्थोऽपि उदकादिपदैर्न प्रतीयेत। अतो नात्यन्तभेदोऽस्ति। उदकशब्दजलरूपार्थयोरत्यन्ताभेदोऽपि न। अत्यन्ताभेदे सति जलसंबन्धेन मुखे शैत्योत्पत्तिवत् उदकादिपदोच्चारणेनापि मुखे शैत्यं जायेत। परन्तूदकादिपदोच्चारणेन मुखे शैत्यं न जायते। तस्मान्नोदकादिपदानां जलरूपार्थेन सहात्यन्ताभेदोऽपि। एवं शब्दार्थयोर्भेदसहिताभेदसत्वान्नोभयविधदोषोऽपि।

इत्थमेव सर्वत्र स्वस्ववाच्यैः सह वाचकपदानां भेदसहितोऽभेदो वर्तते। अयमेव भेदसहिताभेदो भट्टमतानुयायिभिस्तादात्म्यसंबन्ध इति भेदाभेदसंबन्ध इति चोच्यते। तादृशभेदाभेदरूपतादात्म्यसंबन्ध एव सर्वपदनिष्ठस्वस्ववाच्यार्थज्ञानजनकशक्तिरिति, तादृशतादात्म्यसंबन्धातिरिक्तसामर्थ्यरूपशक्तिर्नास्तीति भट्टमतम्। भेदाभेदपक्षे च युक्तिर्निरूपिता।

(४३०) **भेदाभेदपक्षे प्रमाणम्**—माण्डूक्यादिवेदवाक्येषु "ओं इत्येतदक्षरं ब्रह्म" इत्युच्यते। तत्र व्याकरणरीत्या प्रकाशस्वरूपः सर्वसंरक्षकः इति ओमित्यक्षरस्यार्थः। ब्रह्म चेदृशमेव। तस्मात् 'ओं' इत्यक्षरं ब्रह्मणो वाचकं, ब्रह्म च वाच्यम्। वाच्यवाचकयोर्यद्यत्यन्तभेदः स्यात् तदा वाचकस्योङ्काररूपाक्षरस्य वाच्यभूतब्रह्मणश्च माण्डूक्याद्युपनिषत्सु अभेदो नोच्येत। श्रूयते च 'ओमिति ब्रह्म' इत्यभेदः। तस्माद्वाच्यवाचकयोरभेदे वेदवाक्यमेव प्रमाणम्।

सर्वलोकप्रसिद्ध्या वाच्यवाचकयोर्भेदश्च सिद्धः। तथाहि—अग्न्यादिशब्दाः वागाश्रिताः। तदर्थभूताः वह्न्यादिपदार्थाः वाचो बहिर्देशे चुल्ल्यादिस्थलेषु

---

१. 'अव' रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु' इत्येकोनविंशत्यर्थकधातोः 'अवतेष्टिलोपश्च' (सू. 139) इत्यौणादिकसूत्रेण मन् प्रत्ययः, मन् प्रत्ययस्य टेर्लोपश्च विहितः। तस्य "ज्वरत्वरस्रिव्यविमवामुपधायाश्च" (पा. सू. 6 4-20) इति सूत्रेणोपधावकारयोरूठ्। ततो गुणः। ततः शिष्टोच्चारणमिति प्रक्रियया 'ओम्' इति निष्पन्नम्। "अकार उकारो मकार इति। तानेकधा समभरत्। तदेतत् 'ओं' इति" (ऐ. ब्रा. अ. 25. ख. 7) इति श्रुतेः। "ओं इतीदं सर्वम्" इति श्रुत्या सर्ववेदसारभूतत्वात् सर्वमयत्वश्रवणाच्च। सर्वमयत्वं च सर्वात्मकब्रह्मस्वरूपाभिव्यक्तियोग्यस्थानत्वात् ब्रह्माभिधानत्वाच्च।

वर्तन्ते। तथैव 'ओम्' इत्यक्षररूपं पदमपि वाचि वर्तते। तदर्थभूतं परं ब्रह्म तु न वाचि वर्तते। किन्तु वाचो बहिः स्वे महिमनि प्रतिष्ठितम्। ब्रह्मणो व्यापकत्वेन[1] वाचि तदभावेऽपि ब्रह्मण्येव वाक् प्रतिष्ठिता भवति। न तु वाचि ब्रह्म। इत्थं पदं वाचि वर्तते। अर्थो बहिरिति सर्वजनप्रसिद्धम्। अतः पदतदर्थयोर्भेदः सर्वलोकप्रसिद्धः। इत्थं वाच्यवाचकयोर्भेदे सर्वानुभवः प्रमाणं तदभेदे च वेदवचनं प्रमाणमिति पदस्य स्वार्थेन सह भेदाभेदरूपतादात्म्यसंबन्धः नाप्रामाणिकः। किन्तु प्रमाणसिद्ध एव।

**(४३१) प्रसङ्गादन्यत्रापि (वाच्यवाचकभावस्थलादन्यत्रापि) भेदाभेदरूपतादात्म्यसंबन्धः प्रदर्श्यते।**

रूपरसगन्धादयो गुणाः। तदाश्रयभूतं द्रव्यं गुणि। अनेकसमवेतो धर्मो जातिः। यथा सर्वब्राह्मणशरीरेषु ब्राह्मणत्वमेकमेव वर्तते। तथा सर्वपुरुषेष्वेकं पुरुषत्वं, सर्वघटेष्वेकं घटत्वं च वर्तते। लोके ब्राह्मणत्वपुरुषत्वादिकं यस्योच्यते तस्मिन् ब्राह्मणादिशरीरे एव ब्राह्मणत्वादिजातिर्वर्तते। ब्राह्मणत्वादिजात्याश्रयभूतं ब्राह्मणादिशरीरं व्यक्तिरित्युच्यते। गमनागमनादिकं क्रियेत्युच्यते। तद्वान् क्रियाश्रयः कर्तेति चोच्यते। एतावतां पदार्थानां तादात्म्यसंबन्धो वर्तत इति ज्ञात्वा कार्यकारणरूपं वस्तु गुणगुण्यादिषु योजयेत्।

**अत्रायमभिप्रायः**—गुणगुणिनोरिव कार्यकारणयोरपि तादात्म्यसंबन्धोऽस्ति। गुणगुणिनोः परस्परं तादात्म्यमेव संबन्धः। तथा जातिव्यक्त्योः क्रियाक्रियावतोश्च परस्परं तादात्म्यसंबन्ध एव। एवं कार्यकारणयोरपि तादात्म्यमेव संबन्धः।[2] तादात्म्यं नाम भेदसहिताभेदः। निमित्तकारणस्य कार्यस्य च परस्परं भेदाभेदरूपतादात्म्यसंबन्धो नास्ति। तयोरत्यन्तभिन्नत्वात्। उपादानकारणकार्ययोस्तु भेदाभेदरूपतादात्म्यमेव संबन्धः। घटस्य निमित्तकारणं

---

१. स्वल्पदेशवर्ति व्याप्यमित्युच्यते। अधिकदेशवर्ति व्यापकमिति च। तथाहि—स्वल्पदेशवर्ती घटो व्याप्यः। अधिकदेशवर्तित्वादाकाशो व्यापकः। व्याप्यं व्यापकेऽन्तर्भति। व्यापकं तु व्याप्याद्बहिरपि वर्तते। घटः आकाशेऽन्तर्भवति। आकाशस्तु घटादिभ्यो बहिरपि वर्तते। तथा वाक् ब्रह्मापेक्षयाऽल्पदेशवर्तित्वेन व्याप्यत्वात् ब्रह्मण्यन्तर्भवति। ब्रह्म तु वागाद्यपेक्षयाऽधिकदेशवर्तित्वेन व्यापकत्वाद्वागादिभ्यो बहिरपि वर्तते।

२. गुणगुणिनोर्जातिव्यक्त्योः क्रियाक्रियावतोः कार्यकारणयोश्चेति चतुर्षु स्थलेषु भट्टवद्वेदान्त्यपि तादात्म्यसंबन्धमङ्गीकरोति। वेदान्त्यभिमततादात्म्यसंबन्धलक्षणं भट्टाभिमततादात्म्यलक्षणाद्भिन्नमेव। चतुर्षु स्थलेषु नैयायिकाः समवायाख्यं नित्यसंबन्धं ब्रुवते।

कुलालदण्डादिकम् । तस्य घटादिकार्येण सहात्यन्तभेद एवास्ति । उपादानकारणभूतमृत्पिण्डतत्कार्यभूतघटयोस्तु भेदसाहिताभेद एवास्ते ।

मृत्पिण्डाद् घटः यद्यत्यन्तभिन्नः स्यात् तर्हि अत्यन्तभिन्नतैलादिवत् घटोऽपि मृत्पिण्डान्न जायेत । उपादानकारणस्य स्वकार्येण सहात्यन्ताभेदो यदि स्यात्तदा नैव मृदः घट उत्पद्येत । स्वस्वरूपादेव स्वोत्पत्त्यभवात् । तस्मादुपादानकारणस्य स्वकार्येण सह भेदसहिताभेदोऽस्ति । अभेदसत्वात् भेदपक्षोक्तो दोषः, भेदसत्वादभेदपक्षोक्तो दोषश्च न प्रसज्यते । इत्थमुपादानकारणस्य स्वकार्येण सह भेदाभेदरूपसंबन्धो युक्त्या सिद्ध्यति ।

आपातप्रतीत्याऽपि उपादानकारणस्य कार्यस्य च भेदाभेदौ सिद्ध्यतः । 'इयं मृत्' 'अयं घटः' इति प्रतीत्या भेदः सिद्ध्यति । विचार्यमाणे तु घटस्यान्तर्बहिश्चान्तरेण मृदं नान्यत्प्रतीयते । किन्तु मृदेव प्रतीयते । तस्मादभेदः सिद्ध्यति । अनेन उपादानकारणकार्ययोः भेदाभेदरूपतादात्म्यसंबन्धोऽस्ति । तद्वत् गुणगुणिनोरपि भेदाभेदसंबन्धोऽस्ति । घटरूपस्य घटादत्यन्तभेदो यदि स्यात् तदा घटस्य पटेनात्यन्तभेदसत्वात् यथा पटमनाश्रित्य घटः स्वातन्त्र्येण वर्तते, तथा घटरूपमपि घटमनाश्रित्य स्वातन्त्र्येणैव तिष्ठेत् । गुणगुणिनोरत्यन्ताभेदो यदि स्यात् तदापि घटरूपं घटाश्रितं न स्यात् । स्वस्यैव स्वाश्रयत्वासंभवात् । तस्माद्गुणगुणिनोरपि भेदाभेदरूपतादात्म्यसंबन्धोऽस्ति । इयमेव युक्तिः जातिव्यक्त्योः क्रियाक्रियावतोश्च भेदाभेदरूपतादात्म्यसंबन्धेऽवगन्तव्या । खण्डनीयमतस्यानेकयुक्तिभिः प्रसाधने प्रयोजनाभावान्न युक्त्यन्तराणि प्रदर्श्यन्ते ।

(आ. ४३२-४३७) भट्टमतखण्डनम्—

(आ. ४३२-४३४) वाच्यवाचकयोर्भेदाभेदरूपतादात्म्यमसङ्गतमिति निरूपणम्—

(४३२) एकस्य वस्तुनः एकस्मिन्नधिकरणे भेदाभेदयोरुभयोः सामानाधिकरण्यं विरुद्धम् । तस्मात् स्थलचतुष्टयेऽपि भेदाभेदरूपतादात्म्यं यदुक्तं तत्सकलं विरुद्धमिति युक्तिमन्तो वदन्ति । **अत्रायमभिप्रायः** (१) एकस्मिन् घटे स्वाभेदस्यान्यवस्तुभेदस्य च सामानाधिकरण्यं यद्यप्यस्ति तथापि यस्याभेदोऽस्ति तस्यैव भेदस्तत्र नास्ति, यस्य भेदोऽस्ति तस्यैवाभेदो नास्तीत्यभिप्रायेणैकस्य वस्तुनो भेदाभेदौ विरुद्धावित्युच्यते । (२) एकस्य घटस्य

स्वस्मिन्नभेदः परस्मिन् भेदश्च यद्यप्यस्ति, तथापि यत्राभेदोऽस्ति तत्र नास्ति भेदः। यत्र भेदोऽस्ति, तत्र नास्त्यभेदः, इत्यभिप्रायेणैकस्य वस्तुनो भेदाभेदावेकस्मिन्नधिकरणे विरुद्धावित्युच्यते।

किञ्च भेदाभेदौ परस्परं विरोधिनौ। एकस्मिन् वस्तुनि यस्य भेदोऽस्ति तस्याभेदः, यस्याभेदोऽस्ति तस्य भेदश्च विरुद्ध एव। तस्मात् वाच्यवाचकयोः गुणगुणिनोः, जातिव्यक्त्योः, क्रियाक्रियावतोः उपादानकारणतत्कार्ययोश्च भेदाभेदरूपतादात्म्यसंबन्धाभ्युपगमोऽसङ्गत एव।

(४३३) यदुक्तं वाचकशब्दो वाचि वर्तते, वाच्योऽर्थो बहिर्वर्तते इति वाच्यवाचकयोर्भेदो लोकप्रसिद्धः। श्रुतौ ओंकाररूपाक्षरं परं ब्रह्मेत्युक्तत्वात् (४२० आवर्ते) अभेदश्च सिद्ध इति वाच्यवाचकयोर्भेदाभेदौ प्रमाणसिद्धाविति।

**अत्रोच्यते**—प्रणवरूपस्य ओंकाराक्षरस्य परब्रह्मणश्चाभेदो वेदे कथितः। न तु तस्य वेदस्य वाच्यवाचकयोरभेदे तात्पर्यम्। तस्य गूढं तात्पर्यान्तरमस्ति। यत्र यत्र 'ओमित्यक्षरं ब्रह्म' इति कथ्यते तत्र तत्र 'ओमित्यक्षरं परब्रह्मरूपेणोपास्यम्' इत्यर्थे वाक्यस्य तात्पर्यं, न तु परब्रह्मणः ओमित्यक्षरस्य च भेदाभावे। इदं तु तात्पर्यं भट्टो न वेद।

यथा विधीयते तथैवोपास्यस्य स्वरूपेण भाव्यमिति न नियमः। किन्तु वस्तुनः स्वरूपं विहाय रूपान्तरेणापि वस्तूपास्यते। यथा सालग्रामस्य विष्णुरूपेण, बाणस्य शिवरूपेण चोपासनं शास्त्रेणोपदिश्यते। तत्र शङ्खचक्रगदाद्युपेतचतुर्भुजविशिष्टमूर्तिर्न सालग्रामेऽस्ति। न च बाणे गङ्गालङ्कृतजटाजूटडमरुकचर्मकपालाद्युपेता भद्रामुद्रया शरणागतानां गुणत्रयातीतात्मतत्त्वोपदेष्ट्री मूर्तिरस्ति। किन्तु सालग्रामबाणादिकं शिलारूपेणैवास्ते। किन्तु शास्त्राज्ञया शिलादृष्टिपरित्यागपूर्वकं सालग्रामे बाणे च क्रमेण विष्णुस्वरूपेण शिवस्वरूपेण चोपासनं क्रियते। तस्मादुपासनं नोपास्यस्वरूपाधीनं, किन्तु विध्यधीनम्। यथा शास्त्रं विधत्ते तथोपासितव्यम्।

किञ्च छान्दोग्योपनिषदि (5-3-10) पञ्चाग्निविद्याप्रकरणे द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपाः पञ्च पदार्थाः अग्निदृष्ट्योपासितव्याः, श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्च पदार्थाः आहुतिरूपेणोपासनीयाः इति च श्रुतिराह। तत्र द्युलोकादयो नाग्नयः, नापि श्रद्धादय आहुतयः। किन्तु वेदाज्ञया

द्युलोकादयोऽग्नित्वेन श्रद्धादयश्चाहुतित्वेनोपास्यन्ते । एवमेव ओमित्यक्षर-विषयकब्रह्मोपासनमुक्तम् । तत्र ओमित्यक्षरस्य वस्तुतो ब्रह्मस्वरूपत्वाभावेऽपि ब्रह्मस्वरूपत्वेनोपास्यत्वमुपपद्यते । उपासनावाक्ये वस्तुन अभेदो नापेक्ष्यते । किन्तु भिन्नं वस्त्वप्यभिन्नतयोपास्यते ।

विचार्यमाणे ब्रह्मवाचकस्योङ्कारस्य स्ववाच्यब्रह्मणा सहाभेदो युज्यते च । कलशादिजडरूपार्थवाचकानां घटादिपदानां तु स्ववाच्यजडरूपार्थैर-भेदो न युज्यत एव । तथापि सर्वेषां नामरूपाणां ब्रह्मणि कल्पितत्वात्, ब्रह्म सर्वाधिष्ठानं भवति । ओंकारोऽपि ब्रह्मणो नाम । तस्माद् ब्रह्मण्यो-ङ्कारः कल्पितः । कल्पितं वस्त्वधिष्ठानाव्यतिरिक्तमधिष्ठानात्मकमेव भवति । तस्मात् ओमित्यक्षरं ब्रह्मैव । घटादिपदानां तु जडरूपस्वार्थो नाधिष्ठानम् । किन्तु स्ववाच्यैः सह घटादिशब्दाः ब्रह्मणि कल्पिताः । तस्माद्ब्रह्मैव घटादिपदानामधिष्ठानम् । तस्मात् सर्वकारणत्वेन सर्वाधिष्ठानत्वात् सर्वपदानां ब्रह्माभेदो युज्यते । घटादिपदानां तु जडरूपस्ववाच्यैः सहाभेदो न केनापि प्रमाणेन युज्यते । तस्माद्भट्टाभिमतः वाच्यवाचकयोरभेदः नैव संभवति ।

**(४३४) वाच्यवाचकयोः केवलभेदमङ्गीकुर्वतां मते भट्टेन यो दोषः प्रदर्शितः सः सिद्धान्ते सामर्थ्यरूपशक्तिमङ्गीकुर्वतां मते न संभवति । तथाहि—भट्टेन प्रदर्शितो दोषस्तावदेवम्—**

घटपदस्य वाच्यार्थः घटपदादत्यन्तभिन्नश्चेत्, यथा घटपदात् अत्यन्त-भिन्नः पटरूपार्थो न ततः प्रतीयते तथा घटपदात् कलशरूपार्थोऽपि न प्रतीयेत, कलशरूपार्थस्यापि घटपदादत्यन्तभिन्नत्वात् । अपि च घटपदवाच्यं घटपदाद् भिन्नत्वेनाभ्युपगम्य तस्य घटपदेन प्रतीत्यभ्युपगमे, यथा घटपदात् अत्यन्त-भिन्नः कलशरूपार्थः प्रतीयते तथाऽत्यन्तभिन्नः पटरूपार्थोऽपि प्रतीयेतेति ।

**अत्रोच्यते**—अयं च दोषः सामर्थ्यरूपामथवेच्छारूपां शक्तिमन-भ्युपगच्छतां मते भवेत् । सामर्थ्यरूपां शक्तिमङ्गीकुर्वतां तु नायं दोषः । सिद्धान्तिमते वाच्यवाचकयोर्भेदो भवितुमर्हति । तथाहि—घटपदवाच्यः कलशः, तदवाच्यः पटश्चेत्युभयमपि घटपदादत्यन्तं भिन्नमेव । तथापि घटपदे कलश-रूपार्थज्ञानोत्पादनशक्तिरेवास्ति । न तु पटादिरूपार्थान्तरज्ञानोत्पादनशक्तिः । तस्मात् घटपदात्कलशरूपार्थप्रतीतिरेव जायते नार्थान्तरप्रतीतिः । इत्थं **यस्मिन् पदे यदर्थबोधनशक्तिरास्ते स एवार्थः तेन पदेन प्रतीयते, नार्थान्तरम्**

तस्माद्वाच्यवाचकयोरत्यन्तभेदेऽपि नास्ति दोषः। तयोः भेदसहिताभेदरूपतादात्म्यसंबन्धस्तु न घटते, भेदाभेदयोः परस्परविरोधित्वात्। तयोरेकत्र सामानाधिकरण्यासंभवाच्च।

(आ. ४३५-४३७) **उपादानकारणतत्कार्ययोर्भेदाभेदरूपतादात्म्यसंबन्धो दुर्घटः—**

(४३५) भेदाभेदयोः परस्परविरोधित्वात् तयोः सामानाधिकरण्यासंभवाच्च उपादानकारणतत्कार्ययोर्भेदसहिताभेदो नास्ति। तयोः केवलभेदोऽस्ति। केवलभेदपक्षे भट्टेनोक्तो दोषः नैयायिकमते सामर्थ्यरूपशक्तिवादिसिद्धान्तिमते च न संभवति। उपादानकारणतत्कार्ययोरत्यन्तभेदे भट्टेन प्रदर्शितो दोषस्त्वयम्—'मृत्पिण्डात् अत्यन्तभिन्नो घटस्ततो यद्युत्पद्येत तदा मृत्पिण्डात् अत्यन्तभिन्नतैलोत्पत्तिरपि तत आपद्येत। अत्यन्तभिन्नत्वात्। मृत्पिण्डात् तैलं यदि नोत्पद्यते तर्ह्यत्यन्तभिन्नत्वाविशेषात् घटोऽपि मृत्पिण्डान्नोत्पद्येत' इति।

(४३६) **अत्रोच्यते—नैयायिकमते तावन्नायं दोषः—**

तथाहि—नैयायिकः सकलपदार्थानामुत्पत्तौ प्रागभावमपि कारणमाह। घटोत्पत्तौ यथा दण्डचक्रकुलालादीनां कारणत्वं तथा घटप्रागभावस्यापि कारणत्वम्। एवं सकलपदार्थानामुत्पत्तौ तत्तत्पदार्थप्रागभावोऽपि कारणम्। घटप्रागभावः घटोपादानभूतमृत्पिण्डे एव वर्तते। नान्यत्र। तैलप्रागभावस्तिलेष्वेव वर्तते नान्यत्र। एवं सकलपदार्थानां प्रागभावः स्वस्वोपादानकारणे वर्तते। यस्मिन् पदार्थे यस्य कार्यवस्तुनः प्रागभावो वर्तते तस्मात्पदार्थात् तदेव कार्यमुत्पद्यते, नान्यत् कार्यम्। मृत्पिण्डे घटप्रागभाव एव वर्तते। तस्मात् मृत्पिण्डात् घट एवोत्पद्यते, न तैलादिकम्। तिलेषु तैलप्रागभाव एव वर्तते। तस्मात्तिलेभ्यस्तैलमेवोत्पद्यते, न घटादिकम्। इत्थं निखिलकार्योत्पत्तौ तत्तत्प्रागभावः कारणम्। तस्मात् उपादानकारणकार्ययोरत्यन्तभेदाभ्युपगमान्नैयायिकमते नास्ति दोषः।

---

१. सामर्थ्यरूपशक्तिवादिसिद्धान्तिमते उपादानकारणस्य कार्येण सह नात्यन्तभेदः। किन्त्वनिर्वचनीयतादात्म्यसंबन्धोऽस्ति। तथाप्यत्र तयोः योऽत्यन्तभेद उक्तस्स प्रौढिवादेन। प्रौढिर्नाम=स्वमाहात्म्यं, वादः=कथनं। तथा च स्वमाहात्म्यप्रकटनाय वादः प्रौढिवादः। प्रौढिवादलक्षणं चैवम्—प्रतिवाद्युक्तमङ्गीकृत्यापि स्वमते दोषपरिहारः। प्रकृते चोपादानकारणतत्कार्ययोर्भेदपक्षे भट्टो दोषमब्रवीत्। तादृशभट्टोक्तदोषयुक्तपक्षमङ्गीकृत्यापि स्वमते दोषः परिहृतः। तस्मादयं प्रौढिवादः।

## (४३७) सामर्थ्यरूपशक्तिवादिमतेऽपि न दोषः ।

तथाहि—मृत्पिण्डे घटोत्पादनसामर्थ्यरूपशक्तिरेवास्ति, न तु तैलोत्पादनसामर्थ्यरूपशक्तिः । तस्मान्मृत्पिण्डाद् घट एवोत्पद्यते, न तैलम् । तथा तिलेषु तैलोत्पादनसामर्थ्यरूपा शक्तिरेवास्ति न तु घटोत्पादनसामर्थ्यरूपा शक्तिः । तस्मात्तिलेभ्यः तैलमेवोत्पद्यते, न घटः । इत्थं उपादानकारणतत्कार्ययोरत्यन्तभेदाभ्युपगमे नास्ति दोषः ।

उपादानकारणतत्कार्ययोर्भट्टाभिमतः भेदाभेदस्त्वसङ्गत एव । भेदपक्षे अभेदपक्षे च भट्टोक्ता दोषास्तन्मते निश्चयं संभवेयुः । भट्टेन भेदसहिताभेदस्याभ्युपगमात् कारणकार्ययोस्तन्मते भेदश्च सिद्धः । अभेदश्च सिद्धः । भेदसद्भावाद्भेदपक्षोक्तदोषाणां, अभेदसद्भावादभेदपक्षोक्तदोषाणां च प्रसङ्गाद्भेदाभेदपक्षोऽसङ्गतः । चोरस्य चौर्यदोषो भवति । द्यूतकृतः द्यूतदोषो भवति । उभयानुष्ठातुस्तूभावपि दोषौ भवतः । एवं गुणगुण्यादीनां भेदाभेदाभ्युपगमेऽपि भेदपक्षोक्तदोषा अभेदपक्षोक्तदोषाश्चेत्युभयविधा दोषाः प्रसज्येरन् । सामर्थ्यरूपशक्तिवादिमते गुणगुणिनोः केवलभेदाभ्युपगमान्नास्ति दोषः । यतः गुणिनि गुणाश्रयत्वरूपा शक्तिरेवास्ति, नान्याश्रयत्वशक्तिः । तस्मात् भेदपक्षे यो दोषः प्रदर्शितः घटरूपादयो यथा घटाद्भिन्नास्तथा पटादयोऽपि घटाद्भिन्नाः वर्तन्ते । तथा सति घटरूपादय इव पटादयोऽपि घटाश्रिता भवितुमर्हन्ति । अथवा पटादिवत् घटरूपादयोऽपि घटानाश्रिता भवितुमर्हन्ति इति सोऽयं सामर्थ्यरूपशक्त्यनभ्युपगमपक्षे एव स्यात् । सामर्थ्यरूपशक्तिवादिमते तु गुणगुणिनोः केवलभेदाभ्युपगमेऽपि यथा न दोषस्तथा प्रदर्शितः । गुणगुणिनोर्भेदाभेदाभ्युपगन्तृमते पूर्वोक्तदृष्टान्तरीत्या उभयपक्षदोषाः संभवेयुरेव । अपि च भेदाभेदयोर्विरुद्धत्वादसंभवदोषोऽपि स्यात् ।

अपि च जातिव्यक्त्योः क्रियाक्रियावतोश्च केवलभेदोऽस्ति । तथापि व्यक्तौ जात्याश्रयत्वशक्तिरस्ति । क्रियावति च क्रियाश्रयत्वरूपशक्तिरस्ति । नान्याश्रयत्वशक्तिः । इत्थमुपादानकारणतत्कार्ययोस्तथा गुणगुण्यादीनां च भेदाभेदरूपतादात्म्यसंबन्धोऽसङ्गत एव । पूर्वोक्तस्थलेषु सर्वत्र भेदाभ्युपगमे भट्टेन प्रदर्शितं भेदपक्षदोषं सर्वं सामर्थ्यरूपा शक्तिः सिद्धान्ते कबलीकरोति ।

वस्तुतस्तु वेदान्तसिद्धान्तेऽपि कार्यगुणजातिक्रियाणां उपादानकारणगुणिव्यक्तिक्रियावद्भिः सह नास्त्यत्यन्तभेदः । किन्तु तादात्म्यसंबन्ध एवाङ्गी-

क्रियते। तथापि भेदाभेदरूपतादात्म्यसंबन्धो नास्ति। किन्तु भेदाभेदविलक्षणानिर्वचनीयतादात्म्यसंबन्धोऽस्ति। भेदपक्षविलक्षणत्वादभेदपक्षस्य न तत्रत्यो दोषः। अभेदपक्षविलक्षणत्वाच्च भेदपक्षस्य न तत्रत्योऽपि दोषः। इत्थं भेदाभेदविलक्षणानिर्वचनीयतादात्म्यसंबन्धो भवति। भेदाभेदरूपतादात्म्यसंबन्धस्त्वसङ्गत एव अतो 'वाच्यवाचकयोर्भेदाभेदरूपतादात्म्यसंबन्ध एव शक्तिः इति भट्टानुयायिनां मतं न समीचीनम्। अपि तु शब्दस्य श्रवणमात्रेणार्थज्ञानोत्पादकत्वरूपं पदनिष्ठसामर्थ्यमेव पदशक्तिरिति सम्यक्। इत्थं शक्तिर्निरूपिता।

(४३८) **शक्यलक्षणम्**—लक्षणाज्ञाने शक्यार्थज्ञानमुपयुज्यते। शक्यसंबन्धस्य लक्षणास्वरूपत्वात्। शक्यार्थज्ञानमन्तरा शक्यसंबन्धरूपलक्षणाज्ञानं न संभवति। अतः शक्यस्य लक्षणमुच्यते। यस्मिन् पदे यस्यार्थस्यावबोधनशक्तिरस्ति तस्य पदस्य सोऽर्थः शक्यः इति बोध्यः। शक्यार्थ एव वाच्यार्थ इति अभिधेयार्थ इति मुख्यार्थ इति चोच्यते। तद्यथा—अग्निरिति पदे वह्निरूपार्थावबोधकत्वशक्तिरस्ति। तस्मादग्निपदस्य वह्निः शक्यार्थः, वाच्यार्थः, अभिधेयार्थः मुख्यार्थश्च भवति। वाच्यार्थबोधकं पदं वाचकमित्युच्यते।

(४३९) **लक्षणायाः लक्ष्यार्थस्य च सामान्यलक्षणम्।** वाच्यार्थसंबन्धः लक्षणायाः स्वरूपभूतं लक्षणम्। योऽर्थः पदस्य शक्त्या न बुध्यते। किन्तु लक्षणया बुद्ध्यते स लक्ष्यार्थ इत्युच्यते।

(आ. ४४०-४४२) **जहदजहद्भागत्यागलक्षणानां लक्षणम्**—

(४४०) **जहती लक्षणा**—वाच्यार्थं समग्रं परित्यज्य तत्संबन्धिमात्रं

---

१. केवलभेदस्थले तादात्म्यं न संभवति। यतः अभेदज्ञानविषयस्यैव तादात्म्यमिति व्यपदेशः। तस्मात्केवलभेददशायमभेदप्रतीतिर्न स्यात्। अतस्तादात्म्यसंबन्धेऽभेदापेक्षाऽस्ति। अपि च केवलाभेदस्थले संबन्धो न स्यात्, द्वयोः पदार्थयोरेव संबन्धसंभवात्, स्वस्वरूपेण स्वस्य संबन्धासंभवाच्च। तस्मात् संबन्धसामान्ये भेदापेक्षाऽस्ति। तादात्म्यस्य संबन्धरूपत्वाद्भेदापेक्षाऽस्ति। इत्थं भेदाभेदौ विना तादात्म्यसंबन्धो न घटेत। भेदाभेदयोः सामानाधिकरण्यं त्वेकत्र विरुद्धम्।

तथापि कल्पितभेदविशिष्टवास्तवाभेदस्य तादात्म्यमिति नाम। मूले भेदाभेदविलक्षणं तादात्म्यमित्युक्तस्यायमभिप्रायः—(१) भेदविलक्षणमित्यनेन वास्तवभेदाभावोऽभिमतः। तेन कल्पितभेदविशिष्टमिति बोध्यते। (२) अभेदविलक्षणमित्यनेन कल्पिताभेदाभावोऽभिमतः। तेन वास्तवाभेद आवेदितः। एवञ्च सिद्धान्ते कल्पितभेदविशिष्टवास्तवाभेदः तादात्म्यसंबन्ध इत्युच्यते। अमुमेवानिर्वचनीयतादात्म्यसंबन्धं वदन्ति।

यत्र प्रतीयते तत्र जहल्लक्षणा। तद्यथा—'गङ्गायां ग्रामः' इति कश्चिदब्रवीत्। तत्र गङ्गापदस्य तीरे जहती लक्षणा। गङ्गापदस्य वाच्यार्थः गङ्गानदीप्रवाहः। प्रवाहे च ग्रामस्थितिर्न संभवति। तस्मात् प्रवाहरूपं वाच्यार्थं समग्रं विहाय तीरे गङ्गापदस्य जहल्लक्षणा। वाच्यार्थसंबन्धस्य लक्षणेति नाम। 'गङ्गायां ग्रामः' इत्यत्र गङ्गापदवाच्यार्थभूतप्रवाहस्य तीरेण सह संयोगसंबन्धोऽस्ति। स एव लक्षणा। अत्र वाच्यस्य समग्रतया परित्यक्तत्वाज्जहल्लक्षणेयम्[1]॥

---

१. जहल्लक्षणाया ललितमिदमुदाहरणम्—यस्य जामातुः पिता प्रवासी स जामाता श्वशुरगृहं विवाहार्थं पितृव्यादिबन्धुभिः सह जगाम। तत्र नूतनवस्त्रपरिधापनकाले 'जामातुः पिता वस्त्रेणालङ्क्रियताम्' इति कश्चनाह। एतद्वाक्यस्थपितृशब्दस्य शक्यार्थो यः जामातुर्जनकः स तत्रासन्निहितः इति वक्ता जानाति। अतः एतद्वाक्यगतपितृशब्देन जामातृजनकरूपमुख्यार्थबोधने वक्तुस्तात्पर्यं नास्ति। तस्मात् पितृशब्देन शक्यार्थभूतजनकं समग्रतया विहाय जनकसंबन्धिपितृसहोदरः पितृव्यो ग्राह्य इत्यस्मिन् वाक्ये पितृशब्दस्य जहती लक्षणा। अत्र पितृशब्दशक्यार्थभूतजामातृजनकस्य जामातृपितृव्येन सह सहोदरत्वसंबन्धोऽस्ति। स संबन्ध एव लक्षणा। तया लक्षणया बोध्यः पितृव्यरूपोऽर्थः पितृशब्दस्य लक्ष्यार्थः। **अथवा** 'कूपश्चलति' इति कश्चिद्ब्रवीति। तत्र कूपशब्दस्य शक्यार्थभूतजलपूर्णावटे चलनक्रियाया असंभवात् तत्र वक्तुस्तात्पर्यं नास्ति। अतः कूपसंबन्धिबलीवर्दद्वययुक्तचर्मभस्त्रिकायां वक्तुस्तात्पर्यम्। तस्मात् कूपशब्दस्य शक्यार्थं समग्रं परित्यज्य तत्संबन्धिबलीवर्दद्वययुक्तचर्मभस्त्रिकाग्रहणाज्जहल्लक्षणा। इत्थमेव 'मार्गो गतः' 'चुल्ली ज्वलति' इत्यादिवाक्येष्वपि जहल्लक्षणा बोध्या।

केनचिदाचार्येण सिद्धान्ते वक्ष्यमाणस्थलेऽपि जहल्लक्षणा प्रदर्शिता। तथाहि—"सर्वं खल्विदं ब्रह्म" इति श्रुतौ सर्वस्य जगतो ब्रह्मरूपत्वमुच्यते। तत्रानित्यत्वदृश्यत्वविकारित्वजडत्वदुःखित्वादिविपरीतधर्मविशिष्टनामरूपात्मकं जगत् नित्यदृग्रूपाविकारिचेतनानन्दात्मकं ब्रह्मैवेत्युक्तिर्विरुध्यते। न हि तत्र श्रुतिवाक्यस्य तात्पर्यं संभवति। किं तु 'बाधायां सामानाधिकरण्यम्' इति रीत्या नामरूपात्मकजगत् बाधित्वावशिष्टं तत्सम्बन्धिभूतं यदधिष्ठानचैतन्यं तदेव ब्रह्म इति श्रुतिवाक्यतात्पर्यम्। तस्मादत्र सर्वं' इति पदस्य वाच्यभूतनामरूपात्मकं जगत् सर्वं विहाय तत्संबन्धि अस्तिभातिप्रियात्मकाधिष्ठानमेव ब्रह्मरूपत्वेन ग्राह्यम्। तस्माज्जहल्लक्षणा। अत्र आरोपितनामरूपात्मकजगतः स्वाधिष्ठानचैतन्येन सह यस्तादात्म्यसंबन्धः सा लक्षणा। तया लक्षणया ज्ञाप्यमानमधिष्ठानचैतन्यं लक्ष्यार्थः।

**मुख्यसिद्धान्ते** त्वत्र भागत्यागलक्षणाङ्गीक्रियते। अन्तरेणाधिष्ठानज्ञानमारोपितप्रतीतिर्न जायेत। अधिष्ठानाव्यतिरेकेणैवारोपितं प्रतीयते। तस्मादस्तिभातिप्रियात्मकं नाम रूपमेव च सर्वशब्दस्य वा इदंशब्दस्य वा वाच्यार्थः। तत्र नामरूपांशं विहाय अवशिष्टास्तिभातिप्रियात्मकाधिष्ठानांशो यस्तदेव ब्रह्म। इत्थं "सर्वं खल्विदं ब्रह्म" इति वाक्यस्थे सर्वपदे इदंपदे वा भागत्यागलक्षणाऽङ्गीक्रियते।

(४४१) **अजहल्लक्षणा**—वाच्यार्थेन सहैव वाच्यसंबन्धिज्ञानं येन पदेन जायते तत्पदे तस्मिन्नर्थे अजहल्लक्षणा ग्राह्या। शोणो धावति" इत्यत्र 'शोण' पदस्य शोणवर्णविशिष्टाश्वे अजहल्लक्षणा। शोण इति वर्णः। तस्मिन् केवले वर्णे धावनं न संभवति। अतः शोणपदवाच्यार्थभूतरक्तवर्ण-विशिष्टाश्वे शोणपदस्य अजहल्लक्षणा। गुणगुणिनोस्तादात्म्यसंबन्ध उक्तः। शोणो वर्णविशेषत्वाद्गुणः। अतः शोणपदवाच्यरक्तगुणस्य स्वाश्रयेण गुणि-नाऽश्वेन सह यस्तादात्म्यसंबन्धः सा लक्षणा। वाच्यार्थमपरित्यज्यैवाधिकांशस्य ग्रहणादजहल्लक्षणेयम्।[1]

(४४२) **भागत्यागलक्षणा**—

पदस्य वाच्यार्थे अंशमेकं विहायांशान्तरग्रहणं **भागत्यागलक्षणा**। सैव जहदजहल्लक्षणेति चोच्यते। तथाहि क्वचिद्देशे पूर्वदृष्टमेव पदार्थं पुनरपि देशान्तरे दृष्ट्वा 'तदेवेदम्' इति वदति। अत्र भागत्यागलक्षणा। अतीत-

---

१. अजहल्लक्षणाया उदाहरणान्तराणीमानि—

1. 'काकेभ्यो दधि रक्ष्यताम्' इति वाक्ये 'काक' इति पदस्य वाच्यार्थभूतका-करूपपक्षिसकाशाद्दधिरक्षणमात्रे न वक्तुस्तात्पर्यम्। किन्तु काकवत् दध्युपघातकबिडाला-दिभ्योऽपि दधिरक्षणे वक्तुस्तात्पर्यम्। काकपदवाच्यकाकरूपपक्षिणां बिडालादिभिः सह दध्युपघातकत्वरूपं साजात्यमस्ति। सोऽयं साजात्यसंबन्ध एवात्र लक्षणा। अत्र वाच्यार्थ-काकमविहायाधिकतया बिडालादीनामपि ग्रहणात् अजहल्लक्षणा। दध्युपघातकाः सर्वेऽप्यत्र काकपदस्य लक्ष्यार्थाः।

2. केदाररक्षणार्थं मञ्चे उपविशन् कश्चन पुरुषः पक्ष्यादिकं विद्रावयन्नाक्रोशति। तं दृष्ट्वा कश्चन वदति मञ्चः क्रोशति इति। तत्र 'मञ्चः' इति पदस्य मञ्चस्थपुरुषे अजहल्लक्षणा। मञ्चशब्दवाच्यार्थमञ्चे क्रोशनमसंभवि। अतो मञ्चपदस्य वाच्यार्थभूतख-ट्वया सह पुरुषेऽजहल्लक्षणा। 'मञ्चस्थः पुरुषः क्रोशति' इति ह्यस्य वाक्यस्य लक्ष्यार्थः। अत्र मञ्चपदवाच्यो यः खट्वारूपोऽर्थः तस्य तदाधेयपुरुषेण सहाधेयत्वसंबन्धोऽस्ति। सोऽयं संबन्ध एव लक्षणा। वाच्यार्थमविहायाधिकार्थग्रहणादजहल्लक्षणा।

३. तथा 'छत्रिणो यान्ति' 'यष्टीः प्रवेशय' इत्यादिवाक्येषु 'छत्रि' पदेन 'यष्टि' पदेन च क्रमेण स्ववाच्यार्थभूतेन छत्रविशिष्टपुरुषेण यष्टिसमुदायेन च तत्संबन्धितया छत्रविहीनाः, यष्टिवाहकाश्च पुरुषा गृह्यन्ते। तस्मात् वाच्यार्थापरित्यागेनाधिकांश-ग्रहणात् अजहल्लक्षणा।

तथा च यत्र यत्र श्रुतिवाक्ये आत्मस्वरूपप्रतिपादकसत्वचित्वादिविशेषणानां मध्ये एकस्य वा द्वयोर्वा उपादानमस्ति तत्र तत्रानुक्तान्यपीतरसर्वविशेषणानि ग्राह्याणि। तस्मा-देतादृशस्थले सिद्धान्तेऽप्यजहल्लक्षणोपयुज्यते।

काले देशान्तरे स्थितं वस्तु 'तत्' इत्युच्यते। अतः अतीतकालविशिष्टं देशान्तरविशिष्टं च वस्तु 'तत्' इति पदस्य वाच्यार्थः। वर्तमानकाले समीपदेशे स्थितं वस्तु 'इदम्' इत्युच्यते। अतः वर्तमानकालविशिष्टं समीपदेशविशिष्टं च वस्तु 'इदम्' इति पदस्य वाच्यार्थः। 'भूतकालविशिष्टं देशान्तरविशिष्टं च वस्त्वेव वर्तमानकालविशिष्टं समीपदेशविशिष्टं च भवति' इत्येतत 'तदेवेदम्' इति वाचकसमुदायस्य वाच्यार्थः। तदेतन्न सङ्गच्छते। भूतकालस्य वर्तमानकालस्य च सामानाधिकरण्ये विरोधोऽस्ति। तथैव देशान्तरस्य समीपदेशस्य च सामानाधिकरण्येऽपि विरोधः। अतः पदद्वयवाच्यार्थान्तर्भूतदेशकालात्मकवाच्यांशं विहाय वस्तुमात्रे पदद्वयस्य भागत्यागलक्षणा।

(आ-४४३—४४९) महावाक्येषु लक्षणा—

(४४३) "तत्त्वमसि" इति महावाक्ये लक्षणां प्रदर्शयितुं 'तत्' 'त्वम्' इति पदयोः वाच्यार्थः प्रदर्श्यते।

---

१. 'सोऽयम्' इत्यत्र वाक्ये 'सः' 'अयम्' इत्यनयोः पदयोः परस्परसमानविभक्तिकत्वबलात् एकार्थकत्वरूपसामानाधिकरण्यसंबन्धोऽस्ति। तादृशसामानाधिकरण्यवशात् तयोः पदयोर्वाच्यार्थभूतयोः परोक्षापरोक्षवस्तुनोरेकत्वं प्रतीयते। तयोर्वाच्ययोर्विरोधिधर्मवत्त्वेन न तदैक्यमुपपद्यते। तस्मादत्र लक्षणैव युक्ता। जहती अजहती वा लक्षणा नात्र संभवति। अतः भागत्यागलक्षणैवाश्रयणीया। तत्र 'सः' इति पदवाच्यं परोक्षत्वधर्मविशिष्टं वस्तु। 'अयम्' इति पदवाच्यमपरोक्षत्वधर्मविशिष्टं वस्तु। अनयोः परोक्षत्वापरोक्षत्वांशं विहायाविरुद्धांशभूतं वस्तुमात्रं गृह्यते। अत्र परोक्षत्वापरोक्षत्वांशयोः वस्तुना सहाश्रयत्वसंबन्धः। वस्त्वात्मकांशस्य स्वस्वरूपेण तादात्म्यसंबन्धः। समस्तवाच्यांशानां वस्तुना सह आश्रयत्वतादात्म्यसंबन्धो यः सा लक्षणा। परस्परविरुद्धपरोक्षत्वापरोक्षत्वांशं विहाय अविरुद्धकेवलवस्तुरूपवाच्यांशो गृह्यते। अत एवेयं **भागत्यागलक्षणा**।

एवमेव 'तत्वमसि' इत्यादिमहावाक्यस्थजीवेश्वरवाचकपदद्वयस्य परस्परं समानविभक्तिकत्वबलादेकार्थप्रतिपादकत्वरूपसामानाधिकरण्यसंबन्धोऽस्ति। तद्बलात् 'तत्' 'त्वम्' इत्यादिपदवाच्यजीवेश्वरयोरेकत्वं प्रतीयते। तयोर्जीवेश्वरयोर्विरुद्धधर्मवत्त्वेनैकत्वासंभवात् लक्षणाऽङ्गीकार्या। तत्रापि पूर्वोक्तरीत्या जहदजहल्लक्षणयोरसंभवाद्भागत्यागलक्षणा ग्राह्या। तस्मात् सर्वमहावाक्येषु द्वयोर्द्वयोः पदयोर्वाच्यभूतजीवेश्वरयोः सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिधर्मविशिष्टोपाधिरूपविरुद्धवाच्यांशं विहायाविरुद्धचेतनांशो ग्राह्यः। तत्र सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिधर्मविशिष्टमायाविद्ययोः चैतन्येन सहाधिष्ठानत्वसंबन्धोऽस्ति। चैतन्यस्य स्वेन तादात्म्यसंबन्धोऽस्ति। एतेषां सर्वेषां वाच्यानां चैतन्यांशेन सहाधिष्ठानत्वतादात्म्यसंबन्धो यः सा लक्षणा। विरोधिभूतवाच्यांशं विहायाविरोधिभूतचेतनांशो गृह्यते। तस्मादियं **भागत्यागलक्षणे**त्युच्यते॥

**तत्पदवाच्यार्थस्तावत्**—सर्वशक्तिमान्, सर्वज्ञः, विभुः, ईश्वरः, स्वतन्त्रः, परोक्षः, मायी बन्धमोक्षरहितश्चेति सर्वशक्तिमत्वादिधर्मविशिष्टमीश्वरचैतन्यं तत्पदवाच्यार्थः। ईश्वरे बन्धाभावात्तस्मिन् मोक्षोऽपि नास्ति। बद्धस्य हि मोक्षो युक्तः।

(४४४) **त्वंपदवाच्यार्थनिरूपणम्**—ईश्वरधर्मविपरीतधर्मा यत्र वर्तन्ते तादृशजीवचेतनस्त्वंपदवाच्यार्थः। **अयमभिप्रायः**—जीवोऽल्पशक्तिमान्, अल्पज्ञः, परिच्छिन्नः, अनीशः, कर्माधीनः, अविद्यामोहितः बन्धमोक्षभाक्, नित्यापरोक्षः। स्वस्वरूपस्य कस्यापि परोक्षत्वाभावात् नित्यापरोक्षरूप एव जीवः। ईश्वरस्वरूपं तु यद्यपीश्वरस्य प्रत्यक्षं तथापि जीवानां न प्रत्यक्षम्। अत एवेश्वरः परोक्ष इत्युच्यते। जीवस्वरूपं तु जीवस्येश्वरस्य चेत्युभयोः प्रत्यक्षम्। अत एव जीवः। प्रत्यक्ष इत्युच्यते। पूर्वोक्ताल्पशक्तिमत्वादिधर्मविशिष्टः जीवचेतनः 'त्वं' पदवाच्यः।

### (४४५) महावाक्ये वाच्यार्थविरोधाल्लक्षणाया आश्रयणम्—

सामवेदीयच्छान्दोग्योपनिषदि षष्ठाध्याये उद्दालकमुनिः स्वपुत्रं श्वेतकेतुं प्रति जगत्कारणीभूतमीश्वरं प्रदर्श्य 'तत्वमसि' इत्युपदिदेश। अयं चास्य वाच्यार्थः—'तत्' जगदुत्पत्तिकर्ता सर्वशक्तिमान् सर्वज्ञत्वादिधर्मविशिष्ट ईश्वरः। 'त्वम्' अल्पशक्तिमान् किञ्चिज्ज्ञत्वादिधर्मविशिष्टो जीवः। 'असि' वर्तसे। इह 'तत् त्वमसि' इत्युक्तया जीवेश्वरयोरेकत्वं वाच्यार्थः प्रतीयते। तच्च नोपपद्यते। तथाहि—यः सर्वशक्तिमान्

---

१. सर्वसामर्थ्यविशिष्टः, सर्ववस्तुविषयकविज्ञानवान्, व्यापकः, सर्वप्रेरकः, कर्मावशः, जीवप्रत्यक्षस्याविषयः, स्वाधीनमायः, बन्धरहितत्वान्मोक्षरहितोऽपि। एतादृशेश्वरस्तत्पदवाच्यार्थः।

२. जीवः स्वस्य निजं स्वरूपं अहंपदलक्ष्यार्थं कूटस्थं यद्यपि न जानाति, तथापि अहं पदवाच्यार्थभूतं अन्तःकरणविशिष्टचैतन्यं, अथवा स्थूलसूक्ष्मसङ्घातविशिष्टचैतन्यं अहमिति जानाति। अतो जीवस्य विवेकात्प्रागपि विशिष्टात्मरूपस्वस्वरूपस्य प्रत्यक्षज्ञानं भवति।

३. उद्दालकः स्वपुत्राय श्वेतकेतवे 'तत्त्वमसि' इति महावाक्यं नवकृत्वः उपदिदेश।

४. 'तत्त्वमसि' इत्यत्र तत्त्वंपदयोः सामानाधिकरण्यसंबन्धबलात् तत्त्वंपदवाच्ययोरेकत्वं विवृतं भवति।

सोऽल्पशक्तिमान्, यः सर्वज्ञः स किञ्चिज्ज्ञः, यो व्यापकः स परिच्छिन्नः, यः स्वतन्त्रः स कर्माधीनः, यः परोक्षः स प्रत्यक्षः, यः स्वाधीनमायः स अविद्यामोहितः, इत्येवं विरुद्धधर्मवतोरेकत्वोक्तिः 'अग्निः शीतलः' इतिवत् स्यात्। तस्माद्वाच्यार्थे विरोधसंभवात् लक्षणावृत्त्या लक्ष्यार्थमत्र विजानीहि। महावाक्ये, जहल्लक्षणाया अजहल्लक्षणायाश्चायुक्तत्वाद्भागत्यागलक्षणा बोध्या। भागत्यागलक्षणाश्रयणेन विरोधः परिहृतो भवेत्।

(४४६) **महावाक्ये जहल्लक्षणाया असंभवः**—सर्ववेदान्तवेद्यं वस्तु साक्षिचैतन्यं ब्रह्मचैतन्यं च। तदुभयं त्वम्पदवाच्यार्थे तत्पदवाच्यार्थे च प्रविष्टम्। यत्र जहती लक्षणा तत्र समग्रं वाच्यं परित्यज्य वाच्यार्थसंबन्ध्यन्योऽर्थो गृह्येत। तस्मान्महावाक्ये जहल्लक्षणास्वीकारे वाच्यार्थद्वयान्तर्गतं चैतन्यं विहाय तद्बहिर्भूतमन्यदेव नवं वस्तु किञ्चिद्विज्ञेयं भवेत्। चैतन्यादन्यत्तु असज्जडं दुःखरूपं च। तज्ज्ञानेन न पुरुषार्थसिद्धिः। तस्मान्न महावाक्ये जहल्लक्षणायाः संभवः।

(४४७) **महावाक्ये अहल्लक्षणाया असंभवः**—अजहल्लक्षणास्थले समग्रं वाच्यार्थमपरित्यज्य ततोऽप्यधिकमपि गृह्यते। महावाक्ये अजहल्लक्षणाभ्युपगमे वाच्यार्थः समग्रोऽपि वाक्यार्थेऽन्वितो भवेत्। समग्रस्य वाच्यार्थस्य महावाक्यार्थेऽन्वयस्तु विरोधेन संयुतः। विरोधपरिहाराय लक्षणाऽऽश्रयितव्या। अजहल्लक्षणाश्रयणे महावाक्ये विरोधो न परिहृतो भवति। तस्मान्महावाक्ये अजहल्लक्षणाक्रमस्त्याज्यो भवति।

(४४८) **महावाक्ये भागत्यागलक्षणाङ्गीकारक्रमः**—

तत्पदवाच्य ईश्वरः, त्वंपदवाच्यो जीवः। एतयोः परस्परविरुद्धांशं विहाय शुद्धासङ्गचैतन्यांशो लक्षणया बोध्यः। इयमेव भागत्यागलक्षणा।

**अत्रायं सिद्धान्तः**—जीवेश्वरयोः स्वरूपं बहुधा अद्वैतग्रन्थेषु कथ्यते। विवरणग्रन्थे—अज्ञानप्रतिबिम्बो जीवः, तद्बिम्ब ईश्वर इत्युच्यते। विद्यारण्यस्वामिमते शुद्धसत्त्वगुणप्रधानमायायां प्रतिफलित आभास ईश्वरः, मलिनसत्त्वगुणप्रधानान्तःकरणोपादानभूताविद्यायां प्रतिफलितः आभासो जीवः इति वर्ण्यते।

(आ. ४४९-४५३) **जीवेश्वरस्वरूपे आभासप्रतिबिम्बावच्छेदवादाः**—

**(४४९) आभासवादः—**

पञ्चदशीग्रन्थे विद्यारण्यस्वामिनः अन्तःकरणाभासो जीव इत्यवोचन्। नन्वन्तःकरणाभासो जीव इत्यभ्युपगमे सुषुप्तावन्तःकरणाभावाज्जीवाभावः प्रसज्येत। तथा सति प्राज्ञरूपो जीवः सुषुप्त्यभिमानी वर्तते इति प्रसिद्धिर्विरुध्येतेति चेन्न। अन्तःकरणाभासो जीव इति वदतां विद्यारण्यस्वामिनामयमाशयः—अन्तःकरणात्मना परिणममानाविद्यांशप्रतिफलित आभासो जीवः। स चाविद्यांशः सुषुप्तावप्यस्ति। तस्मान्न प्राज्ञाभावप्रसङ्गः इति।

**अत्रायं विशेषः**—जीवेश्वरौ न केवलाभासरूपौ। किन्तु मायाधिष्ठानचैतन्यं, माया, तत्र चैतन्याभासः, इत्येतत् त्रयं मिलित्वा ईश्वरः। अविद्यांशाधिष्ठानचैतन्यं, अविद्यांशः, तत्र चैतन्याभासः इत्येतत् त्रयं मिलित्वा जीवः। ईश्वरोपाधौ शुद्धसत्त्वगुणस्य सत्वात् ईश्वरे सर्वज्ञत्वसर्वशक्तिमत्त्वादिधर्मा वर्तन्ते। जीवोपाधौ मलिनसत्त्वगुणस्य सत्वात् जीवेऽल्पशक्तिमत्वकिञ्चिज्ज्ञत्वादिधर्मा वर्तन्ते। अयमेवाभासवाद इत्युच्यते।

**(४५०) प्रतिबिम्बवादः—**

विवरणकारमते जीवेश्वरयोरुपाधिरेकमेवाज्ञानम्। जीवेश्वरयोरुभयोरेकाज्ञानोपाधिकत्वादुभयोरल्पज्ञत्वादिप्रसङ्गदोषो न संभवति। यस्मिन्नुपाधौ प्रतिबिम्बो जायते तस्योपाधेरयं स्वभावः—'प्रतिबिम्बे स्वदोषोपधायकत्वं बिम्बे तदनाधायकत्वमिति'। उपाधेः प्रतिबिम्बपक्षपातित्वमिति नियमो लोके दृष्टः। तथाहि-दर्पणरूपोपाधौ मुखप्रतिबिम्बो जायते। तत्र ग्रीवास्थं मुखं बिम्ब इत्युच्यते। तत्र दर्पणरूपोपाधिस्थश्यामत्वपीतत्वलघुत्वादिदोषाः प्रतिबिम्बे विभान्ति। न तु बिम्बे ग्रीवास्थमुखे। एवं दर्पणस्थानीयाज्ञानरूपोपाधौ प्रतिबिम्बभूतजीवे उपाधिरूपाज्ञानहेतुककिञ्चिज्ज्ञत्वादिदोषा वर्तन्ते।

---

१. जीवेश्वरौ न केवलचिदाभासौ। स्वतादात्म्यसंबन्धवशात् अधिष्ठानानतिरिक्ततया यद्भाति तदारोपितमित्युच्यते। आरोपितं चाधिष्ठानातिरिक्ततया न भाति। यथा रज्जावारोपितः सर्पः रज्ज्वतिरिक्ततया न भाति। किन्तु रज्ज्वनतिरिक्ततया रज्जुस्वरूपमाच्छाद्य सर्पो भाति। तथा मायाऽविद्यास्थाभासावपि आरोपितत्वेन हेतुना तयोरधिष्ठानभूतकूटस्थब्रह्मचैतन्यातिरिक्ततया न भातुमर्हतः। किन्तु तावुभावप्याभासौ स्वाधिष्ठानभूतकूटस्थब्रह्मचैतन्याभ्यां तादात्म्यसंबन्धरूपैकत्वं प्राप्य अधिष्ठानभूतकूटस्थब्रह्मणोः स्वरूपमाच्छाद्यैव विभातः। तस्मादधिष्ठानचैतन्यं मायाऽविद्यारूपोपाधिसहितचिदाभासश्च जीवो वा ईश्वरो वा भवति।

बिम्बरूपेश्वरे न ते दोषाः सन्ति। अत एवेश्वरे सर्वज्ञत्वादयः सन्ति। जीवे च किञ्चिज्ज्ञत्वादयः।

(४५१) **आभासप्रतिबिम्बवादयोर्भेदः**—आभासपक्षे आभासो मिथ्या। प्रतिबिम्बपक्षे प्रतिबिम्बो न मिथ्या। अपि तु सत्यः। **प्रतिबिम्बवादसिद्धान्तस्त्वेवम्**—दर्पणे प्रतीयमानः मुखप्रतिबिम्बो न मुखस्य छायारूपः। छायायाः स्वभावस्त्वयम्—यस्यां दिशि छायावतो मुखं पृष्ठभागश्च वर्तते तस्यामेव दिशि छायाया मुखं पृष्ठभागश्च वर्तेत। दर्पणे प्रतिबिम्बितं मुखं तत्पृष्ठभागश्च बिम्बाभिमुखतया वर्तते। तस्माद्दर्पणे छायारूपः प्रतिबिम्बो नास्ति। किन्तु दर्पणविषयीकरणाय चक्षुर्द्वारा बहिर्निर्गतान्तःकरणवृत्तिर्दर्पणं विषयीकृत्य तत्क्षणमेव दर्पणात् प्रतिनिवृत्य ग्रीवास्थं मुखं विषयीकरोति। अत्यन्तवेगेन भ्रमणवशादलातदण्डश्चक्रवद्भाति। नैव तत् चक्रम्। तथा दर्पणं मुखं च विषयीकर्तुं प्रवृत्तान्तःकरणवृत्तेर्वेगवशात् मुखं दर्पणस्थमिव भाति। वस्तुतो मुखं ग्रीवायामेव वर्तते, न दर्पणे। नापि मुखछायाऽस्ति दर्पणे। अन्तःकरण-वृत्तेर्वेगवशात् भ्रान्त्या प्रतीयमानं यत् मुखस्य दर्पणस्थत्वं स एव प्रतिबिम्ब इत्युच्यते।

इत्थं दर्पणरूपोपाधिसंबन्धवशात् ग्रीवास्थमुखमेव बिम्बात्मना प्रतिबिम्बात्मना च भाति। सम्यग्विचार्यमाणे तु बिम्बप्रतिबिम्बभाव एव नास्ति एवमज्ञानरूपोपाधिसंबन्धवशात असङ्गचैतन्ये बिम्बस्थानीयेश्वरभावः प्रतिबिम्बस्थानीयजीवभावश्च प्रतीयते। सम्यग्विचार्यमाणे तु ईश्वरत्वं जीवत्वं च नैव संभवति। अज्ञानवशाच्चैतन्ये जायमानजीवत्वप्रतीतिश्च अज्ञानस्थप्रतिबिम्ब इत्युच्यते। तस्मात् बिम्बत्वं प्रतिबिम्बत्वं च मिथ्यैव। चैतन्यस्वरूपेण तु बिम्बप्रतिबिम्बादिकं सत्यमेव। दृष्टान्ते बिम्बप्रतिबिम्बयोः स्वरूपं मुखं दार्ष्टान्तिके चैतन्यं च सत्यम्। इत्थं स्वरूपतः सत्यत्वात् प्रतिबिम्बं सत्यमित्युच्यते। आभासस्वरूपं तु छायेत्यभ्युपगतम्। अतो मिथ्या। अयमेवाभास-

---

१. प्रतिबिम्बवादे शुद्धं ब्रह्मैवेश्वरः। तस्मिन् सर्वज्ञत्वादिधर्मा अपि स्वतो न संभवन्ति। तथापि जीवाश्रितकिञ्चिज्ज्ञत्वादिकमपेक्ष्य शुद्धे ब्रह्मणि बिम्बत्वेश्वरत्वसर्वज्ञत्वादिधर्मा आरोपिताः। वस्तुतस्तु जीवेश्वरावुभावपि शुद्धब्रह्मस्वरूपावेव। तत्र न कोऽपि धर्मः संभवति।

प्रतिबिम्बवादयोः भेदः ।

---

१. **अत्रायं विशेषः**—नीरपूर्णानेकघटेष्वनेकानि सूर्यप्रतिबिम्बानि भान्ति । तेष्वेकैकमपि प्रतिबिम्बं व्यष्टिरित्युच्यते । सर्वेषां प्रतिबिम्बानां मिलित्वा एकत्वेन ग्रहणे समष्टिरिति गीयते । एतेषु व्यष्टिप्रतिबिम्बेषु यत् प्रतिबिम्बं यदा जलाभावेनाभावं गच्छति तत् तदा सूर्येणाभेदं गच्छति । नेतराणि प्रतिबिम्बानि । अनेन क्रमेण यदा सर्वेषां प्रतिबिम्बानामभावो भविष्यति तदा समष्टिप्रतिबिम्बस्य सूर्येणाभेदः कथ्यते ।

यथाऽयं दृष्टान्तस्तथैव पूर्वोक्ताभासपक्षे नानाबुद्ध्यात्मकेषु अथवा अविद्यांशरूपेषु जलेषु ब्रह्मणोऽनेकानि प्रतिबिम्बानि (आभासाः) जायन्ते । तत्रैकैकमपि प्रतिबिम्बं व्यष्टिरित्युच्यते । सर्वाणि प्रतिबिम्बानि (आभासाः) मिलित्वा समष्टिरिति कीर्त्यते । तत्रानेकव्यष्टिप्रतिबिम्बानि जीवाः । एकं समष्टिप्रतिबिम्बमीश्वरः । तेषु जीवेषु मध्ये यस्य जीवस्योपाध्यभाववशादभावो जायते तस्य ब्रह्मणा सहौपाचारिकः अभेदः कथ्यते । अनेन क्रमेण यदा सर्वजीवाभावो भविष्यति तदा समष्टिप्रतिबिम्बरूपेश्वरस्य विदेहमुक्तिः ।

अस्मिन् पक्षे जगतो वा जीवस्य वा ब्रह्मणा सहाभेदं ब्रुवतां श्रुतिवाक्यानां भागत्यागलक्षणा नाभ्युपगम्यते । किन्तु 'गङ्गायां घोषः' इति वाक्ये इव वाच्यार्थं सर्वं परित्यज्य तत्संबन्धिब्रह्ममात्रग्रहणात् जहल्लक्षणैव गृह्यते । इदञ्च अधिष्ठानकूटस्थं चैतन्यं विहाय केवलबुद्धिविशिष्टो वा अविद्याविशिष्टो वा आभासो जीवः इत्यभ्युपगच्छतो वेदान्त्येकदेशिन आभासवादिनो मतम् ।

अस्मिन् पक्षे पुरुषार्थ(मोक्ष) सिद्धये प्रयतमानस्याभासरूपस्य मोक्षदशायामभाव एव भवति । 'ततश्च' वृद्धिमिच्छतो मूलहानिः' इतिवत् मोक्षार्थं प्रयतमानस्य जीवस्य स्वरूपनाशो भवतीत्यनर्थं ज्ञात्वा न कस्यचिदपि मुमुक्षोरस्मिन् सिद्धान्ते प्रवृत्तिः स्यादिति नायं पक्षः साधुः ।

पञ्चदश्यादिग्रन्थेष्वित्थमुच्यते—अधिष्ठानकूटस्थेन सह साभासा बुद्धिर्वा अविद्या वा जीवः, अधिष्ठानब्रह्मणा सह साभासा माया ईश्वर इति च अत्र पक्षे वाच्यैकदेशं विहायैकदेशग्रहणात् महावाक्यस्थलेषु सिद्धान्तसम्मता या भागत्यागलक्षणा सा गृह्यते । अस्मिन् पक्षे मुख्याकाशदृष्टान्त एवाभ्युपेयः । आकाशदृष्टान्तविस्तरः पञ्चदश्यां चित्रदीपे अस्मिन् ग्रन्थे चतुर्थतरङ्गे चोक्तः । अस्मिन् पक्षे आकाशस्य वा मुखादिप्रतिबिम्बस्य वा अधिष्ठानभूतोपादानं घटाकाशः अथवा दर्पणादिः । परिणाम्युपादानं तु जलं अविद्यादिर्वा । निमित्तकारणं महाकाशः, मुखादिबिम्बं, उपाधिसन्निधिश्च ।

बाधिते चास्मिन् प्रतिबिम्बे स्वबिम्बरूपमुखादिभिः सहाभिन्नं भवति । तथापि जलं दर्पणादिकं बिम्बसन्निधिरूपं निमित्तं च यावदास्ते तावत् बाधितमपि प्रतिबिम्बमनुवर्तेत । इयमेव बाधितानुवृत्तिरित्युच्यते । एवमेव चिदाभासरूपजीवस्याधिष्ठानरूपोपादानं कूटस्थचैतन्यम् । परिणाम्युपादानं नाना बुद्धिः, अज्ञानांशो वा । निमित्तं प्रारब्धं कर्म । एतेषु मध्ये यः चिदाभासः बुद्धिरूपोपाधिना, अज्ञानांशरूपोपाधिना वा सहितं स्वस्वरूपं बाधित्वा 'कूटस्थः' 'अहम्' इत्यादिजीववाचकपदलक्ष्यार्थरूपाधिष्ठानभूतनिजस्वरूपाभिमानबलात् अहंपदलक्ष्यार्थरूपकूटस्थस्य बिम्बरूपब्रह्मणा सह प्रागेव सिद्धमेकत्वं जानाति स एव मुच्यते । इतरो बध्यते ।

(४५२) **अवच्छेदवादः**—कतिपयग्रन्थेषु शुद्धसत्त्वगुणोपेतमाया-विशिष्टचैतन्यमीश्वरः, मलिनसत्त्वगुणोपेतान्तःकरणोपादानकारणीभूताविद्यांशवि-शिष्टचैतन्यं जीव इति च कथ्यते। अयमेवावच्छेदवादः इत्युच्यते। वेदान्तेषु प्रक्रियाभेदाः सर्वे[1]ऽप्यद्वैतात्मावगमार्था एव। अत एव यया यया प्रक्रियया जिज्ञासोर्बोधो भवेत्सा सा प्रक्रिया तस्य तस्य समीचीनाऽभिप्रेता। तथापि वाक्यवृत्त्युपदेशसाहस्र्यादौ भाष्यकारैराभासवाद एवाभ्युपगतः। तस्मादा-भासवाद एव मुख्यः।

(४५३) **चतुर्षु महावाक्येषु भागत्यागलक्षणाप्रदर्शनम्**—

(१) तत्र 'तत्त्वमसि' इति महावाक्ये भागत्यागलक्षणा यथा—माया मायास्थाभासः, मायाधिष्ठानचैतन्यं चेत्येतत् त्रयं मिलित्वा सर्वशक्तित्वसर्वज्ञ-त्वादिधर्मविशिष्ट ईश्वर इति कथ्यते, अयमेव तत्पदवाच्यार्थः। व्यष्टयविद्या,

---

'अहं ब्रह्मास्मि' इति ज्ञानोत्पत्तिसमकालमेवाविद्यारूपोपादाननाशात् तत्कार्यजगत सह चिदाभासस्य बाधो जायते। तथापि यावत् प्रारब्धरूपं निमित्तमास्ते तावत् बाधि-तस्यापि (मिथ्यात्वेन निश्चितस्यापि) देहादिप्रपञ्चस्य चिदाभासस्याप्यनुवृत्तिर्भवति। यदा तु प्रारब्धक्षयः तदा तत्प्राब्धक्षयाधीनः चिदाभासादिप्रतीत्यभावो भवति। सैव विदेहमुक्तिः। प्रागुक्तपक्षादयमुत्तमः पक्षः।

**बिम्बप्रतिबिम्बवादे** प्रतिबिम्बस्याधिष्ठानरूपोपादानं बिम्बः। परिणाम्युपादानं मुखादिबिम्बाज्ञानम्। तन्निमित्तकारणं दर्पणादिकं बिम्बसन्निधिश्च। बिम्बप्रतिबिम्बयोर-भेदज्ञानेन प्रतिबिम्बत्वनिवृत्तिर्भवति। परं तु यावत् बिम्बस्य दर्पणादेश्च सन्निधिरूप-निमित्तकारणमस्ति तावत् मिथ्यात्वेनावगतत्वात् प्रतिबिम्बत्वधर्महीनतया प्रतिबिम्बस्वरूपं प्रतीयेत। यदा दर्पणादिनिवृत्तिः तदा प्रतिबिम्बस्य प्रतीतिर्निवर्तते।

एवमेवैकेनैव ज्ञानेन शुद्धब्रह्मरूपबिम्बे जीवरूपप्रतिबिम्बत्वं प्रतीयते। तदुपादानम-ज्ञानमधिष्ठानं च शुद्धं ब्रह्म। निमित्तकारणमदृष्टम्। यदा तस्य प्रतिबिम्बस्य स्वबिम्बभूत-ब्रह्मणा सहैकत्वं प्रतीयते तदा तस्य प्रतिबिम्बं (जीवत्वं) निवर्तते। परन्तु यावत्प्रारब्ध-रूपोपाधिः (निमित्तं) वर्तते तावत् बाधितजगता सहास्य जीवस्य जीवत्वधर्मविनिर्मुक्तं स्वरूपं प्रतीयते। यदा प्रारब्धरूपनिमित्तस्यान्तो भविष्यति तदा तादृशजीवस्वरूपस्य प्रतीत्यभावात् केवलं शुद्धं ब्रह्मैव शिष्यते। सैव तस्य जीवस्य विदेहमुक्तिः।

अस्मिन् पक्षे स्वप्न इव एक एव मुख्यो जीवः। प्रतीयमाननानाजीवास्तु जीवा-भासा एव। अत्र पक्षे सत्तात्रैविध्यमङ्गीक्रियते। अयं च व्यावहारिकपक्ष इत्युच्यते। तथाप्ययमेव सर्वव्यावहारिकपक्षाणामुत्तमः। इत्थमाभासप्रतिबिम्बवादयोर्भेदः।

१. सर्वशब्देन कार्यकारणोपाधिवादः, अवच्छिन्नानवच्छिन्नवादः, दृष्टिसृष्टिवादः इत्यादयो गृह्यन्ते। वेदान्तस्यानेकपक्षानुवादोऽप्यप्पय्यदीक्षितकृतशास्त्रसिद्धान्तलेशाख्यग्रन्थे कृतः।

तत्रस्थाभासः तदधिष्ठानचैतन्यं चेत्येतत् त्रयं मिलित्वा अल्पशक्तित्वकिञ्चिज्ज्ञत्वादिधर्मविशिष्टो जीव इत्युच्यते । अयमेव त्वंपदवाच्यार्थः । अनयोरेकत्वं 'तत्त्वमसि' इति वाक्यं बोधयति । एतत्तु न घटते । तस्मात् आभाससहितमायां, मायाकृतसर्वशक्तित्वसर्वज्ञत्वादिधर्मांश्च तत्पदवाच्यांशान् विहाय चैतन्यभागमात्रग्रहणे तत्पदस्य भागत्यागलक्षणा सिद्धयति । तथा आभाससहिताविद्यांशं अविद्याकृताल्पशक्तित्वकिञ्चिज्ज्ञत्वादिधर्मांश्च त्वंपदवाच्यांशान् विहाय चैतन्यभागमात्रग्रहणे त्वंपदस्य भागत्यागलक्षणा सिद्धयति । इत्थं भागत्यागलक्षणया जीवेश्वरस्वरूपस्थलक्ष्यार्थभूतचैतन्यांशैक्यं[1] 'तत्त्वमसि' इति महावाक्यं बोधयति ।

---

१. इदं च 'तत्त्वमसि' इति वाक्यं (१) पदयोः सामानाधिकरण्यं, (२) पदार्थयोर्विशेषणविशेष्यभावः, (३) प्रत्यगात्मपरमात्मनोर्लक्षणलक्ष्यभावश्चेति संबन्धत्रयेणाखण्डार्थं बोधयति ।

(१) तत्र पदयोः सामानाधिकरण्यसंबन्धो यथा 'सोऽयं देवदत्तः' इति वाक्ये तत्कालादिविशिष्टदेवदत्तवाचकस्य 'सः' इति पदस्य एतत्कालादिविशिष्टदेवदत्तवाचकस्य 'अयम्' इति पदस्य चैकदेवदत्तशरीरे तात्पर्यात् उभयोः पदयोः समानाधिकरण्यसंबन्धः (भिन्नार्थयोः पदयोरेकार्थबोधकत्वरूपः) सिद्धयति । तथा 'तत्त्वमसि' इति वाक्ये परोक्षत्वादिधर्मविशिष्टचैतन्यवाचकस्य तत्पदस्य, अपरोक्षत्वादिधर्मविशिष्टचैतन्यवाचकस्य त्वंपदस्य चैकस्मिन्नेव चैतन्ये तात्पर्यात् उभयोः पदयोः (तत्त्वंपदयोः) सामानाधिकरण्यं सिद्धयति ।

(२) विशेषणविशेष्यभावसंबन्धो यथा—इतरेभ्यो व्यावर्तकं विशेषणम् । व्यावर्त्यं विशेष्यम् । 'सोऽयं देवदत्त' इति वाक्ये अयमिति शब्दबोध्यः एतद्देशकालादिविशिष्टदेवदत्तः 'स' इति शब्दबोध्यात् तद्देशकालादिविशिष्टदेवदत्तात् न भिद्यते इति यदाऽभेदः प्रतीयते तदा अयमिति शब्दवाच्यार्थनिष्ठभेदं 'स' इति शब्दार्थो व्यावर्तयति । अतः 'सः' इति विशेषणम् । अयमितिशब्दार्थस्य व्यावर्त्यत्वात् 'अयम्' इति विशेष्यम् । इत्थं 'स एवायम्' 'अयमेव स' इति वाक्यद्वयनिष्ठयोः 'सः' 'अयम्' इति पदयोरन्योन्यं विशेषणविशेष्यभावेन स्थितत्वात् विशेषणविशेष्यभावः सिद्धयति । एतद्दृष्टान्तेन "तत्त्वमसि" इति वाक्येऽपि त्वंपदवाच्यार्थभूतापरोक्षत्वकिञ्चिज्ज्ञत्वादिधर्मविशिष्टचैतन्यं तत्पदवाच्यार्थभूतपरोक्षत्वादिधर्मविशिष्टचैतन्यादभिन्नमिति यदा प्रतीतिर्जायते तदा त्वंपदार्थनिष्ठभेदं तत्पदार्थो व्यावर्तयतीति तत्पदं विशेषणम् । त्वंपदार्थस्य व्यावर्त्यत्वात् त्वंपदं विशेष्यम् । इत्थं 'तत्वमसि' 'त्वं तदसि' इति वाक्ययोस्तत्त्वंपदयोरन्योन्यं विशेषणविशेष्यभावसंबन्धः सिद्धयति ।

(३) लक्षणलक्ष्यभावसंबन्धो यथा—असाधारणधर्मप्रतिपादकं वाक्यं लक्षणम् । तादृशवाक्यप्रतिपाद्यं लक्ष्यम् । 'स एवायं देवदत्तः' इति वाक्ये 'सः' 'अयम्' इति शब्दद्वयबोध्यविरुद्धधर्मभूततद्देशकालैतद्देशकालादिवैशिष्ट्यपरित्यागेन देवदत्तत्वविशिष्टदेव-

दत्तपिण्डमात्रेण सह 'स एवायं देवदत्तः' इति वाक्यस्य लक्ष्यलक्षणभावः संबन्धः सिद्धयति। एवमेव "तत्त्वमसि" इति वाक्येऽपि 'तत्' 'त्वम्' इति पदद्वयबोध्यविरुद्धधर्मभूतपरोक्षत्वापरोक्षत्ववैशिष्ट्यपरित्यागेन चैतन्यमात्रेण सह "तत्त्वमसि" इति वाक्यस्य लक्ष्यलक्षणभावः संबन्धः सिद्धयति। तस्मात् विरुद्धांशपरित्यागेनाविरुद्धचैतन्यांशमात्रबोधकं "तत्त्वमसि" इति वाक्यं लक्षणम्। अखण्डचैतन्यं लक्ष्यमिति सिद्धम्॥

२. "तत्वमसि" इति वाक्यमुपदेशवाक्यम्। "प्रज्ञानं ब्रह्मे"ति वाक्यं स्वरूपबोधकवाक्यम् "अयमात्मा ब्रह्म" इत्यपरोक्षत्वबोधकं वाक्यम्। 'अहं ब्रह्मास्मि। इत्यनुभवबोधकवाक्यम्।

येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च।
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदाहृतम्॥ १॥

"प्रज्ञानम्" इति शब्दार्थसङ्ग्राहकश्लोकः

चतुर्मुखादिदेवेषु मनुष्याश्वगवादिषु।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि॥ २॥

ब्रह्म इति शब्दार्थसङ्ग्राहकश्लोकः। ऋग्वेदमहावाक्यार्थसङ्ग्राहकश्लोकाविमौ।

परिपूर्णः परात्मास्मिन् देहे विद्याधिकारिणि।
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते॥ ३॥

'अहम्' इति शब्दार्थसङ्ग्राहकश्लेकः।

स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः।
अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहम्॥ ४॥

ब्रह्मास्मि इति शब्दार्थसङ्ग्राहकश्लोकः—(इति यजुर्वेदमहावाक्यार्थसङ्ग्राहकश्लोकौ)

एकमेवाद्वितीयं सन्नामरूपविवर्जितम्।
सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं तदितीर्यते॥ ५॥

'तत्' इति शब्दार्थसङ्ग्राहकश्लोकः।

श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम्।
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम्॥ ६॥

त्वमसि इति—शब्दार्थसङ्ग्राहकश्लोकः। (इति सामवेदमहावाक्यार्थसङ्ग्राहकश्लोकौ)

स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम्।
अहङ्कारादिदेहान्तात् प्रत्यगात्मेति गीयते॥ ७॥

'अयमात्मा इति' शब्दार्थसङ्ग्राहकश्लोकः।

दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते।
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम्॥ ८॥

'ब्रह्म' इति शब्दार्थसङ्ग्राहकश्लोकः।

इमौ अथर्ववेदमहावाक्यार्थसङ्ग्राहकश्लोकौ। इति ग्रन्थकृदयं स्वकीयैरष्टभिः श्लोकैः चतुर्णामपि वेदानां महावाक्यार्थान् संजग्राह।

(२) एवमेव "अयमात्मा ब्रह्म" इति महावाक्येऽपि भागत्यागलक्षणा बोध्या। तथाहि—अत्र 'आत्मा' इति पदस्य जीवो वाच्योऽर्थः। "ब्रह्म" इति पदस्येश्वरो वाच्यः। अत्र ब्रह्मपदस्य शुद्धं चैतन्यं न वाच्यम्; किन्त्वीश्वर एवेत्येतच्चतुर्थे तरङ्गे प्रतिपादितम्। पूर्ववदत्रापि पदद्वयस्य लक्षणा ग्राह्या। लक्ष्यार्थभूतचैतन्यं नैव परोक्षं, किन्तु नित्यापरोक्षमेवेतीममर्थं बोधयितुमेव 'अयम्' इति पदं प्रयुक्तम्। अयं="ब्रह्मादिस्तम्बान्तसर्वप्राणिनां 'अहमहम्' इति नित्यापरोक्षतया भासमान आत्मैव, ब्रह्म" इति वाक्यार्थः॥

(३) "अहं ब्रह्मास्मि" इति महावाक्येऽपि 'अहं' पदस्य जीवो वाच्यः। 'ब्रह्म' पदस्येश्वरो वाच्यः। अनयोः पदयोः शुद्धचैतन्यांशे लक्षणा। अहमेव परं ब्रह्मेति वाक्यार्थः।

(४) "प्रज्ञानं (आनन्दं) ब्रह्म" इति महावाक्ये प्रज्ञानपदस्य जीवो वाच्यः। ब्रह्मपदस्येश्वरो वाच्यः। पूर्ववदुभयोः शुद्धचैतन्यांशे लक्षणा। लक्ष्यार्थभूतप्रत्यगभिन्नब्रह्मात्मा नानन्दगुणयुक्तः। किन्त्वानन्दस्वरूप एवेत्यर्थावगमाय आनन्दपदाध्याहारः कृतः। प्रत्यगभिन्नं ब्रह्म आनन्दस्वरूपं इति वाक्यार्थः।

यथा महावाक्यस्थपदानां भागत्यागलक्षणा तथा वाक्यान्तरेष्वपि सत्यं, ज्ञानं, अनन्तं, इत्यादिपदानि भागत्यागलक्षणयैव शुद्धं ब्रह्म बोधयन्ति, न तु शक्त्या। न हि कस्यचिदपि पदस्य शुद्धं ब्रह्म वाच्यं भवतीति सिद्धान्तः। "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" "नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा" "अथात आदेशो नेति नेति" इत्यादिश्रुतिभ्यः। तस्मात् सर्वाण्यपि पदानि विशिष्टस्य वाचकानि शुद्धस्य लक्षकानि च भवन्ति।

---

१. "अयमात्मा ब्रह्म" इदमथर्ववेदीयमाण्डूक्योपनिषद्गतं महावाक्यम्। प्रपञ्चस्तु भाष्यादौ पञ्चदश्यां महावाक्यविवेकप्रकरणे च द्रष्टव्यः।

२. अपरोक्षं द्विविधम्—आद्यं स्वयंप्रकाशस्वरूपत्वात् बुद्धिवृत्तिप्रकाशकसाक्षिस्वरूप आत्मैवापरोक्ष इत्युच्यते। द्वितीयं 'अहं स्वप्रकाश आत्माऽस्मि' इति बुद्धिवृत्तिरूपं यत् ज्ञानं तदप्यपरोक्षमित्युच्यते। तत्राद्यमपरोक्षं (आत्मस्वरूपत्वेन सदा विद्यमानत्वात्) नित्यम्। द्वितीयं त्वनित्यं, बुद्धिवृत्तेः कदाचित्कत्वात्।

३. "अहं ब्रह्मास्मि" इदं शुक्लयजुर्वेदीयबृहदारण्यकोपनिषद्गतं महावाक्यम्।

४. "प्रज्ञानं ब्रह्म" इदं ऋग्वेदीयैतरेयोपनिषद्गतं महावाक्यम्।

मायाया आपेक्षिकं सत्यत्वं चैतन्यस्य निरपेक्षं सत्यत्वं चेत्युभयं मिलित्वा सत्यशब्दस्य वाच्यं भवति । निरपेक्ष (मुख्य) सत्यत्वं लक्ष्यं भवति। बुद्धिवृत्तिरूपं ज्ञानं स्वयंप्रकाशरूपं ज्ञानं चेत्युभयं मिलित्वा ज्ञानशब्दस्य वाच्यं भवति । स्वयंप्रकाशांशस्तु लक्ष्य उच्यते । विषयसंबन्धजन्यसुखाकार-सात्त्विकान्तःकरणवृत्तिः परमप्रेमास्पदस्वरूपं सुखं चेत्युभयं मिलित्वा आनन्द-पदस्य वाच्यम् । वृत्त्यंशं विहाय स्वरूपानन्दांशो लक्ष्यार्थः । इत्थं सर्वपदानां शुद्धे ब्रह्मणि लक्षणेति संक्षेपशारीरके प्रतिपादितम् ।

(४५४) **पूर्वोक्तार्थसङ्ग्रहः**—' गङ्गायां घोषः ' इत्यत्र जहल्लक्षणा । ' शोणो धावति ' इत्यत्राजहल्लक्षणा । ' सोऽयं देवदत्तः ' इत्यत्र भागत्याग-लक्षणा। इयं जहदजहल्लक्षणेति चोच्यते । "तत्त्वमसि" इत्यादिमहावाक्येषु जहल्लक्षणा वा अजहल्लक्षणा वा न युज्यते । अतस्ते परित्यज्य भागत्याग-लक्षणैव प्रदर्शिता । "यतो वाचो निवर्तन्ते" इत्यादिश्रुतयः ब्रह्म न कस्यापि पदस्य वाच्यं भवेदिति बोधयन्ति । अतः समस्तपदेषु ब्रह्मविषये लक्षणैवेत्थं ग्राह्या । मायाया आपेक्षिकं सत्त्वं चैतन्यनिष्ठं निरपेक्षं (पारमार्थिकं) सत्त्वं च मिलित्वा सत्यपदवाच्यमुच्यते । तत्र निरपेक्षसत्त्वमेव सत्यपदस्य लक्ष्यम् । स्वयंप्रकाशमानं ज्ञानं बुद्धिवृत्तिरूपज्ञानं च मिलित्वा ज्ञानपदवाच्यं भवति । तत्र स्वयंप्रकाशज्ञानं ज्ञानपदस्य लक्ष्यम् । आत्मनः स्वरूपानन्दः इष्टविषय-संबन्धजन्यसुखाकारसात्त्विकान्तःकरणवृत्तिरूपं विषयसुखं च मिलित्वा आन-न्दपदवाच्यं भवति । तत्र वृत्तिरूपं विषयसुखं परित्यज्य स्वात्मस्वरूपसुखमे-वानन्दपदलक्ष्यम् ।

**(४५५) महावाक्येषु पदद्वयेऽपि लक्षणाङ्गीकारो निष्फल इत्याक्षेपः—**

**अत्र केचिदाहुः**—महावाक्येषु विरोधपरिहाराय पदद्वयेऽपि लक्षणा-ङ्गीकारो व्यर्थः । एकपदे लक्षणाङ्गीकारेणैव विरोधनिवृत्तेरिति । तेषामयमाशयः— सर्वज्ञत्वादिधर्मविशिष्टस्य किञ्चिज्ज्ञत्वादिधर्मविशिष्टेन सहैक्यं यद्यपि न युज्यते । तथाप्येकपदलक्ष्यार्थभूतशुद्धस्य पदान्तरार्थभूतविशिष्टेनैक्यं युज्यत एव । तत्र दृष्टान्तः—"क्षत्रियमनुष्योऽयं ब्राह्मणः" इत्यत्र क्षत्रियत्वधर्मविशिष्टस्य ब्राह्मणत्वधर्मविशिष्टेन सहैक्यं विरुद्धमेव । ' मनुष्योऽयं ब्राह्मणः ' इत्यत्र तु क्षत्रियत्वधर्मरहितशुद्धमनुष्यस्य ब्राह्मणत्वधर्मविशिष्टेन सहैक्ये न विरोधः ।

तथा किञ्चिज्ज्ञत्वादिधर्मविशिष्टचैतन्यस्य सर्वज्ञत्वादिधर्मविशिष्टचैतन्यस्य चैक्यं न युज्यते। विरोधात्। अपि तु, जीवेश्वरवाचकपदयोश्चैतन्यमात्रलक्षकत्वे संभवत्यपि अन्यतरपदस्यैव चैतन्यमात्रे लक्षणायां सत्यां तस्य लक्ष्यस्य चैतन्यमात्रस्य पदान्तरवाच्यार्थभूतसर्वज्ञत्वादिधर्मविशिष्टेन वा किञ्चिज्ज्ञत्वादिधर्मविशिष्टेन वा एकत्वे विरोधो न भवेदेव। तस्मात्पदद्वये लक्षणाभ्युपगमे न काचिदपि युक्तिरस्तीति।

**(आ. ४५६-४६०) पूर्वोक्ताक्षेपसमाधिः। पदद्वयलक्षणा सफलेति प्रदर्शनम्—**

**(४५६) तत्र महावाक्येष्वेकपद एव लक्षणेति वादी प्रष्टव्यः—** महावाक्यगतपदद्वये कतरस्मिन् पदे लक्षणेति। तत्र सर्वेषु महावाक्येषु प्रथमपदे एव लक्षणा न द्वितीयपदे इत्यभ्युपगमो न सङ्गच्छते। तथैव सर्वत्र द्वितीयपदे एव लक्षणा न प्रथमपदे इत्यप्यसङ्गतमेव'। तथा नियमे वाक्यानां परस्परविरोध एव स्यात्। तथाहि—"अहं ब्रह्मास्मि" "प्रज्ञानं ब्रह्म" "अयमात्मा ब्रह्म" इति वाक्यत्रये प्रथमपदं जीववाचकम्। "तत्त्वमसि" इति वाक्ये तु प्रथमपदमीश्वरवाचकम्। सर्ववाक्येषु प्रथमपदे लक्षणाङ्गीकारे चैतन्यं सर्वज्ञत्वादिधर्मविशिष्टेश्वरस्वरूपमिति प्रथमवाक्यत्रयस्यार्थः स्यात्। यतः प्रथमवाक्यत्रये प्रथमपदं जीववाचकम्। तस्य चैतन्यमात्रे लक्षणा। द्वितीयस्येश्वरवाचकपदस्य वाच्यार्थ एव गृह्यते। ततश्च चैतन्यं सर्वमीश्वरस्वरूपमिति प्रथमवाक्यत्रयस्यार्थः पर्यवसन्नः।

"तत्त्वमसि" इति वाक्ये तु चैतन्यं किञ्चिज्ज्ञत्वादिधर्मविशिष्टसंसार्यात्मकजीवस्वरूपमिति चतुर्थमहावाक्यार्थः स्यात्। यतः "तत्त्वमसि" इति वाक्ये प्रथमपदमीश्वरवाचकम्। तस्य चैतन्यमात्रे लक्षणा। द्वितीयस्य जीववाचकपदस्य वाच्यार्थ एव गृह्यते। ततश्च चैतन्यं सर्वं जीवस्वरूपमिति चतुर्थवाक्यार्थः पर्यवसन्नः।

तथा सर्ववाक्येषु द्वितीयपदे एव लक्षणेत्यभ्युपगमे प्रथमवाक्यत्रये जीववाक्यत्रये जीववाचकप्रथमपदस्य वाच्यार्थो ग्राह्यः। ईश्वरवाचकद्वितीयपदस्य चैतन्यमात्रे लक्षणा ग्राह्या। ततश्च 'किञ्चिज्ज्ञत्वादिधर्मविशिष्टं चैतन्यम्' इति प्रथमवाक्यत्रयस्यार्थः पर्यवसन्नः। "तत्त्वमसि" इति वाक्ये तु प्रथमस्येश्वरवाचकपदस्य वाच्यार्थो गृह्यते। जीववाचकद्वितीयपदस्य चैतन्यमात्रे लक्षणा

गृह्यते। ततश्च 'सर्वज्ञत्वादिधर्मविशिष्टं चैतन्यम्' इति तत्वमसीति वाक्यस्यार्थः पर्यवसन्नः। एवमपि परस्परं विरोध एव। इत्थं महावाक्येषु प्रथमपदे एव, द्वितीयपदे एव इति लक्षणाया नियमो नाभ्युपगन्तुं शक्यते। तस्मादाचार्याः महावाक्येषु पदद्वयेऽपि लक्षणां कथयन्ति।

(४५७) ईश्वरवाचकपदे एव लक्षणेति पक्षोऽप्यसङ्गतः—

अथ यद्युच्यते—'महावाक्येषु प्रथमपदे एव लक्षणेति वा द्वितीयपदे एव लक्षणेति वा नियमो नाङ्गीक्रियते। किन्तु सर्वत्र ईश्वरवाचकपदे एव लक्षणेत्येव नियमः। ईश्वरवाचकपदं प्रथमं वा भवतु द्वितीयं वा। न च वाक्यानां परस्परं विरोधः'। इति।

तन्न। ईश्वरवाचकपदे एव लक्षणेत्यभ्युपगमे किञ्चिज्ज्ञत्वपराधीनत्व-जननमरणादिदुःखनिदानस्वरूपसकलानर्थास्पदीभूतः संसारी जीव एव सर्व-श्रुतिवाक्यगम्य इति तादृशजीव एव ज्ञेयो भवेत्। तथा च मोक्षहानिः स्यात्।

अयं भावः—ईश्वरवाचकपदे एव लक्षणेत्यभ्युपगमे महावाक्या-नामेवमर्थः स्यात्—तत्पदलक्ष्यार्थभूतमद्वयमसङ्गं मायामलरहितं चैतन्यमेव अविद्याकामकर्मवशं गतं सत् किञ्चिज्ज्ञत्वाल्पशक्तिमत्वपरिच्छिन्नत्वपुण्यपा-पाधीनसुखदुःखजन्ममरणेहलोकपरलोकगमनागमनादिभावस्वरूपानेकानर्थास्पदम् इति। अस्यैव महावाक्यार्थत्वे जिज्ञासोरत्रैवार्थे बुद्धेः स्थैर्यं संपादनीयं भवेत्। यत्रैव बुद्धिः स्थिरीक्रियते तदेव प्राणवियोगानन्तरं पुरुषः प्राप्नोतीति नियमः। "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति।"

"यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः॥" (भ. गी.)

इत्यादिश्रुतिस्मृतिशतेभ्यः।

अतो वेदान्तविचारेण मुमुक्षुरनर्थमेव प्राप्नोति। नानन्दमिति सिद्ध्येत्। तस्मान्महावाक्येष्वीश्वरवाचकपदे एव लक्षणा न जीववाचकपदे इति नियमो-ऽसङ्गतः।

(४५८) जीववाचकपदे एव लक्षणेति पक्षोऽप्यसङ्गतः—

ननु निखिलेष्वपि महावाक्येषु जीववाचकपदे एव लक्षणा, नेश्वरवाच-कपदे। न च पुरुषार्थहानिः। जीववाचकपदे लक्षणाभ्युपगमे सति त्वं-पदार्थलक्ष्यभूतचैतन्यभागः सर्वशक्तिमत्सर्वज्ञस्वतन्त्रजन्मादिबन्धरहितेश्वरस्व-

रूपं भवतीति महावाक्यार्थः स्यात्। अस्मिन्नर्थे बुद्धेः स्थैर्यकरणात् जिज्ञासोरत्युत्तमेश्वरभावापत्तिः स्यात्। तस्माज्जीववाचकपदे लक्षणेति नियम्यत इति चेत्—

तन्न—त्वंपदलक्ष्यार्थभूतः साक्ष्येवेश्वर इत्युक्तिर्न सङ्गच्छते। अतोऽभिज्ञाः पदद्वयेऽपि लक्षणां वदन्ति। अयमभिप्रायः—जीववाचकपदे एव लक्षणामभ्युपगम्येश्वरवाचकपदे तामनङ्गीकुर्वाणो वादी प्रष्टव्यः—(१) त्वंपदस्य किं व्यापके चैतन्ये लक्षणा (२) अथवा यत्र जीवस्योपाधिर्वर्तते तत्रत्यसाक्षिचैतन्ये लक्षणेति। व्यापकचैतन्ये त्वंपदस्य लक्षणा वक्तुं न शक्यते। वाच्यार्थे यत् प्रविष्टं तत्रैव भागत्यागलक्षणा संभवति। व्यापकचैतन्यं तु त्वंपदवाच्यार्थे न प्रविष्टम्, किन्तु जीवोपाध्यन्तर्गतं साक्षिचैतन्यमेव प्रविष्टम्। त्वंपदवाच्यार्थैकदेशभूते साक्षिचैतन्ये एव त्वंपदस्य लक्षणा भवेत्, न व्यापकचैतन्ये। तस्मिन् साक्षिचैतन्ये सर्वान्तःकरणप्रेरकत्वसर्वप्रपञ्चव्यापकत्वादय ईश्वरधर्मा न संभवेयुः। अपि च साक्षी सदाऽपरोक्षः। तस्मिन् परोक्षत्वादीश्वरधर्माः सुतरां न संभवेयुः। किञ्च दण्डरहितस्य दण्डित्वव्यपदेशः, संस्काररहितद्विजशिशोः संस्कारवत्त्वोक्तिश्च यथाऽसङ्गता तथा त्वंपदलक्ष्यस्य मायारहितचैतन्यस्य मायाविशिष्टेश्वरत्वोक्तिश्च न युज्येतैव। तस्मात्साक्षिचैतन्यस्येश्वराभेदोक्तौ महावाक्यस्यासंभावितार्थप्रतिपादकत्वमापद्येत ॥

## (४५९) पदद्वये लक्षणा। ओतप्रोतभावश्च—

पदद्वयेऽपि लक्षणाभ्युपगमे तु नास्ति दोषः। उभयपदवाच्यार्थनिष्ठानेकत्वविरोधिनः सर्वधर्मान् विहाय स्वयंप्रकाशचैतन्यमात्रांशे निखिलधर्मशून्ये उभयोरपि पदयोर्लक्षणा ग्राह्या। उपाधितत्प्रयुक्तधर्मपुरस्कारेण चैतन्यस्य भेदे सत्यपि न स्वरूपतश्चैतन्यस्य भेदोऽस्ति। तस्मादुपाधितत्प्रयुक्तधर्मपरित्यागेन पदद्वयलक्ष्यार्थभूतचैतन्यैक्यं संभवति। घटाकाशगतघटदृष्टिपरित्यागमात्रेण न तस्य मठाकाशैक्यं संभवति। मठाकाशगतमठदृष्टेरपि परित्यागे त्वैक्यं संभवति। तद्वत् पदद्वयवाच्यार्थगतोपाधितत्प्रयुक्तधर्मपरित्यागे त्वैक्यं महावाक्येषु संभवति। "तत् त्वम्" "त्वं तत्" इत्येवंप्रकारेण सर्वमहावाक्येष्वोतप्रोतभावो

---

१. अनवरतगतागताभावेनाक्षुण्णो मार्गो यथा केवलोपदेशेन कस्यचित् सम्यगवगतो न भवति तथा, अनिवृत्तप्रतिबन्धस्य जिज्ञासोरोतप्रोतभावकरणं विना न गुरूपदेशमात्रेणैवैक्यविषयकदृढतरापरोक्षसाक्षात्कारो भवेत्। तादृशस्य शिष्यस्य तत्पदार्थविषयकपरोक्षत्वभ्रान्तिः त्वंपदार्थविषयकपरिच्छिन्नत्वभ्रान्तिश्चानुवर्तेत। तन्निवृत्तये तेनोपदेशग्रहणानन्तरमोतप्रोतभावोऽभ्यसनीयः। अयमोतप्रोतभावः अन्वयव्यतिरेक इत्युच्यते।

विज्ञेयः। ओतप्रोतभावकरणेन च महावाक्यार्थे परोक्षत्वपरिच्छिन्नत्वभ्रान्ति-निवर्तते। 'तत् त्वम्, इत्युक्तया तत्पदार्थस्य त्वंपदार्थेनाभेदः। उक्तो भवति। त्वंपदार्थभूतसाक्षी नित्यमपरोक्षः। तेन परोक्षत्वभ्रमो निवर्तते। 'त्वं तत्' इत्युक्तया त्वंपदार्थस्य तत्पदार्थेनाभेद उक्तो भवति। तत्पदार्थ-स्यार्थो व्यापकत्वम्। तेन परिच्छिन्नत्वभ्रमो निवर्तते। तथैव 'अहं ब्रह्म' 'प्रज्ञानं ब्रह्म' 'आत्मा ब्रह्म' इत्यादिभिः परिच्छिन्नत्वं निवर्तते। किञ्च 'ब्रह्माहम्', 'ब्रह्म प्रज्ञानम्' 'ब्रह्म आत्मा' इत्यादिभिः परोक्षत्वं निवर्तते। यत्र यत्र वेदवाक्यानि स्मृतिवाक्यानि वा जीवब्रह्मैकत्वं बोधयन्ति तत्र सर्वत्र भागत्यागलक्षणा ज्ञेया।

(४६०) **स्वग्रन्थस्य समाप्तिः—इत्थं गुरूपदेशं श्रुत्वा शिष्यः कृतकृत्योऽभवत्।**

"इत्थं श्रुत्वा कृतार्थोऽभूद्वाक्यं शिष्यो गुरोर्मुखात्।
इत्थमन्योऽपि यः कश्चिद्वेद चेच्चिद्विचारणात्॥
निश्शेषदुःखनाशात्स सद्य एव विमुच्यते।
सर्वमेतच्चोपदिष्टं स्वप्नवत् स्वविकल्पितैः॥

---

१. अत्रेयं शङ्का भवति—" महावाक्योपदेशानन्तरमपि कस्यचिज्जिज्ञासोः ब्रह्म-विषयकपरोक्षत्वभ्रान्तिरात्मविषयकपरिच्छिन्नत्वभ्रान्तिश्चानुवर्तत इत्युच्यते। सा च भ्रान्तिः कारणाभावे न स्यात्। तत्र ब्रह्मविषयकमायामात्मविषयकाविद्यां च विना नान्यत् कारणं भवेत्। सा माया ब्रह्माश्रिता। अविद्या चात्माश्रिताऽभवत्। ते च मायाविद्ये जिज्ञासोः तत्त्वंपदार्थपरिशोधनकाले विनष्टेऽभूताम्। यथा घटादिस्वरूपविचारे कृते घटा-दिनिष्ठाविद्या नश्यति, तथा ब्रह्मात्मस्वरूपविचारे कृते तन्निष्ठमायाविद्ये नश्यतः। तादृ-शाधिकारिज्ञानिदृष्ट्या मायाविद्ये बाधिते अभूताम्। ब्रह्मात्मव्यतिरेकेण नास्त्यन्यश्चेतनः। यमाश्रित्य ते मायाविद्ये स्याताम्। विना चेतनं न जडं वस्त्वन्तरमाश्रित्य ते मायाविद्ये स्याताम्। यदि जिज्ञासोरूपदेशग्रहणानन्तरमपि ब्रह्मात्मविषयकपरोक्षत्वपरिच्छिन्नत्व-भ्रान्ती स्यातां तत्कारणतया मायाविद्ययोः स्थितिरपि कल्पनीया। जिज्ञासोर्ब्रह्मात्मस्वरूप-विचारेण बाधिते मायाविद्ये कमाश्रित्य स्थित्वोपदेशग्रहणानन्तरं तस्य परोक्षत्वपरिच्छिन्न-त्वभ्रान्ती जनयेताम्।" इति।

**अत्रेदमुत्तरम्—**पदार्थशोधनानन्तरं विचार्य ब्रह्मात्मनोरैक्ये सम्यग्विज्ञाते माया-विद्ये यद्यपि न संभवतस्तथापि मननिदिध्यासनाद्यभावात् महावाक्यरूपब्रह्मात्मैक्ये सम्यगविदिते सति मायाविद्ये न बाधिते भवतः। ते च परोक्षत्वपरिच्छित्वभ्रान्ती जनयतः। तद्भ्रान्तिनिवृत्तये ओतप्रोतभावः कर्तव्यः। ओतप्रोतभावे कृते दृढतरैक्य-साक्षात्कारः सिद्ध्यति। निश्शेषतया मायाविद्ये निवर्तेते। परोक्षत्वपरिच्छिन्नत्वभ्रान्ती च निवर्तेत इति।

गुरुवेदान्तशास्त्राद्यैर्मिथ्याभूतैर्मनःकृतैः ।
श्रुतेऽस्मिन् ग्रन्थरत्ने तु ह्यज्ञानं प्रविनश्यति ॥
उपदेशोऽगृधदेवस्य स्वप्ने गुरुकृतोऽप्ययम् ।
मिथ्यावनस्वरूपं तु न नष्टं दुःखकारणम् ॥

(४६१) **शिष्यस्य प्रश्नः**—हे सद्गुरो स्वामिन् भवदुपदिष्टमिमं ग्रन्थं सतात्पर्यमहमश्रृणवम् । तथापि दुःखनिदानभूतसंसारवनमद्यापि मे भाति । केनोपायेन तद्वनं नश्येत् । कृपया तदुपायं बोधय मामिति शिष्योऽपृच्छत् ।

(आ. ४६२-४६३) **पूर्वोक्तप्रश्नस्योत्तरम्**—

(४६२) गुरुरेवमाह—हे सोम्य! संसारवननाशोपायं तुभ्यं ब्रवीमि । श्रृणु सावधानमनाः । महावाक्यार्थविचार एव संसारवननाशोपायः । नास्त्युपायान्तरम् । महावाक्यार्थं सम्यग्विचार्य "अयमहमस्म्यगृधः" इति निश्चित्य दृढतरमुद्घुष्य वद, इति । शिष्योऽप्येवमेव महावाक्यार्थं सुविचार्य "अहमेवागृधः" इत्युच्चैरघोषयत् । उत्तरक्षणे निद्रायाः प्रबुद्धो नेत्रे उन्मीलयति स्म । तत्क्षणमेव स्वप्ने दृष्टं संसारवनं, गुरुः, ग्रन्थः इति सर्वं, द्वैतं तिरोबभूव । संसारवनदुःखं सर्वं विनष्टम् । 'अहमगृधः' इति ज्ञात्वा सुखी बभूव ।

(४६३) मिथ्याभूतगुरुवेदान्तवाक्यादिभिरज्ञानतत्कार्यरूपमिथ्याभूताखिलजगतः आत्यन्तिकनिवृत्तिः संभवत्येव । अगृधदेवस्य मम यथा निद्रावशात् संसारवनदुःखमभवत् तथा स्वात्मस्वरूपाज्ञानवशात् अहङ्कारादिद्वैतप्रपञ्चप्रतीतिरभवत् । यथा मिथ्याभूतगुरुणा ग्रन्थेन च मिथ्यावनं नष्टमभवत्, तथैव मिथ्याभूतेन गुरुणा वेदान्तेन च मिथ्याभूतजगज्जीवेश्वरादि दृश्यं सर्वं द्वैतं नश्यति । महावाक्यानां लक्ष्यार्थज्ञानेन जिज्ञासुः मुमुक्षुः निरावरणः कृतकृत्यो भवति । निरावरणमायातीतसद्गुरुरेवाहम् ।

**इति गुरुवेदान्तादिसर्वसाधनमिथ्यात्ववर्णनं नाम**
**षष्ठस्तरङ्गः संपूर्णः ॥**

---

॥ अथ जीवन्मुक्ति[1]विदेहमुक्ति[2]वर्णनं नाम ॥

## ॥ सप्तमस्तरङ्गः ॥

### (४६४) ज्ञानिनो व्यवहारनियमो नास्ति—

#### पूर्वपीठिका

उत्तममध्यमकनिष्ठानामधिकारिणां त्रयाणामित्थं गुरूपदेशश्रवणादिभिर्निःसंशयं "अयमात्मैव ब्रह्म" इति अत्युत्तमं ज्ञानं बभूव। त्रयाणामप्येतेषां गुरूपदेशे समानेऽपि, ब्रह्मसाक्षात्कारः उत्तमस्य तत्वदृष्टेरेवाभूत्। वृक्षस्य शुष्कानि पर्णानि पतितानि यथा वायुनेतस्ततः उह्यन्ते तथा प्रारब्धकर्मशेषवशात् नाना कर्म कुर्वत् ज्ञानिनः शरीरमपि इतस्ततो नीयमानमिव प्रतिभाति। ज्ञानी हि कदाचिद्रथवाजिगजाद्यारूढः सन् वनारामादीन् पश्यति। कदाचिद्विनापि पादरक्षां सञ्चरति। तस्य शयनासनादिकमप्यव्यवस्थितमेव। तस्य कदाचिद्भोगभोजनाद्युत्तममेव भवति। कदाचिदनशन एव गिरिगुहायां वसञ्छिलातले शयानो रजनीमतिवाहयति। कदाचित्सहस्रशस्तं पुरुषाः प्रणमन्ति। कदाचिदयमुभयलोकभ्रष्ट इति कर्मिभिर्निन्द्यते। ये तावत्तं पूजयन्ति ते तस्य सुकृतं प्राप्नुवन्ति। ये तु तं दोषदृष्ट्या पश्यन्ति ते तस्य पापमश्नुवन्ति। इत्थं ज्ञानिदेहस्यानियतो व्यवहारः। तत्वविदो भ्रमसंशयादयो नैव सम्भवन्ति। कदाचित्कुत्रचिदपि नैवास्ति किञ्चित्कर्तव्यं तस्य। यतः समग्रतया तस्य भेदभ्रमभयादयो नष्टाः। सर्वोत्तमवेदप्रमाणजनितस्वप्रकाशाद्वितीयप्रत्यग्ब्रह्मात्मापरोक्षसाक्षात्कारवान्ह्यसौ।

### (आ. ४६५-४६७) ज्ञानिनो व्यवहारानियमाक्षेपः—

### (४६५) ज्ञानिना समाधेः शरीरस्थितिनिर्वाहकाच्चातिरिक्ते कार्ये न प्रवृत्तियुक्तेन भाव्यमित्यत्राक्षेपः—

ज्ञानिनोऽपि व्यवहारे नियमोऽस्तीति केचिद्वदन्ति। त्रिपुटीमात्रं दुःखनिदानमिति बुध्वा तत्परित्यज्य ज्ञानी सदा समाधिनिष्ठो भवति। यदा व्यवहारः सम्भवति तदापि सोऽपि अशनायापिपासादिप्रयोज्यभिक्षाशनजलपानादिशरीरस्थितिकारणेष्वेव। नान्यत्र। न च स विस्मरति कदाचिदपि समाधि-

---

१. जीवन्मुक्तिलक्षणं प्रपञ्चप्रतीतिपूर्वकं प्रत्यक्ब्रह्मचैतन्यनिष्ठत्वम्।

२. विदेहमुक्तिलक्षणं प्रपञ्चप्रतीतिशून्यत्वे सति प्रत्यक्चैतन्यात्मना वर्तनम्।

सुखम् । ततोऽधिकसुखाभावात् । दुःखहेतुत्वेन त्रिपुट्या उद्विजते । अतः समाध्यर्थमेव ज्ञानी भूयोभूयो यतते । यस्तु समाधिसुखं भ्रमतो बाह्यसुखासक्त्या त्यजति स श्वगर्दभप्रेतसम एव । गौडपादमाण्डूक्यकारिकायां समाधिप्रकारः सप्रपञ्चं प्रपञ्चितः । इत्थं ज्ञानी प्रपञ्चविक्षेपभ्रमं तुच्छीकृत्य सकलसुखसागरीभूतस्वरूपानन्दात्मनैवावतिष्ठते ।

अष्टाङ्गमन्तरेण च समाधिसुखं न लभ्यते । समाधिसुखकारणत्वादष्टाङ्गस्य । असाधारणं कारणमन्तरेण च नैव कार्यमुत्पद्यते । अतस्तान्युच्यन्ते शृणु—(१) प्रत्येकं पञ्च पञ्च यमनियमौ । (३) अनेकविधान्यासनानि । (४) अनेकविधाः प्राणायामाः (५) अनेकविधाः प्रत्याहाराः (६) धारणा (७) ध्यानम् (८) समाधिः सविकल्पकः । सम्यगस्मिन्नष्टाङ्गे साधिते, सुकरः स्यान्निर्विकल्पः समाधिः । नान्यथा । अतोऽवश्यमनुष्ठेयं तत् । इत्थं समाधेरवश्यानुष्ठेयतां 'श्रुत्वा भूताविष्टवदेतेऽन्यथा कथयन्तीति' मत्वा तत्त्वदृष्टिस्तूष्णीमनुक्त्वा किञ्चिदपि जहास ।

**अस्यायं सिद्धान्तः** । नैवास्ति नियमो ज्ञानिनः शरीरव्यवहारे । तस्य हि तदा व्यवहारहेतुभूताज्ञानतत्कार्यभेदभ्रमतज्जन्यरागद्वेषादयो न सन्ति । किन्तु प्रारब्धं कर्मैकमेवावशिष्टम् । तदेव च तदा तद्व्यवहारहेतुः । तादृशस्य च प्रारब्धकर्मणः पुरुषभेदेन नानाप्रकारत्वात् प्रारब्धकर्मजन्यज्ञानिव्यवहारोऽपि नानाप्रकार एव स्यात् न नियतः । अयमेव सिद्धान्तपक्षः ॥

केचिदाहुः[1]—ज्ञानिनो विहितकर्मानुष्ठाननियमाभावेऽपि, निषिद्धाचरणनिवृत्तौ नियमोऽस्त्येव । ज्ञानिनो हि प्रवृत्तिः देहस्थितिहेतुभूतभिक्षाशनकौपीनाच्छादनमात्रग्रहण एव स्यात् , नान्यत्र । यतः प्रागेव ज्ञानोत्पत्तेर्जिज्ञासादशायां मुमुक्षोः साधनचतुष्टयसत्त्वेन तीव्रविषयदोषदृष्टिवशाद्वैराग्यं सम्पन्नमेव । तादृग्वैराग्यं ज्ञानोत्पत्त्यनन्तरमपि दोषदृष्टिबलाद्विषयमिथ्यात्वनिश्चयवशाच्च दृढतरं वर्तते । अद्वितीयात्मापरोक्षज्ञानबलात् अनात्मपदार्थेषु तुच्छत्वनिश्चये सति पुनः पदार्थसत्यताबुद्धिर्न जायते । दोषदृष्टिप्राबल्ये[2] हि सति नैव रागो जायते । प्रवृत्तिमात्रं च रागमूलकमेव । ज्ञानिनो रागासम्भवान्नैवास्ति प्रवृत्तिः । शरीरजीवनार्थभोजनादिप्रवृत्तिस्तु विनैव रागं प्रारब्धकर्माधीनतयैव जायते ।

---

१. सन्यासिन एव ज्ञाने मुख्याधिकार इति वदन्तः शङ्करानन्दप्रभृतयः ।

२. 'जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं, मिथ्याद्यालोचनं दोषदृष्टिः ।

कर्म च सञ्चितागामिप्रारब्धभेदात् त्रिविधम्। तत्र (१) अतीतानन्तशरीरानुष्ठितं सत् फलायानारब्धं कर्म सञ्चितम् (२) वर्तमानशरीरकृतं भविष्यत् कर्मागामि। (३) अतीतशरीरकृतं सत् वर्तमानशरीरहेतुभूतं (शरीरारम्भकं कर्म प्रारब्धम्। तत्र च (१) सञ्चितं ज्ञानेन विनश्यति। (२) ज्ञानिन आत्मनि कर्तृत्वादिभ्रान्त्यभावान्नैवास्त्यागामि। यत्तु ज्ञानिनः शरीरं जनयित्वा तत्स्थितिहेतुभूतभिक्षाशनादौ प्रवर्तयति प्रारब्धं तत् अन्तरेण भोगं न क्षीयते। क्वचिच्च (अपरोक्षानुभूतिविवेकचूडामण्यादिग्रन्थेषु) सञ्चितागामिकर्माभावन्यायबलात् ज्ञानिनः प्रारब्धमपि नैव सम्भवति। अतो भोजनादिप्रवृत्तिरपि तस्य न युज्यते इति यदुच्यते॥ **तत्रायमभिप्रायः** "ज्ञानिनः स्वदृष्ट्या स्वात्मनि क्रियातत्फलसम्बन्धो नास्त्येव। तस्मात्सर्वकर्मप्रतिषेधः प्रारब्धप्रतिषेधश्च स्वात्मनि क्रियते, न तु ज्ञानिनः शरीरे भोगमेव नोत्पादयतीति। यतो (१) ज्ञानिनः सञ्चितं कर्म ज्ञानेन नश्यति॥ (२) आगामिनस्तु कर्मणः सम्बन्ध एव नास्ति। (३) प्रारब्धं तु भोगत एव नश्यति नान्यथा। अयमेव च सूत्रकाराद्यभिप्रायः। तस्मात्प्रारब्धवशाच्छरीरपोषणादिनिर्वाहकक्रियादिषु, ज्ञानिनः प्रवृत्तिः स्यादेव। अन्यत्र तु न स्यात्।

---

१. कुसूलस्थधान्यं पुनः पुनः पूर्यमाणं क्रमेण भुज्यमानं यथा, तथानेकजन्मार्जितमन्तःकरणोपहितसाक्ष्यज्ञानावरणशक्तिनिष्ठं कर्म सञ्चितम्।

२. वर्तमानशरीरकृतं इतः परं कालान्तरफलप्रदं कर्मागामि। कृषिस्थधान्यवत्।

३. एतेष्वेव यत्किञ्चित्परिपक्वं सत् वर्तमानशरीरद्वारा सुखदुःखप्रदत्वेनाज्ञानविक्षेपशक्त्याश्रयि कर्म प्रारब्धम्। अन्नभूतधान्यवत्।

४. "असङ्गोऽहमकर्ताऽभोक्ता" इति निश्चयबलाज्ज्ञानिनः कर्मलेपो न सम्भवति। कर्तृत्वाद्यभिमानेन फलाभिलाषिण एव कर्मफलसुखादिसम्बन्धः।

५. "सर्वे वेदा यत्पदमामनन्ति", वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृतिशतेभ्यः सर्वशास्त्राणां निर्विशेषाद्वितीयब्रह्मात्मचैतन्ये तात्पर्यमध्यवसितम्। एतज्ज्ञानाधिकारी त्वष्टाचत्वारिंशत्संस्कारसंस्कृतोऽनन्तकोटिजन्मसु परमेश्वरप्रसादमहिम्ना नितान्तनिर्मलीकृतान्तःकरणः कृतकृत्यो विषयेषु मलमूत्रनरकादिब्रह्मलोकान्तेषु सुविरक्तः। नास्य किञ्चिदप्यन्यदणुमात्रमज्ञानादिकमस्ति। कुतः प्रारब्धकल्पनावकाशः।

"अज्ञानमेव न कुतो जगतः प्रसङ्गो
जीवेशदेशिकविकल्पकथाऽतिदूरे।
एकान्तनिर्मलचिदेकरसस्वरूपं
ब्रह्मैव केवलमहं परिपूर्णमस्मि"॥
वस्तुतो नास्ति चाज्ञानं चित्प्रकाशविरोधतः।
अतोऽज्ञानं न चाज्ञानबाधकञ्च निरूपणे॥

तस्मादज्ञानमज्ञानकार्यञ्च सुरपुङ्गवाः ।
एकं ब्रह्मैव नैवान्यदिति मे निश्चिता मतिः ॥

ननु क्रियाकारकफलरूपस्य प्रपञ्चस्य भेदमपि श्रुतिः प्रतिपादयति "आत्मन आकाशः संभूतः", "ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादिना । तत्कथं सर्वस्य ब्रह्मात्मत्वमिति चेत् । अत्रोच्यते ॥

साक्षादर्थस्वभावेन श्रुतिः सेयं प्रवर्तते ।
श्रोतुश्चित्तविपाकेन विषण्णा विवशा श्रुतिः ॥ इति ॥

"ऐतदात्म्यमिदं सर्वं" मित्येषा श्रुतिः अर्थस्वभावेन परमार्थस्वाभाव्येन न साक्षाद्विद्यमानमेवार्थं प्रतिपादयितुं प्रवृत्ता । ईदृग्विधस्यार्थस्य असंस्कृतचित्तैर्दुरधिगमत्वात् । तच्चित्तपरिपाकानुसारेण भेदश्रुतिर्मायामयव्यवहारसिद्धं भेदमनुवदन्ती साध्यसाधनफलादिलक्षणं जगद्वैचित्र्यं प्रतिपादयति । न परमार्थत इत्यर्थः ॥

"सोपानक्रमतो देवा मन्दं मन्दं हितं नृणाम् ।
उपदिश्य विषण्णापि पुनः पक्वाधिकारिणः ॥
ऐतदात्म्यमिदं सर्वमित्याह परमाद्वयम् ।
जगज्जीवेश्वरत्वादिविचित्रविभवं विना ॥
केवलं चित्सदानन्दब्रह्मात्मैक्यपरा श्रुतिः ।
जगज्जीवेश्वरत्वादि सर्वं ब्रह्मैव केवलम् ॥
इति स्वपूर्णताज्ञानं परमाद्वैतवेदनम् ।
इतोऽन्यद्यत्परिज्ञानं तदज्ञानं न संशयः ॥
विचारेणायमेवार्थस्त्वविचारेण नैव हि ।
न कदाचिद्विशेषोऽस्तीत्येतज्ज्ञानं सुदुर्लभम् ॥

सुदुर्लभं निर्विशेषब्रह्मात्मैक्यसाक्षात्कारस्य वर्णाश्रमधर्मपरितोषितपरमेश्वरप्रसादैकसमधिगम्यत्वादित्यर्थः । परमार्थसत्तैवैका श्रुतिसम्मता । तद्रीत्या मायायास्तुच्छत्वेन प्रारब्धकर्मादिकं न सम्भवति ॥ अनिर्वचनीयप्रातिभासिकसत्ताभ्युपगमेऽपि मायायाः, प्रारब्धं नैव युज्यते । नादबिन्दूपनिषदि—

"उत्पन्नेऽतत्वविज्ञाने प्रारब्धं नैव मुञ्चति ।
तत्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ॥
देहादीनामसत्वात्तु यथा स्वप्ने विबोधतः ।
कर्म जन्मान्तरीयं यत् प्रारब्धमिति कीर्तितम् ॥
तत्तु जन्मान्तराभावात्पुंसो नैवास्ति कर्हिचित् ।
स्वप्नदेहो यथाऽध्यस्तस्तथैवायं हि देहकः ॥
अध्यस्तस्य कुतो जन्म जन्माभावे कुतः स्थितिः ।
उपादानं प्रपञ्चस्य मृद्भाण्डस्येव पश्यति ॥
अज्ञानञ्चेति वेदान्तैस्तस्मिन्नष्टे क्व विश्वता ।
यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ॥

तद्वत् सत्यमविज्ञाय जगत्पश्यति मूढधीः ।
रज्जुखण्डे परिज्ञाते सर्परूपं न तिष्ठति ॥
अधिष्ठाने तथा ज्ञाते प्रपञ्चे शून्यतां गते ।
देहस्यापि प्रपञ्चत्वात् प्रारब्धावस्थितिः कुतः ॥
अज्ञानिजनबोधार्थं प्रारब्धमिति चोच्यते ॥ इति ।

अध्यात्मोपनिषदि ज्ञानोदयात् पुरारब्धं कर्म ज्ञानान्न नश्यति इति स्फुटतयावेद्यते ।

अदत्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ।
व्याघ्रबुध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ ॥
न तिष्ठति भिनत्येव लक्ष्यं वेगेन निर्भरम् ।
अजरोऽस्म्यमरोऽस्मीति य आत्मानं प्रपद्यते ॥
तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना ।
प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः ॥
देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः ।
प्रारब्धकल्पनाप्यस्य देहस्य भ्रान्तिरेव हि ॥
अध्यस्तस्य कुतस्सत्वं असत्यस्य कुतो जनिः ।
अजातस्य कुतो नाशः प्रारब्धमसतः कुतः ॥
ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि ।
तिष्ठत्ययं कथं देह इति शङ्कावतो जडान् ॥
समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः ।
न तु देहादिसत्यत्वबोधनाय विपश्चिताम् ॥
परिपूर्णमनाद्यन्तमप्रमेयमविक्रियम् ।
सद्घनं चिद्घनं नित्यमानन्दघनमव्ययम् ॥
प्रत्यगेकरसं पूर्णमनन्तं सर्वतोमुखम् ।
अहेयमनुपादेयमनाधेयमनाश्रयम् ॥ इत्यादि ।

एतदेवापरोक्षानुभूतिविवेकचूडामण्यादौ च प्रतिपादितम् । दृष्टिसृष्ट्येकजीववादयोः प्रपंचस्य स्वप्नमनोरथशुक्तिरजतादिवदज्ञातसत्वाभावात्, ज्ञानेनाज्ञाननाशे समूलनाश एव सर्वस्य स्यात् । नाणुमात्रमवशिष्येत । द्वैतमात्रस्याज्ञानमूलत्वात् । तथा चोक्तं सिद्धान्तलेशसङ्ग्रहे—"सर्वज्ञात्मगुरवस्तु विरोधिसाक्षात्कारोदये लेशतोऽप्यविद्यानुवृत्त्यसम्भवात् जीवन्मुक्तिशास्त्रं श्रवणादिविध्यर्थवादमात्रम् । शास्त्रस्य जीवन्मुक्तिप्रतिपादने प्रयोजनाभावात् अतः कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारोदयमात्रेण सविलासवासनाविद्यानिवृत्तिरित्यपि कश्चित्पक्षमाहुरिति ।" (सू. भा. टी-३-८-३०) कल्पितस्याज्ञातसत्वाभावात् दृष्टदृष्टिभ्यामुत्पत्तिलयावुक्तौ । व्यावहारिकसत्वे त्वनास्था श्रुतेः इति आनन्दगिरिटीकायाम् । रामानन्दीयायान्तु स्वप्नवत्कल्पितस्याज्ञातसत्त्वाभावात् दर्शनं सृष्टिः । अदर्शनं लयः इति दृष्टिसृष्टिपक्षः श्रुत्यभिप्रेत इति भाव इति ॥ अतः प्रातिभासिकपक्षे अविद्यालेशस्य ज्ञाननाशानन्तरमवस्थित्यसम्भवात्प्रारब्धकथानवकाश एव ॥ (३) व्यावहारिके प्रतिकर्मव्यवस्थायामेव सृष्ट्यादिश्रुतिजीवन्मुक्तिशास्त्रादिनिरूपणावकाशः ॥ इत्थमधिकारित्रयाणा-

(४६६) **अत्राक्षेपः।** कर्म हि अनेकप्रकारकम्। एकशरीरारम्भकं एकं कर्म। अनेकशरीरारम्भकं एकं कर्म इति। तत्र एकमेव कर्म यत्रानेकशरीराणि आरभते तत्र तादृशकर्मफलभूतप्रथमशरीर एव ज्ञानोत्पत्तौ सत्यामपि ज्ञानिनः शरीरान्तराण्यपि तत्फलभूतानि सम्भवेयुः। अन्तरेण भोगं प्रारब्धं कर्म नैव नश्यति।

(४६७) **तत्र समाधानम्**—प्रारब्धकर्मफलभूतानि यावन्ति शरीराणि तावन्त्यपि ज्ञानिनः शरीराणि भवन्त्येव। प्रारब्धभोगयोग्यादधिकं शरीरं न जायेत। तेन ज्ञानमपि सफलमिति यदि कश्चित्समाधानं ब्रूयात्—तन्न युज्यते। वेदस्यायं सिद्धान्तः—ज्ञानिनः प्राणाः लोकान्तरं वाऽस्मिल्लोके देहान्तरं वा न प्राप्नुवन्ति। अपि तु अत्रैवान्तःकरणमिन्द्रियाणि च सम्प्रलीयन्ते[१]। प्राणस्य गमनं विना शरीरान्तरं न प्राप्यते। तस्मात् ज्ञानिनः प्रारब्धशेषबलाच्छरीरान्तरं जायेतेति कथनं न सम्भवति।

इदं त्वत्र समाधानम्—यत्रैकेन[२] कर्मणा अनेकशरीराणि जायन्ते,

---

मुत्तममध्यमाधमानामुपदेशभेदेन विविच्य विषयः श्रुतिस्मृतिपुराणेतिहासादिसर्वग्रन्थानां विज्ञेयो गुरुमुखात्। नान्यथा। इष्टसिध्यभावेऽपि पतनप्रसङ्गात्॥ तथा चोक्तम्—

"माया ह्यचिन्त्याऽनिर्वाच्या जगज्जन्मादिकारिणी।
अदृश्या परमानर्थहेतुर्दुर्घटकारिणी॥
लौकिकास्तां हि मन्यन्ते वास्तवीं, युक्तिशालिनः।
नरोऽमिर्वचनीयां तु तुच्छां श्रौतात्मवेदिनः॥
अतः श्रौतमतौ सत्यां मायायास्तुच्छतावशात्।
सुखेन ब्रह्मविज्ञानं सिध्येदेव न संशयः॥
गुरु ज्ञानवा-च. प 4-15-57-59॥ पञ्चदश्याम्–चि-६-२२८)
इत्थं लौकिकदृष्टचैतत् सर्वैरप्यनुभूयते।
युक्तिदृष्ट्या त्वनिर्वाच्या नासदासीदिति श्रुतेः॥
नासदासीद्विभातत्वान्नो सदासीच्च बाधनात्।
विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः॥
तुच्छानिर्वचनीया च वास्तवी चेत्यसौ त्रिधा।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः॥ १३०॥

(१) "न तस्य प्राणा उत्क्रामन्ति। अत्र ब्रह्म समश्नुते" इति श्रुतेः॥

(२) ब्रह्महत्यादिकमेकमपि कर्म नरकानुभवानन्तरं श्वसृगालसर्पाद्यनेकजन्महेतुत्वेन स्मृतिपुराणादिप्रसिद्धम्। कृत्तिकाशुद्धपूर्णिमायां स्वामिदर्शने कृते धनादिसम्पद्विशिष्टः सप्तजन्मसु ब्राह्मणो जायत इति च। इत्थमनेकजन्महेतुभूतमेकमेव कर्म प्रारब्धरूपेण फल-

तत्र चरम एव जन्मनि ज्ञानं जायेत, न तु पूर्वतनशरीरेषु। अनेकशरीरप्रदप्रारब्धस्य तत्र प्रतिबन्धकत्वात्। यथा (१) विषयासक्तिः (२) बुद्धिमान्द्यम्, (३) भेदवादिद्वैतशास्त्रवचनविश्वासश्चेत्यादिर्ज्ञानप्रतिबन्धः तथा

---

दानादागामिप्रतिबन्धो भवति। श्रवणादिविचाररूपज्ञानसाधने प्रवृत्तस्यापि पुरुषस्येदृशप्रतिबन्धे सति नैव ज्ञानं जायते। तस्मात् एतत्कर्मफलभूतचरमजन्मन्येव भाविप्रतिबन्धाभावात् ज्ञानमुत्पद्यते। जन्मान्तरानुष्ठितं श्रवणादिकमपि तदा तत्रोपकरोतीति तदपि न निष्फलम्। भरतस्य प्रारब्धं जन्मत्रयस्य हेतुरभूत्। सत्यामपि साधनसामग्र्यां नाभूत्तस्य ज्ञानम्। तृतीये तु जन्मनि विनाप्युपदेशं जन्मान्तरकृतश्रवणादिबलात्समजायत ज्ञानम्॥

१. बुद्धिमान्द्यविशिष्टविषयासक्ति-कुतर्क-विपर्यय-दुराग्रहाख्यः वर्तमानः प्रतिबन्धः॥ (२) पुत्रवित्तदारादीष्टवस्तुनाशानन्तरमपि तत्स्मरणात्मकः भूतप्रतिबन्धः॥ ब्रह्मलोकादिलोकान्तरभोगेच्छा, अथवा भाविजन्महेतुभूतप्रारब्धकर्मशेषः आगामी प्रतिबन्धः॥ तथायोक्तं-पञ्चदश्यां (१६-३२)

विचार्याप्यापरोक्ष्येण ब्रह्मात्मानं न वेत्ति चेत्।<br>
आपरोक्ष्यावसानत्वाद्भूयोभूयो विचारयेत्॥<br>
विचारयन्नामरणान्नैवात्मानं लभेत चेत्।<br>
जन्मान्तरे लभेतैव प्रतिबन्धक्षये सति॥<br>
इह वाऽमुत्र वा विद्येत्येवं सूत्रकृतोदितम्।<br>
शृण्वन्तोऽप्यत्र बहवो यन्न विद्युरिति श्रुतिः॥<br>
गर्भ एव शयानः सन् वामदेवोऽवबुद्धवान्।<br>
पूर्वाभ्यसविचारेण यद्वदध्ययनादिषु॥<br>
बहुवारमधीतेऽपि सदा नायाति चेत्पुनः।<br>
दिनान्तरेऽनधीत्यैव पूर्वाधीतं स्मरेत्पुमान्॥<br>
कालेन परिपच्यन्ते कृषिगर्भादयो यथा।<br>
तद्वदात्मविचारोऽपि शनैः कालेन पच्यते॥<br>
पुनः पुनर्विचारेऽपि त्रिविधप्रतिबन्धतः।<br>
न वेत्ति तत्वमित्येतत् वार्तिके सम्यगीरितम्॥<br>
कुतस्तज्ज्ञानमिति चेत् तद्धि बन्धपरिक्षयात्।<br>
असावपि च भूतो वा भावी वा वर्ततेऽथवा॥<br>
अधीतवेदवेदार्थोऽप्यत एव न मुच्यते।<br>
हिरण्यनिधिदृष्टान्तादिदमेव हि दर्शितम्॥<br>
अतीतेनापि महिषीस्नेहेन प्रतिबन्धतः।<br>
भिक्षुस्तत्वं न वेदेति गाथा लोके प्रगीयते॥<br>
अनुसृत्य गुरुः स्नेहं महिष्यां तत्वमुक्तवान्।<br>
ततो यथावद्वेदैष प्रतिबन्धस्य सङ्क्षयात्॥

विलक्षणप्रारब्धमपि ज्ञानप्रतिबन्धकमेव। प्रतिबन्धकसद्भावदशायां क्रियमाणं ज्ञानसाधनीभूतं श्रवणमननादिकं सर्वं प्रतिबन्धकनिवृत्त्यनन्तरमेव चिरकाल-प्रतिबद्धमपि प्रथमजन्मकृतमेव सत् शरीरान्तरे ज्ञानमुत्पादयति। तद्यथा—वामदेवस्य किलर्षेः पूर्वजन्मनि कृतश्रवणादेरपि प्रारब्ध-कर्मफलभूतेनैकेन शरीरेण शेषभूतेन बलवता प्रतिबंधान्न ज्ञानं उद्भूतं श्रवणाद्यनुष्ठानदशायामेव। शरीरपातेन शरीरान्तरप्राप्तिसमये पूर्वजन्मकृतमेव श्रवणादिकं तस्य गर्भ एव ज्ञानं जनयति स्म। तस्माज्ज्ञानानन्तरं शरीरान्तरसम्बन्धो नैव स्यात्। ज्ञानिनो वर्तमानशरीरचेष्टा तु प्रारब्धकर्माधीनतया जायते। तत्रापि शरीरनिर्वाहकत्वेन यावदाक्षिप्तं कर्म तावदेव स्यात्। रागजन्याधिक-यथेष्टचेष्टादिकं नैव स्यात्। तस्मात्सर्वप्रवृत्तिशून्य एव ज्ञानी स्यात्॥

**(४६८) इत्थं निवृत्तिप्रधान एव स्याज्ज्ञानिनो व्यवहारः।**

**अत्रेयमाशङ्का**—"मनसो हि अत्यन्तचाञ्चल्यमेव स्वभावः। तस्य च न निरालम्बनतया स्थितिः क्षणमात्रमपि सम्भवति। यत्किञ्चिदा-लम्बनमाश्रित्यैव मनसः स्थितिः स्यात्। अतो मनसो यत्किञ्चिदालम्बनप्राप्तये ज्ञानिनोऽपि प्रवृत्तिः स्यात् इति॥

**तत्रेदं प्रतिवचनम्**—असमाहितचित्तस्य समाध्यनुष्ठानशून्यस्य चित्त-समाधानाभावेन मनसश्चाञ्चल्येऽपि समाहितचित्तस्यानवरतं समाधिमनुतिष्ठत-स्तन्न स्यात्। ज्ञानी तु समाधौ सदा स्थितो भवति। तस्मान्नैव स्यात् कदाचिदपि प्रवृत्तिर्ज्ञानिनः। इति।

---

प्रतिबन्धो वर्तमानो विषयासक्तिलक्षणः।
प्रज्ञामान्द्यं कुतर्कश्च विपर्ययदुराग्रहः॥
शमाद्यैः श्रवणाद्यैश्च तत्र तत्रोचितैः क्षयम्।
नीतेऽस्मिन् प्रतिबन्धेऽतः स्वस्य ब्रह्मत्वमश्नुते॥
आगामिप्रतिबन्धश्च वामदेवे समीरितः।
एकेन जन्मना क्षीणो भरतस्य त्रिजन्मभिः॥
योगभ्रष्टस्य गीतायामतीते बहुजन्मनि।
प्रतिबन्धक्षयः प्रोक्तो न विचारोऽप्यनर्थकः॥

(१) जन्मान्तरहेतुभूतः प्रारब्धशेषः॥

(२) अत्र वामदेवशब्देन ऋषभदेवपुत्रो जडभरतोऽपि गृह्यते। तस्य जन्मत्रय-हेतुभूतप्रारब्धशेषोऽवर्तत। ततः साधनसम्पत्तौ सत्यामपि नाभूज्ज्ञानम्। तृतीये जन्म-न्यन्तरेणैवोपदेशं प्रागनुष्ठितविचारबलादेवापरोक्षज्ञानं सम्बभूव॥

## (४६९-४७५) समाध्यष्टाङ्गनिरूपणम् ।

४६९. समाध्यङ्गान्यष्टौ । तानि च—१. यमः—२. नियमः—३. आसनम्—४. प्राणायामः—५. प्रत्याहारः—६. धारणा—७. ध्यानम्—८. समाधिः सविकल्पः इति ॥

४७०. तत्र यम[1]ः, १. अहिंसाः, २. सत्यं, ३. अस्तेयं, ४. ब्रह्मचर्यम्, ५. अपरिग्रह इति पञ्चविधो यमः ॥

४७१ नियम[2]ः, १. शौचम्, २. सन्तोषः, ३. तपः, ४. स्वाध्यायः ५. ईश्वरप्रणिधानम्—इति पञ्चविधो नियमः ॥ ज्ञानसमुद्राख्ये ग्रन्थे दशविधो यमः, दशविधो नियमश्चोक्तः । सा च पौराणिकी रीतिः । वेदान्तसम्प्रदायरीत्या तु प्रत्येकं तयोः पञ्च पञ्चैव भेदाः ॥

४७२ आसनम्[3]—अनन्ताः ह्यासनभेदाः—तत्र—१. स्वस्तिकम्, २. गोमुखं, ३. वीरम्, ४. कूर्मम्, ५. पद्मं, ६. कुक्कुटम्, ७. उत्तानम्, ८. कूर्मकम्, ९. धानुष्कम्, १० मत्स्यम्, ११. पश्चिमतानम्, १२. मयूरम्, १३. शवम्, १४. सिंहम्, १५. भद्रम्, १६. सिद्धम्, इति प्रक्रम्य चतुरशीत्यासनानि (८४) योगग्रन्थेषु निरूपितानि। तत्रैव तानि तल्लक्षणान्यपि विस्तरशो ज्ञेयानि । अत्र तु ग्रन्थविस्तरभयात्, तेषां वेदान्तेऽत्यन्तोपयोगाभावाच्च न लिख्यन्ते। तेषु सिंहं भद्रम् पद्मं सिद्धमिति चत्वारि मुख्यान्यासनानि । तत्रापि **सिद्धासन**मेवात्यन्तसाधनम् । तल्लक्षणञ्चैकत्रोक्तम्—

"योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसे-
न्मेढ्रे पादमथैकमेव हृदये कृत्वा हनुं सुस्थिरम् ।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद्भ्रुवोरंतरं
ह्येतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते ॥ इति ॥

---

(१) यमादिलक्षणं हठयोगप्रदीपिकायां पातञ्जलसूत्रेऽन्यत्र तत्तट्टिप्पण्यादौ चोक्तम् । राजयोगानुसारेण तु श्रीभगवत्पादप्रणीतापरोक्षानुभूतिग्रन्थोक्तं प्रकारमवलंब्यात्र किञ्चिल्लिख्यते—"सर्वं ब्रह्मेति विज्ञानादिन्द्रियग्रामसंयमः ।
यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ न केवलमहिंसा ॥

(२) सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ।
नियमो हि परानन्दो नियमात्क्रियते बुधैः ॥ न केवलं शौचादिः ॥

(३) सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम् ।
आसनं तद्विजानीयान्नेतरत्सुखनाशनम् ॥ न केवलं कम्बलादिकम् ॥

गुदावृषणयोर्मध्ये वामपादं नियोजयेत् ।
दक्षपादाग्रभागञ्च वामजङ्घान्तरे न्यसेत् ॥
हस्तयुग्मं न्यसेदङ्के सिद्धासनमितीरितम् ।
कुण्डलीबोधकं शीघ्रं समाधेश्चोपकारकम् ॥ इति ॥

तत्रैव मतान्तरम्—

मेढ्रादुपरि विन्यस्य सव्यगुल्फं तथोपरि ।
गुल्फान्तरञ्च निक्षिप्य सिद्धासनमिदं भवेत् ॥
"एतत् सिद्धासनं प्राहुरन्ये वज्रासनं विदुः ।
मुक्तासनं वदन्त्येके प्राहुर्गुप्तासनं परे ॥" इति ॥
"संपीड्य सीविनीं सूक्ष्मां गुल्फेनैव च सव्यतः ।
सव्यं दक्षिणगुल्फेन मुक्तासनमितीरितम् ॥" इति ॥
"निपीड्य सीविनीं सूक्ष्मां दक्षिणेतरगुल्फतः ।
वामं याम्येन गुल्फेन मुक्तासनमिदं भवेत् ॥" इति च ॥

इदमेव सिद्धासनमत्यन्तं प्रधानम् । कानिचिदासनानि रोगनाश-हेतूनि । कानिचित् प्राणायामादिसमाध्यङ्गसाधकानि । इदन्तु सिद्धासनं समाधिकालोपयोगित्वादत्यन्तं प्रधानमुच्यते । इदमेव वज्रासनम्, मुक्तासनम्, गुप्तासनमित्यनेकधोच्यते ॥

(४७३) प्राणायामः[1]—

आसनसिद्ध्यनन्तरं प्राणायामः कर्तव्यः । प्राणायामस्त्वनेकविधः[2] । तथापि तल्लक्षणं सङ्ग्रहेणोच्यते—(१) नासिकायाः वामच्छिद्रस्थेडाख्यनाडी-द्वारा वायोरन्तः पूरणं कार्यम् । तदेव पूरकमित्युच्यते[3]—(२) दक्षिणनासिकास्थ-पिङ्गलाख्यनाडीद्वारा वायोर्बहिः निःसरणं कार्यम् । तदेव रेचकमित्युच्यते[4]—(३) सुषुम्नाद्वारा वायोर्निरोधनं कार्यम् । तदेव कुम्भकमित्युच्यते[5] । इत्थं क्रियमाणानां

---

१. चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ।
निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥

२. केचन प्राणायामं—(१) बाह्यं (२) आभ्यन्तरम्—(३) स्तम्भवृत्तिकमिति वदन्ति । निश्वासं कृत्वा तद्गतिनिरोधो बाह्यः । प्राणोच्छ्वासं कृत्वा तन्निरोधः आभ्यन्तरः । बाह्यान्तर्गतेः समकालं निरोधः स्तम्भवृत्तिरिति ॥ इति च ।

३. अहं ब्रह्मास्मीति भावना पूरकः ।

४. अनात्मप्रपञ्चनिषेधो रेचकः ।

५. अखण्डाकारवृत्त्याचलता कुम्भकः ।

पूरकरेचककुम्भकानां समुदायः प्राणायामः इत्युच्यते । स च प्राणायामो द्विविधः—(१) एकोऽगर्भः—(२) अपरः सगर्भः । (१) प्रणवोच्चारणं विना क्रियमाणः प्राणायामोऽगर्भः (२) प्रणवोच्चारणेन सह क्रियमाणः प्राणायामः सगर्भः ।

(४७४) प्रत्याहारधारणाध्यानानि—स्वस्वविषयेभ्यः सकलेन्द्रियनिरोधः प्रत्याहारः । नैरन्तर्येणान्तःकरणस्यैकाकारतास्थितिर्धारणा । बह्वन्तराययुक्ताद्वितीयप्रत्यग्ब्रह्मणि प्रवहदन्तःकरणप्रवाहो ध्यानमित्युच्यते ॥

(४७५) समाधिः ।

व्युत्थानसंस्कारतिरस्कारेण निरोधसंस्कारप्रकटनेन च सहान्तःकरणस्यैकाग्रतापरिणामः समाधिः ॥ अयञ्च समाधिर्द्विविधः—(१) सविकल्पसमाधिः (२) निर्विकल्पसमाधिश्चेति ॥ (१) ज्ञातृज्ञानज्ञेयरूपत्रिपुटीभानसहिताद्वितीयब्रह्मविषयकान्तःकरणवृत्त्यवस्थितिः सविकल्पसमाधिरित्युच्यते । स च द्विविधः ॥ (1) शब्दानुविद्धः (2) शब्दाननुविद्धश्चेति ॥ (1) "अहम्ब्रह्मास्मी"ति शब्देन सहितो यः स शब्दानुविद्धः ॥ (2) तद्रहितस्तु शब्दाननुविद्धः ॥ (२) त्रिपुटीभानरहिताखण्डब्रह्माकारान्तःकरणवृत्त्यवस्थितिः निर्विकल्पसमाधिरित्युच्यते । एवं सविकल्पनिर्विकल्पभेदेन समाधिर्द्विविधः ॥

तत्र सविकल्पसमाधिः साधनम् । निर्विकल्पसमाधिः फलम् ॥ साधनात्मकसविकल्पकसमाधौ यद्यपि त्रिपुटीरूपद्वैतप्रतीतिरस्ति । तथापि तद् द्वैतं कारणब्रह्मात्मनैव प्रतीयते । न पृथक् । यथा मृद्विकारान् मृद्रूपत्वेन

---

१. विषयेष्वात्मतां दृष्ट्वा मनसश्चित्तमज्जनम् ।
प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुमुक्षुभिः ॥

२. यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनम् ।
मनसो धारणञ्चैव धारणा सा परा मता ॥

३. ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः ।
ध्यानशब्देन विख्याता परमानन्ददायिनी ॥

४. निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।
वृत्तिविस्मरणं सम्यक्समाधिर्ज्ञानसंज्ञकः ॥
अथातः संप्रवक्ष्यामि समाधिं भवनाशनम् ।
समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥
महावाक्यलक्ष्यस्वरूपसाक्षात्कार एव समाधिरिह विवक्षित इत्यर्थः ॥

जानतो विवेकिनो मृद्विकारा घटादयो मृद्रूपा एव प्रतीयन्ते तथा सविकल्पकसमाधौ त्रिपुटीरूपद्वैतमपि ब्रह्मात्मनैव प्रतीयते ॥ निर्विकल्पसमाधावपि सविकल्पसमाधाविव त्रिपुटीरूपं द्वैतं विद्यमानमपि न प्रतीयते। यथा जले निक्षिप्तो लवणपिण्डो निलीनो विद्यमानोऽपि नेत्रेण न गृह्यते तद्वत्। तथा च सविकल्पनिर्विकल्पसमाध्योरयं भेदः—(१) सविकल्पसमाधौ ब्रह्मस्वरूपेण द्वैतं प्रतीयते—(२) निर्विकल्पसमाधौ त्रिपुटीरूपं द्वैतन्न प्रतीयते इति ॥

### (४७६) सुषुप्तिनिर्विकल्पसमाध्योर्भेदः।

सुषुप्तावन्तःकरणवृत्तिर्ब्रह्माकारतां न प्राप्नोति। किन्तु कारणाज्ञानात्मतां भजते। निर्विकल्पसमाधौ तु ब्रह्माकारतयाऽन्तःकरणवृत्तिर्वर्तते। इत्थम्—सुषुप्तौ सवृत्तिकान्तःकरणस्याभावः। निर्विकल्पसमाधौ सवृत्तिकान्तःकरणस्य सत्त्वेऽपि न प्रतीतिः ॥[1] निर्विकल्पसमाधौ अन्तःकरणस्य ब्रह्माकारवृत्त्युत्पत्तौ सविकल्पसमाध्यभ्यासो हेतुः ॥ तस्मादेव साधनरूपाष्टाङ्गेषु सविकल्पः समाधिरपि गण्यते। निर्विकल्पसमाधिस्तु तस्य फलम् ॥

### ४७७. निर्विकल्पसमाधेर्द्वैविध्यम्।

निर्विकल्पसमाधिरपि द्विविधः—(१) एकोऽद्वैतभावनारूपः— (२) अपरोऽद्वैतावस्थानस्वरूपः ॥ अद्वैतब्रह्माकारान्तःकरणवृत्तिः अद्वैतभावनारूपनिर्विकल्पसमाधिरित्युच्यते। एतत्समाध्यभ्यासाधिक्ये सति ब्रह्माकारा वृत्तिरपि शान्ता भवति। सैव वृत्तिरहितावस्थाद्वैतावस्थानरूपनिर्विकल्पसमाधिरित्युच्यते। यथा सन्तप्तायसि निक्षिप्तो जलबिन्दुस्तस्मिन्नेव प्रविशति। तथाऽद्वैतभावनारूपः समाधिरपि दृढाभ्यासवशादत्यन्तं प्रकाशमाने ब्रह्मात्मनि प्रविशति। अत्र प्रथमः[2] समाधि[3]र्द्वितीयस्य साधनं भवति ॥

---

१. वायूपादानकत्वादग्न्युत्पत्तिस्थितिनाशानां वायुरुपादानकारणमग्नेः। यथा वायोरभावे दीपः प्रशाम्यति। अनुकूलवायुप्रदेशे अचलः प्रकाशते। तथैव समाधावन्तःकरणस्य सुतरामभावे शरीरं पतेत्। तस्मान्मनोबुद्धिचित्ताहंकारादिवृत्तिं विना सूक्ष्मरूपेण निर्वृत्तिकमेवान्तकरणमास्ते। समाधेरुत्थानसमये समाधिसुखस्मरणसत्वात् अननुभूते च स्मरणासम्भवात् समाधावपि वृत्तिसद्भावोऽनुमीयते। समाधावन्तःकरणाभावे योगिशरीरं पतेदेव सुप्तदेहवत्। न तु तथा पतति। तस्मात्समाधावन्तःकरणमस्त्येवेति स्वीकर्तव्यमिति तात्पर्यम्।

२. अद्वैतभावनारूपः समाधिः।

३. अद्वैतावस्थानरूपस्य। समाधिरयं ज्ञानस्य सप्तमभूमिकारूपयोगस्य परमोऽवधिः।

### (४७८) अद्वैतावस्थानरूपसमाधिसुषुप्त्योर्भेदः ।

अद्वैतावस्थानरूपसमाधेः सुषुप्तेश्चेयान् भेदः । (१) सुषुप्तावन्तःकरणं तद्वृत्तिश्चाज्ञाने लीयते । (२) अद्वैतावस्थानरूपसमाधौ तु वृत्तिर्ब्रह्मप्रकाशचैतन्ये प्रलीयत इति ॥ किञ्च (१) सुषुप्तौ स्वरूपानन्दोऽज्ञानावृतो भवति । (२) अत्र तु समाधौ निरावरणो ब्रह्मानन्दो विभाति ।

### (४७९) निर्विकल्पसमाधौ लय-विक्षेप-कषाय-रसास्वादरूप-विघ्नचतुष्टयनिरूपणम्—

निर्विकल्पसमाधौ चत्वारो विघ्नाः स्युः। तन्निवृत्त्यर्थं तत्स्वरूपं कथ्यते । (१) लयः– (२)– विक्षेपः--(३) कषायः । (४) रसास्वादः इति विघ्नाः चत्वारः ।

**तत्र लयः**—आलस्येन निद्रया वा वृत्त्यभवो लयः इत्युच्यते । तस्मिन्सति सुषुप्तितुल्यावस्था समाधिनिष्ठस्य जायते । ब्रह्मानन्दोऽपि तदा तिरोभवति । तस्मान्निद्रालस्यादिनिमित्तैर्यदा वृत्तिः स्वोपादानेऽन्तःकरणे लीयेत, तदा योगी सावधानः सन् निद्रादिकं निरुध्य वृत्त्युत्पादनं कुर्यात् । इदमेव श्रीगौडपादाचार्यैश्चित्तसम्बोधनमित्युक्तम् । लयरूपस्य विघ्नस्य विरोधि निद्रालस्यादिनिरोधकं वृत्तिप्रवाहरूपं जागरणमेव चित्तसंबोधनम् ।

(४८०) **विक्षेपः**—यथाहि बहिर्मार्जारादिभयाच्चटका गृहान्तः प्रविश्य भयक्लेशव्याकुलतादिनिवृत्तियोग्यं स्थलं तत्कालं तत्रापश्यन्ती बहिरेव पुनरागत्य भयं वा मरणादिरूपं दुःखं वा प्राप्नुयात् तथैव बहिरनात्मपदार्थान् दुःखहेतुत्वेन बुद्ध्वाऽद्वैतानन्दं विषयीकर्तुं चित्तवृत्तिरन्तर्मुखीभूय, प्रत्यक्चैतन्य-

---

१. ननु वृत्तिर्निर्विकारे ब्रह्मप्रकाशचैतन्ये प्रलीयते इत्यसङ्गतमेवोक्तम् । तस्य तदनुपादानत्वात् । उपादान एव च कार्यलयौचित्यात् इति चेत् । पूर्वोक्ते दृष्टान्तेऽपि हि विचारदृष्ट्या जलबिन्दुर्न तप्तायसि लीयते । अनुपादानत्वात् । किन्तु स्वोपादानभूतेऽम्भावेव । अतो यथा तत्र अयोलयस्त्वौपचारिकः तथात्रापि पूर्वोक्तसमाधिदशायां राजसतामसगुणानां निःशेषं नाशादाविर्भूते सत्वगुणात्मके स्वोपादान एवाज्ञाने वृत्तेर्लयः । न निर्विकारस्वप्रकाशब्रह्मचैतन्ये । अथापि स्वप्रकाशब्रह्मावभासनिमित्तत्वाद्वृत्तिलयस्य ब्रह्मप्रकाशे वृत्तेर्लयोक्तिरौपचारिकी ॥

अथवा तादृशसमाध्यनुभवितृब्रह्मविद्वरिष्ठदृष्ट्या गुणादीनामप्रतीतेः शुद्धं ब्रह्मैव प्रकाशते इति तत्र तद्वृत्त्यभावो जायते । अत एव च ब्रह्मप्रकाशचैतन्ये वृत्तेर्लयः कथ्यते इति मन्तव्यम् ।

२ गौडपादाचार्यैर्माण्डूक्योपनिषत्कारिकायां कथितम् ।

स्वरूपस्यात्मनोऽत्यन्तसूक्ष्मत्वात् किञ्चित्कालमपि तत्र स्थैर्यमप्राप्य चैतन्यस्वरूपानन्दमननुभूय पुनर्बहिर्मुखीभवति। इदृग्वृत्तिरेव बहिर्मुखीभूता विक्षेप इत्युच्यते॥ चित्तवृत्तेः स्थिरतां विना न स्वरूपानन्दस्य लाभो भवति। तस्मात् वृत्तावन्तर्मुखीभूतायामपि यावन्न सा ब्रह्माकारतां भजते, तावद्योगी नियतमानसो बाह्येष्वनात्मपदार्थेषु पुनःपुनर्दोषभावनया वृत्तिं निरुद्ध्य अन्तर्मुखामेव तां स्थापयेत्। विक्षेपरूपविघ्नविरोधी योगिप्रयत्नः शम इति गौडपादाचार्यैरुच्यते।

(४८१) **कषायः**—रागादयो दोषाः कषाया इत्युच्यन्ते। ते च बाह्याभ्यन्तरभेदेन द्विप्रकाराः भवन्ति। तत्र—(१) स्त्रीपुत्रधनादिरूपा विषयाः वार्तमानिकाः, बाह्या उच्यंते। (२) त एव भूता भाविनो वा चिन्तामुपारूढा मनोराज्यमात्रसिद्धाः आन्तराः। त एते द्विविधा अपि रागादयः समाधिप्रवृत्ते योगिनि न सम्भवन्ति।

**अन्तःकरणस्य पञ्च भूमयः**–(१) क्षेपः–(२) मूढता–(३) विक्षेपः–(४) एकाग्रता–(५) निरोधभूमिका चेति चित्तस्य पञ्च भूमयः सन्ति।

(१) लोक[1]वासना-देह[2]वासना-शास्त्र[3]वासनादिरूपा रजोगुणपरिणामात्मिका दृढतरानेकानात्मवासनाः क्षेपा इत्युच्यन्ते।

(२) निद्रालस्यप्रमादादिस्तमोगुणपरिणामोऽन्तःकरणस्य मूढतेत्युच्यते।

(३) ध्याने प्रवृत्तस्य चित्तस्य कदाचिद्बाह्यप्रवृत्तिर्विक्षेप इति कथ्यते।

(४) अन्तःकरणस्यातीतपरिणामवर्तमानपरिणामयोः समानाकारतापत्तिः एकाग्रतेत्युच्यते। अस्यायमर्थः—"समाधिकाले योगिनोऽन्तःकरणे एकाग्रता जायते। सा चैकाग्रता न वृत्त्यभावरूपा। समाधिकालीनान्तःकरणपरिणामविशेषाः सर्वेऽपि ब्रह्मैव विषयीकुर्वन्ति। तत्रान्तःकरणस्यातीतपरिणामवर्तमानपरिणामयोः केवलब्रह्माकारतापत्त्या समानाकारता जायते।

---

१. मैव निन्दतु लोको माम्। सर्वेऽपि मां स्तुवन्तु इत्याग्रहयुक्तः दृढतरः संस्कारो लोकवासनेत्युच्यते।

२. स्थूलसूक्ष्मदेहनिष्ठरोगात्मकपापफलानि मलानि मणिमन्त्रौषधादिना वा तीर्थयात्रादिपुण्यकर्मणा वा निःशेषं निवर्तयामि, इति वा देहेऽस्मिन् पुष्टिसौन्दर्यादिरूपं पुण्यातिशयफलं सम्पादयामीति वा दृढतरः संस्कारो देहवासनेत्युच्यते।

३. सकलशास्त्राणामध्ययनं पठनं वा, अर्थावधारणं तदनुष्ठानं वा करोमीति दृढतरः संस्कारः शास्त्रवासनेत्युच्यते।

(५) अस्या एकाग्रतायाः प्रवाहवृद्धिरेव निरोध इत्युच्यते ।

इमाश्च भूमयः पञ्चापि अन्तःकरणस्यैव अवस्थाविशेषाः । पञ्चभूमिका-विशिष्टस्यान्तःकरणस्यैव क्रमात् क्षिप्तं, मूढं विक्षिप्तं एकाग्रं, निरुद्धमिति नाम । तत्र क्षिप्तमूढान्तःकरणयोर्नास्ति समाध्यधिकारः । विक्षिप्तान्तःकरणस्य त्वधि-कारोऽस्ति । एकाग्रनिरुद्धान्तःकरणयोः सम्भवः समाधिकाले ॥ एतत्सर्वं योगशास्त्रे विस्तरतः कथ्यते ॥

**अत्राक्षेपः**—ननु रागादिदोषदूषितमन्तःकरणं क्षिप्तमेव वर्तते । क्षिप्तान्तःकरणस्य च योगेऽधिकार एव नास्तीत्युक्तम् । तत्कथं रागादिदोष-रूपः कषायः समाधि[१]विघ्नरूप इत्युच्यते, इति चेत् उच्यते । बाह्यान्तर्भावेन विद्यमाना रागादयः क्षिप्तान्तःकरण एव जायन्ते । तस्य चान्तःकरणस्याधिकारो नास्ति योगे । तथापि अनेकजन्मसु प्रागनुभूतबाह्याभ्यन्तरविषयकरागद्वेषा-दयो ये तेषां सूक्ष्मः संस्कारो विक्षिप्ताद्यन्तःकरणेऽपि सम्भवेत् । तस्मात्, रागद्वेषादीनां न कषाय इति नाम । किन्तु रागद्वेषादिसंस्कारस्यैव कषाय इति नाम । स च संस्कारो यावदन्तःकरणस्यावस्थितिः, तावदनुवर्ततेव । यद्यपि समाध्यवस्थायामप्यन्तःकरणं वर्तत एव । तथापि रागद्वेषादीनामुद्भूतः संस्कार एव समाधिविरोधी । न त्वनुद्भूतः । उद्भूतः=बहिःप्रकटीकृतः ।

---

१. अयमत्राशयः । यस्य हि राजगृहप्रवेशेऽधिकारोऽस्ति तं द्वारपालः कदाचिन्नि-रुणद्धीति प्रसक्तस्य प्रतिषेधो युज्यते । यस्य पुनस्तत्र अधिकार एव नास्ति तस्य कथं निरोधप्रसक्तिः । एवं क्षिप्तान्तःकरणस्य समाधावधिकारप्रसक्तौ तस्य रागादिदोषरूपः कषायः विघ्नकरः स्यात् । तस्य तु समाध्यधिकार एव नास्ति । तत्कथं रागादिदोषरूपः कषायः समाधिविघ्नकृत्, इति ।

२. रागादयोऽत्र त्रिप्रकारा भवन्तीति कापि प्रक्रिया । सा चैवम्—(१) बाह्याः (२) आन्तराः—(३) वासनारूपाश्चेति ॥ (१) बाह्यप्रवृत्तिहेतुभूता रागादयो बाह्याः उद्युक्ता इति चोच्यन्ते । (२) मनोराज्यात्मका रागादयः आन्तराः आशात्मका इत्युच्यन्ते । (३) जन्मान्तरेषु प्रागनुभूतविषयरागादिसंस्काराः वासनारूपा इत्युच्यन्ते ॥ वासनाश्च उद्बुद्धानुद्बुद्धभेदेन द्विविधाः । तन्निरूपणं च विद्यारण्यस्वामिकृते जीवन्मुक्ति-विवेके द्रष्टव्यम् ॥

३. अत्रायं दृष्टान्तः—राजदर्शनाय स्वगृहात्प्रस्थितं आर्यं राजद्वारमागतं जाग-रूको द्वारपालो यथा निवारयति । तथा सकलसंसारविषयेभ्यो दुःखभयान्निर्विकल्पसमाधि-सुखानुभवायान्तर्मुखीभूतं योगिनो मनः समाध्यानन्दलाभात्प्रागन्तराले उद्भूतरागादि-संस्काररूपः कषायो निवारयति । तस्मात् स एव समाधिविघ्न इत्युच्यते ।

अनुद्भूतः=अन्तःस्थितः । समाधिप्रवृत्तेन योगिना रागद्वेषादिसंस्कारोद्भवे स दोषदृष्ट्या दृढतरवैराग्यबलाच्चापनेयः ।

**विक्षेपकषाययोरयं भेदः**—बाह्यविषयाकारवृत्तेर्विक्षेप इति नाम । (२) योगिनः प्रयत्नवशादन्तर्मुखीभूतायामपि वृत्तौ रागादिदोषाणां उद्भूत-संस्कारात्सा प्रतिबद्धा सती ब्रह्म न विषयीकरोति, स एव संस्कारः कषाय इत्युच्यते । विषयेषु दोषदर्शनपूर्वकं योगिना प्रयत्नातिशयवशात् कषायविघ्नो निवारणीयः ।

(४८२) **रसास्वादः**—योगिनो ब्रह्मानन्दानुभवो जायते। विक्षेपरूप-दुःखनिवृत्तिश्च अनुभूयते । क्वचिद्दुःखनिवृत्याप्यानन्दो जायते। यथा भारवा-हिपुरुषस्य भारापनयादानन्दो जायते। न हि तदानन्दे विषयान्तरं कारणम्। भारप्रयुक्तदुःखनिवृत्या च "सुखं मेऽभूदि"ति वक्ति । तथा योगिनोऽपि समाधौ विक्षेपजन्यदुःखनिवृत्यापि आन्दो जायेत, सोऽनुभवो **रसास्वाद** इत्युच्यते ॥ अस्मिन्नेवानन्दे यदि तृप्तः स्याद्योगी तदा सर्वोपाधिशून्य-ब्रह्मानन्दाकारा वृत्तिर्न स्यात्तस्य। ततस्तदधीनानन्दानुभवोऽपि न भवेत् । तस्मात् दुःखनिवृत्तिजन्यानन्दानुभवरूपो रसास्वादोऽपि समाधौ विघ्नः स्यात् ।

वाञ्छितार्थालाभेऽपि तद्विरोधिनिवृत्याऽऽनन्दो जायत इत्यत्र दृष्टान्ता-न्तरमुच्यते—भूमिस्थो निधिरत्यतं क्रूरेण विषधरेण कृष्णसर्पेण रक्ष्यते। तत्प्राप्तेः प्राक्तत्प्राप्तिप्रतिबन्धस्य सर्पस्य निवृत्याप्यानन्दो जायते। सर्पनिवृत्तिजन्येनानन्दे-नैवालम्बुद्धिः सन्निधिलाभोद्यमं यदि त्यजति, तदा निधिलाभजन्यपरमानन्द-प्राप्तिर्न स्यात्तस्य। तद्वदत्राद्वैतब्रह्मरूपो महानिधिः देहाद्यनात्मपदार्थप्रतीति-रूपेण विक्षेपसर्पेणावृतो वर्तते । विक्षेपरूपसर्पनिवृत्यापि अवान्तरानन्दरूपो रसास्वादो भवति। अयमेव च निधिरूपेऽद्वैतब्रह्मप्राप्तिजन्यपरमानन्दलाभे विघ्न इत्युच्यते ।

**अथवा**—सविकल्पसमाध्यनुष्ठानोत्तरं निर्विकल्पसमाधिः प्रसिध्यति । सविकल्पसमाधौ त्रिपुटी प्रतीयते। अत एव सोपाधिकोऽयं समाधिः इति वक्ष्यते निर्विकल्पसमाधौ तु त्रिपट्यभावादेव निरूपाधिकानन्दो जायते । इत्थं सवि-कल्पसमाध्यारम्भदशायां सोपाधिकः सविकल्पसमाध्यानन्दोऽपरिहार्यतयाऽनु-भूयते। स एव रसास्वाद इत्युच्यते। तस्माद्विक्षेपनिवृत्तिजन्यानन्दानुभवो वा, सविकल्पसमाध्यानन्दानुभवो वा रसास्वाद इत्युच्यते। स द्विविधोऽपि

रसास्वादो निर्विकल्पसमाधिजपरमानन्दानुभवविरोधित्वाद्विघ्नो भवति। अतः स परित्याज्य एव। एवं निर्विकल्पसमाधौ सम्भवत् विघ्नचतुष्टयं[1] सावधानतया परिहृत्ययः समाधिजं परमानन्दमनुभवति स एव जीवन्मुक्तः।

**(४८३) ज्ञानिनो बाह्यप्रवृत्तिर्न सम्भवति इत्याक्षेपः—**

ज्ञानिनश्चित्तं निरालम्बनतया न तिष्ठति। प्रारब्धबलात्समाधेरुत्थितस्यापि समाध्यनुभूतपरमानन्दस्मृतिः स्यादेव। तस्मादुत्थानसमयेऽपि ज्ञानिनश्चित्तं न निरालम्बं भवति। भोजनादिप्रवृत्तिरपि ज्ञानिनः केवलं प्रारब्धकर्मजन्यैव। तथापि भोजनादिव्यवहारेषु दुःखमस्तीति ज्ञात्वेव ज्ञानी प्रवर्तते। भोजनादिप्रवृत्तिरपि यस्य समाधिसुषुप्तिविरोधित्वेन शरीरनिर्वाहकतया प्रतीता खेदरूपैव भवति। तस्य च तत्राधिका प्रवृत्तिर्जायते। एवमनेके आचार्या इममेव पक्षं स्वीकुर्वन्ति। जीवन्मुक्तानन्दोऽपि बाह्यप्रवृत्तौ न जायते। किन्तु निवृत्तावेव जायते। अतो जीवन्मुक्तिसुखार्थिनो ज्ञानिनो बाह्यप्रवृत्तिरेव न स्यात्॥

**(४८४) (४६५-४८३) आवर्तेषु कृतशङ्कायाः—समाधानम्—**

ज्ञानिनो निरङ्कुशप्रवृत्तेः[2] प्रारब्धवशाद्व्यवहारः सिध्यति इति तद्व्यवहारनिवृत्तौ नियमः कर्तव्य इति शङ्कासमाधानम्। ज्ञानिनो निवृत्तावपि नियमसद्भावोक्तिरसङ्गता। निवृत्तौ वा प्रवृत्तौ वा वेदस्य आज्ञारूपो विधिर्न ज्ञानिनोऽस्ति। तद्व्यवहारे नियमाभावाज्ज्ञानी निरङ्कुशः। तद्व्यवहारः सर्वोऽपि प्रारब्धायत्तः[3] एव।

---

१. अखण्डचित्स्वरूपावगाहिचित्तवृत्तेर्निद्रारूपो लयो विघ्नः प्रथमः। (२) तस्या विषयान्तरावलम्बनरूपो विक्षेपो विघ्नः द्वितीयः। (३) लयविक्षेपयोरभावेऽपि स्तब्धतारूपः कषायो विघ्नस्तृतीयः। (४) दुःखनिवृत्तिरूपानन्देन सविकल्पसमाध्यानन्देन वा तृप्तचित्तवृत्तिरूपः रसास्वादो विघ्नश्चतुर्थः।

२. विषयानन्दः सातिशयानन्दत्वात् साङ्कुशः। ज्ञानिन आनन्दस्तु ब्रह्मानन्दाभिन्नत्वान्निरङ्कुशः।

३. रज्जुज्ञानेन सर्पभ्रान्तिर्यथा बाध्यते तथाऽधिष्ठानब्रह्मज्ञानेनाहङ्कारादिजगद्भ्रान्तिः बाध्यते। तथापि, यथा सर्पज्ञानजन्यभयकम्पादिः कालान्तरे निवर्तते, तथा प्रारब्धकर्मजन्यभोगोऽपि प्रारब्धनाशानन्तरमेव निवर्तते। मन्दान्धकारस्था रज्जुः पुनरपि सर्पात्मना यथा प्रतीयते, तथा भोगकाले मनुष्योऽहमित्यादिप्रतीतिर्ज्ञानिनोऽपि कदाचिज्जायेत। उपादानभूताज्ञाननिवृत्त्यनन्तरमपि प्रपञ्चप्रतीतिर्ज्ञानिनो मुक्तेषुन्यायेन भवत्येव। यथा व्याघ्रबुद्ध्योत्सृष्टो बाणः पश्चाद्गोमतौ उत्पन्नायामपि न स्वयं प्रशान्तवेगो भवति। गच्छन्नेव वर्तते। अन्ते च वेगक्षयादेव प्रशाम्यति। एवं हस्तविसृष्टबाणस्थानीयं प्रारब्धं कर्मापि फलदानाय प्रवृत्तं फलक्षयादेव प्रशाम्यति। नान्यतः। अतस्तावत्कालं तत्प्रयुक्ता प्रपंचप्रतीतिरपि उत्पन्नायामपि ब्रह्ममतौ अनुवर्ततैव।

(१) यस्य ज्ञानिनः प्रारब्धं भिक्षाभोजनादिफलमात्रहेतुः तस्य भिक्षा-भोजनादिमात्रे प्रवृत्तिर्जायते॥ (२) यस्य तु प्रारब्धमितोऽप्यधिकभोगहेतुः तस्याधिकेऽपि व्यापारे प्रवृत्तिर्भवति।

**अत्राक्षेपः**—ननु यस्य प्रारब्धं भिक्षाभोजनमात्रहेतुः तस्यैव ज्ञानं जायेत। यस्य पुनः प्रारब्धमधिकव्यापारहेतुः नैव तस्य ज्ञानं जायेत। तस्माद्भिक्षाभोजनादिव्यापारादधिकव्यापारो न ज्ञानिनो युज्यते। यस्याधिकव्यापारे प्रवृत्तिरस्ति, स नैव स्याज्ज्ञानीति॥

**समाधानम्।** नेयं सम्भवति शङ्का। यतः, श्रीराम-कृष्ण-याज्ञवल्क्य-जनकादयो ज्ञानिन उच्यन्ते। तेषु च सभायां विजयेन धनसंङ्ग्रहव्यवहारे याज्ञवल्क्यस्य, तथा राज्यपरिपालनादिव्यापारे जनकस्य च प्रवृत्तिः कथिता। अपि च वासिष्ठादिग्रन्थेष्वनेकेषां ज्ञानिनां व्यवहारो नानाप्रकारः कथ्यते। तस्माज्ज्ञानिनः प्रवृत्तौ वा निवृत्तौ वा नैवास्ति नियमः।

यद्यपि याज्ञवल्क्यः सभायां जयं लब्ध्वा पश्चाद्विद्वत्सन्न्यासरूपां निवृत्तिं दधे। प्रवृत्तौ च नानाप्रकारा दुःखहेतुभूता दोषाः कथिताः। तथापि याज्ञवल्क्यस्य विद्वत्सन्न्यासात्प्राक् ज्ञानाभावोक्तिर्न युज्यते। ज्ञानं प्रागप्यासीदेव। जीवन्मुक्तिसुखं परं न तेन प्राप्तम्। तस्माज्जीवन्मुक्तिसुखावाप्तये सर्वस्वसङ्ग्रह-परित्यागमकरोत्।

(१) याज्ञवल्क्यस्य प्रारब्धं किञ्चित्कालं अधिकभोगहेतुरासीत्। पश्चात्स्वल्पभोगहेतुरासीत्। तस्मात् प्रथमं याज्ञवल्क्यस्य विनैवारुचिं भोगाधिक्यं, पश्चादत्यन्तारुच्या सर्वभोगत्यागश्चाभूत्॥

(२) **जनकस्य** प्रारब्धन्तु आमरणं राज्यपरिपालनादिरूपविशेष-भोगहेतुरासीत्। तस्मात् तस्य भोगत्यागो नाभूत्कदाचिदपि। नाप्यरुचिर्भोगेषु संजाता।

---

१. विधिना सर्वकर्मासङ्गपरित्यागी सन्न्यासी। स च हंसपरमहंसभेदाद्विविधः। तीव्रवैराग्ययुक्तो हंससन्न्यासः कुटीचकबहूदकभेदेन द्विप्रकारः। तीर्थाटनाशक्तः कुटीचकः। तीर्थाटनसमर्थो बहूदकः। परमहंससन्न्यासोऽपि विविदिषासन्न्यासो विद्वत्सन्न्यासश्चेति द्विप्रकारः। प्राक्ज्ञानोत्पत्तेर्विषयदोषदृष्ट्या तीव्रतरवैराग्येण जिज्ञासुना क्रियमाणः सन्न्यासो विविदिषासन्न्यासः। ज्ञानानन्तरं दोषदृष्ट्या मिथ्यात्वादिदृढनिश्चयेन तीव्रतमवैराग्येण च विदुषा क्रियमाणः सन्न्यासो विद्वत्सन्न्यासः। विद्वत्सन्न्यासादिलक्षणं तु नारदपरिव्राजकोपनिषत्सूतसंहितादौ द्रष्टव्यम्।

(३) **वामदेवादिप्रारब्धं** स्वल्पभोगहेतुरासीत्। अतः तेषां सदाऽरुच्युत्पत्तेर्भोगेषु प्रवृत्तिरेव नाभूत्।

(४) **शिखिध्वजस्य** ज्ञानानन्तरं राज्यादिष्वधिका प्रवृत्तिः कथ्यते वासिष्ठे। इत्थं ज्ञानिनां नानाप्रकारा विलक्षणव्यवहाराः कथिताः॥ सर्वेषामपि तेषां सममेव ज्ञानम्। फलमपि मोक्षरूपं समानमेव। व्यवहारास्तु प्रारब्धभेदान्नानाप्रकाराः। व्यवहारलोपाज्जीवन्मुक्तिसुखमधिक्रियते। व्यवहाराधिक्ये जीवन्मुक्तिसुखं न्यूनतां व्रजेत्।

**(४८५) ज्ञानिनो विदेहमोक्षत्यागः परलोकेच्छा च न जायते।**

**अत्र केचनाक्षिपन्ति**—जीवन्मुक्तिसुखं त्यक्त्वा तुच्छविषयभोगे प्रवृत्तो विदेहमोक्षमपि त्यक्त्वा वैकुण्ठादिलोकेच्छया तत्तल्लोकमपि प्राप्नुयादिति।

---

१. ज्ञानं सर्वेषां सममित्यत्रायं श्लोकः प्रसिद्धतया कथ्यते—

"कृष्णो भोगी शुकस्त्यागी नृपौ जनकराघवौ।
वसिष्ठः कर्मकर्ता च त एते ज्ञानिन समाः॥ इति।

इत्थमेतेषां प्रारब्धभेदाद्व्यवहारभेदेऽपि ज्ञानं सर्वेषां समानमेवेति साम्प्रदायिकश्लोकार्थः।

ननु तत्त्वबोधवतामपि रागादिमत्त्वेन वैषम्योपलम्भाज्ज्ञानस्यापि मुक्तिहेतुत्वं निश्चेतुं न शक्यमित्याशङ्क्य—रागादेर्व्याध्यादिवदारब्धकर्मफलत्वान्मुक्तिप्रतिबन्धकत्वमसिद्धम्। अतो न शास्त्रार्थे विप्रतिपत्तव्यमित्याहुः विद्यारण्यस्वामिनः—

प्रारब्धकर्मनानात्वाद्बुद्धानामन्यथाऽन्यथा।
वर्तनं तेन शास्त्रार्थे भ्रमितव्यं न पण्डितैः। (चि. दी. 287.) इति।

कथं तर्हि प्रतिपत्तव्यमित्यप्याहुः

स्वस्वकर्मानुसारेण वर्तन्तां ते यथा तथा।
अविशिष्टः सर्वबोधः सर्वा मुक्तिरिति स्थितिः॥ 288 ॥ इति।

२. "अहं ब्रह्मास्मि" इति ज्ञानोदयकाल एवाविद्यात्मकोपादानकारणं विनश्यति। तत्कार्यभूता जगच्चिदाभासादयोऽपि बाध्यन्ते एव। तथापि प्रारब्धकर्मरूपं निमित्तं यावदवतिष्ठते, तावत् ज्ञानबाधिता अपि देहजगच्चिदाभासादयोऽनुवर्तमाना एव प्रतीयेरन्, प्रारब्धावसाने च न प्रतीयेरन्। इयमेव विदेहमुक्तिः॥ उत्तममध्यमकनिष्ठाधमतराधमतमभेदेन पञ्चविधं प्रारब्धम्। (१) सर्वदाऽऽजन्ममरणं वैराग्यहेतुभूतं निवृत्तिप्रधानं प्रारब्धमुत्तमम्। यथा शुक-वामदेव-सनकादिप्रारब्धम्। (२) आदौ प्रवृत्तिहेतुभूतमपि पश्चान्निवृत्तिहेतुभूतं प्रारब्धं मध्यमम्। यथा याज्ञवल्क्यादिप्रारब्धम्। (३) सदा प्रवृत्तिहेतुभूतं प्रारब्धं कनिष्ठम्। यथा जनकादिप्रारब्धम्। (४) आदौ निवृत्तिहेतुभूतं सत् पश्चात्प्रवृत्तिहेतुभूतं प्रारब्धं अधमतरम्। यथा शिखिध्वजालर्क-द्रुगण-प्रियव्रतादिप्रारब्धम्। (५) कामचारकामवादकामभक्षादिहेतुभूतं प्रारब्धमधमतमम्। यथा दत्तात्रेयादिप्रारब्धम्।

**नैवायं सम्भवत्याक्षेपः**—(१) जीवन्मुक्तिसुखत्यागो भोगप्रवृत्तिश्च ज्ञानिनः प्रारब्धबलात् सम्भवति। (२) विदेहमुक्तित्यागः परलोकगमनं च तस्य नैव सम्भवति। यतः, (१) ज्ञानिनः प्राणाः बहिर्न गच्छन्ति। "न तस्य प्राणा उत्क्रामन्ति" इत्यादिश्रुतेः। तस्मान्न परलोकगमनं ज्ञानिनः सम्भवति। (२) विदेहमोक्षत्यागश्च न सम्भवति। यतो ज्ञानेन निःशेषाज्ञाननिवृत्तौ प्रारब्धभोगानन्तरं स्थूलसूक्ष्मशरीराकारपरिणतस्य मूलाज्ञानस्य स्वाधिष्ठानचैतन्ये निःशेषप्रविलय एव विदेहमोक्ष इति कथ्यते। स चाज्ञाननाशेऽवश्यं भवति।

मूलाज्ञानेऽवशिष्टे, निवृत्तस्याऽज्ञानस्य पुनरापाते वा, विदेहमुक्तिर्न सिध्येत्। मूलाज्ञानविरोधिज्ञानोदयसमकालमेव च अज्ञानं नावशिष्यते। प्रमाणतो नष्टमज्ञानमपि न पुनरुत्पद्यते, ततो न विदेहमोक्षाभावः सम्भवति। विदेहमोक्षत्यागे परलोकगमने च ज्ञानिन इच्छा न जायेत। यतो, ज्ञानिन इच्छापि तावत् केवलं प्रारब्धाधीनैव जायते। यावतीं सामग्रीं विना ज्ञानिनः प्रारब्धभोगो न जायेत, तावतीमेव सामग्रीं प्रारब्धं जनयति। न हीच्छां विना भोगो जायेत। तस्माज्ज्ञानिन इच्छापि प्रारब्धफलभूतैव। लोकान्तरे वा, इहलोके वा शरीरान्तरसम्बन्धोऽपि ज्ञानिनः प्रारब्धाधीनो न जायते इत्येतत् प्रागेवास्मिन् तरङ्गे प्रतिपादितम्। तस्मात् ज्ञानिनः प्रारब्धबलादपि विदेहमोक्षत्यागे वा परलोकगमने वा नैवेच्छा सम्भवति।

(४८६) **ज्ञानिनो मन्दप्रारब्धवशाज्जीवन्मुक्तिसुखविरुद्धा** प्रवृत्तिः। जीवन्मुक्तिसुखस्य विरोधिनी वर्तमानशरीरस्याधिकभोगेच्छा भिक्षाभोजनादिवत् जनकादीनां सम्भवति। **अत्रायमभिप्रायः**—ज्ञानिनो बाह्यप्रवृत्तिर्न जीवन्मुक्तिविरोधिनी। किन्तु जीवन्मुक्तिविलक्षणसुखविरोधिनी। आत्मा हि नित्यमुक्तः। भ्रान्त्याऽविद्योत्थया तस्मिन्बन्धः प्रतीयते। यदा पुनर्ज्ञानं जायते तदैवाविद्याजन्यबन्धभ्रमोऽपि निवर्तते। ज्ञानोत्पत्त्यनन्तरमपि न बन्धभ्रमो जायते।

---

१. दृढतरज्ञानिनो मोक्षेच्छाभावेऽपि मुक्तिर्जायत इत्यत्र भाष्यकारवचनम्—

देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम्।
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते॥ इति॥

स्वप्नात्प्रबुद्धस्य यथा स्वप्नभ्रान्तिनिवृत्तिपरित्यागे स्वप्नदृष्टपरलोकगमने च नैवेच्छा जायते। तथा ज्ञानिनोऽपि बन्धभ्रान्तिनिवृत्तिरूपविदेहमोक्षपरित्यागे स्वर्गादिपरलोकगमने च नैवेच्छा सम्भवति।

बन्धभ्रान्त्यभाव एव सशरीरस्य ज्ञानिनो जीवन्मुक्तिरित्युच्यते। देहादि-प्रवृत्तिनिवृत्त्यादौ चिदात्मनि बन्धभ्रान्तिर्न ज्ञानिनः सम्भवति। तस्माद्बाह्य-प्रवृत्त्यापि जीवन्मुक्तिर्न निवर्तते। तथापि बाह्यप्रवृत्तौ जीवन्मुक्ते विलक्षणं सुखं न जायते। एकाग्रतापन्नान्तःकरणपरिणामवशादेव तत्सुखं जायते। स चैकाग्रतापरिणामो बाह्यप्रवृत्त्या प्रतिबध्यते। इत्थं प्रारब्धभेदवशाज्ज्ञानिनो व्यवहारो नानाप्रकारः। परन्तु यस्य प्रारब्धमधिकप्रवृत्तिहेतुः, तस्य तन्मन्द-प्रारब्धमित्युच्यते। यतो हि अधिका प्रवृत्तिरेकाग्रताविरोधिनी। अन्तरेण चैकाग्र्यं निरुपाधिकानन्दो न प्रतीयेत। एतच्च समाधिनिरूपणप्रकरणे कथितम्।

## (४८७-४८८) ज्ञानिनो व्यवहारोऽनियतः

४८७. (१) यदुक्तं ज्ञानिनः सकलानात्मपदार्थेषु मिथ्याबुद्धिसद्भावात् न रागः सम्भवति। अतः प्रवृत्तिरेव न स्यादिति। नैतद्युज्यते। कुतः, यथा देहे मिथ्यात्वबुद्धौ सत्यामपि ज्ञानिनः देहानुकूलभिक्षादौ केवलं प्रारब्धबलात् प्रवृत्तिर्जायते, तथा यस्य ज्ञानिनोऽधिकभोगार्थं प्रारब्धं वर्तते, तस्याधिकापि प्रवृत्तिर्जायेतैव।

यथा च ऐन्द्रजालिकमायां मिथ्येति जानन्तोऽपि तद्दिदृक्षया सर्वे जनाः प्रवर्तन्ते। तथा सर्वेष्वपि पदार्थेषु मिथ्यात्वबुद्धौ सत्यामपि तद्भोगार्थं ज्ञानिनः प्रवर्तन्ते।

(४८८) **अत्राक्षेपसमाधाने।** यस्य पुनः यस्मिन् पदार्थे दोषदृष्टिरस्ति तत्र तस्य राग एव न भवेत्। तस्मात्प्रवृत्तिरपि तस्य तदधीना न स्यात् इति चेत्-**तत्रेदं समाधानम्।** यस्यापथ्यस्य सेवनेनान्वयव्यतिरेकाभ्यां रोगाधिक्यं तत्र दोषनिश्चये सत्यपि यथा प्रारब्धवशाद्रोगिणो जानतोऽपि प्रवृत्तिर्जायते, प्रारब्ध-बलात्तथा ज्ञानिनोऽपि सर्वव्यवहारेषु प्रवृत्तिः सत्यामपि दोषदृष्टौ जायत एव।

---

१. सर्वस्वातन्त्र्येण भुवं पालयतो राज्ञो रोगकारणीभूतं प्रारब्धं कर्म प्रतिबन्धक-त्वान्मन्द इत्युच्यते यथा तथाऽविद्यातत्कार्यभूतशत्रून् संहृत्य ब्रह्मीभूतस्य ज्ञानिनोऽधिक-प्रवृत्तिहेतुभूतं प्रारब्धं एकाग्रताया विरोधित्वान्मन्दमित्युच्यते। मन्दमित्यस्य पदस्य निकृष्टमित्यत्रार्थः।

२. षष्ठे तरङ्ग उक्तम्।

३. अत्रायं विवेकः—(१) मन्दम्, (२) तीव्रम् - (३) तीव्रतरम् - इति प्रारब्धं कर्म त्रिविधम्।

इत्थं ज्ञानिनो व्यवहारे न [1]नियमोऽस्ति। अयञ्च पक्षः सविस्तरं तृप्ति[2]दीपे विद्यारण्यस्वामिभिः प्रतिपादितः। तस्मात्तत्वदृष्टेर्ज्ञानिनो व्यवहारोऽनियत एव। अत एव समाधिरूपनियमविधिं श्रुत्वा तत्वदृष्टिः परिजहास।

---

1. यस्योपादेयफलं भिक्षान्नवदधिकप्रयत्नलभ्यं भवति, यस्य चाकस्मिकहेयफलं निवर्तनीयरोगवदल्पप्रयत्नेन निवर्तते तत्प्रारब्धं मन्दप्रारब्धमित्युच्यते॥

2. यस्योपादेयफलं मृष्टान्नवदल्पप्रयत्नलभ्यम्। यस्य चाकस्मिकहेयफलं कष्टसाध्य-फलवदधिकप्रयत्ननिवर्त्यं भवति तादृशं प्रारब्धं तीव्रप्रारब्धमित्युच्यते।

3. यस्य चोपादेयफलं स्वस्थानोपनतान्नवत् विनैव प्रयत्नं स्वत एव लभ्यते, यस्य बलात्कारलब्धहेयफलं महिषव्रणवदामरणं प्रयत्नतोऽपि न निवर्तते। तत् प्रारब्धं तीव्रत-रमित्युच्यते। इत्थं मन्दतीव्रप्रारब्धयोः फलं प्रयत्नाधीनम्। तत्प्रयत्नहेतुः शुभाशुभ-वासनाः। तद्वासनानिवृत्तिः पुरुषप्रयत्नसाध्या॥ तत्रापि।

i. शुभवासनानिवृत्तिर्दुःसङ्गादिप्रयत्नाज्जायते।

ii. अशुभवासनानिवृत्तिः सत्सङ्गविवेकज्ञानवैराग्यादिना जायते॥

यस्माज्ज्ञानी सत्सङ्गविवेकज्ञानवैराग्यादिसम्पन्नो भवति, तस्मात् तच्चित्तेऽशुभवास-नाप्रवृत्तिहेतुभूता काप्यशुभवासना नैवास्ति। किन्तु शुभप्रवृत्तिहेतुभूता शुभवासनैवास्ते। ततः तस्य ज्ञानिनो, मन्दतीव्ररूपप्रारब्धफलभूतनिषिद्धाचरणे विधिनिषेधावगतगुणदोषबु-द्ध्यभावात् शुभवासनात्मकस्वभाववशादुन्मत्तवैष्णववत् ब्राह्मणादिशिशुवच्च प्रवृत्तिरेव न सम्भवेत्। किन्तु निवृत्तिरेव स्यात्॥ कस्यचिद्रोगिणोऽन्वयव्यतिरेकाभ्यां दोषनिश्चये

सत्यपि, अपथ्यसेवने या प्रवृत्तिर्जायते न सा प्रयत्नशीलस्यापि रोगिणो जायते। तथापि जिह्वाचापल्यवतः प्रयत्नहीनस्य रोगिणोऽपथ्यसेवने प्रवृत्तिर्जायते। प्रयत्नशील-स्यापि कस्यचिदपथ्यकरणे प्रवृत्तिर्जायते। तदेतत् तीव्रस्य प्रारब्धस्य फलम्। तदेवं दोष-निश्चयमिथ्यात्वनिश्चयरूपदृढविवेकवतो ज्ञानिनो मन्दस्य वा, तीव्रस्य वा, प्रारब्धकर्मणः फलभूता यथेष्टचेष्टारूपा निषिद्धप्रवृत्तिर्नैव सम्भवति।

प्रारब्धभक्ता यदाक्षिपन्ति—"प्रारब्धफलं विशिष्टं त्यक्तुं न शक्यते। अतो व्यर्थः पुरुषप्रयत्न" इति। तन्न युज्यते। तथाभ्युपगमे हि सर्वज्ञप्रणीतं वैद्यमन्त्रयोगशास्त्रा-दिकं सर्वं तन्निवृत्त्युपायप्रतिपादकं व्यर्थं स्यात्। दृष्टफलहेतुभूतोपायबोधकशास्त्रवैयर्थ्य-कथनं च न विवेकिनां सङ्गच्छते प्रारब्धं पुरुषप्रयत्नश्चेत्येतद्द्वयमस्यावश्यकमित्येव वासि-ष्ठाद्युत्तमग्रन्थानामभिप्रायः।

---

१. **अत्रायमभिप्रायः**—स्वाधीने कार्ये नियमः सम्भवति। पराधीने तु कार्ये स न युज्यते। ज्ञानिनां शरीरव्यवहारश्च नानाप्रारब्धकर्माधीनो वर्तते। तस्मात् हस्तमुक्तेषुतुल्यप्रारब्धाधीनो ज्ञानिदेहव्यवहारो न नियतः। रागादिवासना निरुध्य स्वाधी-नचित्ताः केचन ज्ञानिनो मन्दस्य वा तीव्रस्य वा प्रारब्धकर्मणः फलभूतं शरीरव्यवहारं नियमयन्ति। तीव्रतरप्रारब्धफलभूतं शरीरव्यवहारं नियन्तुं नैव प्रभवन्ति।

२. विनापि प्रीतिं ज्ञानिनः प्रारब्धभोगो जायते। प्रारब्धं चेच्छानिच्छापरेच्छा-भेदात् त्रिविधम्। तच्च श्रीविद्यारण्यकृते तृप्तिदीपे (१४३-१६२) पद्येषु सम्यगुपपादितम्

(४८९) **तत्वदृष्टेर्देशकालाद्यनपेक्षो देहपातः**—इत्थं कञ्चित्कालं तत्र तत्र सञ्चारं कृत्वा सम्यग्ज्ञानवान् तत्वदृष्टिः प्रारब्धभोगं बुभुजे। ततस्तत्प्राणास्तत्रैव लिल्युः। प्रारब्धभोगानन्तरं ज्ञानिनां प्राणानां कुत्रापि गमनाभावात्, तत्वदृष्टेः प्राणोऽपि स्वोपादान एव लीनोऽभूदिति उक्तं भवति।

(१) ज्ञानिनां शरीरत्यागार्थं न कालविशेषादिनियमापेक्षाऽस्ति। उत्तरायणे अथवा दक्षिणायने तेषां शरीरपातः सम्भवेत्। सर्वथाप्यसौ मुक्त एव।

(२) तथा देशविशेषनियमापेक्षापि नास्ति। काश्यादिपुण्यदेशेषु वा, अत्यन्तमलिनदेशेषु वा ज्ञानिनां देहपातः सम्भवेत्। सर्वथाप्यसौ मुक्त एव।

(३) तथा, आसनविशेषनियमापेक्षापि नास्ति। भूमौ वा शवासने वा सिद्धासने वा स्थित्वा देहपातः सम्भवेत्। सर्वथाप्यसौ मुक्त एव।

(४) तथैव, सावधानमनाः ब्रह्मध्यानेन रोगादिना व्याकुलितान्तःकरणो हाहेति विलपनेन वा देहं त्यजेत्। सर्वथाप्यसौ मुक्त एव। यदैव ज्ञानिनो ज्ञानेनाज्ञानं निवर्तते, तदैव स ज्ञानी मुक्तो भवति।

एवं ज्ञानिनो विदेहमुक्तौ न देशकालासनादिनियमापेक्षाऽस्ति। यथैव ज्ञानिनो देहपाते देशकालाद्यपेक्षा नास्ति, तथैव ज्ञानोत्पत्तिसाधने श्रवणादावपि देशकालाद्यपेक्षा नास्त्येव। उपासकस्य तु देशकालाद्यपेक्षा स्यादेव।

(४९०) **अत्राक्षेपसमाधाने।**

भीष्मादयो ज्ञानिनः स्मर्यन्ते। तत्र भीष्मस्तूत्तरायणं विना कुतः प्राणान्न

---

१. अत्रायं साम्प्रदायिकः श्लोकः—

"काश्यां वा ज्ञानिनो देहश्चण्डालस्य गृहेऽपि वा।
ज्ञानक्षणे भ्रान्तिहानेर्ज्ञानी मुक्तो हि सर्वथा॥ इति।

२. अयमेवार्थः पञ्चदश्यां श्रीविद्यारण्यकृतौ भूतविवेके उक्तः—

"नीरोग उपविष्टो वा रुग्णो वा विलुठन् भुवि।
मूर्च्छितो वा त्यजत्वेषः प्राणान् भ्रान्तिर्न सर्वथा॥ १०६॥

दिने दिने स्वप्नसुप्त्योरधीते विस्मृतेऽप्ययम्।
परेद्युर्नानधीतः स्यात् तद्वद्विद्या न नश्यति॥ १०७॥

प्रमाणोत्पादिता विद्या प्रमाणं प्रबलं विना।
न नश्यति न वेदान्तात् प्रबलं मानमीक्ष्यते॥ १०८॥ इति॥

नहो इति चेत्। शृणु। भीष्मादयो ह्याधिकारिकाः पुरुषाः। ते च उपासकानामुपदेशार्थमेव देशकालविशेषप्रतीक्षां चक्रुः।

वसिष्ठभीष्मादीनामाधिकारिकपुरुषत्वात्तेषामनेकानि जन्मानि अभवन्। आधिकारिकपुरुषाणामेककल्पपर्यन्तं प्रारब्धमवतिष्ठते। अन्तरेण कल्पावसानं न तेषां विदेहमोक्षो भवति। कल्पान्तरालकाल एव तेषामनेकानि जन्मानीच्छावशाज्जायन्ते। तथापि आत्मस्वरूपे जन्ममरणादिवत्वभ्रान्तिः न तेषां सम्भवति। तस्माज्जीवन्मुक्ता एव ते। तेषां व्यवहारः सर्वोऽपि परोपदेशनिमित्त एव। ज्ञानिनां व्यवहारे नान्यः कोऽपि नियमोऽस्ति। अनेनैवाभिप्रायेण तत्वदृष्टेर्देहपाते देशकालासनादीनामन्यतमदपि नोक्तम्।

**(४९१) अदृष्टेर्देशकालाद्यपेक्षो देहपातः—**

द्वितीयः शिष्यस्त्वदृष्टिर्गङ्गातीरे एव शुभस्थाने एकान्ते सुपवित्रे च देशे ब्रह्मध्यानेन त्यक्त्वा स्वं देहं प्रागुक्तेनोत्तरायणमार्गेण ब्रह्मलोकं गत्वा क्रमेण ब्रह्मीभूय निरतिशयमानन्दमवाप। उत्तमेषु देशेषु, उत्तरायणादिषूत्तमेषु कालेषु वा यदा शरीरमुपासकः परित्यजति, तदैव उपासना फलिष्यति।

यद्यपि ज्ञानिनो मरणसमये ज्ञेयस्मृतिमत्वादद्यपेक्षा नास्ति। तथापि उपासकस्य तदा ध्येयादिस्वरूपस्मरणापेक्षा वर्तते।

(१) यो यादृशध्येयविषयकं ध्यानं पूर्वमसकृदकरोदुपासकः तस्य तादृशध्येयविषयकस्मृतावन्ततः सत्यामेव उपासनाफलं सिध्यति।

(२) यथोपासकस्यान्तकाले ध्येयस्मृतिरपेक्ष्यते, तथा ध्येयब्रह्मप्राप्तये पञ्चमतरङ्गोक्तमार्गचिन्तनमप्यपेक्ष्यते। मार्गचिन्तनस्याप्युपासनाङ्गत्वात्। ज्ञानार्थे श्रवणादौ देशकालासनाद्यपेक्षा नास्ति। ध्याने तु उत्तमदेशनिरन्तरकालसिद्धाद्यासनप्रभृतीनामपेक्षा वर्तत एव। तस्मादेवादृष्टेरुत्तमदेशभूतगङ्गातीरस्थितिः, तत्रैवैकान्ते निरन्तरब्रह्मध्यानं देहत्यागश्च कथितः।

**(आ. ४९२-५०२) तर्कदृष्टेर्निश्चयः।**

**(४९२) अष्टादश विद्यास्थानानि सर्वाण्यपि च शास्त्राणि ब्रह्मज्ञानहेतुभूतानि—**

तृतीयशिष्यस्तु तर्कदृष्टिर्गुरुमुखादुपदेशं प्राप्य स्वावगतविषये शास्त्रान्तरविरोधपरिहाराय निखिलशास्त्राभिप्रायं विचार्य इत्थं निश्चिकाय ।

(१) सकलशास्त्राणां परमं प्रयोजनं मोक्ष एव ।

(२) मोक्षसाधनञ्च ज्ञानमेकमेव ।

(३) तच्च ज्ञानमद्वयात्मतत्वनिश्चयरूपम् ।

(४) भेदनिश्चयस्तु न यथार्थज्ञानम् ।

(५) शास्त्राण्यपि निखिलानि साक्षात्, परम्परया वा ब्रह्मज्ञानहेतुभूतानि । संस्कृता वैखरी[1] वाणी अष्टादशप्रस्थानरूपा वर्तते । तत्र—

(१) कानिचिच्छास्त्राणि कर्मप्रतिपादकानि ।

(२) कानिचिद्विषयसुखोपायप्रतिपादकानि ।

(३) कानिचित् ब्रह्मान्यदेवतोपासनाबोधकानि ।

(४) कानिचित ज्ञानहेतुभूतानि ।

तत्रापि न्यायसाङ्ख्यादिशास्त्राणि भेदज्ञानमेव यथार्थं कथयन्ति । तदेवं सर्वेषां शास्त्राणां यद्यप्यद्वैतब्रह्मबोधकत्वं न सम्भवति । तथापि, सकलशास्त्रप्रणेतारः सर्वज्ञाः कृपालवश्च । तत्कृतमूलसूत्राणामर्थोऽपि वेदानुसार्येव । परन्तु, तद्व्याख्यातारो भ्रान्त्या मूलसूत्रकाराभिप्रायविरुद्धानेवार्थान कल्पयन्ति । सूत्राणामर्थस्तु वेदविरोधी न भवति । वेदानुसार्येव भवति । तर्कदृष्टिरत्युत्तमसंस्कारवशादित्थं निश्चयं चकार ।

(४९३) अष्टादश विद्यायाः[2] प्रस्थानानि—

वेदाश्चत्वारः । उपवेदाश्चत्वारः । वेदाङ्गानि षट् । पुराणन्यायमीमांसाधर्मशास्त्राणि चत्वारि चेत्येवं वैखरी वाणी संस्कृतभाषारूपा अष्टादशभेदा भवति । अष्टादश प्रस्थानानि इति त एव भेदा उच्यन्ते ।

---

१. परा, पश्यन्ती, मध्यमा, वैखरी चेति चतस्रो वाचः । तत्र वैखरी परश्रवणयोग्याकारादिवर्णात्मनाऽभिव्यक्तीभवति ।

२. विद्याङ्गानि प्रस्थानानीत्युच्यन्ते । इत्थमग्निपुराणारम्भे प्रतिपादितम् । तथा मधुसूदनसरस्वतीस्वामिकृतप्रस्थानभेदग्रन्थे च ।

### ४९४. चतुर्णामपि वेदानां ब्रह्मज्ञान एव तात्पर्यम् ।

ऋग्वेदो, यजुर्वेदः, सामवेदोऽथर्ववेदः इति [1]वेदाश्चत्वारः । तत्र

१. कानिचिद्वाक्यानि ज्ञेयब्रह्मबोधकानि ।

२. कानिचिद्ध्येयब्रह्मबोधकानि ।

३. इतराणि तु कर्मबोधकानि । कर्मावबोधकवेदवचनानामप्यन्तःकरणशुद्धिद्वारा ज्ञानमेव प्रयोजनं भवति ।

कस्यापि वेदवचनस्य न प्रवृत्तावभिप्रायः । किन्तु स्वाभाविकनिषिद्धकर्मप्रवृत्तेर्निरोध एवाभिप्रायः । तस्मादाभिचारादिकर्मप्रतिपादकाथर्ववेदस्यापि निवृत्तावेव तात्पर्यम् । शत्रुः संहर्तव्य इति द्वेषवशाद्यो गरदाने वा, अग्निदाहे वा प्रवर्तते तं शत्रुमारणप्रवृत्तेः व्यावर्तयितुं अभिचारकर्मरूपाः श्येनयागादयः कथिताः । शत्रुसंहारे निमित्तभूतं कर्म अभिचार इत्युच्यते । ईदृशं कर्म श्येनयाग इत्युच्यते । श्येनयागकर्तव्यताबोधकवेदवचनानामपि "शत्रुवधकामः श्येनेनाभिचरन् यजेत "इत्यादीनां श्येनयागप्रवृत्तौ न तात्पर्यम् । किन्तु शत्रुमारणकामस्य श्येनयागादिविलक्षणविषदानादिशत्रुमारणोपायान्तरनिवृत्तावेव तात्पर्यम् । प्रवृत्तेः द्वेषत एव प्राप्तत्वात् ।

---

१. ऋग्वेदे (२२) [21] शाखाः। यजुर्वेदे (१०८) [109] शाखाः। सामवेदे (१०००)शाखाः। अथर्ववेदे (५०) शाखाः॥ यथा कश्चन वृक्षस्वामी यजमानः स्वपुत्रेभ्यस्तच्छाखा विभज्य दद्यात् तथा भगवान् श्रीवेदव्यासोऽपि वेदं चतुर्धा विभज्य पुनस्तत्र काश्चन शाखाः कल्पयित्वा, प्रतिशाखे विधिभेदांश्च कल्पयामास । यावत्यः शाखाः तावत्य उपनिषदः इति मुक्तिकोपनिषदि महावाक्यरत्नावल्याञ्च कथ्यते । अशीत्युत्तरशताधिकसहस्रसंख्याकाः शाखाः (११८०) । तस्मादुपनिषदोऽपि तावत्सङ्ख्याका एव (११८० भवन्ति । तत्र । (८४०) शाखाः कर्मप्रतिपादकत्वात् कर्मकाण्डा उच्यन्ते । (२३२) शाखाः ध्येयब्रह्मबोधकत्वादुपासनाकाण्डा उच्यन्ते । (१०८) शाखा ज्ञेयब्रह्म-बोधकत्वात् । वेदस्यान्त्यभागत्वात्, वेदसारार्थबोधकत्वाच्च वेदान्ताः, ज्ञानकाण्डा उपनिषद इति चोच्यंते तत्रापि (अष्टोत्तरशतोपनिषत्स्वपि)

> ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ।
> ऐतरेयञ्च च्छान्दोग्यं. बृहदारण्यकं दश ॥ इति दशोपनिषदो मुख्याः ।
> तत्र ऐतरेयोपनिषत् ऋग्वेदगता । ईशबृहदारण्यके शुक्लयजुर्वेदगते ।
> कठवल्लीतैत्तिरीये कृष्णयजुर्वेदगते । केनच्छान्दोग्ये सामवेदगते ।
> प्रश्नमुण्डकमाण्डूक्योपनिषदोऽथर्ववेदगताः इति विभागः ॥

योऽन्येतः प्राप्तोऽर्थः, न तत्र वक्यस्याभिप्रायः। इत्थमथर्ववेदसामान्यं निवृत्तावेव तात्पर्यवत्। इतरवेदत्रयगतकर्मबोधकवाक्यानामन्तःकरणशुद्धिद्वारा ज्ञानोपयोगित्वमतिस्फुटम्।

**(४९५) उपवेदानामपि चतुर्णां क्रमाद्ब्रह्मज्ञाने एव तात्पर्यम्।**
(१) आयुर्वेदः (२) धनुर्वेदः (३) गान्धर्ववेदः (४) अर्थवेदः इत्युपवेदाश्चत्वारः। तत्रः—

(१) **आयुर्वेदः**। आयुर्वेदस्य कर्तारः ब्रह्मा, प्रजापतिः, अश्विनीकुमारौ धन्वन्तर्यादयश्च। तच्छास्त्राणि चरकवाग्भटादिचिकित्साग्रन्थाश्च आयुर्वेदा एव। वात्स्यायनकृतकामशास्त्रमपि आयुर्वेदान्तर्गतमेव। कामशास्त्रस्य विषयीभूतं वाजीकरणस्तम्भनादिकमपि चरकादिभिरुक्तम्। आयुर्वेदस्यापि वैराग्यप्रतिपादन एव तात्पर्यम्। आयुर्वेदरीत्या रोगादिनिवृत्तावपि पुना रोगादिसम्भवात्। तस्माल्लौकिकोपायाः सर्वेऽपि तुच्छा एव। तस्मात् औषधदानादिजनितपुण्याविर्भूतान्तःकरणशुद्धिद्वारा ब्रह्मज्ञान एवायुर्वेदस्योपयोगः।

(२) **धनुर्वेदः**— विश्वामित्रकृते धनुर्वेदे आयुधं निरूपितम्। तच्चतुर्विधम्—

(1) मुक्तम्। (2) अमुक्तम्। (3) मुक्तामुक्तम्। (4) यन्त्रमुक्तञ्चेति।

---

१. (1) "परिणीतामुपगच्छेत्।"
(2) "ऋतौ भार्यामुपेयात्।"
(3) "हुतशेषं भक्षयेत्।"
(4) "सौत्रामण्यां सुराग्रहं गृह्णाति।"

इत्यादिविधिवाक्यानां, रागतः स्वतः प्राप्ते सर्वस्त्रीसङ्गे, सदा भार्यासङ्गमे सदा मधुमांसादिभक्षणे वा, प्रवर्तने नैव तात्पर्यम्। किन्तु, स्वभावसिद्धसर्वतोमुखस्वेच्छाप्रवृत्तिसङ्कोचद्वारा निवृत्तावेव परमतात्पर्यम्। तस्मात् तादृशवेदवाक्यानि परिसङ्ख्याविधिस्वरूपाणि भवन्ति, न त्वपूर्वविधिरूपाणि। न वा नियमविधिरूपाणि, श्येनयागबोधकाथर्ववेदवचनानामपि द्वेषतः प्राप्तशत्रुमारणप्रवर्तने न तात्पर्यम्। किन्तु तादृशस्वभावसिद्धप्रवृत्तिनिरोधनद्वारा तादृशविषदानादिक्रूरकर्मनिवर्तने एव तात्पर्यम्। तस्माच्छ्येनयागबोधकवचनमपि परिसङ्ख्यात्मकमेवेति कथ्यते। तथा च भागवते—

"लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना।
व्यवस्थितिस्तासु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा" इति॥

रागतो द्वेषतो वा प्राप्तप्रवृत्तिसंकोचबोधकवेदवचनं परिसङ्ख्यारूपमित्युच्यते॥

(१) चक्रादयो हस्तेन मुच्यमानत्वान्मुक्ता इत्युच्यन्ते ।

(२) खड्गादयोऽमुक्ता इति ।

(३) परश्वादयो मुक्तामुक्ता इति ।

(४) शरगोलकादयो यन्त्रमुक्ता इति ।

(१) मुक्तमस्त्रमित्युच्यते । (२) अमुक्तं शस्त्रमिति । चतुर्विधानामप्येतेषामायुधानां, ब्रह्मा, विष्णुः, पशुपतिः, प्रजापतिः, अग्निः, वरुणः इत्याद्या देवताः तत्तन्मन्त्राश्चोक्ताः । तत्र चाधिकारिणः क्षत्रियकुमाराः तदनुवर्तिनो ब्राह्मणादयश्च । ते च चतुर्विधाः—(१) पदातिः । (२) रथारूढः । (३) अश्वारूढः । (४) गजारूढश्चेति । युद्धे शकुनमङ्गलादिकमप्युक्तमेव ॥

(१) ईदृशोऽर्थः धनुर्वेदस्य प्रथमपादे कथितः ।

(२) आचार्यलक्षणं, ततः शस्त्राभ्यासक्रमादिकं च द्वितीयपादे ।

(३) गुरुसम्प्रदायप्राप्तस्य शस्त्रस्य अभ्यासमन्त्रसिद्धिदेवतासिद्धिप्रकारश्च तृतीयपादे ।

(४) सिद्धानां मन्त्रादीनां प्रयोगादिकं चतुर्थपादे ।

अयञ्च धनुर्वेदो ब्रह्मप्रजापतिभ्यां विश्वामित्रेण प्राप्तः । स च जगत्प्रसिद्धमिममकरोत् । न तु विश्वामित्रादेवायं वेदोऽभूत् । धनुर्वेदो हि दुष्टचोरादिभ्यः प्रजापालनरूपं क्षत्रियधर्मं बोधयति । तस्मात् तस्यापि चित्तशुद्धिद्वारा ज्ञानसाध्यमोक्षप्रतिपादन एव तात्पर्यम् ।

(३) **गन्धर्ववेदः** । अयं च भरतेन मुनिना लोके प्रसिद्धोऽभूत् । तत्र हि स्वरतालमूर्च्छनादिभिः सह गीतनृत्यवाद्यादिकं सविस्तरं निरूपितम् । देवताराधननिर्विकल्पसमाधिसिद्धिर्गान्धर्ववेदस्य प्रयोजनमुच्यते । तस्मात् तस्यापि अन्तःकरणैकाग्रतासम्पादनेन ज्ञानद्वारा मोक्ष एव परमं प्रयोजनम् ।

(४) **अर्थवेदोऽपि नानाप्रकारः**। नीतिशास्त्रमश्वशास्त्रं शिल्पशास्त्रं सूपकारशास्त्रमित्यादिकं धनप्राप्त्युपायबोधकं अर्थवेद इति उच्यते । धन प्राप्त्युपायनिपुणस्यापि विना भाग्यं धनप्राप्तिर्न स्यात् इत्यतोऽर्थवेदस्यापि वैराग्यबोधने एव तात्पर्यम् ।

---

१. स्थापत्यवेद इत्यप्ययमुच्यते ।

## (४९६) वेदाङ्गानामर्थेन सह प्रयोजनम्—

चतुर्णामपि वेदानां षडङ्गानि स्युः ] (१) शिक्षा। (२) कल्पः। (३) व्याकरणम्। (४) निरुक्तम्। (५) ज्यौतिषम्। (६) छन्दः (पिङ्गलशास्त्रादि) चेति षट् वेदार्थज्ञानोपयोगित्वाद्वेदाङ्गानीत्युच्यन्ते। तत्रः—

(१) **शिक्षा**-शिक्षायाः कर्तारो पाणिनिप्रभृतयोऽनेके महर्षयः। वेद-शब्दाक्षर—स्थानादिज्ञानम्, उदात्तानुदात्तस्वरितादिस्वरज्ञानं[1] इत्यादि शिक्षया जायते। वेदव्याख्यानरूपा अनेके प्रातिशाख्यनामका ये ग्रन्थाः तेऽप्यत्रैव शिक्षायामन्तर्भवन्ति।

(२) **कल्पसूत्रम्**—कल्पसूत्रैर्वेदबोधितकर्मणामनुष्ठानरीतिरुपदिश्यते। यज्ञकर्मनिर्वर्तका ब्राह्मणा ऋत्विज उच्यन्ते। तेषां पृथक् पृथक् कर्तव्यकर्म-क्रमावबोधकं कल्पसूत्रम्। कल्पसूत्रकर्तारस्तु कात्यायनाश्वलायनादयो मुनयः। कल्पसूत्रमपि[2] वेदार्थज्ञानोपयोगित्वाद्वेदाङ्गमेव॥

(३) **व्याकरणम्**—व्याकरणेनापि वेदशब्दानां शुद्धताज्ञानं जायते। तच्च व्याकरणं सूत्ररूपमष्टाध्याय्यात्मकं पाणिनिमुनिना विरचितम्। तत्सूत्राणां व्याख्यानं वार्तिकरूपं भाष्यरूपं च कात्यायनपतञ्जलिभ्यामकारि। व्याकरणा-न्तरे तु वैदिकशब्दविचारो नास्ति। तदुपयोगः पुराणादावेव। न तु वेदे। पाणिनीयमेव व्याकरणं वैदिकशब्दस्वरूपसिद्धिं प्रदर्शयति। तस्माद्वेदाङ्गमेतत्॥

(४) **निरुक्तम्**—यास्कनामा मुनिः (१३) त्रयोदशाध्यायात्मकं निरुक्तं रचयामास। तत्र च वेदमन्त्रगतानामप्रसिद्धानां पदानामर्थबोधनाय नाम-निरूपणं कृतम्। तस्मात् वैदिकाप्रसिद्धपदार्थज्ञानोपयोगित्वान्निरुक्तमपि वेदाङ्गमेव। संज्ञाबोधकपञ्चाध्यायात्मको निघंटुनामा ग्रन्थो यास्केनाकारि। सोऽपि निरुक्तान्तर्गत एव॥

---

१. (१) उच्चैः स्वर उदात्तः। (२) नीचैः स्वरः अनुदात्तः। (३) समस्वरः स्वरितः।

२. कल्पसूत्राणि षोढा। (१) जैमिनिना कृतं जैमिनीयम्। (२) आश्वलायनेन कृतमाश्वलायनम्। (३) आपस्तम्बेन कृतमापस्तम्बीयम्। (४) बोधायनेन कृतं बोधायनीयम्। (५) कात्यायनेन कृतं कात्यायनीयम्। (६) वैखानसेन कृतं वैखान-सीयम्॥ इति

(५) **ज्यौतिषम्**—आदित्यगर्गादिकृतं ज्यौतिषमपि वेदाङ्गमेव । वैदिककर्मारम्भे कालज्ञानस्यापेक्षितत्वात् तादृशकालज्ञानजनकं ज्यौतिषमपि वेदाङ्गम् ।

(६) **च्छन्दः**—पिङ्गलमुनिनाऽष्टाध्यायपरिमितं सूत्रात्मकं च्छन्दः शास्त्रं निर्मितम् । तेन वैदिकस्य गायत्र्यादेश्छन्दसो विज्ञानं जायते । तस्मात् पिङ्गलसूत्रमपि वेदाङ्गमेव ॥

इत्थं षडिमानि वेदाङ्गानि । यद्यपि तत्र वेदानुपयुक्ता अप्यर्था निरूपिताः, तथापि प्रासङ्गिकत्वात्तेषां न ते प्रधानभूताः । प्रधानभूतस्य वेदस्य यत्प्रयोजनम् तदेव षण्णामप्यङ्गानां न तु पृथक् ॥

**४९७. अष्टादश पुराणानि, उपपुराणानि च—**

**पुराणान्यष्टादश** (१८) तानि च श्रीव्यासमुनिना प्रणीतानि । (1) ब्राह्मम् । (2) पाद्मम् । (3) वैष्णवम् । (4) शैवम् । (5) भागवतम् । (6) नारदीयम । (7) मार्कण्डेयम् । (8) आग्नेयम् । (9) भविष्यत् । (10) ब्रह्मवैवर्तम् । (11) लैङ्गम् । (12) वाराहम् । (13) स्कान्दम् । (14) वामनम् । (15) कौर्मम् । (16) मात्स्यम् । (17) गारुडम् । (18) ब्रह्माण्डम् । इति ॥

इतराण्यपि कालीपुराणादीनि बहूनि सन्ति । उपपुराणान्येव तान्यपि । केचिदुपपुराणान्यप्यष्टादशैवेति वदन्ति । नायमस्ति नियमः । सन्त्यनेकानि तानि ॥ भागवतं द्विविधं भवति - (१) एकं वैष्णवं श्रीमद्भागवतम् । (२) अपरं देवीभागवतम् । उभयोरपि ग्रन्थसङ्ख्याऽष्टादशसहस्राणि प्रत्येकम् । स्कन्धाश्च प्रत्येकं द्वादश । परं त्वेकं तयोः पुराणम् । इतरदुपपुराणम् । एतदुभयमपि व्यासकृतमेव । तस्मादुभयमपि प्रमाणमेव । पुराणवदुपपुराणान्यपि कानिचिद्रचयाञ्चकार वेदव्यासः । कानिचिदुपपुराणानि पराशरादिभिरन्यैः सर्वज्ञमुनिभिः कृतानि । यत्रैवोपनिषदां तात्पर्यं[1], तत्रैव सर्वेषामपि पुराणानामपपुराणानां च तात्पर्यम् ।

एतच्चाग्रे प्रतिपादयिष्यते,

**(४९८) न्यायवैशेषिकसूत्राणामाशयः—**

गौतममुनिना न्यायसूत्राणि पञ्चाध्यायात्मना कृतानि । युक्तिरेवात्र प्रधान-

---

१. धर्मशास्त्रेषु कर्मकाण्डार्थो निरूप्यते । पुराणेषु च उपनिषद्रूपज्ञानकाण्डार्थः । इत्थं सूतसंहितायां विद्यारण्यस्वामिभिः प्रत्यपादि ।

भूता। यस्य युक्तिचिन्तनावशात् तीव्रा बुद्धिर्जायते स एव मननं कर्तुं समर्थो भवति। तस्माद्युक्तिप्रधानैर्न्यायसूत्राणामपि मननद्वारा वेदान्तजन्यात्मज्ञानमेव फलम्[1] ॥ कणादमुनिरपि दशाध्यायपरिमितानि वैशेषिकसूत्राणि रचयामास। तान्यपि न्यायान्तर्गतान्येव।

(४९९) **धर्मब्रह्ममीमांसयोः सङ्कर्षणकाण्डस्य च फलम्**—

मीमांसा द्विप्रकारा—(१) एका धर्ममीमांसा[2]। (२) अपरा ब्रह्ममीमांसा[3]। (१) तत्र धर्ममीमांसा पूर्वमीमांसेत्युच्यते। (२) ब्रह्ममीमांसा उत्तरमीमांसेति। (१) **धर्ममीमांसा** चेयं द्वादशाध्यायरूपा। सा च जैमिनिमुनिना रचिता। यज्ञादिकर्मानुष्ठानप्रकारा अत्र निरूप्यन्ते। तस्माद्विध्युक्तरीत्या कर्मानुष्ठानप्रवृत्तिरेव धर्ममीमांसाफलम्। कर्मप्रवृत्याऽन्तःकरणशुद्धिर्जायते। ततो ज्ञानम्। ज्ञानान्मोक्षः। इत्थं धर्ममीमांसाया अपि फलं मोक्ष एव। धर्ममीमांसाया द्वादशाध्यायानां अर्थभेदसद्भावात्, अर्थकाठिन्यसद्भावाच्च नेह लिख्यते। जैमिनिनैव चतुर्भिरध्यायैः सङ्कर्षणकाण्डाख्यो देवताकाण्डोऽप्यकारि। तत्रोपासना नानाप्रकारा निरूप्यते। सङ्कर्षणकाण्डोऽपि धर्ममीमांसान्तर्भूतैव।

(२) **ब्रह्ममीमांसा**—इयं हि चतुरध्यायी। कर्ता चास्या व्यास एव। प्रत्यध्यायं चत्वारः पादाः सन्ति। तत्रापि—

(१) प्रथमेऽध्याये—"सर्वेषामुपनिषद्वाक्यानां निर्विशेषेऽद्वये प्रत्यग्ब्रह्मण्येव तात्पर्यं इति निरूपितम् ॥

(२) उपनिषद्वाक्येषु मन्दबुद्धीनां विरोधो भाति। तत्परिहारो द्वितीयेऽध्याये कथ्यते ॥

(३) तृतीयेऽध्याये—ज्ञानोपासनयोः साधनं निरूप्यते।

(४) चतुर्थे त्वध्याये—ज्ञानोपासनयोः फलम् ॥

इदञ्चोत्तरमीमांसारूपं शारीरकं शास्त्रं सर्वशास्त्राणां प्रधानभूतम्। एतदेव मुमुक्षुभिरुपादेयम्। अस्य व्याख्यानरूपा ग्रन्था यद्यपि नानाप्रकाराः[4] सन्ति।

१. न्यायसूत्राणां मननद्वारा वेदान्तजन्यज्ञानमेव प्रयोजनमिति न्यायशास्त्रपारंगतशिरोमणिभट्टाचार्यैरपि स्वग्रन्थे निरूपितः। तस्मादस्य पूर्वोक्तमेव फलं संभवति ॥

२. यत्र धर्मस्वरूपविचारः क्रियते, सा धर्ममीमांसेति कथ्यते।

३. यत्र ब्रह्मस्वरूपविचारः क्रियते, सा ब्रह्ममीमांसेति। मीमांसा = पूजितविचारः।

४. शङ्कराचार्यभाष्यम्। रामानुजभाष्यम्। मध्वभाष्यम्। भास्कराचार्यभाष्यम्। त्रिगुणस्वामिभाष्यम्। भट्टभाष्यं। विज्ञानभिक्षुभाष्यम्। नीलकण्ठभाष्यमिति अनन्तानि भाष्यरूपाणि व्याख्यानानि सन्ति।

तथापि श्रीशङ्करभगवत्पादकृतं भाष्यरूपं व्याख्यानमेव मुमुक्षुभिरत्यादरेण श्रोतव्यम् । तच्च ज्ञानद्वारा मोक्षफलमित्यतिस्पष्टमेव ॥

१. अत्र भाष्यशब्देन श्रीमच्छङ्करभगवत्पादकृतं भाष्यं तच्छिष्यप्रशिष्यादिकृत-भाष्यव्याख्यानानि च गृह्यन्ते । शारीरकसूत्रमेव ब्रह्मसूत्रमित्युच्यते । तत्र ५५५ सूत्राणि सन्ति । तद्व्याख्यानोपव्याख्यानान्यत्र कानिचित् लिख्यन्ते ।

| | कर्तृनाम | मूलम् | व्याख्यानम् |
|---|---|---|---|
| १ | श्रीशङ्करः | ब्रह्मसूत्रम् | शारीरकभाष्यं |
| २ | पद्मपादाचार्यः | शारीरकभाष्यम् | विजयाभिदण्डिनी |
| ३ | श्रीशङ्करः | ,, | पञ्चपादिका |
| ४ | श्रीप्रकाशात्मचरणः | पञ्चपादिका | विवरणम् |
| ५ | अखण्डानन्दभिक्षुः | विवरणं | तत्वदीपनम् |
| ६ | विद्यारण्यः | ,, | विवरणप्रमेयसंग्रहः |
| ७ | नृसिंहाश्रमी | पञ्चपादिका | टीका |
| ८ | वाचस्पतिमिश्रः | शारीरकभाष्यम् | भामती |
| ९ | अमलानन्दः | भामती | कल्पतरुः |
| १० | अप्पय्यदीक्षितः | कल्पतरुः | परिमलम् |
| ११ | अद्वैतानन्दः | शारीरकभाष्यम् | ब्रह्मविद्याभरणम् |
| १२ | आनन्दगिरिः | ,, ,, | न्ययनिर्णयः |
| १३ | रामानन्दः | ,, ,, | रत्नप्रभा |
| १४ | सर्वज्ञात्ममुनिः | ,, ,, | संक्षेपशारीरकम् |
| १५ | मधुसूदनस्वामी | ,, ,, | ,, ,, |
| १६ | रामाश्रमी | संक्षेपशारीरकम् (२) | टीका |
| १७ | नारायणसरस्वती | शारीरकभाष्यम् | वार्तिकम् |
| १८ | बालकृष्णानन्दः | ,, | ,, |
| १९ | मधुसूदनस्वामी | ,, | वेदान्तकल्पलतिका |
| २० | रामाश्रमी | ब्रह्मसूत्रम् | वृत्तिः |
| २१ | नारायणभट्टः | ,, | ,, |
| २२ | अप्पय्यदीक्षितः | ,, | न्यायरक्षामणिः |
| २३ | शङ्करानन्दः | ,, | ,, |
| २४ | भैरवदत्तपण्डितः | ,, | तात्पर्यम् |
| २५ | रामानन्दस्वामी | ,, | ब्रह्मामृतवर्षिणी |
| २६ | गंगाधरेन्द्रसरस्वती | ,, | स्वाराज्यसिद्धिः |
| २७ | विद्यारण्यः | ,, | अधिकरणरत्नमाला |
| २८ | रघुनाथशास्त्री | ,, | शांकरपादभूषणम् |
| २९ | ,, | ,, | अद्वैतवृत्तिः |
| ३० | ,, | ,, | दिग्दर्शिनी |
| ३१ | अनूयनारायणः | ,, | समञ्जसा |

### ५००. स्मृत्यादिग्रन्थानां कर्तारः प्रयोजनश्च ।

मनुः, याज्ञवल्क्यः, विष्णुः, यमोऽङ्गिरा, वसिष्ठः, दक्षः, संवर्तः, शातातपः, पराशरः, गौतमः, शङ्खलिखितः, हारीतः, आपस्तम्बः, शुक्रः, बृहस्पतिः, व्यासः, कात्यायनः, देवलः, नारदः एवमादिभिः सर्वज्ञैः वेदानुसारिणो, स्मृतिनामका ग्रन्थाः रचिताः । त एव धर्मशास्त्राणि भवन्ति । तेषु वर्णाश्रमकायिकवाचिकमानसिककर्माण्युक्तानि । एतेषामपि अन्तःकरणशुद्धिद्वारा ज्ञानोत्पत्या मोक्षसिद्धिरेव प्रयोजनम्। साङ्ख्यशास्त्रयोगशास्त्रवैष्णवतन्त्रशैवतन्त्रादीनामपि धर्मशास्त्र एवान्तर्भावः । मानसिकोपासनारूपकर्मनिरूपकत्वात् ॥

### ५०१. साङ्ख्यशास्त्रप्रयोजनम्--

कपिलः साङ्ख्यशास्त्रं षडध्यायरूपं रचयाम्बभूव ।

(१) तत्र प्रथमाध्याये तच्छास्त्रविषयः प्रतिपाद्यते ।

(२) द्वितीयाध्याये महत्तत्वाहङ्कारादयः प्रधानकार्याण्युच्यन्ते ।

(३) तृतीयाध्याये विषयेभ्यो वैराग्योत्पत्तिः कथ्यते ।

(४) चतुर्थाध्याये विरक्तानां चरित्रं निरूप्यते ।

(५) पञ्चमाध्याये परपक्षः खण्डयते ।

(६) षष्ठाध्याये सकलार्थसङ्ग्रहः कथ्यते ।

| | कर्तृनाम | मूलम् | व्याख्यानम् |
|---|---|---|---|
| ३२ | अन्नंभट्टः | ब्रह्मसूत्रम् | मिताक्षरा |
| ३३ | ज्ञानेन्द्रः | ,, | ब्रह्मसूत्रार्थप्रकाशिका |
| ३४ | नागेश्वरः | ,, | ब्रह्मसूत्रेन्दुशेखरम् |
| ३५ | प्रकाशात्मश्रीचरणाः | शारीरकमीमांसा | शारीरकमीमांसान्यायसंग्रहः |
| ३६ | ब्रह्मानन्दसरस्वती | ब्रह्मसूत्रम् | वेदान्तसूत्रमुक्तावली |
| ३७ | भवदेवः | ,, | वृत्तिः |
| ३८ | रंगनाथः | ,, | विद्वज्जनमनोहरा |
| ३९ | स्वयंप्रकाशानन्दः | ,, | वेदान्तवचनभूषणम् |
| ४० | जगन्नाथयतीश्वरः | शारीरकभाष्यम् | भाष्यदीपिका |
| ४१ | अमलानन्दः | ब्रह्मसूत्रम् | शास्त्रदर्पणम् |
| ४२ | गदाधराः | ,, | सारार्थसंग्रहः |

एवं नानाप्रकारा व्याख्यानरूपा ग्रन्थाः वर्तन्ते । एते च प्रतज्ञान्मुमुक्षोः स्वखिद्यान्तदृढतरज्ञानसिद्ध्यर्थं प्रतिपादिताः ।

प्रकृतिपुरुषविवेकात् पुरुषोऽसङ्ग इति ज्ञानं साङ्ख्यशास्त्रप्रयोजनम् । तच्छास्त्रस्यापि त्वम्पदलक्ष्यार्थशोधनद्वारा महावाक्यजन्यज्ञानोपयोगित्वान्मोक्ष एव फलम् ॥

## ५०२. योगशास्त्रप्रयोजनम् । शारीरकोक्तचविरोधश्च ।

योगशास्त्रं पादचतुष्टयोपेतम् । तत्कर्ता पतञ्जलिः । स चादिशेषावताररूपः । कस्यचन ऋषेः सन्ध्योपासनसमये तदञ्जलिपुटादुद्भूय भूमौ पतितत्वात् पतञ्जलिरिति नाम्ना प्रसिद्धः ।

(१) स च स्थूलशरीरगतरोगरूपमलनिवृत्त्यर्थं चिकित्साग्रन्थमकरोत् ।

(२) अशुद्धपदोच्चारणरूपवाङ्मलनिवृत्त्यर्थं पाणिनीयव्याकरणस्य भाष्यं चकार ।

(३) विक्षेपरूपान्तःकरणमलापनयाय योगसूत्रं रचयामास । तत्र च

(1) **प्रथमपादे**—चित्तवृत्तिनिरोधरूपः समाधिः तत्साधनभूता अभ्यासवैराग्यादयश्च निरूपिताः ।

(2) **द्वितीयपादे**—विक्षिप्तचित्तस्य समाधिसाधनीभूतानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिनामकान्यष्टाङ्गान्युक्तानि ।

(3) **तृतीयपादे**—योगविभूतयः कथिताः ।

(4) चतुर्थपादे—योगफलभूतो मोक्षः कथितः ।

इत्थं योगशास्त्रमपि ज्ञानसाधनीभूतनिदिध्यासनसम्पादनद्वारा मोक्षहेतुत्वं प्रतिपद्यते । शारीरकसूत्रेषु यत् साङ्ख्ययोगखण्डनं कृतम्, तत् उपनिषद्विरुद्धार्थप्रतिपादकतद्व्याख्यान-खण्डनरूपमेव । न तु मूलसूत्रखण्डनरूपम् । एवं न्यायवैशेषिकसूत्रखण्डनमपि तद्विरुद्धार्थप्रतिपादकव्याख्यानखण्डनार्थमेव ।

## ५०३. पाञ्चरात्र-पाशुपतादिप्रवृत्तिप्रयोजनम् ।

(१) **पाञ्चरात्रम्**—नारदेन पाञ्चरात्रनामकं तन्त्रमकारि । तत्र वासुदेवेऽन्तःकरणस्य स्थापनं कथितम् । अतस्तस्यापि अन्तःकरणस्थैर्यसंपादनाज्ज्ञानद्वारा मोक्ष एव फलम् । सर्वेषामपि वैष्णवग्रन्थानां पाञ्चरात्रेऽन्तर्भावः । तच्च पाञ्चरात्रं धर्मशास्त्रेऽन्तर्भवति ।

(२)**पाशुपतम्**—पाशुपततन्त्रे पशुपत्याराधनं कथ्यते । तत्कर्ता पशुपतिः । तस्याप्यन्तःकरणनैश्चल्यसम्पादनद्वारा मोक्षसाधनं ज्ञानमेव फलम् ॥

**५०४. शैवादिग्रन्थानां फलम्, वाममार्गश्च ।**

**शैवग्रन्थाः** सर्वेऽपि पाशुपततन्त्रे अन्तर्भवन्ति । तथैव गणेश-सूर्य-देव्याद्युपासनाबोधकानां ग्रन्थानामपि चित्तनिश्चलतासम्पादनद्वारा ज्ञानमेव फलम् । सर्वेषामप्येषां धर्मशास्त्रेऽन्तर्भावः ॥ तत्र देव्युपासनाबोधकग्रन्थेषु द्वौ सम्प्रदायौ वर्तेते । एको दक्षिणसम्प्रदायः । इतर उत्तरसम्प्रदायः । उत्तरसम्प्रदायं वाममार्ग इति कथयन्ति । तत्र—

(१) दक्षिणसम्प्रदायरीत्या ये ग्रन्था देव्युपासनं बोधयन्ति, ते धर्मशास्त्रेऽन्तर्भवन्ति ।

(२) वाममार्गो यस्मिन्ग्रन्थेऽस्ति, स ग्रन्थो धर्मशास्त्रविरुद्धत्वादप्रमाणं भवति । वामतन्त्रमपि यद्यपि परमशिवेनाकारि । तथापि सर्ववेदशास्त्रविरुद्धत्वान्न तत्प्रमाणं भवति । यथा विष्णुना बुद्धावतारे कृतो नास्तिकग्रन्थः वेदविरुद्धत्वादप्रमाणं भवति । तथा शिवकृतं वामतन्त्रमपि । तत्र हि मदिरादयोऽनेकेऽत्यन्ताशुद्धाः पदार्था ग्राह्यत्वेन कथिताः । सर्वलोकवञ्चनार्थं मलिनानपि पदार्थान् उत्तमान् कथयति । तद्यथा मदिरा तीर्थं ; मांसं शुद्धम्, मदिरापात्रं पद्मम्, दुर्जनो व्यासः, लशुनः शुकदेवः, ध्वजी मदिराविक्रयी, मदिरोत्पादको दीक्षितः, वेश्यासेवी चर्मकारिण्यादिसेवी चाण्डाल्यादिसेवी च प्रयागसेवी, काशीसेवी, भैरवीचक्रमध्यवर्तिनो चण्डालादयो ब्राह्मणा इत्यादि । अत्यन्तव्यभिचारिणी योगिनीति, स्वैरी योगीति च प्रतिपादयति । एवमादिर्बहुप्रकारो वाममार्गव्यवहारोऽत्यन्तनिषिद्धोऽपि तत्र वर्तते ।

किं च पूजासमयेऽनेकदोषयुक्तामपि स्त्रियमुत्तमा शक्तिरिति कथयति । जातितश्चण्डालीमत्यन्तव्यभिचारिणीं रजस्वलामपि स्त्रियं देवीबुद्ध्या पूजनीयां कथयति । तस्या उच्छिष्टभूतां मदिरां पेयां प्रतिपादयति । अधिकमदिरापानात् तया वान्तमपि पृथिवीपातमन्तरेणैवातिश्रद्धयाऽऽचार्यसहितैरितरैः सावधानमनस्कैः पेयमाचष्टे । वान्तं भैरवीति च कथयति । स्त्रीयोनौ जिह्वां प्रवेश्य कानपि मन्त्रान् जप्यानाह । (१) मदिरां, (२) मांसं, (३) मत्स्यं, (४) मुद्रां, (५) मन्त्रांश्च भोगार्थं मोक्षार्थं च सेव्यानाह । प्रथमद्वितीयादिमकारा

अप्रसिद्धनाम्ना तत्र व्यवहृताः । एवमाद्या वामतन्त्रोक्ताः सर्वेऽपि व्यवहाराः ऐहिकामुष्मिकसुकृतात् तत्सेविनं जनं भ्रष्टं कुर्वन्ति ।

किं च कर्णच्छेदी योगी, अवधूतो गोस्वामी, अनेके सन्यासिनः, ब्राह्मणादयश्च केचित् वाममार्गमनुतिष्ठन्ति । ते च सर्वमिदं लोकवेदमिन्दितमिति ज्ञात्वैव अतिरहस्यतया गोपायन्तीमं वाममार्गम् । किमत्राधिकं वक्तव्यम् ? वाममार्गं शृण्वतो म्लेच्छस्यापि रोमाञ्चो जायते । अतिनीचो व्यवहारो लेखनायोग्य इति विशेषतोऽत्र न व्यलेखि । सर्वथापि वामतन्त्रमत्यन्तं त्याज्यमेव ॥

**५०५. नास्तिकमतम्--**

नास्तिकमतमपि परित्याज्यमेव । तत्र, (१) माध्यमिकः (२) योगाचारः, (३) सौत्रान्तिकः, (४) वैभाषिकः, (५) चार्वाकः, (६) दिगम्बरः, इति षट् वर्तन्ते । नैते वेदं प्रमाणत्वेनाभ्युपगच्छन्ति । तेषां सिद्धान्तोऽपि परस्परं विलक्षण एवास्ते । तत्र—

(१) **माध्यमिकः**—सर्वशून्यवादी ।

(२) **योगाचारः**—सर्वे पदार्था न विज्ञानस्वरूपाद्भिद्यन्ते । विज्ञानमेवैकं तत्वम् । तदपि क्षणिकमेव, इति कथयत्ति ।

(३) **सौत्रान्तिको**–विज्ञानस्याकारो बाह्यपदार्थात्मकं विषयं विना न जायते । अतो विज्ञानेन बाह्याः पदार्था अनुमीयन्ते । न ते प्रत्यक्षप्रमाणगोचराः । नापि स्थिराः । अपि तु सर्वेऽपि पदार्थाः क्षणिका एव इति ब्रूते ।

(४) **वैभाषिकः**–बाह्याः पदार्थाः क्षणिका अपि प्रत्यक्षप्रमाणविषयाः इति ब्रवीति । अयमेव सौत्रान्तिकवैभाषिकमतयोर्भेदः । एतन्मतचतुष्टयमपि सुगतस्यैव ।

(५) **चार्वाकः**—न पदार्थाः क्षणिकाः । देह एव आत्मा इति वदति ।

(६) **दिगम्बरः**—देहो नात्मा । देहविलक्षण एवात्मा । स च यावत्परिमाणो देहः, तावत्परिमाणः इति जल्पति ।

इत्थं तेषां परस्परं मतिभेदोऽस्ति । इतोऽप्यनेके पक्षभेदाः सन्ति । तेऽपि वेदविरोधिन एवेति नात्र विशेषतो निरूपिताः । नापि खण्डिताः ।

इत्थं वाममार्ग-नास्तिकमार्गग्रन्था यद्यपि संस्कृतवाणीरूपा एव। तथापि ते वेदबाह्याः इति न विद्यास्थानेषु परिगण्यन्ते । तस्माद्वेदानुसारीणि विद्याप्रस्थानानि अष्टादशैव ।

**५०६ साहित्यादितात्पर्यनिश्चयपूर्वकः तर्कदृष्टेः सारग्राही निश्चयः—**

मम्मटभट्टादिकृताः साहित्यग्रन्थाः[1] कामशास्त्रेऽन्तर्भवन्ति। काव्येषु केषांचित्[2] कामशास्त्रेऽन्तर्भावः, [3]केषाञ्चिद्धर्मशास्त्रे। इत्थमष्टादशाऽपि विद्यास्थानानि ब्रह्मात्मैकत्वज्ञानसम्पादनद्वारा मोक्षहेतुभूतानि। कानिचित्[4]साक्षात्। कानिचित् परम्परया। अयमेव सर्वशास्त्राणामभिप्राय इति तर्कदृष्टिर्निश्चिकाय। यद्यप्युत्तरमीमांसां विना सर्वाण्यपि शास्त्राणि मुमुक्षुणा जिज्ञासुना सुतरां परित्याज्यानीति शारीरकमीमांसासूत्रतद्भाष्यकारादिभिः प्रतिपादितम्। तथापि उक्तेन नयेन तान्यपि कथमपि तत्रोपयुज्यन्त इति सूक्ष्मदृष्ट्या तर्कदृष्टिरेवं निश्चिकाय ।

**५०७. तर्कदृष्टेः केनचिद्विदुषा समागमः।**

गुरुमुखाच्छ्रुते स्वबुध्या निश्चितेऽप्यर्थे तर्कदृष्टेः पुनः सन्देहो जातः। "यो मया निश्चितोऽर्थः स एवायं शास्त्रार्थः, उतान्य इति। तर्कदृष्टेः कनिष्ठाधिकारित्वेन पुनः पुनः कुतर्कवशात्सन्देहो युज्यत एव। तन्निवृत्यर्थं विद्वदन्तरनिश्चयेन स्वनिश्चयस्य संवादसंम्पादनार्थं च स कदाचित् कञ्चन विद्वांसं उपसङ्क्रम्य स्वाभिप्रायं तस्मै न्यवेदयत्। स च तर्कदृष्टिवचनं श्रुत्वा भवदुक्तः सर्वोऽपि मुख्यसिद्धान्त एवेति प्रत्यब्रवीत्। ततः तर्कदृष्टिः सर्वमपि संशयं हित्वा "अहं ब्रह्मास्मी"ति साक्षाद्ब्रह्मापरोक्षतयाऽनुभूय बन्धमोक्षादिकं सर्वं मिथ्यैवेति विजज्ञौ।

---

१. साहित्यं अलङ्कारग्रन्थः।

२. नायिकाभेदरसभेदाद्यर्थप्रतिपादकानाम्।

३. भगवच्चारित्रप्रतिपादकानाम्।

४. बुभुक्षितस्य क्षुन्निवर्तनद्वारा तृप्त्युत्पादने पक्वान्नं यथा साक्षात्साधनम्। कृषिसस्यादिकं च यथा परंपरासाधनं, तथाऽज्ञाननिवृत्तिद्वाराऽऽत्मानुभवरूपतृप्त्युत्पादने केचन ग्रन्था ज्ञानोत्पादनद्वारा साक्षात्साधनं केचन ग्रन्था निष्कामकर्मप्रतिपादनद्वारा परंपरासाधनम्।

## ५०८. ज्ञानिन इच्छादिसम्भवेऽपि व्यवहारे औदासीन्यम्।

ज्ञानिनोऽपि सकलव्यवहारोऽज्ञवत् प्रारब्धवशाज्जायत इति प्राक् अभिहितम्। तदनुकूला इच्छापि तस्य सम्भवेदेव। यद्यप्यन्तःकरणं भूतानां सत्वगुणकार्यमित्युक्तम्। तथापि रजस्तमोगुणसहितसत्वगुणकार्यमेव तन्न तु केवलसत्वगुणकार्यम्। केवलसत्वगुणकार्यञ्चेत्तत्स्यात् तदा अन्तःकरणस्य चञ्चलत्वस्वभावो न कदापि स्यात्। तथा कामक्रोधाद्या राजस्यो वृत्तयः निद्रालस्यमूढत्वाद्यास्तामस्यो वृत्तयश्च न स्युः। सर्वत्र तासां प्रतिप्राणि जायमानत्वादेव न केवलसत्वगुणकार्यमन्तःकरणम्। किन्तु, अप्रधानीभूतरजस्तमोगुणसहितसत्वगुणप्रधानपञ्चभूतकार्यमेव। तस्मादन्तःकरणे त्रयोऽपि ते गुणाः सर्वदा वर्तन्त एव। परं तु न समतया। न्यूनाधिकभावेन तु वर्तन्ते। तस्माद्गुणानां न्यूनाधिकभाववशात् प्रतिप्राणि विलक्षणस्वभावमन्तःकरणम्। तद्यावदन्तःकरणमास्ते, तावद्रजोगुणपरिणामरूपा इच्छापि स्यादेव। यत् कचिच्छास्त्रान्तरेषु नैव ज्ञानिन इच्छादिः सम्भवेदित्युक्तम्। तत्रायमभिप्रायः। "ज्ञान्यज्ञानिनोर्द्वयोरपीच्छा स्यादेव। तथापि—

(१) अज्ञ इच्छादीनात्मधर्मत्वेन जानाति। (२) ज्ञानी त्विच्छाद्युत्पत्तिसमयेऽपि नैव तानात्मधर्मत्वेन विजानाति। किन्तु, अन्तःकरणपरिणामत्वात्तद्धर्मा एवेति तान् संवेत्ति। इत्थं ज्ञानिनामिच्छादिसम्भवेऽपि यतो न ते आत्मधर्मत्वेन ज्ञानिनः प्रतिभान्ति अतो ज्ञानिन इच्छादयो न सम्भवन्तीति।

तथा मनोवाक्कायकृतं संव्यवहारादिकं सर्वं न ज्ञानिन आत्मधर्मत्वेन प्रतिभाति, किन्तु, क्रियासामान्यं मनोवाक्कायाश्रितं तत्रैव वर्तते। आत्मा त्वसंङ्गः इत्येव प्रतिभाति। तस्माज्ज्ञानी सर्वव्यवहारेषु कर्ताप्यकर्तैव। "न कर्मणा लिप्यते पापकेन" इत्यादिश्रुतेः। ज्ञानोदयादनन्तरं प्रारब्धकृतशुभाशुभकर्मफलरूपसुखदुःखादिना नैव ज्ञानी सम्बद्ध्यते। तदेवं प्रारब्धवशादज्ञवत् ज्ञानिनाऽपि सर्वो व्यवहारस्तदनुकूला इच्छादयश्च सम्भवेयुरेव।

## (५०९-५१८) शुभसन्ततिराजप्रसङ्गः—

(५०९) शुभसन्ततिनामानं राजानं विहाय त्रयोऽपि तत्पुत्राः प्रोषिता अभवन्। तेषां पुत्राणां चरित्रं कथितम्। अधुना तत्पितुः प्रसङ्गः कथ्यते।

पुत्राणां प्रवासात्परं पितू राज्ञस्तीव्रवैराग्याभावात्तद्विरहप्रयुक्तं दुःखमभूत्। मन्दवैराग्यवशाद्विषयभोगात्सुखमपि नाभूत्। पुत्रप्रवासतस्तितिक्षायां

सत्यामपि राज्यं विहाय गन्तुं नाभूद्धैर्यम्। इतश्च तस्य दुःखमेवासीत्। सति हि तीव्रे वैराग्ये स राज्यं त्यक्तुं शक्नुयात्। तादृशवैराग्याभावेन राज्यपरित्यागस्तस्य नाभूत्। भोगासक्तिरपि तथा नाभूत्। तत उभयथापि तस्य दुःखमेवासीत्। परमार्थनिर्वेदाभावान्मन्दवैराग्यफलभूता उपास्यदेवताजिज्ञासैवाऽभूत्।

**(५१०) शुभसन्ततेः पण्डितसमाजे "को देवः सदा जागर्ति" इति प्रश्नः।** शुभसन्ततेर्मन्दवैराग्योदयोऽपि महाभाग्यवशादेव जातः। तेन च तस्य "को देव उपास्यः" इति जिज्ञासा समजनि। पण्डितवरानानाय्य यथोचितमासनादिषूपवेश्य 'पुरुषार्थलाभाय सर्वैरपि जनैराराध्योऽनिद्रोऽस्वप्नस्सदा भक्तजनपरिपालनव्यग्रश्च को देव इति पप्रच्छ। श्रुत्वैतद्राजवचनं पण्डितवरेषु कश्चित् एवं प्रतिवक्तुमुपचक्रमे।

**५११ विष्णूपासकस्योत्तरम्—**

भो राजन्। सकलवेदान्तशिरोमणिभूतं वासुदेवं शिवो विरिञ्चिश्च नित्यं सेवते। शङ्खचक्रधरः सर्वजनहितकारी, पद्मगदाधरः परोपकारी च स वासुदेवः। मङ्गलमूर्तिर्दयानिधिश्च। इत्थंभूतो महाविष्णुर्निजभक्तजनचित्ताभिज्ञः तत्तद्भक्ताभीष्टं क्षेमं प्रयच्छति। शक्ति-गणेश-सूर्य-शिवादयः सर्वेऽपि देवास्तदाज्ञावशंवदा इति भारतपाद्मपुराणादिषु नृसिंहतापिनीरामतापिनीगोपालतापिन्याद्युपनिषत्सु चोच्यते। सर्वञ्च जगद्विष्णुस्वरूपात्समजनि। सर्वपीडापहर्ता स एव। आराधयन्ति च सर्वेऽप्येनमेव। विविधमवतीर्य देवानां साहाय्यमकरोत्। तस्मात् विष्णुरेव सर्वैरुपास्यः। नान्यदुपास्यं तत्सममस्ति दैवतम्।

विष्णोरन्तरङ्गभक्तोऽपि **शिवो** नोपास्यं स्वरूपं धत्ते। शववत्सोऽमङ्गलस्वरूपी। ततोऽसावस्माकं न ध्यानार्हः। भस्मडमरुगजचर्मकपालमालाधरोऽयं अन्यस्मै कथं क्षेमङ्करः स्यात्। तत्पुत्रो **गणेशो**ऽपि तथैव। गणानामधिपतित्वेन श्रेष्ठो गणपतिरपि नरमृगमिश्रितं रूपं धत्ते। केचन हठाद् **देवी**-ध्यानं कुर्वन्ति। ततस्तत्समानरूपतां लभन्ते। स्त्रीस्वरूपं त्वतिनिन्द्यमशुच्यगणितावगुणयुक्तं विचित्रविभवाश्रयं कपटस्वरूपं नित्यपराधीनञ्च। ईदृशस्वरूपाभिलाषी यो नरः स गर्दभतुल्यस्तां सेवतु। **सूर्यो**ऽप्यहर्निशमविश्रममन्तरिक्षेऽलातचक्रवद्भ्रमीति। तदुपासकोऽपि तथैव सदा चञ्चलः स्यात्। तस्मात् समुत्सृज्यान्या देवताः सर्वाः सदा प्रबुद्धो महाविष्णुरेव सदा सर्वैः सेवनीय इति जानीहि।

तत्पूजाध्यानादिविविधप्रकारा नारदपाञ्चरात्रग्रन्थे कथिताः। विष्णूपासनातिरिक्तं उपासनचतुष्टयं यद्यपि लोकप्रसिद्धम्। तथापि तत्रैकैकोपासननिन्दया स्मार्तोपासनमपि निषिद्धं भवति। पञ्चापि देवताः समबुद्ध्या यत्रोपास्यन्ते तत्स्मार्तोपासनं इत्युच्यते। पञ्चायतनपूजनमपि शिवादीनां चतुर्णां विष्णुसमताबोधनात्स्मार्तोपासनमेव।

### ५१२ शिवोपासकस्यो[1]त्तरम्—

शिवोपासकः कश्चिन्मुनिः पूर्वोक्तं श्रुत्वाऽतीव संक्रुद्धोऽतितरां च रक्तनेत्र एवमाह—हे राजन् शृणु मे वचः। शिव एवोपास्यो न विष्णुः। सन्ति च कोटिशोऽत्र प्रमाणानि। भक्ताभीष्टसर्वस्वप्रदोऽन्यस्तत्समः को वास्ति लोकत्रयेऽपि। महाविष्णुना याचितः सकलमपि स्वकीयमैश्वर्यं तस्मै दत्वा स्वयं भस्मैवं धत्ते। अत एव चर्मकरोटिकादिकमपि दधार। न हि तस्यास्ति उत्तमाधमत्वसाध्वसाधुत्वादिभेदविवेचनम्। सर्वं सममेव तस्य। सम एव चासौ सर्वस्य। स्वयं नग्नो भूत्वा "वैराग्यान्न परं सुखस्य जनकं कुत्रापि सत्साधनमि"त्युपदिशति। इत्थं महादाता परमशिव एव। नरनार्यादीनां काश्यां म्रियमाणानां शीघ्रं स्वसा[2]युज्यमुक्तिं प्रयच्छति। न च ते गर्भवासादिदुःखं पुनः प्राप्नुवन्ति। शिवसमाः सर्वान्दिव्यभोगान् भुञ्जते। तदा चाय परमशिवो लैङ्गं शरीरं विहायाद्वैतब्रह्मात्मप्राप्त्युपायमुपदिशति।

विष्णुस्वभावस्त्वेवमिति श्रूयते—स हि भक्तमात्रपरिरक्षणपरः। नाभक्तरक्षकः। व्यासश्चावोचत् स्कान्दे पुराणे "हरिः सेवकः सेव्यश्च हर" इति। रामेश्वरे रामचन्द्रेण परमशिवः पूजित इति च। भारतपाद्मपुराणादिषु सर्वदेवेभ्यो हरिः श्रेष्ठ इत्युक्तेर्न स्वार्थे तात्पर्यम्, किन्तु भारततात्पर्यपर्यालोचनायां परमशिवस्यैवेश्वरत्वं प्रतीयते। इत्थमेव चाप्पै[3]य्यदीक्षिताख्यविदुषाप्यलेखि सर्वेतिहासपुराणानां तात्पर्यम्।

---

१. महोक्षः खट्वाङ्गः परशुरजिनं भस्म फणिनः  
कपालञ्चेतीयत्तव वरद तन्त्रोपकरणम्।  
सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां  
न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति॥ म-८॥

२. शिवसमानैश्वर्यविशिष्टशिवलोकमुक्तिम्।

३. अयञ्च दक्षिणदेशे काञ्चीपुरसमीपस्थाडयप्पलग्रामवास्तव्यः। परमशिवोपासकशिखामणिः। सिद्धान्तलेशसङ्ग्रहादिचतुरधिकशतप्रबन्धनिर्माता च।

भारततात्पर्यप्रसङ्गस्त्वयमेव—अश्वत्थाम्ना नारायणाग्नेयाद्यस्त्रप्रयोगे कृतेऽपि बहुसैन्यमरणं विना न कश्चित् पाण्डवेषु ममार। तदा च स रथं विहाय धनुर्वेदमाचार्यञ्च धिक्कृत्य वनञ्जगाम। तदा व्यासस्तं दृष्ट्वा इदमाह—"हे ब्रह्मन्! आचार्यवेदादिनिन्दा न कार्या। एतौ हि कृष्णार्जुनौ नरनारायणात्मकौ। एताभ्यामत्यन्तं पूजितः परमेश्वरस्तद्भक्त्यतिशयवशात्तदायत्तो भूत्वा महादेवः त्रिशूली तद्रथस्य पुरतः स्थित्वा त्वत्प्रयुक्तास्त्रशस्त्रादीनां सामर्थ्यं विनाशयति इति। इत्थं महाभारते महादेवकृपयैव नारायणस्वरूपस्यापि श्रीकृष्णस्य विभूत्यतिशयोऽभूदिति सिद्ध्यति। तस्माद्विष्णुचरित्रप्रतिपादको ग्रन्थः सर्वोऽपि शिवस्यैवाधिक्यं प्रतिपादयति। तेषु ग्रन्थेषु विष्णुः सेव्यतयोच्यते। भारतप्रसङ्गबलात्तु स विष्णुः शिवभक्त इति सिद्ध्यति। अतः स एव परमशिवः परमसेव्यो भवति। इत्थमप्पय्यदीक्षितः सकलेषु वैष्णवग्रन्थेषु शिव एव तात्पर्येण प्रतिपाद्यत इति प्रतिपादयामास। हरिस्तु शिवभक्ताग्रगण्यः। महादेवो महेश इति च तस्य शिवस्य नाम। तदितरेषां देवानां देवः ईश्वर इत्येव प्रसिद्धिः। शिवशब्दस्य मङ्गलमित्यर्थः। 'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्' इत्यमरः। शिवादन्यदशिवं सर्वम्। सर्वेऽपि देवाः शिवाद्भिन्ना अशिवा एव। (अमङ्गलस्वरूपा एव)। अतो विहायैनान् सर्वानेव देवानमङ्गलस्वरूपान् शिव एवैको ध्येयः सर्वैरपि शिवङ्करः।

अपि च विषं दृष्ट्वा भयमभूत् तदितरेषां सर्वेषां देवानाम्। तद्विषं कण्ठे एव निरुद्ध्य तेषामयं भयमपनुनोद। तत्सुतो गणेशः यद्यपि सकलान्विघ्नान् सद्य एवापहन्ति तथापि कार्यगुणस्य कारणाधीनत्वनियमात् सर्वविघ्नानां मूलतो विनाशकरः शिव एवेति विज्ञेयम्। जननमरणादिदुःखरूपा विघ्नाः सर्वेऽपि शिवध्यानमात्रादेव विनश्यन्तीति विद्यात्। इत्थं सर्वैः सदा सेव्यः सदाशिव एव। पाशुपततन्त्रे शिवपूजाविधयो निरूप्यन्ते। तदुक्तपूजाविधानेन स्तुतिनमस्कारादिना च शिवचरणसाक्षात्कारो जायेत। नारदपाञ्चरात्रमतं सूत्रभाष्याभ्यां व्यखण्डि। तदनुरोधि रामानुजादिनवीनवैष्णवमतमपि कल्पतरुव्याख्यानरूपे परिमले सम्यक् खण्डितम्॥

१. श्रीशङ्करभगवत्पादविरचितब्रह्मसूत्रभाष्य-व्याख्यानरूपस्य वाचस्पतिकृत-भामतीनिबन्धनस्य कल्पतरुः इति व्याख्या। तस्य च व्याख्यानं परिमलम्। तच्चाप्पय्य-दीक्षितरचितमिति दक्षिणदेशे प्रसिद्धिः।

## (५१३) गणेशपूजकस्योत्तरम्—

गणेशः शिवस्य पुत्रः। कारणगुण एव कार्येऽप्यनुवर्तत इत्येतच्छ्रुत्वा कुपितो गणेशपूजकः प्रत्युवाचेदम्—हे राजन्। शृणु मे वचः। एतावुभावपि मिथ्याभूतमर्थं सत्यत्वेन साधयतः। यद्गणेशः शिवपुत्रः पराधीनश्चेत्युक्तम्। तदसङ्गतम्। अत्र च व्यासेन भगवता पुराणोक्ता कथा काचित्कथ्यते। त्रिपुरसंहारार्थं हरिहरादयः सर्वेऽपि देवा जग्मुः। गणेशपूजाऽकरणान्न त्रिपुराः पराजिताः। पश्चाद्भयाकुलितचित्तास्ते सर्वेऽपि गणेशमाराध्य त्रिपुरानजयन्। यस्यैव गणेशस्य पूजया जयोऽभूद्देवानाम्, स एव सर्वैः सेव्य इति विज्ञायताम्। यथा पितुर्दशरथस्य मानुषस्य रामभद्रः पुत्रोऽभूदीश्वरोऽपि सन् तथैव परमशिवस्यापि गणेशः पुत्रो भूत्वा विघ्नान्निराचकार। गणेशपुराणमपि श्रीव्यासभगवानेवाकरोत्। तत्र सर्वस्यापि कारणं गणेश एवेति निरूपितम्। तस्य शुण्डादण्डादेव हरिहरविधिरविशक्तिप्रमुखाः सर्वेऽपि देवा अजायन्त। यस्तु विघ्नेशध्यानं क्षणमात्रमपि करोति, तस्य विघ्नाः सर्वेऽपि तत्क्षणादेव विनश्यन्ति। इत्थमहर्निशं भक्तियुक्तैर्विनायको विघ्नराज एव निष्कामतया सेव्यः। इति।

## (५१४) देवीभक्तस्योत्तरम्—

गणेशः सर्वस्यापि कारणमित्येतद्वचः श्रुत्वा भगवतीभक्त सगर्जनमिदमाह-हे राजन्! शृणु मे सत्यमिदं वचः। त्रिभिरप्येतैरुक्तमप्रमाणमेव। सर्वेऽप्येते देवाः शक्तिविरहिताः शवप्राया इत्येव विद्धि। शक्तिहीनो ह्यसमर्थ इत्युच्यते। कथन्नु तस्य कार्यनिर्वाहकत्वम्। ये तावदत्यन्तं शक्तिमुपासते, ते सर्वाधिकारिणो भवन्ति। हरिहरसूर्यगणपतिप्रभृतिष्वपि नानाविधाः शक्तयो दृश्यन्ते। लोके या या शक्तिरित्युच्यते, सा सा भगवतीस्वरूपैवेति जानीहि।

भगवत्या रूपद्वयमस्ति— (१) एकं सामान्यं (२) अपरं सविशेषम्। (१) सर्वेषु पदार्थेषु तत्तत्कार्यकरणानुकूलसामर्थ्यरूपा या शक्तिः सा भगवत्याः सामान्यं रूपम्। (२) अष्टभुजादियुक्ता या मूर्तिः सा तस्याः सविशेषं रूपम्। सामान्यशक्तेरंशास्तु सङ्ख्यातीता वर्तन्ते। यस्मिञ्छक्त्यंशो न्यूनो वर्तते, सोऽल्पशक्तिमान् असमर्थ इति उच्यते। यत्र शक्त्यंशोऽधिको वर्तते स समर्थ इत्युच्यते। शिव-विष्ण्वादिषु शक्त्यंशाधिक्यात् ते अतिसमर्थाः। इत्थं भगवत्यंशरूपशक्त्यंशाधिक्याद्विष्णुशिवगणेशसूर्यादिषु तेषां महिमा प्रसिद्धः। प्राणविहीनं शरीरं यथामङ्गलं तथा शक्तिविहीनाः सर्वे देवा अपि

अमङ्गला एव। तस्माद्यच्छक्त्याधिक्याद्देवानां महिमा स महिमा शक्तेरेव। न तु देवानाम्। शिवविष्ण्वादिभिर्भगवत्याः सामान्यरूपशक्तेर्विशेषत उपासनात् तेषां शक्त्यंशाधिक्यं वर्तते।

भगवत्या निराकाररूपायाः शक्तेर्यथाऽनेकेंऽशा वर्तन्ते। तथा साकाररूपायाः शक्तेरप्यनेकेंऽशा वर्तन्ते। तादृशेषु साकारांशेषु कालीरूपं प्रधानम्। माहेश्वरी, वैष्णवी, सौरी, गाणेशीत्यादयोऽपि प्रधानांशा एव। भगवत्युपासनयैव स्वे स्वे माहेश्वराद्या[1] अंशाः तैः प्राप्ताः। तत्रापि शिवविष्णू भगवत्या मुख्यौ भक्तौ। ध्यातुर्ध्येयरुपताप्राप्तिरुपासनायाः फलम्। शिवविष्णुभ्यामुपासनाबलाद्ध्येयरूपता लब्धा। अतस्तौ मुख्योपासकौ।

अमृतमथनेनामृतोद्भवसमये सुरासुरविवादं परिहर्तुं प्रवृत्तस्य विष्णोः सामर्थ्यहानिरभूत्। तदा स्वोपास्यदेवतां भगवतीं ध्यात्वा स्वयमेव तत्तादात्म्यमवाप। तद्रूपमाहात्म्यादसुरा अपि विष्णुपक्षपातिनोऽभवन्। तथा शिवोऽपि समाधौ भगवतीध्यानबलात् स्वार्धशरीरेण (अर्धनारीशरीरेण) उपास्योऽभूत्। विक्षेपवशात् समाध्यसंपूर्त्या तस्य विशिष्टं शरीरमुपास्यं नाभूत्। इत्थमेव सर्वेऽपि देवा भगवत्युपासका एव।

देव्युपासना दक्षिणोत्तरमार्गाभ्यां द्विप्रकारा कथ्यते। तत्र दक्षिणो मार्गः कथितः। उत्तरो मार्गः इतः कथ्यते। भगवतीभक्तेषु हरिहरादिवत् कोऽन्योऽस्ति तदुपासकः। तथापि महामायास्वरूपिणीध्याता तु सकलं पुरुषार्थं शीघ्रमेव लभते। एकत्रैव भोगमोक्षप्राप्त्युपायत्वं नान्यत्रैतस्माद्देवीध्यानादस्ति जगति। भगवतीभक्तः सकलान् भोगान् भुञ्जानोऽपि पुनर्गर्भवासं न भजते। शिवोक्तस्तन्त्रक्रम इह कथितः। भगवतीभक्तिरत्यन्तसुखप्रदा। निखिलैरपि प्राचीनैरनुष्ठिता। पञ्च मकाराः कदापि त्यक्तुं न शक्यन्ते। श्रीकृष्णबलरामादयः, सर्वेऽपि देवा, ज्ञानिनोऽपि प्रथममकारं सदा जलवदेवापिबन्। इतरेऽपि प्राचीनाः बहवो मकारमेवासेवन्त। मकारसेवनप्रकारः परमशिवेन परोपकाराय कथितः। शिववचनं मनसि कुर्वन्नस्मिन्नेव शरीरे भोगमोक्षादिकमनुभवति। श्रीव्यासभगवानेवैतद्भागवतमपि चकार। उपपुराणे हि कालीमवर्णयत्। भगवत्या भक्तिरेव श्रेष्ठत्वेन कथ्यते। सर्वेऽपि पूजाविधयस्तेनैव कथिताः।

---

१. एतच्च देवीभागवते विस्पष्टमुपलभ्यते।

हरिहरभानुगणेशादयो भगवतीध्यानेनैव जीवन्ति। मतिमन्तः सर्वेऽपि प्रथममकारपानेन मत्तमानसाः सन्तो भगवतीं पूजयन्ति। जगज्जननी सा देव्येकैव सदा जागर्ति। तत्सेव्यैव परमानन्दमनुभवति।

### (५१५) सूर्यभक्तस्योत्तरम्—

भगवतीमाहात्म्यं श्रुत्वा कुपितः सूर्यभक्त इत्थमुवाच—हे राजन्। मम सत्यं वचः शृणु। नानृतम्भवति मदुक्तम्। शतशः शपामि। मतान्तराणि पापिष्ठानि नीचतमानि च। सर्वलोकनिन्दिता गुणाः सर्वेऽपि देवीमार्गे उत्तमत्वेन कथ्यन्ते। अत्यन्तमलिनं मद्यं महापातककारणमपि तीर्थमित्युच्यते। मांसं च शुद्धमिति। विपरीतार्थावबोधकं शंम्भुतन्त्रमननुष्ठेयमेव बौद्धागमवत्। सर्वानुष्ठानयोग्यत्वेन दक्षिणसम्प्रदायस्य, श्रेष्ठत्वेऽपि यस्मिन् सर्वमनोबन्धो भवति तादृशसूर्याभावे सर्वोऽप्यन्ध एव स्यात्। सर्वावभासकः सूर्य एव। तदभावे सर्वत्र सर्वमन्धकारो व्याप्नुयात्। पदार्थावभासकतेजोऽन्तराण्यपि सूर्यस्यांशभूतान्येव। भानुसमानः को वाऽस्ति लोकस्य हितकारी। परहितार्थमेवासावन्तरिक्षेऽविश्रमं परिभ्रमति। सर्वं हि कार्यं कालाधीनमेव। स एवैकोऽपि भूतभव्यभविष्यद्रूपेण त्रिधोच्यते। सूर्यगत्यैव सूत्रात्मतया सर्वाः क्रियाः क्रियन्ते। अनेन विधिना सर्वं भानोरुदजायत। तत्कोपात्सर्वं भस्मीभवेत्। तस्य साकारनिराकारभेदेन रूपद्वयं भवति। तत्र **निराकारः प्रकाशः** सकलनामरूपे व्याप्य वर्तते। यदेव च वेदान्तिभिर्भातीतिशब्देन व्यवह्रियते, तदेव निराकारप्रकाशात्मकमादित्यगतं निराकारस्वरूपम्। तदेव च सर्वजगदधिष्ठानम्। तदज्ञानवशादेव जगद्रूपो विवर्तो जायते। तादृशो निराकारःप्रकाश एव अन्तःकरणवृत्तिस्थप्रतिबिम्बविशिष्टश्चेत् ज्ञानमित्युच्यते। "अहं भानुरि" त्यन्तःकरणवृत्तिः प्रकाशप्रतिबिम्बेन सहैव यदोदेति, तदाऽज्ञाननिवृत्या जगदपि निवर्तते।

**सूर्यस्य साकारं स्वरूपं निरूप्यते**—प्रातःकाले यत्तेजः प्रकाशते, तदेव साकारं स्वरूपम्। चन्द्रतारादीपादयोऽपि तदंशभूता एव। निराकार·

---

१. शंभुतन्त्रं नाम—पामराणां देहाभिमाननिवृत्तिद्वारा तदतिरिक्तात्मास्तित्वबोधनार्थं वेदानधिकारिणां कचिद्रुच्युत्पादनाभिप्रायेण शिवकृतं तन्त्रं शिवतन्त्रं (वामतन्त्र) मित्यप्युच्यते।

२, वेदस्य अन्तः समाप्तिः=चरमभागः=सिद्धान्तः=वेदान्तः। उपनिषत्

साकारभेदवशात् सूर्यस्य यद्द्विरूपत्वं वर्तते तत्र निराकारं रूपमेव ज्ञेयम् साकारं तु रूपं ध्येयम्। एतदेव रूपद्वयं वेदान्तेषु "निर्गुणसगुणभेदेन द्विरूपं ब्रह्मे"त्युच्यते। यत्र हि कालत्रयेऽपि अन्धकारलेशोऽपि न सम्भवति, तद्दर्शनमात्रादेव सर्वेऽपि स्वस्वकर्माण्यारभन्ते। स एव विनिद्रः सदा जागर्ति देवः। तद्ध्यानादन्धकारो विनश्यति। इतरे देवा जाग्रतीत्येतन्मिथ्येति विद्धि इति।

## (५१६) पूर्वोक्तमतानुवादः स्मार्तमतं च—

उक्तानां उपासकानां यथा परस्परविरुद्धाभिधायकत्वम्, एवमेवान्येषा[१]मपि बहूनां पण्डितानां स्वस्वबुद्ध्यनुसारतो विरुद्धाभिधायित्वमेव। यद्यपि स्मार्ताः पण्डिताः पूर्वोक्तासु पञ्चस्वपि देवतासु भेदबुद्धिं न कुर्वंति तथापि तन्मतमपि एतन्मतविरोध्येव। वैष्णवस्य त्विदं मतम्—"न हि विष्णुतुल्यमस्ति देवतान्तरम्। इतरे सर्वेऽपि देवा विष्णुभक्ता एव। विष्णोः श्रीरामकृष्णनारायणादीनि नामानि यस्त्वितरदेवतानामभिः समतया जानाति, स ना[२]मापराधी स्यात्। रामकृष्णादिनामोच्चारणफलञ्च नाप्नोति "इति। एवं शिवमतेऽपि" नैवास्ति शिवतुल्यं देवतान्तरम्। शिवनामोच्चारणफलं विष्वादिनामोच्चारणेन नैव लभ्यते इति। इत्थं सर्वमतेष्वपि स्वस्वोपास्यदेवतातुल्यं नास्ति देवतान्तरम्। स्मार्ते तु मते सर्वेऽपि देवाः समाः। तस्मात् स्मार्तमपि मतं पूर्वोक्तपञ्चमतविरुद्धमेव।

## (५१७) षट्च्छास्त्राणां परस्परविरोधः।

1. साङ्ख्य, 2. पातञ्जल, 3. न्याय, 4. वैशेषिक, 5. पूर्वमीमांसा, 6. उत्तरमीमांसारूपाणि षट्च्छास्त्राण्यपि परस्परविरुद्धान्येव। यतः—

---

१. योगिनैयायिकहिरण्यगर्भीयविराडुपासकप्रजाकामादिमताभिमानिनाम्।

२. सन्निन्दाऽसति नामवैभवकथा श्रीशेशयोर्भेदधी-
रश्रद्धा श्रुतिशास्त्रदेशिकगिरां नाम्न्यर्थवादभ्रमः।
नामास्तीति निषिद्धवृत्तिविहितत्यागौ च धर्मान्तरैः
साम्यं, नामनि शङ्करस्य च हरेर्नामापराधा दश॥

इत्युक्तदशापराधेषु एकोऽपि यः कश्चिदपराधो यस्यास्ति स नामापराधी। एवं दशापराधहीन एकोऽपि दुर्लभः। दशापराधान् विनैव यदि नाम कश्चिन्नामसङ्कीर्तनं कुर्यात् स कोटियज्ञफलं लभेत॥

१. साङ्ख्यमते ईश्वरो नाभ्युपगम्यते। समाध्यात्मकयोगापेक्षां विनैव केवलप्रकृतिपुरुषविवेकादेव मोक्षो भवतीत्यभ्युपगम्यते।

२. पातञ्जले मते ईश्वरोऽभ्युपगम्यते। मोक्षश्च समाधिना। तस्मात् साङ्ख्यपातञ्जलमतयोरन्योन्यं विरोधः।

३-४. न्यायमते चत्वारि प्रमाणानि। वैशेषिकमते द्वे प्रमाणे। इत्यन्योन्यं विरोधः। एवमन्येऽपि विरोधा वर्तन्ते। जिज्ञासूनां अनपेक्षितत्वात् तेऽत्र न लिख्यंते।

५. पूर्वमीमांसकमते ईश्वरः मोक्षरूपं नित्यसुखञ्च नाभ्युपगम्यते। किन्तु कर्मजन्यं विषयसुखमेव पुरुषार्थः इत्युच्यते।

६. उत्तरमीमांसायां तु ईश्वरो मोक्षश्चाङ्गीक्रियते। विषयसुखं न पुरुषार्थः। उत्तरमीमांसाभिमतं मतमेवास्मिन्ग्रन्थे स्फुटतरमुक्तम्। एवं सर्वमपि शास्त्रं अनेन विरुध्यते। शास्त्रान्तरेषु भेदवादो निरूप्यते। अस्मिंस्तु शास्त्रे भेदखण्डनपूर्वकमभेद एव प्रतिपाद्यते। इत्थ सकलमपि शास्त्रं परस्परविरुद्धमेव।

### (५१८) तर्कदृष्टेः पितृदर्शनम्।

ईदृशविरुद्धवादश्रवणेन राज्ञः इतोऽप्यपूर्वः संशयः समजनि। सर्वेऽपि हि युक्तिप्रमाणोपेतमेव कथयन्ती'ति। "एवं वदतां" कस्य मतं प्रामाणिकं यथार्थभूतं चेति। एतादृशसंशयशोकदुःखाद्याविष्टस्य राज्ञो मनस्युपास्यदैवमिदमेवेति निश्चयो नाभूत्। एतत्संशयनिवर्तकः को वास्ति इति चिन्ताकुलो जातः। अस्मिन्नवसरे तर्कदृष्टिर्यदृच्छया पितृदर्शनाय तदन्तिकमाजगाम। तावुभावपि परस्परमालिलिङ्गतुः। तर्कदृष्टिः पुत्रः पितरं यथाविधि प्रणनाम। पितापि पुत्रायाशिषः कृत्वाऽऽसनमदात्।

---

१. निरीश्वरसाङ्ख्यमते। तट्टीका (३४२) आवर्ते

२. प्रत्यक्षम्, अनुमानम्, शब्दः, उपमानम्। तद्विवरणम् (१६६) आवर्ते।

३. प्रत्यक्षम्, अनुमानम् (१६१ आवर्ते)।

४. कस्याश्चिद्वृद्धस्त्रियो गृहद्वारि कश्चन मार्जारो मृतोऽभूत्। सा तं ग्रामाद्बहिर्निःसार्य यावत्प्रत्यागता तावत्प्राग्द्वारि रुग्णः कश्चिदुष्ट्रो मृतोऽभूत्। यथास्याश्चिन्तायाश्चिन्तान्तरं महदुदभूत् तथा शुभसन्तेरप्युपास्यदेवताविषयकाज्ञाननिवृत्तये पण्डितान्पृष्टवतः संशयान्तरमेव नवमभूत्। तन्निवृत्त्यर्थं तस्य महती चिन्ताप्यभवत्।

**५१९. तर्कदृष्टिकृतः पित्रुपदेशः । कारणस्वरूपमुपास्यम्—न कार्यस्वरूपम् ।**

पितुश्चिन्ताक्रान्ततां दृष्ट्वा तात ? भवच्चित्तस्य कुतो व्याकुलता इति **तर्कदृष्टिः** पितरं पप्रच्छ ।

**शुभसन्ततिः** स्वपुत्रोक्तं श्रुत्वा स्वचिन्ताकारणीभूतं विशिष्टं वृत्तान्तमकथयत् । किमेकमुपास्यं दैवतमिति पप्रच्छ च ।

तर्कदृष्टिः पितृवचनं श्रुत्वा तस्य शुभोदयार्थमाह । कारणस्वरूपमेवोपास्यं न कार्यस्वरूपम् । कारणस्वरूपस्य नामान्यनन्तानि । अयमेव च वेदस्य मुख्यः सिद्धान्तः । इतिहासपुराणादिष्वप्ययमेव सिद्धान्तो भगवता वेदव्यासेन निरूपितो नान्यः । पण्डितास्त्विममभिप्रायमजानंतः परस्परं मतान्तरं खण्डयन्ति । श्रीनीलकण्ठपण्डितेनापि भारतव्याख्यानारम्भे प्रसङ्गादयमर्थो निरूपितः । तत्रैवोत्तमः श्रुतिसिद्धान्तोऽपि यथावन्निरूपितः ॥

**५२०. पुराणेषु श्रूयमाणयोस्स्तुतिनिन्दयोर्न्यासाभिप्रायः ।**

**ननु** सर्वपुराणकर्ता श्रीवेदव्यास एक एव । स हि स्कन्दपुराणे शिवस्य स्वातन्त्र्यादीश्वरधर्माः सन्तीति प्रतिपादयामास । देवतान्तराणाञ्च शिवकृपयैव सर्वविभूत्यतिशयो जायत इति च । तथा तेनैव विष्णुपुराणे पाद्मपुराणादौ च विष्णोरीश्वरत्वमुक्तम् । इत्थमेव पुराणेषु उपपुराणेषु च शिवविष्णुभिन्नगणेशादिदेवानामपीश्वरत्वं प्रतिपाद्यते । तदेवं व्यासवचसां परस्परविरोध उपलभ्यते । इति।

**अत्राभिधीयते**—सर्वे[1]ऽपीश्वरा एव । यत्र यस्य देवस्योपास्यत्वप्रतिपादनतात्पर्येण तदितरदेवतानिन्दा श्रूयते तत्र तन्निन्दायाः तदुपासनपरित्यागे न तात्पर्यम् । किन्तु प्रकरणिस्तुत्या तदुपासनायामेव । यथा विष्णुपुराणेषु शिवादिदेवतानिन्दा विष्णुस्तुतिद्वारा तदुपासनाप्रवृत्तावेव हेतुः । एवं शिवपुराणादिषु कृता विष्ण्वादिनिन्दापि शिवस्तुतिद्वारा तदुपासनाप्रवृत्तावेव हेतुः । नेतरोपासनापरित्यागे। एकत्र कृता देवतान्तरनिन्दा तद्देवतान्तरोपासनापरित्यागार्था यदि स्यात् तदा सर्वदेवतोपासनापरित्यागप्रसङ्ग एव स्यात् । तस्मादन्यदेवतानिन्दाऽन्यस्य कस्यचिदुपास्यस्य स्तुतये। न तु तदुपासनापरित्यागाय॥

---

१. सर्वशब्देन विष्णुशिवगणेशदेवीसूर्यादयो गृह्यन्ते ।

**अत्र दृष्टान्तः**—वेदेऽग्निहोत्रस्य द्वौ कालावुक्तौ। एकः सूर्योदयात्प्राक्। द्वितीय उदयादनन्तरः। "उदिते जुहोत्यनुदिते जुहोती"ति।

तत्रानुदितहोमप्रसङ्गे उदितहोमो निन्द्यते। उदितहोमप्रसङ्गे चानुदितहोमः। तत्र यदि निन्दाया अग्निहोत्रान्तरपरित्यागे तात्पर्यम् स्यात्, तर्हि कालद्वयेऽप्यग्निहोत्रपरित्यागप्रसङ्ग एव। न हि नित्यस्य कर्मणः परित्यागः सम्भवति। तस्मादुदितहोमस्तुतयेऽनुदितहोमनिन्दा। अनुदितहोमस्तुतये चोदितहोमनिन्दा क्रियते। एवमेवैकदेवतोपासनाप्रसङ्गे देवतान्तरनिन्दायास्तात्पर्यं प्रकृतोपास्यदेवतास्तुतावेव। न देवतान्तरनिन्दायाम्।

**(५२१) पञ्चदेवतोपासनायाः फलमेकमेव (ब्रह्मलोकः)—**

शुक्लकृष्णयजुःशाखाभेदेन केचनानुदितहोमं कुर्वन्ति। केचनोदितहोमञ्च। उभयेषाञ्च फलं समानमेव। तथा इच्छाभेदवशात् पञ्चस्वपि देवतासु यस्याः कस्याश्चिदुपासनायां क्रियमाणायां पञ्चभिरप्युपासनाभिर्ब्रह्मलोक एव प्राप्यते। तत्रत्यभोगानुभवानन्तरं विदेहमोक्षः सिद्ध्यति। यद्यपि विष्ण्वादिदेवतोपासनया वैकुण्ठादिलोक एव प्राप्यते इति पुराणेषूच्यते, न तु ब्रह्मलोकः। तथापि विदेहमुक्त्यधिकारित्वादुत्तमोपासका देवयानमार्गेण ब्रह्मलोकमेव गच्छन्ति। एक एव ब्रह्मलोको विष्णूपासकस्य वैकुण्ठरूपेण भाति। तत्रत्याः सर्वेऽपि चतुर्भुजा एव लक्ष्यन्ते। स्वयमपि चतुर्भुजो भवति। शिवोपासकस्य शिवलोकत्वेन भाति। तत्रत्याः सर्वे त्रिणेत्रधारिणः प्रतीयन्ते। स्वयमुपासकोऽपि तथैव भवति। एवमेव सर्वेषामपि तत्तदुपासकानामेक एव ब्रह्मलोकस्तत्तदुपास्यलोकात्मना प्रतीयते।

**अत्रायं नियमः**—देवैयानमार्गं विना मार्गान्तरेण गन्ता पुनः पुनः संसारमेव गच्छति। ब्रह्मलोकगमनमार्गस्तु देवयानाख्य एक एव। तस्माद्वि-

---

१. देवयान-पितृयाण-जायस्वम्रियस्वेति त्रिविधाः संसारमार्गाः।

(1) सूर्यमण्डलं भित्वा ब्रह्मलोकगमनमार्गो देवयानः पन्थाः अर्चिरादिमार्ग इति चोच्यते।

(2) चन्द्रमण्डलं भित्वा इन्द्रलोकगमनमार्गः पितृयाणमार्गः, धूमादिमार्ग इति चोच्यते।

(3) पुनःपुनर्जननमरणादिप्रवाहकारणीभूतो मृत्युलोकगमनमार्गो जायस्वम्रियस्वेति तृतीयः कष्टो मार्गः।

तुरीयो मोक्षमार्गस्तु ब्रह्मज्ञानात्मक एव।

देहमुक्तियोग्या उपासकाः सर्वेऽपि ब्रह्मलोकं गच्छन्ति। तादृशे ब्रह्मलोके उपासकेच्छानुसारेण सकलसामग्रीविशिष्टतत्तल्लोकात्मना प्रतीयमानस्वरूपोऽद्भुतो महिमा वर्तते। एवं पञ्चदेवतोपासनायाः फलमेकमेव।

**(५२२) एकस्मिन्नेव परमात्मनि नानानामरूपप्रतीतिसम्भावना।**

**ननु** पञ्चानामपि देवानां नामरूपादयो विभिन्नाः कथ्यन्ते। ईश्वरस्त्वेक एव। कथंन्विदमेकस्यैव नानानामरूपवत्वादि सम्भवेत् इति चेत्। **अत्राभिधीयते**। परमार्थतो न किञ्चिदपि नामरूपादिकं परमात्मनि युज्यते। अथापि मन्दबुद्धीनामुपासनार्थं नामरूपरहिते एव परमात्मनि नामरूपादिकं काल्पनिकमेवोपेयते। तस्मात् एकस्मिन्नेव परमात्मनि मायाकल्पितं नामरूपादिकं नानाविधं सम्भवत्येव। इत्थं हि सर्वपुराणवाक्यानां विरोधोऽपि निवर्तते।

**(५२३) सर्वेषामपि पुराणानां कार्यकारणब्रह्मोपासनाबोधनक्रमवशाद्धेयोपादेयविषयकत्वतात्पर्यनिरूपणम्।**

पुराणवाक्यानां परस्परविरूद्धाभिधायकत्वशङ्काया मुख्यं समाधानम्—शिवविष्णुगणेशदेवीसूर्यादिकं नाम प्रत्येकं कारणब्रह्मबोधकम्। कार्यब्रह्मणामपि समानमेवैतन्नामजातम्। मायाविशिष्टं चैतन्यं कारणं ब्रह्मेति कथयन्ति। कार्यभूतं हिरण्यगर्भमपि ब्रह्मेति वदन्ति। इत्थं कारणं ब्रह्म, कार्यं ब्रह्म चेत्युभयविधमपि ब्रह्म विष्णुशिवादयः शब्दा बोधयन्ति। तथैवैतेषां पञ्चानामपि देवानां नारायणनीलकण्ठविघ्नेशशक्तिभान्वित्यादीन्यप्यनन्तानि पर्यायपदानि विद्यन्ते। तान्यपि कारणकार्यात्मकमुभयरूपमपि ब्रह्म बोधयंति। क्वचित्कारणं ब्रह्म क्वचिच्च कार्यं ब्रह्म प्रसङ्गानुसारेण बोधयंति। यथा सैन्धवशब्दोऽश्वलवणोभयबोधकोऽपि, भोजनप्रकरणे लवणम्, गमनप्रकरणेऽश्वञ्च बोधयत्येवम्।

**(५२४) वैष्णवादिग्रन्थस्थविष्ण्वादिस्तुतिशिवादिनिन्दावचननां** व्यासाभिप्रायस्त्वयमेव। कारणं ब्रह्मोपास्यम्। कार्यं तु ब्रह्म नोपास्यमिति।

१. तत्र वैष्णवेषु पुराणेषु विष्णुनारायणादिशब्दाः कारणं ब्रह्म बोधयन्ति। शिवगणेशशक्तिसूर्यादिशब्दास्तु तत्रत्याः कार्यमेव ब्रह्मापकृष्टम्। एवमन्यत्रापि।

(२) **स्कन्दपुराणादिशैवग्रन्थेषु**—शिवमहेशादिशब्दाः कारणं ब्रह्म बोधयन्ति। विष्णुगणेशदेवीसूर्यादिशब्दास्तु कार्यं ब्रह्म।

(३) **गणेशपुराणेऽपि**—गणेशपदं कारणस्य ब्रह्मणः, विष्णुशिवादि-पदानि कार्यस्य ब्रह्मणश्च वाचकानि।

(४) **काली (देवी) पुराणे**—कलीदेव्यादिशब्दाः कारणं ब्रह्म, विष्णु शिवसूर्यादिशब्दाः कार्यं ब्रह्म च बोधयन्ति।

(५) **सौरपुराणे** च—भानुसूर्यादयः शब्दाः कारणस्य ब्रह्मण शिवादिशब्दाः कार्यस्य ब्रह्मणश्च बोधकाः। तस्मात्सर्वत्र कारणस्तुतिः कार्यनिन्दा चोपपन्नैव।

एवं निखिलेषु पुराणेषु कार्यकारणसंज्ञारूपाणां सङ्केतानामेव भेदः। न तु हेयोपादेयरूपे विवक्षितेऽर्थे। सर्वपुराणेषु कारणब्रह्मोपासना उपादेया। कार्यब्रह्मोपासना च हेया। तस्मात् सर्वपुराणानामपि एकं कारणमेव ब्रह्मोपास्य-मित्यत्रैव तात्पर्यम्। न तेषां स्वार्थे विरोधः।

## (५२५) मूर्तिप्रतिपादनाभिप्रायः (५१५-५१६)

यद्यपि चतुर्भुजत्रिनेत्रसतुण्डाष्टभुजादिमूर्तयो मायापरिणामाः चैतन्य-विवर्ताश्चेति कार्यात्मका एव। तासामुपासना च विहिता। तथापि, तादृश-चतुर्भुजादिमूर्तीनां यत्कारणात्मकं मायाविशिष्टं चैतन्यं तद्विचारे क्रियमाणे न कोऽपि भेदः सिध्यति। तस्मात् तत्तन्मूर्तीनां कार्यात्मकमाकारं बाधित्वा कारणस्वरूपमेवोपास्यमित्यत्रैव सर्वग्रन्थानां तात्पर्यम्। आकारः कार्यत्वात् तुच्छः। कारणं सत्यम्। यस्य तु मन्दा प्रज्ञाऽऽकार एव स्थिरा भवति, स शास्त्रोक्ताकारोपासनामेव कुर्यात्। ततः प्रज्ञा निश्चलीभूय कारणब्रह्मोपासनायां स्थिरीभवति।

## (५२६) कारणब्रह्मोपासनाः—

कारणब्रह्मोपासनाप्रकारस्त्वयमेव। ब्रह्म जगत्कारणं सत्यकामत्वसत्य-सङ्कल्पत्वसर्वज्ञत्वस्वतन्त्रत्वसर्वप्रेरकत्वसर्वान्तर्यामित्वकृपालुत्वेश्वरत्वादिधर्मवि-शिष्टत्वेन ध्यायीत। न हि मूर्तिध्यानेऽस्ति शास्त्रस्य तात्पर्यम्। शास्त्रेष्वने-कमूर्तिप्रतिपादनं च नोपासनार्थमेव। किन्तु, कारणब्रह्मोपलक्षणार्थमेव। यद्वस्तु यस्यैकदेशैककालगतत्वेन कदाचिद्व्यावर्तकं तत् तस्य व्यावर्तकत्वेनोपलक्षण-

मित्युच्यते । "काकवद्देवदत्तगृहमि" त्यस्मिन्नुदाहरणे काको देवदत्तगृहस्य उपलक्षकं भवति। यतः, गृहैकदेशे काकः कदाचिदेवोपविष्टो भवति, न सर्वदा। गृहान्तराद्देवदत्तगृहस्य व्यावर्तकश्च भवति। एवं जगतः कारणे ब्रह्मणि तदेकदेशे कदाचिदेव मूर्तिर्भवति चतुर्भुजत्वादिरूपा। तस्माद्व्यावर्तकत्वादुपलक्षका भवति। उपलक्षणस्य चेदं प्रयोजनम्। यत् विशेषवस्तुस्वरूपज्ञानोत्पत्तिरेव। यथा काकेन देवदत्तगृहज्ञानमेव जायते। नास्ति च प्रयोजनान्तरम्। तथा चतुर्भुजत्वादितत्तदाकारविशेषैर्निराकारकारणब्रह्मज्ञानमेवोपासनार्थमूर्तिकथने प्रयोजनम् नान्यत् ॥

**(५२७) शास्त्रतात्पर्यानभिज्ञतया मूर्त्याकारेष्वाग्रहवतां शैवादीनां दुःखानुभवः—**

मन्दप्रज्ञास्तु शास्त्राभिप्रायानभिज्ञतया स्वस्वाभिलषितशिवविष्वाद्याकारविशेषेष्वेवाग्रहं कुर्वन्ति। स्यालसारमेयन्यायेन परस्परं कलहायन्ते च। भार्यासहोदरस्य स्याल इति नाम। शुनः (कुक्कुरस्य) सारमेय इति नाम। दृष्टान्तस्य न्याय इति नाम। कस्यचित् स्यालकस्य नाम उत्पालक इति। तत्स्यालशत्रोश्च नाम धावक इति। तथा तद्गृहस्थस्य कस्यचित् शुनश्च धावक इत्येव नाम। समीपगृहस्थस्य शुनश्च नाम उत्पालक इति। तत्र तत्पुरुषस्य भार्यायाः स्वभर्तृगृहप्रवेशोऽयं प्रथमः। तदा द्वावपि श्वानावन्योन्यं सदा कलहं कुर्वाते। तत्र स्त्रियो भर्तृश्वश्वादय उत्पालकं निन्दित्वा स्वकीयं धावकं बहुमन्यन्त। तदा तस्यास्त्रियो मत्सहोदरमेते निन्दित्वा तद्विरोधिनं स्तुवन्तीत्ययं भ्रमोऽभूत्। तेन दूषितान्तःकरणा स्वभर्तरि स्वक्लेशं विज्ञापयामास। यथात्र वक्त्रभिप्रायानभिज्ञा समानाभिधानभ्रान्त्या स्त्री दुःखमन्वभूत्। तथैव वैष्णवादिग्रन्थेषु शिवादिनामभिः कार्यं ब्रह्मैव निन्द्यत इत्यभिप्रायानभिज्ञतया शैवादयो वृथा दुःखायन्ते। तथा वैष्णवा अपि शैवादिग्रन्थेषु विष्ण्वादिनामभिः कार्यं ब्रह्मैव निन्द्यत इत्यजानन्तो दुःखमनुभवन्ति।

**(५२८) शुभसन्ततेः प्रश्नः। उत्तरमीमांसायाः प्रामाण्यम्, तदितरशास्त्राणामप्रामाण्यञ्च—**

शुभसन्ततिः स्वपुत्रोक्तं वचः श्रुत्वा, पुराणानां परस्परविरोधशङ्कायाः समाधानं च लब्ध्वा, सुख्यभूत्। परंतु षड्च्छास्त्राणां परस्परविरोधाशङ्कानि-

---

१. स्यालः = देवरः। सारमेयः = श्वा।

वृत्त्यभावाद्विशेषतः सुखी नाभूत्। अतो यच्छास्त्रविज्ञानेन परमार्थसत्यमवबुद्ध्येत, किन्तच्छास्त्रं सत्यभूतमिति पुनः पुत्रं पप्रच्छ।

(५२९) **तर्कदृष्ट्युत्तरम्**--

तर्कदृष्टिः स्वपितृवचनं श्रुत्वा परमप्रमाणभूतं वचोऽब्रवीत्। उत्तर-मीमांसोपदेश एव न वेदविरुद्धः। इतराणि तु पञ्चापि शास्त्राणि वेदविरुद्ध-त्वादशुद्धान्यप्रामाणिकानि इति। तत्रापि वेदाविरुद्धानंशान् वेदानुसारित्वात् केचन मन्दाधिकारिणोऽनुतिष्ठन्ति। यद्यपि—

(१) साङ्ख्यशास्त्रकर्ता कपिलः।

(२) पातञ्जलस्य कर्ता पतञ्जलिः शेषावतारभूतः।

(३) न्यायशास्त्रकर्ता गौतमः।

(४) वैशेषिकशास्त्रकर्ता कणादः।

(५) पूर्वमीमांसाकर्ता जैमिनिः।

(६) उत्तरमीमांसाकर्ता व्यासः।

एतेषां माहात्म्यं च सुप्रसिद्धं सर्वेषाम्। तस्मादेतेषां वचनरूपं शास्त्रं सर्वमपि सममेव प्रमाणं स्यात्। तथापि सर्ववाक्येभ्योऽपि वेदवाक्यमेव प्रबलं प्रमाणं भवति। वेदस्य हि कर्ता सर्वेश्वरः। नैव तत्र भ्रमसंशयप्रमादविप्रलि-प्सादयः सन्ति दोषाः। तदितरशास्त्रकर्तारस्तु जीवा एव। एतेषां भ्रमादयो दोषाः सम्भवेयुरेव।

यद्यपि शास्त्रकाराः सर्वे सर्वज्ञाः कथ्यन्ते। तथापि तेषां सर्वज्ञताया योगमा-हात्म्यजन्यत्वाद्युञ्जानयोगिनस्ते भवन्ति। ईश्वरसर्वज्ञतायाः स्वभासिद्धत्वादी-श्वरो युक्तयोगी। ध्यानेन पदार्थज्ञानं यस्य जायते स युञ्जानो योगीत्युच्यते। यस्य पुनः सर्वदा एकरसतया सर्वपदार्थगोचरापरोक्षप्रतीतिर्जायते स युक्तो योगी-त्युच्यते। तत्र युक्तयोगिकृतवेद एव प्रबलं प्रमाणम्। युञ्जानयोगिकृतं शास्त्रान्तरजातं सर्वमपि दुर्बलमेव।

(५३०) अतो वेदानुसारि शास्त्रमेव प्रमाणम्। वेदविरुद्धमप्रमाण-मेव। पञ्चापि शास्त्राणि अप्रमाणानि। वेदविरुद्धत्वात्। वेदविरोधित्वं तेषां विस्पष्टं निरूपितम्। उत्तरमीमांसा तु न कस्मिंश्चिदप्यंशे वेदविरुद्धा भवति। अत एव सा सर्वथा प्रमाणम्। शास्त्रान्तराण्यपि क्वचिदंशे वेदानुसारितां तत्र दृष्ट्वा मन्दधियः केचन विश्वसन्ति। तथापि वेदविरुद्धांशबाहुल्यात्

सुतरां तानि परित्याज्यान्येव । क्वचिदंशे विरोधेऽपि क्वचिदंशे वेदानुसारित्वात् तान्यपि अङ्गीकार्याण्येवेति चेत् । तर्हि जैनमपि शास्त्रम् "अहिंसा परमो धर्मः" इत्यहिंसांशे "न हिंस्यात् सर्वा भूतानी"ति वेदानुसरित्वादङ्गीकार्यं स्यात् । जैनशास्त्रन्तु वेदबाह्यत्वेन हेयमेव ।

यद्यपि सुगत ईश्वरावतारः बुद्ध इति चोच्यते । तद्वचनमपि वेदवत् प्रमाणीकर्तव्यमेव । तथापि स विप्रलिप्सानिमित्तमेवावततार । तस्मात् तद्वचनं सर्वथाप्यप्रमाणमेव । वंचनेच्छा विप्रलिप्सा । अत एव सर्वांशेऽपि वेदानुसारित्वादुत्तरमीमांसैव सर्वथा मुमुक्षुभिरुपादेया । उत्तरमीमांसा हि सूत्रात्मना श्रीवेदव्यासेनाकारि । तद्व्याख्यानानि च नानारूपाणि अनेककृतानि सन्ति । तथापि भगवत्पूज्यचरणश्रीशङ्कराचार्यकृतं भाष्यात्मकं व्याख्यानमेव वेदानुसारि वर्तते । नेतराणि । पञ्चमतरङ्गे चैतदुक्तम् । तस्माच्छास्त्रान्तराणि सर्वाण्यपि पञ्च अप्रमाणान्येव ।

**(५३१) शास्त्रान्तराण्यप्रमाणानीत्यतो हेयानि, तत्र दृष्टान्तो, हेतुश्च कथ्यते (५२१-५२२)**

अस्मिंस्तरङ्गे पूर्वं शास्त्राणां सर्वेषां मोक्षोपयोगिता तर्कदृष्टिसारग्राहिविवेकवशादभिहिता । यथा कश्चिच्छत्रुरसिना रुग्णं कञ्चिदच्छिनत् । तदा बही रुधिरागमनाद्दैवगत्या तद्रोगनिवृत्तिरभूत् । तत्र सारग्राही पुरुषः स्वशत्रुं हन्तारमसिपाणिनमपि उपकारकत्वेनैव मन्यते । तथा शास्त्रान्तरेणापि येन केनापि प्रकारेणान्तःकरणशुद्धिनैश्चल्योत्पत्तिवशात् संसाराद्विनिवृत्तस्य पुरुषस्य वेदानुसारिनिश्चयकरणान्मोक्षो जायेतेति नैवात्राग्रहः सर्वथापि कर्तुं शक्यते । अन्धगोलाङ्गूलन्यायेनानर्थप्राप्तिप्रसङ्गात् । तस्माद्विहाय शास्त्रान्तराण्यपि सकलानि शुद्धाद्वैतव्याख्यानरीत्या शारीरकोत्तरमीमांसैव ग्राह्या ।

**(५३२) अन्धगोलाङ्गूलन्यायः—**

कस्यचिद्धनिकस्य पुत्रं सर्वाभरणभूषितं चोरा वनमानीयाभरणान्यपि सर्वाण्यपहृत्य तन्नेत्रे बद्ध्वा विजने विसृज्य जग्मुः । तदा तत्र रुदन्तं तं बालं निर्दयः कश्चिदतिवञ्चकोऽतिबलिष्ठमुन्मत्तं कञ्चिद्बलीवर्दं लाङ्गूले तद्धस्तेन ग्राहयित्वा मा त्यजास्य लाङ्गूलम् । शीघ्रं स्वग्राममनेन प्राप्नोषीत्यवोचत् । स च दुःखी बालस्तद्वचनं विश्वस्य तदुक्तमनुष्ठाय ततोऽपि महत् दुःखमनुभूय विनष्टोऽभूत् । तद्वद्विषयरूपाश्चोरा विवेकाख्यं नेत्रं पिधाय संसारवने मुमुक्षुं

सन्त्यजन्ति ; तदा [1]भेदवादी मतान्तरस्थो निर्दयवञ्चकोऽन्यशास्त्रसिद्धान्ते तस्य विश्वासं जनयित्वा, "अस्मदुपदेश एव तव परमसुखप्राप्तिहेतुः मात्यजैनम्," इति उपदिशति । मन्दतमो ह्यधिकारी तद्वाक्यमेव विश्वस्य तदुक्तमाचरन् परमपुरुषार्थसुखरहितो जननमरणरूपं महद्दुःखमनुभवेत् । अतः शास्त्रान्तराणि मुमुक्षुणा म्लेच्छशास्त्रवद्दूरतस्त्याज्यान्येव ।

### (५३३) राज्ञो मरणानन्तरं ब्रह्मलोकप्राप्तिः ।

इत्थं शुभसन्ततिर्नाम राजा तर्कदृष्टेः स्वपुत्रस्य वचनं श्रुत्वा सर्वसंशयान् समस्तमनःशोकांश्च सन्त्यज्य पूर्णानन्दमवाप । कारणब्रह्मोपासनायां बहुशश्चित्तलयं चकार । तर्कदृष्टिमेव स्वगुरुत्वेन भावयित्वा विशिष्टं राज्यं तस्मा अदात् । पुत्रोऽपि तर्कदृष्टिरुत्तमोपदेशकर्तृत्वाद्गुरुपदवीं भेजे । तदेतत् सर्वं ब्रह्मविद्याया माहात्म्यमेव ।

### (५३४) शुभसन्ततिमरणम्—

कतिपयदिवसानन्तरं राजा प्राणान् सञ्जहौ । सनकादिमुनिगणप्राप्यं ब्रह्मलोकं च जगाम । न हि राज्ञो मरणे देशकालादिनियमोक्तिरस्ति । अस्यायमभिप्रायः—उपासकमरणविषये न देशकालादिव्यपेक्षास्ति । अहनि वा रात्रौ वा दक्षिणायने वा उत्तरायणे वा शुद्धे वाप्यशुद्धे देशे मृतोऽप्युपासनाबलात् स सर्वथापि देवयानेन पथा ब्रह्मलोकमेव गच्छति । अदृष्टिप्रसङ्गे पूर्वं देशकालाद्यपेक्षा स्यादिति यदुक्तम् तद्योगसहितोपासकविषयम् । केवलेश्वरैकशरणतां गतस्योपासकस्य नैवास्ति देशकालाद्यपेक्षा । प्रतिपादितश्चायमर्थः सूत्रभाष्यकारादिभिः ।

### (५३५) तर्कदृष्टेर्देहपातः । परमात्मैक्यम्—

तदा तर्कदृष्टिर्दृढतरद्वैततुच्छतानिश्चयः सन् राज्यकार्यमखिलमपि सावधानमना एवाकरोत् । न क्श्चिदपि सक्तोऽभूत् । सदा ब्रह्मण्येव तस्य निष्ठाऽभूत् । प्रारब्धान्ते च निश्चलं धाम कैवल्यमवाप । आत्मा (कूटस्थ-

---

१. भेदवादिनो ह्याचार्याः स्वयमपि स्वशास्त्रोक्तपरमेश्वरप्राप्तिरूपमोक्षाद्यनुभवशून्या वर्तन्ते । क्रमशोऽप्युक्तोपासनादिरूपमोक्षसाधनरहिताः शिष्यवित्तापहारार्थं शिष्यत्वे नान्यान् वशीकर्तुं स्वसमयसम्प्रदायचिह्नितसाङ्केतिकमन्त्रोपदेशं कुर्वन्ति । अस्मदुपदेशेन शास्त्रीयात्सन्मार्गाद्भ्रष्टानां सतां यावज्जीवं जन्म निष्फलं किल स्यादिति परितापो न तेषां जायते । एवं दयाविरहिता वञ्चका एव भेदवादिनो द्वैतिनः ।

साक्षी) परमात्मनाऽभिन्नोऽभूत्। देहश्च भस्मीभूतः। यद्यपि कूटस्थपरमात्मनोः सदाऽभेद एवास्ते। तथापि उपाधिना भिन्न इवाभात्। उपाधिलयाद्भेद-स्तिरोदधे।

परमात्मनाऽभेद इत्यस्यायमभिप्रायः—विदेहमुक्तौ परमेश्वरेणाभेदः सिद्धयति। न तु शुद्धचैतन्येन। अयमर्थः शारीरकभाष्ये चतुर्थाध्याये प्रत्यपादि। तत्रायं प्रसङ्गः—

(१) विदेहमुक्तौ सत्यसङ्कल्पत्वादिप्राप्तिरिति जैमिनिमतम्।

(२) औडुलोमिमते सत्यसङ्कल्पत्वाद्यभावः कथ्यते।

(३) सिद्धान्ते तु सत्यसङ्कल्पत्वादीनां भावाभावावुभावप्युक्तौ।

तस्यायमभिप्रायः—विदेहमुक्तावीश्वराभेदो जायते। ऐश्वरसत्यसङ्कल्पत्वा-दयो मुक्तपुरुषे जीवान्तरैर्व्यवह्रियन्ते। परमार्थदृष्ट्या तु सोऽपीश्वरः शुद्धचैतन्य-मेव। न तत्रास्ति गुणलेशोऽपि। निर्गुणत्वादेव सत्यसङ्कल्पत्वाद्यभावस्तत्र। संसारदशायामपि जीवः परमार्थतो निर्गुणः शुद्धश्च। तथापि संसारदशायाम-विद्यया तस्मिन् कर्तृत्वभोक्तृत्वाद्यनर्थः प्रतीयते। ईश्वरस्य तु न कदाचिदपि स्वस्मिन् परत्र वा संसारप्रतीतिरस्ति। अत एवेश्वरः सर्वदाऽसङ्गो निर्गुणः शुद्धश्च। तस्माद्योऽभेद ईश्वरेणोच्यते स शुद्धब्रह्माभेद एव। ईश्वराभेदः शुद्धब्रह्माभेदो न स्यादिति यदि मन्येत तर्हीश्वरस्य शुद्धब्रह्मणा त्वैकात्म्यं नैव सिद्धयेत् कदाचिदपि। यतः जीववदीश्वरस्य औपदेशिकं ज्ञानं विदेहमोक्षश्च न कदापि सम्भवेत्। सर्वदा तत्स्वरूपं न शुद्धं स्यात्। तस्माज्जीवापेक्षया न्यून ईश्वरः। सदा बद्धश्च स्यात्। तस्माद्वक्ष्यमाणरीत्यैव मन्तव्यम्—

(१) नास्त्यावरणमीश्वरस्य। अत एव नोपदेशजन्यज्ञानापेक्षा।

(२) आवरणाभावान्न भ्रान्तिरप्यस्ति। तस्मान्नित्यसर्वज्ञः नित्यमुक्तश्च।

(३) मायातत्कार्यजातञ्च नात्मनि प्रतीयते। अत एव सदाऽसङ्गः, शुद्धश्च।

एवं रीत्या ईश्वराभेद एव शुद्धचैतन्याभेद इत्युच्यते। इत्थं दृष्टान्तेनापि ईश्वरेणैवाभेदः सिद्धयति। यथा मठे घटनाशे घटाभावदशायां मठाकाशे घटकाशो विलीयते। न तु महाकाशे। तथा विदुषः शरीरमपि ईश्वरकृतब्रह्माण्ड एव विनश्यति। अखिलमपि ब्रह्माण्डमीश्वरशरीरभूतमायाया-

मन्तर्भवति। विदुषस्त्वात्मा विदेहमोक्षे ब्रह्माण्डान्न बहिर्गच्छति। इत्थमीश्वराभेदः सिद्धयति। परन्तु मठाकाशेन यथा घटाकाशस्याभेदः सिद्धयति। स च मठाकाशो महाकाशात्मनैव वर्तते। तथात्रापि विदुष ईश्वराभेदः। स चेश्वरः शुद्धं ब्रह्मैव। तस्माच्छुद्धब्रह्मप्राप्तिरेव भवति।

## (५३६) भाषान्तरेऽस्य ग्रन्थस्य रचनायां हेतुः—

इत्थमनेकवेदान्तसिद्धान्तरत्नगर्भितोऽयं विचारसागराख्यो ग्रन्थो विवेकतः प्रकटीकृतः। कृत्स्नमधीतं व्याकरणम्। साङ्ख्यन्यायादिशास्त्राण्यपि श्रमेण समग्रमवलोकितानि। अशेषा अद्वैतवेदान्तग्रन्थाश्च परिशीलिताः। नानवलोकितोऽस्ति ग्रन्थ एकोऽपि। अत्यन्तकठिनः दुरूहः मतान्तरसिद्धान्तोऽप्यतिश्रमेणावगाहितः। चतुरोऽपि वेदानपश्यं समग्रम्। अथापि मयायं विचारसागराख्यो ग्रन्थो भाषायामेवाकारि। न विलज्जे भाषारचनायाम्। परोपकारचिन्तैवात्र हेतुः। व्याकरणज्ञानं विना संस्कृतग्रन्था मन्दबुद्धिभिर्न शक्यन्ते पठितुमपि। भाषाप्रबन्धं त्वनायासेन पठित्वा पामरा अपि परमानन्दमनुभवेयुरिति॥

## (५३७) मङ्गलाचरणं ग्रन्थसमाप्तिश्च—

हस्तिनापुरतः पश्चाद्योजनाष्टादशान्विते।
ग्रामे तु किहडौल्याख्ये ग्रन्थोऽयं रचितोऽभवत्॥
विदेहमुक्तिसमये येनाभेदं प्रपेदिरे।
ब्रह्मनिष्ठास्तथा वेदाः कारणं यत्स्तुवन्ति हि॥
व्यावृत्तनामरूपात्म जगत्यनुगतं तु यत्।
वेदान्तवेद्यं तल्लक्ष्यमस्तिभातिप्रियात्मकम्॥
एकं निरुपमं तत्त्वं शुद्धाद्वैतं चिदात्मकम्।
विषयावगमं ज्ञानं स्वयं विषयवर्जितम्॥

---

१. अत्रायं रहस्यार्थः—ज्ञानिदृष्ट्या विदेहमुक्तेः प्रागपि ब्रह्माण्डादिकं जगन्न किञ्चिदपि विद्यते। किन्तु ब्रह्मैव केवलं वर्तते। तस्माद्विद्वद्दृष्ट्या शुद्धेन ब्रह्मणैवाभेदो विदुषः। स एव तस्य शुद्धब्रह्मप्राप्तिः। अज्ञदृष्ट्या तु प्रागिव ब्रह्माण्डादयः प्रतीयन्ते। तस्मात्तद्दृष्ट्या ज्ञानिन ईश्वरेण (ईश्वरदेहभूतब्रह्माण्डेन) अभेदो जायते। सोऽपीश्वरः परमार्थतः शुद्धं ब्रह्मैव। अनेन ज्ञानिनः शुद्धब्रह्मप्राप्तिरेव भवति। विदेहमुक्तौ ज्ञानिजीवस्य यो ब्रह्माभेदः तस्मिन् आभासादिनानाप्रकारा वेदान्तपक्षाः षष्ठे तरङ्गे सङ्ग्रहेण निरूपिताः।

अखण्डं सच्चिदानन्दं मनोवागाद्यगोचरम् ।
सर्वेषां प्रत्यगात्मानं परं ब्रह्म भवामि तत् ॥

अहमेव परं ब्रह्म मयि सर्वं प्रकल्पितम् ।
इति यत्कृपया बुद्धं सद्गुरुं तं नमाम्यहम् ॥

॥ ॐ ॥

**(५३८) अस्य ग्रन्थस्य संस्कृतभाषया रचनायां हेतुः—**

"दिव्यां भाषां परित्यज्य ह्यन्यभाषाकृतानि वै[1] ।
शास्त्राणि ये प्रश्रृण्वन्ति ते वै निरयगामिनः" ॥ १ ॥

बहुप्रमाणैरित्यादिवचनैर्निन्दितत्वतः ।
चित्तस्य शुद्धये चैव संस्कारार्थमियं कृतिः ॥ २ ॥

औषधादौ फलाधिक्यमनुपानबलात्स्फुटम् ।
अनेन सर्वशास्त्रार्थसारः सुविदितो भवेत् ॥ ३ ॥

**॥ जीवन्मुक्तिविदेहमुक्तिवर्णनं नाम सप्तमस्तरङ्गः समाप्तः ॥**

**॥ ग्रन्थश्च समाप्तः ॥**



1. भारते शेषधर्मे ।